Jamnadas Dhakkan

॥ श्रीरस्तु ॥

श्रीमद्वेङ्कटेश्वरो विजयते तमाम्।

श्रीमदनन्तकोटिब्रह्माण्डनायकस्य भगवतः श्रीनिवासस्य
महिमादर्शि श्रीमद्वाराहादिद्वादशपुराणान्तर्गत

# ❀ श्रीवेङ्कटाचलमाहात्म्यस्य ❀

## प्रथमो भागः

हिन्दीभाषामयटीकोपेतः

श्रीशेषाचलश्रीपद्मपुर-श्रीशुकपुरादिभगवद्दिव्यालयश्रीकार्यनिर्वहणधुरीणै-
निरतिशयभक्तिभराध्यासितश्रीवेङ्कटाचलाधीशदिव्यामृतकोंडारसविशेषा-
स्वादनैकतानान्तःकरणश्रीस्वामिहाथीरामजीसिंहासनालङ्कारभूतैः
विरागिचक्रवर्तिस्वनामधन्यमहन्तवर्यश्रीस्वामिप्रयागदासजी
महोदयैःश्रीवेङ्कटनाथभगवद्दिव्यभाण्डागारोद्धृतद्रविणव्ययेन,
महामहोपाध्यायपण्डितश्रीमदनन्तकृष्णशास्त्रिद्वारा
हिन्दीभाषानुवादव्यवस्थादिपूर्वकं संशोध्य


**कलकत्तानगरे**

वणिक् प्रेस नाम्नि ( स्टीम ) मुद्राक्षरयन्त्रालये

**मुद्रापितः।**

वैशाख संवत् १९८६ शके १८५१

५००० आदर्शाः ] [ मूल्यं सार्धरूप्यत्रयम्



श्रीवेङ्कटेश्वरमूर्ति

## सादर निवेदन

अधिक संख्यामें पुस्तकके छपनेके कारण यंत्रके दोषसे कहीं कहींपर रेफ, एकार, ओकार, उकार, ऊकार इत्यादि मात्राएं टूटी हुई हैं; अतः पाठकोंसे प्रार्थना है कि स्वयं उनको यथा-योग्य सुधारकर पढ़ें।

कलकत्ता
२५-३-२९

सम्पादक

॥ श्रीनिवासपरब्रह्मणे नमः ॥






आदितः समालोच्यमानं भारतीयानां चरितमिदं व्यञ्जयति—यत् विना मूर्तिपूजामन्तरेण वा देवालयरक्षणं न कदापि कैरपि स्माधिगम्यतेऽधिगंस्यतेऽधिगम्यते वा समाश्वास इति। मतान्तरावलम्बिनो हि मूर्त्तिपूजामेव बहुशो वादप्रतिवादादिभिराक्रामन्तो धन्य-धन्यमात्मानं मन्यमाना अपि नेदं परोक्षं कस्यापि—यदस्मदीयं मूर्तिपूजनादिकं प्रत्यहं महीयमानमेव पश्यन्ति।

निराकारोपासनं हि विना साकाररूपालम्बनेन मनसः स्थिरीकरणं नात्मानं लभत इति निराकारवादिनामपि प्रथमं सोपानं सगुणोपासनम्, तत्रापि च मूर्तिपूजनमेवेति यथायोगं द्वैत-विशिष्टाद्वैताद्वैतादिसर्वसंप्रदायसम्मतमिदम्।

मूर्तिपूजाविरोधिनो मन्त्रमात्रप्रामाण्यवादिनश्चार्यसमाजीया अपि "असुनी ते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम्" इति मन्त्रं परं प्रक्षिप्तत्वादप्रमाणं मन्यन्ते। तदत्र वयं सुधीरं वक्तुमीश्महे—यत् मन्त्रप्रामाण्येनापि मूर्तिपूजाव्यवस्थापनावसरे मन्त्रस्यापि प्रक्षिप्तत्व-वादोऽयं विक्षिप्तचित्तानामेव सुरक्षणोपाय इति न वयं विशेषतः कटाक्षणं योग्यमत्र वीक्षामहे।

लोकायतमतावलम्बिनोऽपि विचित्रविचित्रपुत्रमित्रकलत्रादिचित्ररक्षणमात्मनस्तेषां तेषां तत्ता-दृशगुणानुसन्धाने तत्तादृशेषु कार्यक्षेत्रेषु सोत्साहप्रवर्तने च परमं साधनं मन्वाना यदि पित्रादिवि-योगेऽपि तदेव परमकर्तव्यं मन्यन्ते, तर्हि कोऽयमवसरस्तत्तादृशानामाक्षेपाणामनन्तकल्याणगुणा-परिच्छिन्नप्रभावतत्त्वद्वैखानसादिशास्त्रावगतभगवदर्चावतारमूर्तिपूजागोचराणामिति सर्व एव नाम

समालोचयन्तु । मन्यामहे लोकायतदृष्टिमवलम्ब्यापि मनुष्यादिभावनयापि स्वीयतत्तादृशा-नन्यसाधारणचरिताद्यनुसन्धानेन हितसाधनेषु प्रवर्तनार्थमहितसाधनेभ्यो निवर्तनार्थमेव चा-प्राकृतो निरतिशयवत्सलः सत्यकामस्सत्यसंकल्पश्च भगवान् स्वपुत्रकल्पं सर्वमिमं प्रपञ्चमनन्यश-क्यलीलाविशेषादिभिः प्रतिकल्पमायतते समुद्धर्तुं मत्स्यकूर्माद्यवतारग्रहणेन, येन क्रमेण स्वस्वरू-पानुसन्धाने "निमित्तमात्रं भव सव्यसाचिन्नि" ।ति वचनावगते च तत्त्वे सर्वोऽपि दत्तचित्तो भवेदिति विभवावताराणां श्रीराम-कृष्णादीनामेव रूपान्तरस्यार्चावतारस्य पूजनं ( मूर्तिपूजनं ) कथं निष्प्रयोजनमयुक्तिसिद्धं वेति दुरपह्नवमिदं तत्त्वम् ।

सम्मुखे हि क्रियमाणा स्तुतिः प्रायेण सर्वाऽपि स्वार्थबुद्धिमूलैव, कामक्रोधादिनिबन्धनैव वा भवति, न भक्त्यतिशयनिबन्धनेति, भगवदर्चावताररूपमूर्तिपूजनं तत्स्तुतिकरणं तन्नामकीर्तनं वा प्रथमतोऽसम्मुखेऽभ्यस्यमानमन्ततो विभवावताराणां श्रीराम-कृष्णादीनां तन्मूलतत्त्वस्यापरि-च्छिन्नस्य परमात्मनो वा भविष्यत्येव निरतिशयवात्सल्यनिमित्तमिति को हि नामात्र विप्र-तिपद्येत ।

"परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥"

इति वचनानुसारं तत्तत्पुराणेतिहासादिभ्यो मत्स्यकूर्मवराहादीन्दशावतारानिव भगवान् नारायणः श्रीवेङ्कटेशावतारमपि श्रीगोविन्दादिपदानुसन्धेयं भक्तानुकम्पैकप्रयोजनं कलावष्टाविंशे स्वीचकारेति श्रीवाराहादिद्वादशपुराणसमालोचनेन जानीम इति, सर्वेषामष्टाविंशकलियुगवर्तिनां निरतिशयपूजास्थानं श्रीवेङ्कटेश्वर इति पिष्टपेषणमिदम् । श्रीवेङ्कटेशावतारे हि भगवान् वैकु-ण्ठवासी गोविन्दो न मात्रयाऽपि परमात्मभावं वैकुण्ठनिवासं वा परिजहातीति क्रीडाचलस्यैव वैकु-ण्ठात् वायुशेषयोर्बलपरीक्षाव्याजादिना वायुद्वारा तिरुपतिक्षेत्रसविधे समानयनपरमाख्यानं श्रीवाराह-भविष्योत्तर-ब्रह्माण्ड-ब्रह्मपुराणेभ्योऽवगच्छन्तः के वा न विश्वसिष्यन्तीति,संपूर्णकलया स्वेच्छावशेनापि विना गर्भवासादिकमवतीर्णो भगवानेव गोविन्दः श्रीवेङ्कटेश इति प्रत्यक्ष-मिदं तत्त्वम् ।

श्रीरामाद्यवतारेषु रावणवधादिकं दुष्टनिग्रहणं प्रधानं निमित्तम् , शिष्टानुग्रहणं त्वानुषङ्गिकम्,

श्रीवेङ्कटेशावतारे तु महर्षिभृगुचरणाघातेन कुपितायाः करवीरपुरं प्रति गतायाश्च श्रीलक्ष्मीदेव्याः अन्वेषणम्, श्रीरामकृष्णावतारयोर्वेदवतीदेवक्योरपूरितमनोरथपूरणम्, श्रीतोण्डमानप्रभृतीनां भक्तानामनुकम्पनम्, जातिकुलगुणाद्यविचारेण निरतिशयभक्तिवशेन सा ज्यादिमाप्तिसूचनमित्यादिकमेव निमित्तमिति स्पष्टमेतत्पुस्तकपठनेन विशदीभविष्यति।

"कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति".

इति खलु प्रतिज्ञा स्वप्रतिज्ञोल्लङ्घनेन स्वयमर्जुनरक्षार्थं चक्रायुधग्रहणेन, भीष्मकृतायाः स्वस्यास्त्रग्राहणप्रतिज्ञाया अवितथीकरणेन च श्रीकृष्णावतारे परिपालिता, श्रीवेङ्कटेशावतारे तु गोपालेन कुठाराघातेन हन्यमानायाः कामधेन्वाः सर्वेषामाघातानां सरक्तधारं स्वशिरःस्फोटसहनेनाऽपि स्वयं स्वशिरसा स्वीकरणेन निरतिशयवात्सल्यस्य प्रकटीकरणेनेति साम्प्रतं प्राणपणेन स्वमरणसंनाहेनाऽपि वा सर्वेषां परमकर्तव्यं गोरक्षणमेव नान्यदिति सर्वेषां गोभक्तानां निरतिशयभक्तिनिदानमिदं श्रीवेङ्कटाचलमाहात्म्यमिति को हि नामाऽत्र सन्दिग्धे।

नाऽस्य प्रजा शतवाही कल्याणी तल्पमाशये।<br>
यस्मिन् राष्ट्रे निरुध्यते ब्रह्मजायाऽचित्या॥<br>
नास्य क्षेत्रे पुष्करिणी नाण्डीकं जायते विशाम्।<br>
यस्मिन् राष्ट्रे निरुध्यते ब्रह्मजायाऽचित्या॥

इत्यादयो ह्याथर्वणमन्त्रा बहुशो गोनिग्रहादयो राष्ट्रविपत्तिनिदानमिति गमयन्तीति, गोरक्षणेनैव राष्ट्ररक्षणम्, गोरक्षणेनैव तडाकादिषु पानीयादिस्थितिरपीत्यभिप्रेत्यैव श्रीकृष्णावतारे श्रीवेङ्कटेशावतारे च भगवानपि गोसेवामेव परमकर्तव्यं मन्यते। किं बहुना ? राष्ट्राभिचारकर्मैव गोहिंसनं गोहरणं गवामरक्षणं गोविक्रयणं च नान्यदिति सर्वसम्मतमिदम्।

धेनोः कृते कति कति साहसानि दिलीपादिभिरात्मत्यागपर्यन्तानि मनोवाचामगोचराणि समवलम्बितानीति—

सेयं स्वदेहार्पणनिष्क्रयेण न्याय्या मया मोचयितुं भवत्तः॥<br>
न पारणा स्याद्विहता तवैवं भवेदलुप्तश्च मुनेः क्रियार्थः॥

इत्यादिभीरघुवंशपञ्चमसर्गगतैः श्लोकैरवगम्यत इति सर्व एव नाम विभावयन्तु। सान्तःकर-

समालोचयन्तु । मन्यामहे लोकायतदृष्टिमवलम्ब्यापि मनुष्यादिभावनयापि स्वीयतत्तादृशानन्यसाधारणचरितायनुसन्धानेन हितसाधनेषु प्रवर्तनार्थमहितसाधनेभ्यो निवर्तनार्थमेव चाप्राकृतो निरतिशयवत्सलः सत्यकामस्सत्यसंकल्पश्च भगवान् स्वपुत्रकल्पं सर्वमिमं प्रपञ्चमनन्यशरण्यलीलाविशेषादिभिः प्रतिकल्पमायतते समुद्धर्तुं मत्स्यकूर्माद्यवतारग्रहणेन, येन क्रमेण स्वस्वरूपानुसन्धाने "निमित्तमात्रं भव सव्यसाचिन्नि" ति वचनावगते च तत्त्वे सर्वोऽपि दत्तचित्तो भवेदिति विभवावताराणां श्रीराम-कृष्णादीनामेव रूपान्तरस्यार्चावतारस्य पूजनं ( मूर्तिपूजनं ) कथं निष्प्रयोजनमयुक्तिसिद्धं वेति दुरपह्नवमिदं तत्त्वम् ।

सम्मुखे हि क्रियमाणा स्तुतिः प्रायेण सर्वाऽपि स्वार्थबुद्धिमूलैव, कामक्रोधादिनिबन्धनैव वा भवति, न भक्त्यतिशयनिबन्धनेति, भगवदर्चावताररूपमूर्तिपूजनं तत्स्तुतिकरणं तन्नामकीर्तनं वा प्रथमतोऽसम्मुखेऽभ्यस्यमानमन्ततो विभवावताराणां श्रीराम-कृष्णादीनां तन्मूलतत्त्वस्यापरिच्छिन्नस्य परमात्मनो वा भविष्यत्येव निरतिशयवात्सल्यनिमित्तमिति को हि नामात्र विप्रतिपद्येत ।

"परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥"

इति वचनानुसारं तत्तत्पुराणेतिहासादिभ्यो मत्स्यकूर्मवराहादीन्दशावतारानिव भगवान् नारायणः श्रीवेङ्कटेशावतारमपि श्रीगोविन्दादिपदानुसन्धेयं भक्तानुकम्पैकप्रयोजनं कलावष्टाविंशे स्वीचकारेति श्रीवाराहादिद्वादशपुराणसमालोचनेन जानीम इति, सर्वेषामष्टाविंशकलियुगवर्तिनां निरतिशयपूजास्थानं श्रीवेङ्कटेश्वर इति पिष्टपेषणमिदम् । श्रीवेङ्कटेशावतारे हि भगवान् वैकुण्ठवासी गोविन्दो न मात्रयाऽपि परमात्मभावं वैकुण्ठनिवासं वा परिजहातीति क्रीडाचलस्यैव वैकुण्ठात् वायुशेषयोर्बलपरीक्षाव्याजादिना वायुद्वारा तिरुपतिक्षेत्रसविधे समानयनपरमाख्यानं श्रीवाराह-भविष्योत्तर-ब्रह्माण्ड-ब्रह्मपुराणेभ्योऽवगच्छन्तः के वा न विश्वसिष्यन्तीति,संपूर्णकलया स्वेच्छावशेनापि विना गर्भवासादिकमवतीर्णो भगवानेव गोविन्दः श्रीवेङ्कटेश इति प्रत्यक्षमिदं तत्त्वम् ।

श्रीरामाद्यवतारेषु रावणवधादिकं दुष्टनिग्रहणं प्रधानं निमित्तम्, शिष्टानुग्रहणं त्वानुषङ्गिकम्,

श्रीवेङ्कटेशावतारे तु महर्षिभृगुचरणाघातेन कुपितायाः करवीरपुरं प्रति गतायाश्च श्रीलक्ष्मीदेव्याः अन्वेषणम्, श्रीरामकृष्णावतारयोर्वेदवतीदेवक्योरपूरितमनोरथपूरणम्, श्रीतोण्डमानप्रभृतीनां भक्तानामनुकम्पनम्, जातिकुलगुणाद्यविचारेण निरतिशयभक्तिवशेन सा ज्यादिप्राप्तिसूचनमित्यादिकमेव निमित्तमिति स्पष्टमेवतत्पुस्तकपठनेन विशदीभविष्यति।

"कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति"

इति खलु प्रतिज्ञा स्वप्रतिज्ञोल्लङ्घनेन स्वयमर्जुनरक्षार्थं चक्रायुधग्रहणेन, भीष्मकृतायाः स्वस्याखग्राहणप्रतिज्ञाया अवितथीकरणेन च श्रीकृष्णावतारे परिपालिता, श्रीवेङ्कटेशावतारे तु गोपालेन कुठाराघातेन हन्यमानायाः कामधेन्वाः सर्वेषामाघातानां सरक्तधारं स्वशिरःस्फोटसहनेनाऽपि स्वयं स्वशिरसा स्वीकरणेन निरतिशयवात्सल्यस्य प्रकटीकरणेनेति साम्प्रतं प्राणपणेन स्वमरणसंनाहेनाऽपि वा सर्वेषां परमकर्तव्य गोरक्षणमेव नान्यदिति सर्वेषां गोभक्तानां निरतिशयभक्तिनिदानमिदं श्रीवेङ्कटाचलमाहात्म्यमिति को हि नामाऽत्र सन्दिग्धे।

नाऽस्य प्रजा शतवाही कल्याणी तल्पमाशये।
यस्मिन् राष्ट्रे निरुध्यते ब्रह्मजायाऽचित्या॥
नास्य क्षेत्रे पुष्करिणी नाण्डीकं जायते बिशम्।
यस्मिन् राष्ट्रे निरुध्यते ब्रह्मजायाऽचित्या॥

इत्यादयो ह्याथर्वणमन्त्रा बहुशो गोनिग्रहादयो राष्ट्रविपत्तिनिदानमिति गमयन्तीति, गोरक्षणेनैव राष्ट्ररक्षणम्, गोरक्षणेनैव तडाकादिषु पानीयादिस्थितिरपीत्यभिप्रेत्यैव श्रीकृष्णावतारे श्रीवेङ्कटेशावतारे च भगवानपि गोसेवामेव परमकर्तव्यं मन्यते। किं बहुना ? राष्ट्राभिचारकमेव गोहिंसनं गोहरणं गवामरक्षणं गोविक्रयणं च नान्यदिति सर्वसम्मतमिदम्।

धेनोः कृते कति कति साहसानि दिलीपादिभिरात्मत्यागपर्यन्तानि मनोवाचामगोचराणि समवलम्बितानीति—

सेयं स्वदेहार्पणनिष्क्रयेण न्याय्या मया मोचयितुं भवत्तः॥
न पारणा स्याद्विहता तवैवं भवेदलुप्तश्च मुनेः क्रियार्थः॥

इत्यादिभीरघुवंशपञ्चमसर्गगतैः श्लोकैरवगम्यत इति सर्व एव नाम विभावयन्तु। सान्तःकर-

णमिदं विश्वसिमः—यत् गोरक्षैव तु पृथिवीरक्षा, गोरक्षैव किल वाक्रक्षा, गोरक्षैव खल्विन्द्रियरक्षा, स्वात्मरक्षा वा; किं बहुना ? गोरक्षैव हि परमात्मरक्षेति समयान्तरे बहु वक्तव्यमत्र वदिष्यामः ।

पद्मवत्या नामधामादिप्रश्नोत्तरदानावसरे स्वस्य स्वयं श्रीकृष्णनामत्वादिकं श्रीरामकृष्णावतारयोरपूरितकार्यपूरणार्थमेवाष्टाविंशे कलौ स्वावतारं सर्वदृग्गोचरभावयोग्यतादि यथावसरं भक्तैः साकं साक्षात् परम्परया वा वार्तालापादिसंभवं चोपक्षिपन् श्रीवेङ्कटेशो भक्तपरवशत्वमात्मनो नितरामेव प्रकाशयति ॥

तोण्डमानस्य स्वीयशङ्खचक्रादिप्रदानेन, सपुत्रब्राह्मणस्त्रिया अनाहारेणास्थिशेषं गताया उज्जीवनादिना, भीमनामककुलालवर्यस्य परिशुद्धभावभरितपूजाविशेषमात्रनिबन्धनप्रेमातिशयमूलं तत्सायुज्यादिवितरणेन च

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ॥

इत्युपदेशमेकमेव भगवाननुष्ठानपर्यवसायिनमपेक्षते, नतु बहुमूल्यसौवर्णादिपुष्पपूजनादिकमप्यहंभावभरितमिति श्रीवङ्कटाचलमाहात्म्यतः के वा नाध्यक्षयिष्यन्ति ?

श्रीवाल्मीकीयरामायणात् श्रीसीतादेव्या एवाग्निपरीक्षाप्रसङ्गेऽग्निप्रवेशः, अध्यात्मरामायणात् श्रीतुलसीरामायणाच्च मायामयसीताया एवाग्निप्रवेशः, इतरतो वेदवत्याः श्रीसीताभावः, श्रीलक्ष्मीदेव्या एव सीताभाव इत्यादिकं परस्परविरुद्धमिव प्रतीयमानमर्थजातं श्रीवेङ्कटाचलमाहात्म्यदर्शनेन हि नियतमविरुद्धं भासेत, यत्र वेदवत्याख्यायाः कस्याश्चन ब्राह्मण्या एव प्रतिज्ञातरावणवधायाः प्रविष्टहुताशनायाः छलेन सीतारूपेण हुतवहेन रावणसविधे उपस्थापनम्, तस्या एवाग्निप्रवेश इत्यादिकमुपक्षिप्तं वस्तुजातमिति हुतवहसमुत्थितायाः श्रीसीतादेव्याः प्रार्थनानुसारं वेदवत्या एव रावणवधपर्यन्तं सीतारूपेण लङ्कायां कृतनिवासायाः पुनः प्रविष्टहुताशनायाश्च पद्मावतीरूपेणावतारम्, अष्टाविंशे कलौ भगवता गोविन्देन श्रीवेंकटेशेन तस्याः परिणयं च विजानन्तः के वाऽभिनयेनापि भगवद्गुणानुकरणम्, भगवद्दारभावानुकरणं वाऽवितथमसत्यं वा मंस्यन्ते ?

पद्मावत्या विवाहमुपलक्ष्य सपत्रलेखऋणग्रहणादिव्यवहाराः पत्रप्रेषणादिव्यवहाराश्च ये किलात्र श्रीवेङ्कटाचलमाहात्म्ये प्राकृता उपक्षिप्ताः, मन्यामहे ते हि नाम सर्वे एव सहृदयहृदयाह्लादका इति ।

श्रीवेङ्कटेश्वरो हिं कातरं पित्रा हन्यमानं च किरातबालं स्वयमाविर्भूय रक्षन् भक्तिमेव केवलं प्रतीक्षते, न जातिवयोविद्यादिकमिति सत्यमिदम्—यद् गुणाः पूजास्थानं गुणिनि नच जाति-र्नच वयः

श्रीवेङ्कटाचलमाहात्म्यगतान्युपाख्यानानि सर्वाणि न केवलं न प्रमाणान्तरविसंवादीनि, किन्तु प्रत्यक्षादिप्रमाणसंवादीन्यपीति गुणार्थवादपरम्—"पुराणानामुपाख्यानेषु न तात्पर्यम्" इति कुमारिलपादवचनं नतु श्रीवेङ्कटाचलमाहात्म्यं गोचरयति, यतो नात्र क्षेत्रान्तरमाहात्म्यवत् लेशतोऽपि न पुरावृत्तमेव, श्रद्धामात्रविश्वसनीयमैतिह्यमात्रमेव वाऽऽख्यानमेकमपीति बहुशोऽस्माभिः श्रीतिरुपतिक्षेत्रे प्रत्यक्षीकृतम्।

इदन्तु नात्रानवसरं सूचनम्—यत् नात्रापि "नहि निन्दा निन्द्यं निन्दितुं प्रवृत्ता, किन्तु स्तुत्यं स्तोतुमि"ति न्यायो ब्रह्मरुद्रादीनां पुत्रपौत्रादिकल्पनावसरे, श्रीदुर्गायाः श्रीपद्मावत्या साकं परिणयावसरे भगवत्कर्तृकवन्दनाद्युपन्यासावसरे भगवता बादरायणेन विस्मरणं प्रापितः॥

दुराचारोऽपि माधवाख्यो विप्रः सकृदनिच्छया श्रीवेङ्कटाचलगमनमात्रेण विदग्धपापोऽभूदिति स्थिते किमु वक्तव्यमन्येषां सदाचाराणां विषये ?

मुण्डनादिपूर्वाः सर्वेऽपि गोविन्द ! गोविन्द ! गोविन्द ! इति नामकीर्तनादयस्तीर्थयात्रानियमाः श्रीवेङ्कटाचलमाहात्म्योक्तिमनुसृत्यैवानादिपरम्परया सर्वैरपि परिपाल्यन्त इत्ययत्नसिद्धमेतदनादित्वं वेदापौरुषेयत्वन्यायेन।

पद्मावतीविवाहोऽपि दिनचतुष्टयेनैव साधु समपद्यतेति श्रीवेङ्कटाचलमाहात्म्यतो जानीमः। सति चैवं यात्रिकजनाः केचनैकेनैव दिनेन विवाहं श्रीवेङ्कटाचलक्षेत्रे शिष्टा अपि मन्यामहे चिन्त्यमूलमेव समाचरन्ति।

"यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनः"

इति सर्वोपास्यं सर्वेषां सममादरपात्रं च यद्दैवतमुपक्षिप्तम्, श्रीवेङ्कटेश एवायं श्रीशैववैष्णवाद्वैतिप्रभृतिभिः सममेव समाराध्यमान इति, सुदृढोऽयमस्माकं विश्वासः—यत् तुरीयनारायणः, तुरीयस्सदाशिवः, तुरीयं वा विराड्रूपमपरिच्छिन्नं परमात्मस्वरूपमेवायं श्रीवेङ्कटेशो नाम, न परिच्छिन्नं ब्रह्मविष्ण्वादिभेदभिन्नं स्वरूपमिति। श्रीवैष्णवसंप्रदायाचार्याः पूज्य 'श्रीपेयालवार'महोदया अपि शिवाभिन्नं विष्णुं विष्ण्वभिन्नं वा शिवं श्रीवेङ्कटेशं स्वीयद्राविडगीतेन गायन्तीति दुरपह्नवमिद

तत्त्वम्। श्रीवैखानसंप्रदायो हि सकलनिष्कलभेदेन परमात्मभेदं तत्रापि पूजनाराधनादियोग्यतां सकल एव निरूपयन् आराध्यसद्धितीयतायामेव साग्रहः न ज्ञेयसद्धितीयतायामिति नाद्वैतवादस्यात्यन्तविरोधीति श्रीवैखानसंप्रादायेन वैदिकेनैव पूजापद्धतिरपि सर्वसाधारणभक्तिस्थानत्वं श्रीवेंकटेशस्य गमयति। शङ्खचक्रयोः कर्णमूलपर्यन्तमेव श्रीवेङ्कटेशमूर्तौ समुपलम्भोऽपि श्रीवैखानसपद्धतिरेवात्र समादरणीयेति गमयतीति श्रीवैखानसा मन्यन्ते। स्पष्टमेव तु श्रीवेंकटाचलमाहात्म्ये वैखानसपद्धत्यैवात्र पूजापद्धतिरिति विवेचनात्तु नात्र वयं पिष्टपेषणं साम्प्रतं मन्महे।

शंखचक्रे इदानीं श्रीवेङ्कटेशमूर्तौ दृश्यमाने कृत्रिमे एव, स्वाभाविकेतु तोण्डमानाय प्रदत्ते इति श्रीवेंकटाचलमाहात्म्ये व्यक्तमिदम्। वैखानसाचार्यः प्रथमः श्रीगोपीनाथः श्रीनिवासो वा श्रीवेंकटेशस्य समाराधयिता समासीत्, तत्कैङ्कर्यं तु रङ्गदासाख्येन केनचन शूद्रेणैव क्रियमाणमासीत्, य एव भगवदाज्ञया जन्मान्तरे तोण्डमाननामचक्रवर्ती भूत्वा भगवत्सखित्वं तत्सारूप्यादिकं च क्रमेण प्रापदिति जानीमः। संप्रत्यपि श्रीवैखानसा एव तु पूजकाः, पुष्पादिसंग्रहणेन तत्कैङ्कर्यकारिणस्तु श्रीवेंकटाचलक्षेत्रगामिनः सर्व एव जानन्तीति नात्र विस्तारं कर्तुमभिलषामः।

देवालयकार्यनियमनाधिकारस्तु बहोः कालात् पञ्चायतनसभाधीनः, ततः पाश्चात्यराजकीयाधीनः, ततः श्रीस्वामिसाधुसंप्रदायाचार्यश्रीहाथीरामजीस्वामिपादप्रतिष्ठापितमठाधिष्ठातृश्रीस्वामिमहन्तवर्याधीन इति क्रमतोऽपीदमेव प्रतीमः—यत् नेदं श्रीवेंकटाचलक्षेत्रं सांप्रदायिकभावभेदखिन्नानां शैवैववैष्णवादिसंप्रदायावलम्बिनां नियमनाधिकारमर्हति। श्रीस्वामिमहन्तवर्यश्रीसेवादासजीमहाशयानां राजकीयानां च विश्वस्तसूत्रत इदं जानीमः...समयबन्धोऽप्येक आसीत्—यत् विना सांप्रदायिकलहावकाशदानं श्रीवेंकटाचलक्षेत्रनियमनं कर्तव्यमिति। श्रीस्वामिसाधुसंप्रदायो हि श्रीतुलसीरामायणप्रधान इति श्रीतुलसीरामायणे "भवनीशंकरौ वन्दे" इति शिववन्दनेनैव प्रक्रमात् न वै शैवादिसंप्रदायविरोधिन इति श्रीवेंकटाचलक्षेत्रस्य तदधीनताकरणमेकमेव पर्याप्तं निमित्तम्, यत् शिवविष्ण्वादिभेदभावरहितमेवाराधनास्थानं श्रीवेंकटेश इति। श्रीतुलसीरामायणे हि स्वनायकश्रीरामचन्द्रमुखेनैव स्पष्टमिदं तत्त्वमुद्घुष्यते, यत्—

"मद्भक्तः शंकरद्रोही मद्द्रोही शंकरप्रियः। तावुभौ नरकं यातो यावच्चन्द्रदिवाकरम्॥

व्रतचूडामणौ तु "श्रीवेङ्कटेशपुराणे" इत्युल्लेखपूर्वकं यानि पुनरिमानि—

भगवन् भगवान्विष्णुः कलावाराध्यते कथम्। कुत्रास्ते कीदृशी तात सर्वदेवमयी कला।

ब्रह्मोवाच—

शेषाद्रिशिखरे वत्स वेङ्कटेश्वररूपिणी। कलौ ब्रह्मण्यदेवस्य कला विष्णोर्विराजते॥
कल्पवृक्षसमा यत्र तरवो वेङ्कटाचले। चिन्तामणिश्च पाषाणः क्रिमिश्च दिविषत्समः।
श्रीवेङ्कटेशकृपया दरिद्रोऽपि धनी भवेत्। मूको वाचालतां याति पङ्गुरारोहति स्वयम्॥

* * * * * * *

सेनानीः षण्मुखश्चापि विष्णुर्लक्ष्मीपतिः स्वयम्। उभौ शम्भुं समाराध्य तत्र वेङ्कटभूधरे।
सद्भावैकभावेन सर्वभूतवरप्रदौ। विष्णुस्कन्दात्मिका मूर्तिर्वेङ्कटेश्वररूपिणी॥
सर्वदेवमयी शक्तिः पूज्यतां सर्वमानवैः। यत्र शैले पुरा शंभुः तपस्तप्त्वा सुदुस्तरम्।
... ... ... नृसिंहं तोषयामास तावुभौ तत्र संस्थितौ॥

* * * * * * *

सर्वक्षेत्रेषु तीर्थेषु कलाह्रासो भवेत्कलौ। न भवेन्महिमोच्छ्रायो न महत्क्षफलोदयः।
सुब्रह्मण्ये वेंकटाद्रौ क्षेत्रयोरुभयोरपि। कदापि न कलाह्रासः सर्वदा स्यादु फलोच्छ्रयः॥
... .... सुब्रह्मण्ये कुमाराख्या विष्ण्वाख्या वेंकटाचले।

इत्यादीनि वचनानि दृश्यन्ते, तैरिदमापततः प्रतीयते, यत् न वेंकटाचलस्य केवलविष्णुक्षेत्रत्वमिति; यतः 'स्कन्दविष्ण्वात्मिका शक्ति' रित्युभयरूपत्वमत्र वर्णितम्, परन्तूपक्रमे केवलविष्णुपूजास्थानस्यैव प्रक्रमात् उपसंहारेऽपि स्कन्दविष्णुरूपशक्तेरेव श्रीसुब्रह्मण्य–श्रीवेंकटाचलस्थानभेदेन तत्तद्रूपभेदव्यवस्थापनेन च वैष्णवी शक्तिरेव श्रीवेंकटाचल इति व्यवस्थापनाच्च नास्य श्रीविष्णुक्षेत्रत्वे विप्रतिपत्तिलेशोऽपि भविता। अथ यावत् प्रचलितेषु वाराहादिद्वादशपुराणान्तर्गतेषु श्रीवेंकटाचलमाहात्म्येषूक्तानां श्लोकानामदर्शनात् विष्णुक्षेत्रेऽप्यत्र विराड्रूपस्य सर्वदेवचैतन्यरूपस्य परात्मन एवोपास्यतेति पूर्वमेव निरूपणाच्च सर्वोपास्यं सर्वदेवस्वरूपमेव च श्रीगोविन्दो वेंकटेश्वर इति नात्र विशेषचर्चाया अयमवसरः। वामनपुराणान्तर्गते श्रीवेंकटेश्वमुद्रणालयप्रकाशिते श्रीवेंकटाचलमाहात्म्ये तु स्कन्दस्यापि विष्ण्वंशत्वं स्पष्टमेव वर्णितमिति, द्वितीयभागभूमिकायामधिकं किञ्चिदत्र वक्तव्यं वर्णयिष्यामः। व्रतचूडामणिगतश्रीवेंटेश्वरमाहात्म्यमपि तु समूलगवेषणं द्वितीयभूमिकायामेव परीक्षिष्यामहे। सांप्रतं तु स्कन्दशिवदिक्पालादीनां सर्वेषां श्रीवेंकटाचले तपस्याप्रस्तावस्यात्र विशदं दर्शनात् संग्रहेण सर्वदेवताधिष्ठानं परमात्मस्वरूपं श्रीवेंकटेश इत्येवमेवोपन्यस्य यथासंप्रदायं यथारुचि च परिच्छिन्नभाव-भेदभावादिपरिहाणेन तदुपासनमेव योग्यं प्रवचामः।

विमानकोणेषु सिंहावस्थानं 'खगेन्द्रं वा मृगेन्द्रं वा कोणेषु परिकल्पयेत्' इति वैखानससंहितावचनात् नास्य शक्तिक्षेत्रत्वपरिचायकमिति श्रीवैखानसा मन्यन्ते। यत्तु नवरात्रेपूत्सवानुष्ठानम्, तदिदमपि श्रावणमासीयश्रवणनक्षत्रप्राधान्यप्रयुक्तमेव, नतु नवरात्रप्रयुक्तम्। अत एव विनापि नवरात्रं प्रतिवत्सरत्रयं द्विः सौरचान्द्रभेदेन श्रावणमासभेदे ब्रह्मोत्सवानुष्ठानमुपपद्यत इत्यपि ते सूचयन्ति। इदमेवात्र यथावसरं सप्रश्रयं सूच्यते—यत् श्रीवेंकटाचलमाहात्म्ये "कन्यागते सवितरी" ति सौरमासश्रवणनक्षत्रप्राधान्यस्यैवोत्सवनिमित्तत्वव्यवस्थापनात् इदानीन्तनमुत्सवद्वयानुष्ठानं तत्रापि द्वितीयस्य गौणतया कन्यामासि समाचरणं च चिन्त्यमूलमिति प्रतिभाति। सर्वथा त्विदमेवात्र सन्तोषस्थानम्—यत् श्रीवेंकटाचलक्षेत्रे यत्र प्रत्यहमपि काम्यब्रह्मोत्सवादिव्यवस्था दरीदृश्यते, तत्र श्रद्धोत्सवरूपेण द्विरन्ततः प्रतिसंवत्सरत्रयमपि वा ब्रह्मोत्सवानुष्ठानमपि भक्तानुत्साहयति॥

या खलु दिनभेदेन ब्रह्मोत्सवेषु वाहनभेदव्यवस्था श्रीवेंकटाचलमाहात्म्ये दृश्यते, सैव तु प्रायेण सांप्रतमपि परिपाल्यते। इदमेवात्र प्रायेणपदप्रयोगे निमित्तम्—यत् षष्ठसप्तमनवमदिनेषु दिने सायं रात्रौ च त्रिरुत्सवानुष्ठानावश्यकता या किलोपक्षिप्ताऽत्र माहात्म्ये, सा न त्रिष्वपि दिनेष्विदानीं परिपाल्यत इति। सर्वथा त्विदमेवात्रानन्दनिदानम्—यत् यथासंभवं तत्तद्विभागाधिकारिणां सूचनानुसारं यथाशास्त्रं निष्पक्षपातं स्वार्थबुद्धिं विहाय, श्रीस्वामिमहन्तवर्याः श्रीप्रगदासमहाशयाः तत्तत्कार्यसंपादने सदा जागरूका वर्तन्त इति।

एतावत्त्वत्र नानवसरम्—यदिदानीन्तनानां श्रीवेंकटाचलक्षेत्रनियामकानां श्रस्वामि श्रीप्रयागदासमहाशयानामितिहाससंकलनं नाम।

श्रीवेंकटाचलक्षेत्रनियमनाधिकारः—पूर्वं बहुकालपर्यन्तं तत्तत्पञ्चायतनसभाधीन आसीत्। अनन्तरं च १८०२ तमवत्सरादारभ्य १८४२ तमवत्सरपर्यन्तं पाश्चात्यराजकीयाधीन आसीत्। तदानीन्तनस्ततस्तत आगतैर्भक्ताग्रेसरैस्सपर्यार्थं समर्पितानां रूप्याणां संकलने प्रतिवत्सरं १४५७२० संख्याकानामायः, मार्कि ३५ सहस्ररूप्याणां च व्यय आसीत्।

१८४२ तमे वत्सरे त्वपराधभीत्या स्वायत्तीक्रियमाणोऽप्यधिकारो महीसुरमहाराजादिभिः सर्वैरपि नोरीक्रियते स्मेति, कथंचन प्रार्थनावशेन, ससमयबन्धं श्रीस्वामिहारिभक्तिपरायणादि श्रीसेवादासजीमहाशयैस्स अङ्गीकृतः।

इदमपि वयं श्रीस्वामिहाथीरामजीमठेतिहासतो जानीमः यत्—विरक्तग्रेसरा महात्मानश्च श्रीस्वामिश्रीहाथीरामजीमहोदया भक्त्यतिशयेनाभ्यस्यमानेन भगवत्सखित्वमप्यनुप्राप्याक्षदेवनादि लीलाविशेषमपि भगवता साकं तिन्त्रिणीवृक्षसन्निधौ नित्यं समाचरन्त आसन्निति। मन्यामहे तदेवो-पलक्ष्य तन्मठाधिष्ठातॄणामेव श्रीमिश्रीसेवादासजीमहोदयानां वशे राजकीया अपि श्रीवेङ्कटाचल-क्षेत्रनियमनाधिकारं समर्पयामासुरिति। लब्धप्रतिष्ठश्च श्रीस्वामिहाथीरामजीस्वामिमठप्रतिथि स-त्कारादिना शिष्योपशिष्यादिसमार्जनेन च महत्या संपत्त्या विराजमानमासीदिति राजकीयास्समी-चीनं विश्वासयोग्यं न्यायस्थानं निर्णैषुरिति सत्यं ते धन्यवादार्हाः।

विश्वसिमः श्रीस्वामिमठसंस्थानं श्रीवेङ्कटेशदेवालयसंस्थानं च पृथक् पृथक् विनैव सांकर्यं श्रीस्वामिमहन्तवर्यैरादितोऽद्य यावदायव्ययादिनियमनेन निरूढम् इति नात्र वक्तव्यं किमपि पश्यामः।

विश्वस्तसूत्रत इदमपि ज्ञायते—यत् तदारभ्यापि केवलदेवलमस्य कृते ५७१७२० रूप्याणां प्रति-संवत्सरमायः ६८ सहस्ररूप्याणां व्ययश्च विनैवायासं निरपद्यत १९०० तमसंवत्सरपर्यन्तमिति।

एतादृशैरेवायव्ययैः पञ्चसु श्रीस्वामिमहन्तवर्येषु कार्याणि सुचारुरूपेण निरूढवत्सु १९०० तमे संवत्सरे सप्तदशवयस्का अप्युत्कटवैराग्यसंपन्ना श्रीस्वामिश्रीप्रयागदासमहोदयाः तत्पदेऽभिषि-क्ताः, येषां प्राथमिकवत्सरपञ्चकपर्यन्तं मठीयं स्वतन्त्रमायमतिरिच्य ४४५००० रूप्याणां प्रतिसंव-त्सरमायस्तदनुगुणा व्ययवृद्धिश्च देवस्थानविभागे समासीत्। अनन्तरं च तत्तादृशकार्यप्रणा-ल्यादिव्यवस्थयाऽऽयवृद्धौ तदनुगुणव्ययवृद्धौ च संवर्धमानायामिदानीं प्रतिसंवत्सरं १२ लक्षा-धिकरूप्याणामायं श्रीस्वामिमहन्तश्रीप्रयागदासमहोदयाः स्वसूक्ष्मगवेषणाशक्त्या, प्रतिविषयं स्वयमेव कर्तव्याकर्तव्याधिकाररक्षणेन, सर्वत्र स्वयं तदा तदा प्रतिक्षणं देवालयादिकृत्येष्वेवात्म-विनियोगेन 'निमित्तमात्रं भव सव्यसाचिन्' इत्युपदेशानुसारमेवातीव धीरभावं गभीरभावं „चावल-म्ब्य यथाश्रीतुलसीरामायणादिसंप्रदायम्—

"समः शत्रौ च मित्रे च"

इति नीतिमेव लक्ष्यीकृत्य व्यवस्थापयन्तः, प्रधानं श्रीवेङ्कटेशदेवस्थानं तथा श्रीपद्मावतीदेवस्थानमिव च श्रीकपिलतीर्थादिशिवक्षेत्रादिकमपि श्रीतिरुपतिदेवस्थानमध्यपाति तत्तादृशतटाकसोपानादीनां नूतननूतनमन्दिराणां जीर्णानां वाहनादीनामाभरणानां च जीर्णोद्धारविधिना नवीकरणेन संवर्धयन्त-श्च सर्वेषामपि सांप्रदायिकानां परमादरपात्राणि विजयन्त इति नात्र काप्यतिशयोक्तिरिति पश्यामः।

एते खलु—

विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः।

इत्युपदेशानुसारं वर्णाश्रमाचाराविरोधेन संख्यातीतमेव ब्राह्मणानारभ्यान्त्यजपर्यन्तमुदारभावावलम्बनेन यथान्यायमन्नवस्त्रादिवितरणेन, देशान्तरीयाणामावासार्थं विशिष्टविशिष्टधर्मशालानां बहुलक्षधनव्ययेन निर्माणेन, उत्तमसंस्कृतमहाविद्यालयद्वारा काव्यनाटकाख्यानाख्यायिकापदवाक्यप्रमाणदर्शनवैखानसपञ्चरात्रद्राविडग्रन्थाद्यष्टादशविद्यास्थानानां विद्यार्थिनां छात्रावासान्नपानादिव्यवस्थापूर्वकं तत्तादृशलोकप्रसिद्धपण्डितवराणां साहाय्येन, यथासंभवं लोकव्यवहारपरिनिष्ठार्थं तेषां तेषामुत्साहवर्धनार्थं च प्राचीनशिक्षापद्धतिमनुसृत्य पाश्चात्यविद्यालयद्वयद्वारा पाश्चात्यशिक्षायाश्च विशिष्टेन प्रचारेण गृहादिव्ययमतिरिच्य प्रतिसंवत्सरं लक्षाधिकरूप्याणां तदर्थं विनियोजनेन, तत्तदितिहाससंकलनार्थमुत्तमशासनपरीक्षाविभागव्यवस्थानेन, नूतनमुद्रणालयोद्घाटनेनाचिरेणैव प्राचीननवीनतत्तादृशधार्मिकदार्शनिकसामाजिकनैतिकग्रन्थप्रकाशनव्यवस्थापनेन च प्रातः स्मरणीया धार्मिकाणाम्, किं बहुना ? सर्वेषामिति वस्तुस्थितिकथनमिदम्।

किं बहुना कोट्यधिकानि रूप्याणि देवालयकार्येषु प्रथममनन्तरं तदङ्गविद्याप्रचारे ततो नगरशोधनद्वारा नागरिकाणां यात्रिकगणानां च सहस्राधिकानामायुर्वेदादिद्वारा स्वास्थ्यरक्षणे च यथान्यायं यथासंभवं च विनियुञ्जाना आत्मविशेषं देवस्वधर्मस्वरक्षणकृतदीक्षा विरक्ताग्रेसराश्च देवस्वादिन्यासाधिकारिण एतादृशा विरलविरला एव। एतैः कृताः कृतसंकल्पाश्च कार्यविशेषा एतेषां राजतवार्षिकोत्सवावसरेऽनितरसाधारणा अत्युदारभावपूर्णाश्च बहुभिरेव नेतृभिः स्वनामधन्य श्री Doraswami jyangar M. L. A. प्रभृतिभिः पुस्तकरूपेण प्रकाशिता इति नात्र विवरीतुमभिलषामः।

एतद्वेंकटाचलमाहात्म्यं साकं हिन्दीभाषानुवादेन प्रकाशयितुं बहोः कालात्प्रयतमाना इमे प्रयागनगरवास्तव्यहिन्दीभाषाजीवातुपण्डितवरश्रीद्वारकाप्रसादमहाशयद्वारा किंचनानुवादान्तरमपि बहोः कालात् पूर्वं समग्रहन्, परंतु भगवत्प्रेरणयाऽनेनैव सहानुवादेन सांप्रतमेव तदाशयपूरणं कथंचनावसरं प्रापदिति, विश्वसिमः सर्वेऽपि प्रियपाठकमहोदयास्त्रुटिविशेषान् सर्वानपि सदयं क्षमेरन्निति।

श्रीवेङ्कटाचलमाहात्म्यं केवलं मूलमात्रे श्रीवेङ्कटेश्वरमुद्रणालयद्वारा प्रकाशिते क्रमविशेष पुराणानामेवमवलम्बितं। स यथा—

(१) वाराहपुराणम् (७) वामनपुराणम्
(२) पद्मपुराणम् (८) ब्रह्मपुराणम्
(३) गारुडपुराणम् (९) आदित्यपुराणम्
(४) ब्रह्माण्डपुराणम् (१०) स्कान्दपुराणम्
(५) मार्कण्डेयपुराणम् (११) भविष्योत्तरपुराणम्
(६) हरिवंशपर्व (१२) श्रीवेङ्कटेश्वररहस्यम्—इति ।

अस्मिंस्तु सानुवादे संस्करणे भागद्वयात्मके सांप्रतं प्रथमो भागः क्रमान्तरावलम्बनेन प्रकाश्यत इति सत्यमिदं साहसं सर्वैरपि सदयं क्षम्येतेति विश्वसिमः, यतस्साहसमपीदं न सर्वथा निराधारम्, नवा निर्निमित्तम् । पूर्वतनक्रमे हि तोण्डमानोपाख्यानं पद्मावतीपरिणयादिकं वा वाराह-ब्रह्माण्ड ब्रह्म—भविष्योत्तरपुराणेषु दरीदृश्यमानं पाठकमहोदयानां तारतम्यविमर्शने, आवापोद्वापाभ्यां तत्समालोचने वा विशेषतः क्लेशं समुत्पादयतीति नेदमवस्तुस्थितिकथनम् । अतोऽस्माभिः पाठकमहोदयानामावापोद्वापाभ्यामुक्तोपाख्यानस्य सनिष्कर्षं विमर्शने सौकर्यं भवत्विति क्रमविपर्यासः समवलम्बितः ।

तत्रापि भविष्योत्तरपुराणस्य द्वितीयत्वे वयमिदमेवात्र निमित्तं सूचयामः—यत्—वाराहपुराणोपसंहारे—"समविष्यां सहोत्तरामि" ति निर्देशात् भविष्योत्तरपुराणस्यैव संग्रहात्मकं वाराहपुराणान्तर्गतं श्रीवेङ्कटाचलमाहात्म्यमित्यवगमात् श्रीवाराहपुराणानन्तरं श्रीभविष्योत्तरपुराणमिति । ब्रह्माण्डपुराणे तु शेषाचलादिनामनिमित्तादिनिरूपणं तोण्डमानोपाख्यानादिकं श्रीभविष्योत्तरपुराण—क्रमेणैव प्रायेण वर्तत इति तस्य तृतीयतयाऽत्र निर्देशः । ब्रह्मपुराणस्य तुरीयतया निवेशनिमित्तमिदमेव—यत् वाराहभविष्योत्तरपुराणयोः तोण्डमानस्य भगवत्सखित्वाद्युपन्यस्य ब्रह्माण्डपुराणे परं चक्रवर्तिनः तद्भावादिवर्णनेन यो विरोध आपाततः स्फुरति, स खलु तोण्डमानस्यैव चक्रवर्तीति नामान्तरमिति निरूपणपरस्य ब्रह्मपुराणस्य साहाय्येनैवानवसरो भवतीति सर्वविदितमिदम् ।

एतत्संस्करणं हिन्दीभाषानुवादमेव मुख्यमवलम्ब्य प्राप्तावसरमिति हिन्दीभाषानुवादेन विशिष्य छन्दोबद्धतत्सारसंग्रहणेन च कृतसाहाय्यानां पण्डितप्रवर श्रीकेसरिकान्तशर्मणां बिए उपाधिधारिणां तथा पण्डितोत्तम श्रीलक्ष्मीधरपाठकमहोदयानां चाधमर्णा वयमिति सादरं सूचयामः *।

* वराहब्रह्माण्ड ब्रह्मपुराणानामनुवादः पण्डितवर श्रीकेसरीकान्तशर्मणा भविष्योत्तरपुराणस्यतु पण्डितवर ; श्रीलक्ष्मीधरपाठकोपाह्वानां कलकत्तासाविल्लीपाठशालाध्यापकवराणां विशिष्टसाहाय्येन संपादितः ।

अन्ते पुनः स्वल्पेनैव मूल्येन सचित्रैतत्पुस्तकप्रकाशनेन श्रीवेङ्कटाचलमाहात्म्यस्य राष्ट्रभाषा-द्वारा सर्वतः प्रकाशनमेव स्वकर्तव्यं मन्वानानां श्रीस्वामि श्रीमहन्त श्रीप्रयागदास महाशयानां राजववार्षिकोत्सवावसरे महामहोपाध्याय पण्डितकुलमण्डन-कपिस्थल श्रीदेशिकाचार्यकृतान् कांश्चन श्लोकान् केवलं संगृह्णीमः । ते यथा—

श्रीहाथिरामयोगीन्द्रसिंहासनमहाप्रभोः । श्रीमत्प्रयागदासेन्द्रोराशिषोऽमूः प्रयुञ्जमहे ॥

चञ्चच्चामरचारुपार्श्वयुगलाश्छत्रोल्लसन्मौळयो हारस्मेरभुजान्तराश्च सुखिनः खेलन्ति यद्गोचराः ।
हाथीरामविरागिपुङ्गवमहासिंहासनाधीश सा श्रेयस्संततमातनोतु भवतो लक्ष्मीकटाक्षावलिः ॥

धृतिर्नीतिश्शान्तिर्भगवति दृढा भक्तिरनघा मतिश्श्रद्धा शुद्धिर्बुधपरिषदि प्रीतिरतुला ।
गुणा एतेऽन्ये च प्रकृतिसुभगा यस्य सहजाः प्रयाग श्रीदासस्स जयतु विरागिप्रभुवरः ॥

अहं तु—"एतद्ग्रन्थस्य कर्तारः शिवरामाख्यवर्णिन" इति ब्रह्मानन्दसरस्वत्युक्त रीत्या केवलं तेषां तेषां किङ्करमात्रं श्रीस्वामि महन्तवर्य श्रीप्रयागदासजीनां सर्वांशे निदेशमात्रमनुसरन् पाठक-महोदयानां सकरुणकटाक्षमात्रमभिलषन् निमित्तमात्रमत्रेति सूचनेन प्रकृतं लेखमत्रैवोपसंहरामि ।

इति सुधीजनविधेयः

**अनन्तकृष्ण शास्त्री**

एतत्संस्करणप्रधानव्यवस्थापकः



॥ श्रीहरिः ॥

# भूमिका



भारतवर्षमें आरम्भसे लेकर आजतकका इतिहास इस बातको स्पष्ट करता है कि मूर्ति-पूजा और साथ ही देवालयोंके अस्तित्वकी रक्षाके बिना कभी भी हमलोग न विश्राम पाते, न पा सकते और न पहिले पा चुके हैं। यह बात किसीसे छिपी नहीं है कि अन्य मतावलम्बी सज्जन भी अनेक बार वाद और प्रतिवादके द्वारा मूर्तिपूजापर आक्रमण करनेसे अपनेको कृतकृत्य मानकर भी प्रतिदिन मूर्तिपूजाका महत्त्व बढ़ता ही देखते हैं।

निराकारकी उपासना साकार रूपका अवलम्ब लेकर मनके स्थिरीकरण बिना कदापि नहीं सिद्ध हो सकती ; इसलिये निराकार वादियोंके लिये भी मूर्तिपूजा अथवा सगुणोपासन पहिला सोपान माना जाता है, यह बात द्वैत-विशिष्टाद्वैत तथा अद्वैत सभी सम्प्रदायवालोंके लिये निर्विवाद सिद्ध है।

मूर्तिपूजासे विरोध रखनेवाले तथा केवल मंत्रमात्रको प्रमाण कोटिमें रखनवाले आर्यसमाजी यद्यपि—

"असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम्"

इस मंत्रको प्रक्षिप्त कहकर टाल देते हैं—परन्तु यहांपर हम बड़ी गम्भीरताके साथ यह कहते हैं कि मंत्रप्रमाण लेकर मूर्तिपूजनकी सिद्धि देखकर मंत्रको भी प्रक्षिप्त डालकर अप्रमाण बतलाना केवल उनके लिये उपहासास्पद ही है।

लोकायत ( नास्तिक ) भी पिता पुत्रादिके मरनेके बाद उनको स्मरणमें रखनेके लिये अनेक प्रकारके सुन्दर सुन्दर प्रतिकृतियां ( फोटो ) विशेष आदरके साथ रखना यदि अपना परम कर्तव्य समझते हैं तो,

अनन्त कल्याण तथा अपरिमेय प्रभाववाले भगवान्‌की मूर्तिपूजाके विषयमें जो वैखानसादि शास्त्रोंमें विशिष्टरूपसे वर्णित है, आक्षेपका अवसर ही कहांसे हो सकता है ?

नास्तिक मतकी दृष्टिमें भी पुत्र तुल्य समस्त संसारको मनुष्यादि भावनाहीसे अपने अलौकिक तथा असाधारण चरित्रोंको अनुसंधान कर हितमार्गमें लगाने तथा अहित मार्गसे हटानेके लिये सत्य-काम, सत्य-संकल्प, अप्राकृत तथा निरतिशयवत्सल भगवान् प्रतिकल्प मत्स्यादि अवतार लेकर जगत्‌के उद्धारके लिये सचेष्ट रहते हैं, जिससे क्रमशः अपने स्वरूपके अनुसंधान तथा—

"निमित्तमात्रं भव सव्यसाचिन्"

इस उपदेशके पालन करनेमें सारा संसार दत्तचित्त हो जावे ? अतएव हम पूछते हैं कि विभवावतार स्वरूप श्रीरामकृष्णादिका ही स्वरूपान्तर ( अर्चावतार ) मूर्तिका पूजन कैसे निष्प्रयोजन तथा अयुक्ति-सिद्ध माना जायगा ?

प्रत्यक्षमें की हुई स्तुति प्रायः स्वार्थसिद्धि अथवा कामक्रोधादि-मूलक ही होती है, न कि प्रेमातिशय-मूलक ? इसी कारण अप्रत्यक्षमें भगवान्‌की मूर्तिका पूजन, स्तुति एवं नामकीर्तनका बार बार अभ्यास करना विभवावतारस्वरूप श्रीरामकृष्णादि अथवा उनके मूल कारणभूत अपरिच्छिन्न ब्रह्मस्वरूपका विशेष वात्सल्य व्यंजक ही माना जायगा; इसमें कोई संदेह नहीं है ।

"परित्राणाय साधूनां विनाशाय च दुष्कृताम्"

इस वचनके अनुसार अनेक पुराणेतिहास प्रतिपादित मत्स्यकूर्मादि दशावतारोंकी तरह भगवान् भक्तानुकंपैकप्रयोजन श्रीवेङ्कटेश्वरजीका भी अवतार अट्ठाइसवें कलियुगमें स्वीकार कर चुके हैं ऐसा हमलोगोंको वराहादि बारह पुराणोंसे अवगत होता है । इस कारण अट्ठाइसवें कलियुगमें जन्म लेनेवाले हमलोगोंके लिये सबसे बढ़कर श्रीवेङ्कटेश्वर ही पूजन योग्य है, यह कहना केवल पिष्टपेषणमात्र ही है ।

श्रीवेङ्कटेशावतारमें वैकुण्ठवासी भगवान् गोविन्द लेशमात्र भी अपने परमात्म-स्वरूप तथा वैकुण्ठवासको नहीं छोड़ते हैं । इस बातको वायु और शेषके बलाबल परीक्षारूप छलसे वायुके द्वारा "तिरुपति" क्षेत्रके समीप देशमें वैकुण्ठके क्रीडाचलके लानेवाले इतिहासको श्रीवराह, भविष्योत्तर, ब्रह्माण्ड एवं ब्रह्मपुराणके जाननेवाले कौन नहीं विश्वास करेंगे ?

श्रीरामकृष्णादि अवतारोंमें रावण शिशुपाल आदिका वध और दुष्टोंका निग्रह ही प्रधान कारण है, भक्तों-पर अनुग्रह करना केवल "आनुषंगिक" है। श्रीवेङ्कटेशावतारमें तो भृगुके चरणाघातसे कुपित श्रीलक्ष्मीदेवी-जीका जो कि करवीरपुरको जा चुकी थीं, अन्वेषण करना ( ढूंढना ), राम तथा कृष्णके अवतारमें वेदवती एवं देवकीके बचे हुए मनोरथोंका पूर्ण करना, तोंडमान आदि भक्तगणोंपर दया करना, जाति, कुल एवं गुणादिकी अपेक्षा छोड़कर केवल भक्तिमात्रसे सायुज्यादिका भक्तोंको देना इत्यादि ही कारण है—यह बात इस ग्रंथके देखनेसे स्वयं ज्ञात हो जावेगी।

"कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति"

यह भगवान्‌की प्रतिज्ञा है, जिसको भगवान्‌ने अर्जुनकी रक्षा तथा अपने भक्त भीष्मकी प्रतिज्ञाको अटल रखनेके लिये 'हम अस्त्र नहीं उठावेंगे' इस प्रकारकी स्वयं की हुई अपनी प्रतिज्ञाको स्वयं छोड़कर श्रीकृ-ष्णावतारमें पालन किया। श्रीवेङ्कटेशावतारमें तो गोपाल (ग्वाले) के द्वारा कुल्हाड़ीसे काटी जानेवाली कामधेनुके स्थानमें स्वयं अपना शिर रख तथा सब प्रकारका आघात सहकर रक्तधाराके साथ साथ अपना शिर अनेक टुकड़े होनेपर भी उसका पालन किया। इससे यह बात सिद्ध होती है कि मनुष्यमात्रको समस्त कष्टोंका सहन कर तथा प्राणपणसे मरनेके लिये कटिबद्ध होकर भी गोरक्षा करना ही परम कर्तव्य है और कुछ नहीं। इस कारण समस्त गोभक्तोंको यह वेङ्कटाचलमाहात्म्य भक्तिके साथ रोज पढ़ना चाहिये, इसमें अणुमात्र भी संदेह नहीं है।

नास्य प्रजा शतवाही कल्याणी तल्पमाशये।
यस्मिन् राष्ट्रे निरुध्यते ब्रह्मजायाऽचित्या॥
नास्य क्षेत्रे पुष्करिणी नांडीकं जायते विशाम्।
यस्मिन् राष्ट्रे निरुध्यते ब्रह्मजायाऽचित्या॥

इत्यादि अथर्ववेदके मंत्र इस परिणामपर हमको बार बार ले जाते हैं कि—"गोवंशके ऊपर आपत्ति आनेसे ही राष्ट्रमें विप्लव होने लगता है।" इस कारण गोरक्षासे ही राष्ट्ररक्षा तथा गोरक्षासे ही तालाब आदि जलाशयों-में जलकी रक्षाको मनमें रखकर ही श्रीकृष्णावतार तथा श्रीवेङ्कटेशावतारमें भगवान्‌ने गोरक्षाको अपना परम कर्तव्य समझा, कहांतक कहें, गोवंशका हनन, अपहरण, अरक्षण और सबसे बढ़कर उनका ब्राह्मणके द्वारा विक्रय ही राष्ट्रके विनाशमें प्रधान कारण है, इसलिये उससे हटाना ही भारतवर्षका उद्धार करना है, और कुछ नहीं, यह बात निर्विवाद है।

गोरक्षाके लिये भारतके प्राचीन दिलीप आदि नरपतियोंने आत्मत्याग पर्यंत कौनसे साहसिक कार्य नहीं किये। यह बात—

सेयं स्वदेहार्पणनिष्क्रयेण
न्याय्या मया मोचयितुं भवत्तः ॥

रघुवंशके पांचवें सर्गके इस पद्यसे अवगत होती है हम दृढ विश्वासपूर्वक यह बात कहते हैं कि गोरक्षा ही पृथ्वीकी रक्षा है, गोरक्षा ही वाणीकी रक्षा है, और गोरक्षा ही अपने इन्द्रिय तथा आत्माकी भी रक्षा है, अधिक कहांतक कहैं, गोरक्षा ही विश्वव्यापक परमात्माकी रक्षा है। यह बात हम समयांतरमें अन्यत्र विस्तारसे कहेंगे।

पद्मावती प्रभृतिके द्वारा उपस्थापित नाम धाम सम्बन्धी प्रश्नोंका उत्तर देनेके समय स्वयं अपने "श्रीकृष्ण" नाम, श्रीरामकृष्णादि अवतारमें अवशिष्ट कार्यकी पूर्तिके लिये अट्ठाइसवें कलिमें अपना अवतार, साथ ही सबके देखनेके योग्य स्वरूप तथा समय समयपर भक्तोंके साथ प्रत्यक्षरूपमें अथवा परम्परासे वार्ता-लापादि उपक्षेप करते हुए श्रीवेंकटेशजी अपनी भक्ति परवशताका परिचय देते हैं।

तोण्डमान भक्तके लिये शंखचक्र आदिके देनेसे, पुत्र सहित ब्राह्मणकी स्त्रीको जो कि अनाहारके कारण अस्थिमात्रावशेष हो चुकी थी प्राणदान देनेसे और भीम नामक कुंभारको उसकी भक्तिभरित पूजाके प्रतिफलमें प्रेमातिशय मूलक सायुज्य पदवी देनेसे, ऐसा प्रतीत होता है कि श्रीवेंकटेश्वरजी—

"पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति"

इस वाक्यसे सम्बन्ध रखनेवाले पत्रपुष्पादिको ही सर्वोत्तम मानते हैं, न कि अहं भावसे पूर्ण होकर बहुमूल्य सुवर्ण पुष्पों द्वारा की हुई पूजाको ! यह बात वेंकटाचलके माहात्म्यसे सब कोई जान सकेंगे।

वाल्मीकि रामायणमें अग्निपरीक्षाके प्रसङ्गमें श्रीसीताजीका ही अग्निप्रवेश वर्णित है, अध्यात्मरामायण और मन्त्ररामायणमें केवल मायामय सीताका अग्निप्रवेश वर्णित है, अन्यत्र वेदवतीका सीताभाव और लक्ष्मीजीका सीताभाव पाया जाता है, इस परस्पर विरुद्ध अर्थको वेंकटाचल माहात्म्य देखनेवाले विरुद्ध नहीं मान सकते हैं। रावणके वधकी प्रतिज्ञाकर अग्निमें प्रविष्ट वेदवती नामक ब्राह्मणीको ही छलसे सीतारूपसे अग्निके द्वारा रावणके पास रखना, और उसका ही फिर अग्निप्रवेश कराना, अग्निसे निकली हुई सीताजीकी प्रार्थनाके

अनुसार रावणके वधपर्यंत सीतारूपसे लंकामें रह और फिर अग्निमें ही प्रवेशकर पद्मावती रूपसे अट्ठाइसवें कलिमें जन्म लेना एवं फिर भगवद्वतार गोविन्दस्वरूप श्रीवेंकटेशजीके साथ विवाह होना आदि विषय जाननेवाले सज्जनगण किसी प्रकार भी भगवद्गुणोंका अनुकरण करना कदापि असत्य नहीं मान सकते हैं।

पद्मावतीके विवाहोपलक्ष्में दस्तावेज (पुर्जा) लिखकर कुवेरसे कर्ज लेना और इसी प्रसङ्गमें चिट्ठीका इतस्ततः भेजना आदि प्राकृतव्यवहार जो कि वेंकटाचलके माहात्म्यमें वर्णित हैं, वे हमारी समझमें सर्वांग सुन्दर हैं।

पिताके द्वारा तलवारसे काटे हुए तथा कातरभावापन्न किरातके पुत्रको स्वयं प्रकट होकर रक्षा करते हुए श्रीवेंकटेशजी केवल भक्तिको ही देखते हैं न कि जाति, अवस्था आदिको। इसीसे यह कहा जाता है कि—

"गुणाः पूजास्थानं गुणिषु नच जातिर्नच वयः"।

वेङ्कटाचल माहात्म्यके अन्दर जो जो उपाख्यान उपलब्ध होते हैं वे सबके सब केवल प्रमाण विरुद्ध नहीं ऐसा नहीं, प्रत्युत प्रत्यक्षादिप्रमाणकदंबद्वारा सत्य सत्य सिद्ध होते हैं।

"पुराणानामुपाख्यानेषु न तात्पर्यम्"

अर्थात् "पुराणोंके आख्यानोंमें कोई तात्पर्य नहीं है" इस प्रकारका जो भट्टपादका कथन है वह वेङ्कटाचलके माहात्म्यपर नहीं लग सकता है, क्योंकि इसमें अन्य माहात्म्योंकी तरह लेशभर भी केवल पुराहृत अथवा श्रद्धामात्रसे विश्वसनीय ऐतिह्य रूप आख्यान नहीं है। यह बातें हमने तिरुपति क्षेत्रमें स्वयं रहकर देखी है।

पुराणोंमें जो एक दूसरेकी, शिव विष्णु आदिके बारेमें, उच्च नीच आदि कल्पना उपलब्ध होती है वह केवल उन उन देवताओंमें भक्ति दृढ करनेके लिये स्तुतिमात्र ही समझी जाती है। उसका अभिप्राय देवताओंमें उच्च तथा नीच भावका बतलाना नहीं है। इसी नीतिको लेकर महर्षि वेदव्यासजीने वेङ्कटाचल माहात्म्यमें जो शिवजीको वेङ्कटेश्वरका पौत्र लिखा है वह समझना चाहिये। यहांपर शिवजीकी निन्दासे तात्पर्य नहीं है, क्योंकि हरिहरादिभेद केवल नाममात्रसे ही है, वस्तुतः नहीं।

दुराचारी "माधव" नामक एक ब्राह्मण एक बार विना इच्छाके भी वेंकटाचल पर्वतपर जानेमात्रसे ही नष्ट-पाप हो गया। फिर सदाचारी मनुष्योंके विषयमें तो कहना ही क्या है।

श्रीवेङ्कटाचलमें "गोविन्द" ऐसा नाम-संकीर्तनके साथ मुंडन कराना आदि तीर्थयात्रानियम, आज भी

अनादि परम्परासे वेंकटाचल माहात्म्यके अनुसार ही किये जाते हैं। इसीलिये वेदाविर्भावकी तरह वेंकटाचल का अस्तित्व भी अनादिकालसे सिद्ध माना जाता है।

पद्मावतीका विवाह चार दिनके अन्दर ही सम्पन्न हुआ था, ऐसा श्रीवेंकटाचल माहात्म्यसे अवगत होता है; परन्तु इतनेसे आजकलके जो लोग एक दिनमें ही वहांपर जाकर विवाह कार्य सम्पन्न करते हैं। यह बात हमारी अनुमतिमें विचारने योग्य समझी जाती है।

"यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनः"

इस वाक्यसे जो सर्वोपास्य, सबके लिये एक समान आदरणीय परमात्म-स्वरूप प्रतीत होता है, वह शैव वैष्णवादि समस्त साम्प्रदायिक महानुभावोंके लिये एकमात्र उपास्य श्रीवेंकटेश्वर ही हैं, इस कारण हमारा यह दृढ़ विश्वास है कि यह श्रीवेंकटेश्वर तुरीय नारायण, तुरीय सदाशिव, अथवा तुरीय अपरिच्छिन्न परमात्मस्वरूप ही है, न कि परिच्छिन्न ब्रह्म, विष्णु आदि भेदसे अवस्थितस्वरूप है। वैष्णवसाम्प्रदायिक आचार्य स्वनामधन्य श्री "पेयालवार" महोदयने भी श्रीवेंकटेश्वरजीको शिवाभिन्न विष्णुरूपसे अथवा विष्णुसे अभिन्न शिवरूपसे अपने द्राविड़ गीतों द्वारा गाया है, यह बात छिप नहीं सकती है। वैखानस सम्प्रदायके माननेवाले भी सगुण निर्गुण भेदसे ईश्वरको दो प्रकारके मानते हैं। पूजन सगुणका ही होना चाहिये, यही उनका आग्रह है न कि निर्गुण ब्रह्मका निरास। इस कारण यह सम्प्रदाय अद्वैतवादका अत्यन्त विरोधी नहीं है। इससे यह भी सिद्ध होता है कि वैखानस सम्प्रदायकी वैदिक पूजा पद्धतिके ही अनुसरण होनेसे श्रीवेंकटेश्वरजी सब उपासकोंके आदरभाजन हैं। श्रीवेंकटेश्वरजीकी प्रतिमामें कर्णमूलपर्यंत ही शंख तथा चक्रके रहनेसे ऐसा प्रतीत होता है कि वैखानस पद्धति ही श्रीवेंकटाचलमें समादरणीय है ऐसा वैखानस लोग मानते हैं। प्रत्यक्षरूपसे वेंकटाचल माहात्म्यके अन्दर वैखानसपद्धतिसे ही पूजाविधानका उल्लेख रहनेसे इस बातको दुबारा लेकर पिष्टपेषण करना हम नहीं चाहते हैं।

आजकल श्रीवेंकटेशजीकी मूर्तिमें जो शंख तथा चक्र उपलब्ध होते हैं वह कृत्रिम है—स्वाभाविक शंखचक्रको तो तोण्डमान नामक भक्तके लिये भगवान दे चुके हैं—यह बात वेंकटाचल माहात्म्यमें विस्पष्ट है।

वैखानसाचार्य इस वेंकटाचल क्षेत्रमें सबसे प्रथम गोपीनाथ नामक अथवा नामान्तरमें श्रीनिवास दीक्षित हुआ था। उनकी सेवा रंगदास नामक किसी शूद्रने की थी, जो जन्मांतरमें तोण्डमान नामक चक्रवर्ती राजा होकर क्रमशः भगवानकी मैत्री और सायुज्यादिको प्राप्त हुआ, ऐसा वेंकटाचल माहात्म्यसे अवगत होता है। वर्तमान समयमें भी श्रीवेंकटेश्वरजीके मंदिरमें श्रीवैखानसही पूजक हैं। उनकी पुष्पादि

संग्रहके द्वारा सेवा करनेवालोंको तो वेंकटाचल क्षेत्रके रहने अथवा यहांपर जानेवाले सभी लोग जानते ही हैं। इसलिये इस विषयमें विस्तार पूर्वक लिखनेकी आवश्यकता नहीं है।

देवालयके कार्यसंचालनका अधिकार तो बहुत समयसे पंचायतके अधीन रहा, फिर कुछ दिन राजकीय प्रबंधमें रहा, फिरसे श्रीसाधुसंप्रदायके आचार्य श्रीस्वामी हाथीरामजी द्वारा प्रतिष्ठापित मठके श्रीस्वामी महंतोंके अधीनमें रहता है। इससे हम इसी परिणामपर पहुंचते हैं कि यह वेंकटाचल क्षेत्र सांप्रदायिक भेदभावसे खिन्न शैव, वैष्णव आदि संप्रदायवालोंका नियंत्रणस्थान नहीं है। हमको विश्वस्तसूत्रसे इस बातका पता लगा है कि महंतवर्य श्रीस्वामी सेवा दासजी महाराजका, तथा राजकीय मनुष्योंका आपसमें एक "इकरारनामा" ऐसा हुआ है कि इस वेंकटाचल क्षेत्रका संचालन, आपसके सांप्रदायिक कलहका स्थान न देकर, किया जावे। श्रीस्वामी साधुप्रदायका "श्रीतुलसीदासकृत रामायण"ही प्रधान है। महात्मा श्रीतुलसीदासजीने

"भवानीशंकरौ वन्दे"

इस पद्यसे श्रीशिवजीके वन्दनसे ही तुलसीकृत रामायणका उपक्रम किया। इसीलिये यहांपर शैवसंप्रदायका विरोध नहीं हो सकता। अधिक लिखनेसे क्या है, श्रीतुलसीदासजीने अपने नायक श्रीरामचन्द्रजीके मुखसे कहावाया है कि:—

सिवद्रोही मम भगत कहावा। सो नर सपनेहु मोहि न पावा॥
संकरविमुख भगति चह मोरी। सो नारकी मूढ़ मति थोरी॥
दो०—संकरप्रिय मम द्रोही, सिवद्रोही मम दास।
ते नर करहिं कलप भरि, घोर नरक महँ बास॥

और भी—

अउरउ एक गुपुत मत, सबहिं कहउँ कर जोरि।
संकर भजन बिना नर, भगति न पावइ मोरि॥४५॥

श्रीवेंकटाचलक्षेत्रका संचालन, इस प्रकार भेदभावरहित श्रीतुलसीकृत रामायणकोही प्रधान प्रमाण माननेवाले श्रीस्वामी साधु संप्रदायके अधीन हैं, यही एक बात इस विषयमें पर्याप्त प्रमाण है कि श्रीवेंकटेशजीका स्थान शैव, वैष्णवादि भेद छोड़कर सबके लिये आराधनका स्थान है।

"व्रत चूड़ामणि" में जो "श्रीवेंकटेशपुराण"का उल्लेख करते हुए—

"भगवन् भगवान्विष्णुः कलावाराध्यते कथम्।
कुत्रास्ते कीदृशी तात! सर्वदेवमयी कला॥

विष्णुर्स्कंदात्मिका मूर्तिर्वेंकटेश्वररूपिणी ।
सर्वदेवमयी शक्तिः पूज्यतां सर्वमानवैः ॥
सुमहापये वेंकटाद्रौ क्षेत्रपोदमयोऽपि ।
कदापि न कलाह्रासः सर्वदा स्याद्वृत्तोऽञ्छ्यः ॥
सुमहापये कुमाराद्या विष्णशाद्या वेंकटाचले"

इस प्रकारके वचन मिलते हैं, उनसे यही बात आपाततः प्रतीत होती है कि वेंकटाचलक्षेत्र केवल विष्णुक्षेत्र नहीं है, अपितु स्कंद-विष्णुशक्ति संवलित विष्णुक्षेत्र है। परंतु माहात्म्यके उपक्रममें केवल विष्णुपूजन विषयकाही प्रश्न होनेसे तथा उपसंहारमें श्रीवेंकटेश्वरके स्कंद विष्णुमयस्वरूप शक्तिरूप होनेपर भी स्थानभेदसे उस उस शक्तिके व्यवस्थापन होनेके कारण वैष्णवी शक्ति ही वेंकटेश्वरस्वरूपमें परिणत हुई, ऐसा स्पष्ट प्रतीत होता है, इसलिये इसके विष्णुक्षेत्र होनेमें कोई विप्रतिपत्ति नहीं होगी, ऐसा पूर्ण विश्वास है।

आजतक प्रचलित वराह आदि बारह पुराणोंके अन्तर्गत श्रीवेंकटाचल माहात्म्यमें—ऊपर कहे हुए श्लोकोंके न मिलनेसे इस विष्णुक्षेत्रमें भी विराटस्वरूप परमेश्वरकी ही उपासना होती है न कि शिव, विष्णु आदिपरिच्छिन्न मूर्तिका, ऐसा पहिले ही लिखा जा चुका है। अतः सर्वोपास्य-सर्वदेवमय गोविन्द ही श्रीवेंकटेश्वर हैं। इस विषयमें यहांपर अधिक लिखनेका अवसर नहीं है।

श्रीवेङ्कटेश्वर यंत्रालयसे प्रकाशित वामन पुराणान्तर्गत श्रीवेङ्कटाचलके माहात्म्यसे भी स्कंदका आंशिक विष्णुत्व विस्पष्ट रूपसे वर्णित है। इस बातको हम यहांपर अधिक न लिखकर द्वितीय भागकी भूमिकामें लिखेंगे। साथ ही व्रतचूडामणिमें विद्यमान श्रीवेंकटेश माहात्म्यके विषयमें भी, मूलावेदनके साथ साथ, दूसरे भागकी भूमिकामें ही उपस्थित करेंगे। यहांपर तो केवल स्कंद, शिव तथा इन्द्रादि दिक्पालोंका वेंकटाचलमें तपस्याके लिये जानेके कारण श्रीवेंकटेशजी समस्त देवगणोंके अधिष्ठानभूत केवल परमात्मस्वरूप हैं, इतना ही लिखकर विश्राम लेते हैं।

विमानके कोनोंपर सिंहकी जो मूर्ति अवस्थित है वह—

"खगेंद्रं वा मृगेन्द्रं वा कोणेषु परिकल्पयेत्"

इस वैखानस संहिताके वचनसे सिद्ध है। एतावता इस क्षेत्रका शक्तिक्षेत्र होना सिद्ध नहीं होता है, ऐसा वैखानस लोग मानते हैं। नवरात्रोंमें जो यहांपर उत्सव होता है वह भी श्रावणमें श्रवण नक्षत्रकी प्रधानता लेकर ही किया जाता है, नवरात्रको लक्ष्यमें रखकर नहीं। इसी कारण नवरात्रके विना भी हर तीसरे वर्ष सौर तथा

चन्द्र मासके भेदसे श्रवण मासका भेद होनेपर महोत्सवका दो बार अनुष्ठान यहांपर होता है, ऐसा वे कहते हैं। हमको यहांपर विनीत भावसे यही निवेदन करना है कि वेंकटाचल माहात्म्यमें—

"कन्यागते सवितरि"

इस प्रमाणसे सौरमासगत श्रवण नक्षत्रकी प्रधानता लेकर ही उत्सवानुष्ठानका विधान होनेसे वर्तमान समयमें जो दो उत्सव किये जाते हैं और उनमें भी दूसरे उत्सवका अनुष्ठान गौणरूपसे कन्यागत सूर्य होनेपर किया जाता है वह विचारने योग्य है। हमारे लिये केवल यही सन्तोषका विषय है कि जो इस वेंकटाचल क्षेत्रमें जहांपर कि प्रतिदिन काम्य महोत्सवकी व्यवस्था देखनेमें आती है, वहांपर ब्रह्मोत्सवरूपसे प्रति तीन वर्षके अन्दर दो महोत्सवोंका अनुष्ठान भी भक्तोंको प्रोत्साहित करता है।

वेंकटाचल माहात्म्यमें जो महोत्सवके दिनोंमें दिनभेदसे वाहनभेदकी व्यवस्था दीखती है, उसका इस समयमें भी "प्रायः" पालन हो रहा है। यहांपर "प्रायः" इस पदसे यही हमारा प्रयोजन है कि वेंकटाचल माहात्म्यमें जो षष्ठ-सप्तम-नवम दिनोंमें दिनमें, सायंकालमें तथा रात्रिमें उत्सवके अनुष्ठानकी आवश्यकता लिखी है, उसका आजकल तीनों दिन परिपालन नहीं होता है। हर्षका विषय यही है कि यथासमय उस उस विभागके अध्यक्षोंकी सूचनाके अनुसार शास्त्रानुकूल तथा पक्षपातरहित निःस्वार्थभावसे महन्त श्रीस्वामिप्रयागदासजी उस उस कार्यके सम्पादनमें सर्वदा सचेष्ट हैं। वर्तमान समयमें जो वेंकटाचल क्षेत्रके प्रबन्धक महन्त श्रीस्वामि प्रयागदासजी हैं उनके ऐतिहासिक विषयमें कुछ लिखना भी यहांपर अप्रासंगिक न होगा।

वेङ्कटाचल क्षेत्रका प्रबंध पहिले बहुत दिनोंतक उन उन पंचायतोंके अधीन रहा, उसके बाद १८०२ से लेकर १८४२ तक गवर्नमेंटके अधीन रहा, उस समयतक अनेक स्थानोंसे आये हुए एवं भक्तवर धनिकोंके द्वारा चढ़ाये हुए धनका प्रतिवर्ष हिसाब लगानेपर (१४५७२०) रुपया आय और ३५ हजारका व्यय होता था। १८४२ सम्वतमें अपराधके भयसे अपने हाथमें दिया हुआ भी अधिकार मैसोरके महाराजने जब स्वीकार न किया तब अनेक वार प्रार्थना करनेपर उसका संचालन भार हरिभक्त श्रीस्वामि श्रीमहंत सेवादासजीने अंगीकार किया है।

यह बातें भी हम "श्रीस्वामि हाथीरामजीके मठके इतिहास" से जानते हैं कि विरक्तोंमें प्रधान स्वनामधन्य श्रीस्वामि हाथीरामजी महोदय भक्तिके अतिशय द्वारा भगवानके सान्निध्यको प्राप्तकर भगवानके साथ "अक्षदेवनादि" लीला विशेष भी इमलीके वृक्षकी छायामें प्रतिदिन करते थे। माना जा सकता है कि इसी बातको लक्ष्यमें रखकर गवर्नमेंटके प्रतिनिधि भी इस मठके अध्यक्ष श्रीस्वामी सेवादासजीके अधीन ही इस

वेङ्कटाचल क्षेत्रके प्रबंधको दे चुके हैं। लब्धप्रतिष्ठ श्रीस्वामि हाथीरामजीका मठ, अतिथि सत्कार तथा शिष्य परंपराके संग्रहसे बड़ी भारी संपत्तिसे सुशोभित था, इसी कारण गवर्नमेंटके कर्मचारियोंने इस मठके अध्यक्ष विश्वास योग्य श्रीस्वामी सेवादासजीको ही श्रीवेङ्कटाचल क्षेत्रका रक्षक नियत किया है, जिसके लिये वे धन्यवाद-के पात्र हैं।

यह भी बड़े ही हर्षका स्थान है कि आरंभसे लेकर आजतकके श्रीस्वामि महंतवर्ग मठ एवं देवालयकी संपत्तिको अलग अलग हिसाब किताबके द्वारा सुरक्षित रखते हैं। विश्वस्त रूपसे हमको यह बात भी विदित हुई है कि श्रीसेवादासजीके समयसे प्रति वर्ष (१५७५३०) रुपयेका आय और ६८ हजार रुपयेका व्यय सिर्फ देवालयके विभागमें १९०० सन् ईस्वीतक बिना किसी प्रयासके हुआ।

इसी क्रमसे आय-व्ययके साथ श्रीस्वामि सेवादासजीसे लेकर व्यतीत हुए पांच श्रीमहंतोंतक सुचारु रूपसे काम चलनेपर, सन् १९०० ईस्वीमें सत्तरह वर्षकी अवस्थामें ही उत्कट वैराग्ययुक्त, वर्तमान समयमें अलग-अलग दोनों संस्थाओंको चलानेवाले श्रीस्वामि महंत श्रीप्रयागदासजी महोदय उनकी गद्दीपर अभिषिक्त हुए जिनका गद्दीपर बैठनेके उपरांत ५ वर्षतक हर साल मठके स्वतंत्र आयको अलग करके ४४५०००) रुपयोंका आय और उसीके मुताबिक खर्चका बजट भी देवस्थानके डिपार्ट (विभाग) में हुआ। इसके बाद उन कामोंमें सहूलियत करनेसे आयवृद्धि तथा उसीके मुताबिक व्ययकी वृद्धि होनेसे, प्रतिवर्ष वर्तमान समयमें अपनी विचारशक्तिके प्रभाव, प्रत्येक विषयमें स्वयं कर्तव्याकर्तव्य विचार (अथवा) अधिकारका रक्षण तथा हर समय देवालय सबन्धी कृत्योंके निरीक्षणमें अपने आपको लगानेसे बड़ी गंभीरताके साथ "निमित्तमात्रं भव सव्यसाचिन्" इस उपदेश तथा तुलसीकृत रामायण स्थित पद्धतिके अनुसार शत्रु और मित्रमें एक भाव रखकर १२०००००) रुपयोंके आयको एवं जीर्णोद्धारके द्वारा नूतन रूप देनेसे श्रीवेङ्कटेश्वर तथा पद्मावतीके देवस्थानकी तरह श्रीकपिल तीर्थ आदि शिवक्षेत्रोंके जीर्णावस्थित रूपमें वर्तमान, तालाब, सीढ़ियां, सवारी, मंदिर और जेवरात आदिको भी बढ़ाते हुए वे श्रीस्वामि महंतवर्य सब सांप्रदायिक मनुष्योंके प्रेमपात्र हो विराजते हैं।

ये महानुभाव—

"विद्या विनयसंपन्ने ब्राह्मणे गवि हस्तिनि।
शुनि चैव श्वपाके च पंडिता: समदर्शिन:"

इस भगवान्के उपदेशके अनुसार, वर्णाश्रम मर्यादाका पालन करते हुए ब्राह्मणसे लेकर अंत्यजपर्यंत उदार

भावसे अन्न वस्त्रका असंख्य भावमें यथोचित वितरण; यात्रियोंके ठहरनेके लिये अनेक लक्षोंके व्ययसे सुंदर सुंदर धर्मशालाओंके बनवाने; संस्कृत महाविद्यालयके द्वारा अनेक काव्य, नाटक, व्याकरण, न्याय, मीमांसा, वेद, वेदांत, वैखानस, पांचरात्र आदि विद्याओं एवं लोक व्यवहार प्रतिष्ठा तथा उत्साह वृद्धिके लिये प्राचीन पद्धतिके अनुसार दो हाईस्कूल द्वारा, उनके निमित्त प्रति वर्ष लाखों रुपयोंके खर्चसे पाश्चात्य शिक्षाकी उन्नतिके लिये लोक प्रसिद्ध प्रकांड पंडितोंकी सहायतासे अधिक प्रचार; इतिहासमात्रके संकलनार्थ शासन परीक्षा विभागके खोलने और इसी वर्ष नया प्रेस खोलकर धार्मिक दार्शनिक ग्रंथ प्रकाशन द्वारा, धार्मिक लोगोंके लिये किं बहुना मनुष्यमात्रके लिये प्रातःस्मरणीय हैं।

करोड़ों रुपये पहिले देवालयोंके कार्यमें, उसके अनंतर तदंगभूत विद्याओंके प्रचारमें, फिर नगर परिमार्जन तथा नागरिक एवं यात्रिगणोंके लिये आयुर्वेद विभाग द्वारा स्वास्थ्य रक्षामें, यथासंभव व्यय करनेवाले तथा अपनी तरह देवस्व और धर्मस्वकी रक्षामें सर्वदा तत्पर, साथ ही देवस्वकी रक्षाके सुयोग्य रक्षक आप जैसे महानुभाव संसारमें विरले ही हैं।

इनके द्वारा किये हुए और भविष्यमें करनेके लिये संकल्पित समस्त कार्य विशेषको वर्तमान समयके स्वनामधन्य सी० दोरस्वाम्यैय्यंगार एम० एल० ए०, प्रभृति नेताओंने उनकी "सिलवरजुबली" के अवसरपर पुस्तकाकारमें प्रकाशित किया है। इसलिये इस विषयमें अधिक लिखनेकी कोई आवश्यकता हमको प्रतीत नहीं होती है।

इस वेंकटाचलमाहात्म्यको हिन्दी भाषानुवादके साथ साथ प्रकाशित करनेके लिये बहुत समयसे ही श्रीमहन्तजी प्रयत्न करते थे, इसी कारण प्रयागके रहनेवाले हिन्दी भाषाके प्रसिद्ध पण्डित श्रीद्वारकाप्रसाद चतुर्वेदीजीसे एक इसका अनुवाद कराया भी था, परन्तु भगवानकी प्रेरणासे अब इस अनुवादकेही साथ श्रीमहन्तजीका मनोरथ पूर्ण हुआ। इसमें भी कोई त्रुटि रह गई हो तो पाठक क्षमा करें। पाहिले मूल मात्र श्रीवेंकटाचलमाहात्म्य मुम्बईके वेंकटेश्वर प्रेससे प्रकाशित हुआ था, जिसमें पुराणोंका क्रम इस प्रकारसे था—

| | |
|---|---|
| (१) वराहपुराण | (७) वामनपुराण |
| (२) पद्मपुराण | (८) ब्रह्मपुराण |
| (३) गरुडपुराण | (९) आदित्यपुराण |
| (४) ब्रह्माण्डपुराण | (१०) स्कंदपुराण |
| (५) मार्कण्डेयपुराण | (११) भविष्योत्तरपुराण |
| (६) हरिवंशपर्व | (१२) श्रीवेंकटेश्वररहस्य |

भाषानुवाद समेत इस संस्करणमें जो कि दो भागोंमें प्रकाशित होगा, इस समय पहिला भाग दूसरे

क्रमका अवलंब लेकर प्रकाशित किया गया है। मेरे इस साहसके लिये सबलोग क्षमा करेंगे। हमारा यह साहस नतो सर्वथा निराधार है और न बिना कारणके है। पहिले क्रममें "तोण्डमान" का उपाख्यान अथवा "पद्मावती" का परिणयवर्णन—वराह, ब्रह्माण्ड, ब्रह्म तथा भविष्योत्तरपुराणके ढंगपर था, जिसमें पढ़नेवाले महानुभावोंके लिये विषयतारतम्यके इधर उधर होनेसे उसके ऊहापोहमें बड़ा कष्ट उठाना पड़ता था। इस कारण हमने पाठकोंकी सहूलियतके लिये तथा विषयको विस्पष्ट रूपसे समझनेके लिये इस क्रममें परिवर्तन किया है। वराहपुराणके अनन्तर भविष्योत्तर पुराण है इस विषयमें हम यहांपर इतना ही कहना चाहते हैं कि वराहपुराणके उपसंहारमें "समविष्यां सहोत्तरां" इस प्रकारके पाठके मिलनेसे भविष्योत्तर पुराणके संग्रह भूत वराह पुराणके बीचमें वेंकटाचल माहात्म्य उपलब्ध होता है।

ब्रह्माण्डपुराणका जो यहांपर तीसरे नम्बरमें उल्लेख किया गया है उसका कारण यह है कि ब्रह्माण्ड पुराणमें जो शेषाचलादिका नाम निर्देश और तोण्डमानका उपाख्यान है वह प्रायः भविष्योत्तर पुराण क्रमसे ही लिखा गया है। अब रहा ब्रह्मपुराणका चौथे नम्बरपर उल्लेख। उसका कारण यह है कि वराह और भविष्योत्तर पुराणमें जो तोण्डमानका भगवत्सखित्वादि लिखा गया है वह ब्रह्माण्डपुराणमें चक्रवर्तीके नामसे है। इसमें जो आपाततः विरोध प्रतीत होता है वह ब्रह्मपुराणमें लिखे तोण्डमानका ही दूसरा नाम चक्रवर्ति होनेपर निरस्त होता है, इस बातको सब जानते हैं।

यह संस्करण मुख्यतया हिन्दीका अनुवाद साथ लेकर जनतामें उपस्थित होता है। इसके उपलक्षमें श्री पण्डितवर केसरीकांतजी बी० ए० ने जो उसका छंदोबद्ध सार संग्रह तथा वाराह ब्रह्माण्ड एवं ब्रह्मपुराणका अनुवाद करनेमें अपना अमूल्य समय दिया है, उसके लिये हम कृतज्ञ हैं। साथही हम श्री पण्डितप्रवर लक्ष्मीधरजी पाठकके भी कृतज्ञ हैं जिन्होंने अपने अमूल्य समयका उपयोग कर भविष्योत्तरपुराणका अनुवाद करनेमें विशिष्ट साहाय्य दिया है।

"एतद्ग्रंथस्य कर्तारः शिवरामाख्यवर्णिनः"

इस ब्रह्मानंद सरस्वतीजीके कथनानुसार हमतो केवल उन उन ग्रंथकारोंके कृपापात्र बनते हुए, पाठक महोदयोंके कृपाकटाक्षमात्रही की इच्छा रखकर अपनेको निमित्तमात्र ही मानते हैं।

अनुवादक—
लोकविख्यात अखिलानन्द शर्मा कविरत्न "पाठक"
मु० पो० अनूप शहर, यू० पी०

सुधीजनविधेय
**अनन्तकृष्ण शास्त्री**
एतत्संस्करण-प्रधान-व्यवस्थापक

अशरीरा जगादैनं तदानीं शोकपीडितम् ॥ ९ ॥ मा शुचस्त्वं महाबाहो धैर्यमालम्ब्य बुद्धिमान् ॥ इत उत्तरदिग्भागे क्रोशमात्रे महागिरिः ॥ १० वेङ्कटाचल इत्येव प्रथितः पृथिवीतले ॥ आपन्नकामधेनुर्यः शोकार्तानां सुरद्रुमः ॥ ११ ॥ चिन्तामणिरिवार्तानां तत्रास्ते कमलापतिः ॥ निर्हेतुकदयापूर्णः श्रितानामिष्टदः सदा ॥ १२ ॥ तत्रास्ते पद्मिनी काचित्फुल्लपङ्कजशोभिता ॥ स्वामिपुष्करिणीत्येव नामतः प्रथिता शुभा ॥ १३ ॥ तत्पश्चिमे तटे श्रीमान्महावाल्मीकभूधरः ॥ उत्तिष्ठ तत्र गच्छ त्वं तत्तीरे कुटिकां कुरु ॥ १४ ॥ तत्र स्थित्वा त्रिसन्ध्यं वै तत्रैव स्नानमाचरन् ॥ तत्र स्थितं वेङ्कटेशं भावयित्वा च बुद्धितः ॥ १५ ॥ चतुर्भुजं शङ्खचक्रे दधानं वरदं हरिम् ॥ अभ्यर्चयन्मासषट्कं श्रद्धाभक्तिसमन्वितः ॥ १६ ॥ निवस त्वं महाबाहो स्वामित्वं प्राप्स्यसि ध्रुवम् ॥

निद्रामें ही पड़े हुए उनसे अशरीरा भगवती वाग्देवीने कहा—"हे महाबाहो ! अब धैर्य धारण करके, सोच मत करो । यहांसे लगभग कोस भरपर उत्तर तरफ पृथ्वीतलमें अत्यन्त विख्यात वेङ्कट नामका पर्वत है, जो दीनोंके लिये कामधेनु, शोकार्तोंके लिए कल्पवृक्ष और आर्तोंके लिए चिन्तामणि है, वहां ही कमलापति भगवान् वास करते हैं, जो अहेतु ही दयानिधि, आश्रितोंके अभीष्टपूरक हैं और वहां ही कोई स्वामिपुष्करिणी नामसे विख्यात अत्यन्त शुभ्र खिले हुए अनन्त कमलोंसे परिपूर्ण पुष्करिणी है । उसके पश्चिम भागमें, वल्मीकमय पर्वत है, उठो, वहां ही जाओ, उसीके किनारे कुटी बनाओ और वहां रहकर त्रिकाल स्नान करते हुए वेङ्कटेश भगवान् चतुर्भुज शंख-चक्र-धारी हरिकी, छः मासतक श्रद्धा-भक्तिसे ध्यान तथा पूजा करते हुए निवास करो । ऐसा करनेसे तुम अवश्य स्वामित्व तथा स्वराज्य पा जाओगे" ॥ १७ ॥

तच्छ्रुत्वा वचनं तस्या गतशोकः प्रसन्नधीः ॥ १७ ॥ आरुरोह गिरेः शृङ्गं पुण्यं परमपावनम् ॥ चम्पाकाशोकपुन्नागचूतधात्रीसमन्वितम् ॥ १८ ॥ चन्दनागरुहिन्तालरक्तचन्दनभास्वरम् ॥ चमरीमृगसाहस्रं कस्तूरीमृगसेवितम् ॥ १९ ॥ शुककोकिलसन्नादमयूरस्वनशोभितम् ॥ एवं मनोहरं शृङ्गमारुह्य कनकोपमम् ॥ २० ॥ मृग-

यामास तत्तीर्थं चिह्नतस्तत्र तत्र वै ॥ ददर्श सरसीं तत्र निर्मल-स्फटिकोपमाम् ॥२१॥ तिलकाशोकपुन्नागवकुलैश्च विशोभिताम् ॥ रम्योपवनसंशुद्धां रक्तराजीवराजिताम् ॥२२॥ मत्स्यकच्छपस-म्बाधां तीरस्थतरुभास्वराम् ॥ पुष्पिताम्रवणोपेतां कोकिलेकारवा-कुलाम् ॥२३॥ तिलकैर्बीजपूरैश्च वरैः शुक्रद्रुमैस्तथा ॥ पुष्पितैः करवीरैश्च भाण्डीरैर्निचुलैस्तथा ॥२४॥ अशोकैः सप्तपर्णैश्च केतः कैरतिमुक्तकैः ॥ अन्यैश्च विविधैर्वृक्षैः पुष्पितैश्च मनोहराम् ॥२५॥ स्वामिपुष्करिणीं दृष्ट्वा प्रमुमोद महामनाः ॥

यह सुनकर वह विमल बुद्धिवाले, शोकत्यक्त होकर उस परम पुण्य, परम पवित्र पर्वत शिखरपर चढ़ गये, जो चम्पा, अशोक, पुन्नाडा, आम, हर्रे आदि वृक्षोंसे समन्वित; चंदन, अगर, हिंताल, लालचन्दन आदिसे सुशोभित; चमरिया, सुरही गाय, हरिण तथा हजारों कस्तूरी-मृगसे सेवित और सुग्गे, कोयल, मयूर, आदिकोंके सुन्दर, मधुर, एवं ललित शब्दोंसे गुञ्जित हो रहा था। ऐसे मनोहर सुवर्ण सदृश शृंगपर चढ़कर, उपरोक्त चिन्हों द्वारा उस बताये हुये तीर्थको वे खोजने लगे। तदनन्तर निर्मल स्फटिकके समान प्रभायुक्त; तिलक, अशोक बकुल पुन्नाग आदि वृक्षोंसे शोभित, रम्य उपवनयुक्त, रक्त कमलोंसे घिरा हुआ, मछली, कछुयेसे पूर्ण, तीरस्थ वृक्षोंसे प्रकाशमान, फूले हुए आम्रसे युक्त तथा वन कोकिलारव कलरवित; तिलक, बिजौरे, श्वेत पुष्पी, आदिकोंसे पुष्पित, करवा, भांडीर, बेंत आदिकी झाड़ियोंसे भरी हुई, अशोक, सप्तपर्ण केतकी, अतिमुक्ता, आदि अनेक नाना भांतिके मनोहर फूलवाले वृक्षोंसे सुशोभित स्वामिपुष्करिणीको देखकर अत्यन्त आनन्दित हुए ॥२६॥ *

कृत्वा तु कुटिकां तत्र निवासमकरोत् बुधः ॥२६॥ स्नानं त्रिषवणं कुर्वन् वेंकटेशं समर्चयन् ॥ व्रती च नियताहारो मासषट्कम-वर्तत ॥२७॥ ❁ ❁ ❁ ❁

वहींपर कुटी बनाकर वह विद्वान् निवास करने लगे। त्रिकाल स्नान तथा वेङ्कटेशकी पूजा करते हुए; व्रतबन्ध, नियताहार होकर छः मास पर्यन्त वहां ठहरे रहे ॥२७॥

ततः स्वामिसरोमध्यादुदतिष्ठन्महाद्भुतम् ॥ अनेकसूर्यसङ्काशं शोभयच्च दिशो दश ॥ दिव्यं विमानं तत्रैव तस्थौ देवः श्रियः पतिः ॥ शङ्खचक्रगदापाणिः श्रीभूमिसहितः परः ॥२९॥ ❁

तत्र स्वामिपुष्करिणीके बीचसे महा अद्भुत, अनेकों सूर्यकी तेजवाला, दशों दिशाओंको शोभित करता हुआ, एक दिव्य विमान निकला, जिसमें शंख-चक्र गदा धारी श्रीपति, श्रीभगवान श्री तथा भूदेवीके साथ बैठे ॥२६॥

तत्र देवाः समाजग्मुर्ब्रह्माद्या मुनयोऽपि च ॥ सिद्धा विद्याधराश्चैव किन्नराश्च दिशाधिपाः ॥३०॥ वसवः सप्त मुनयः साध्या रुद्राः समागताः ॥ भेरीमुरजवाद्यानि नेदुश्चाकाशवर्त्मनि ॥३१॥ गीतं नृत्तं च वाद्यं च चक्रुः सर्वाश्च देवताः ॥ तुष्टुवुः परमोदारैर्वेदमन्त्रैर्दिवौकसः ॥३२॥

फिर तुरन्त ही ब्रह्मादि देवता, मुनि, सिद्ध, विद्याधर, किन्नर, गन्धर्व, दिक्पाल, अष्टावसु, सप्तर्षि, साध्य, रुद्र आदि आए और आकाशमें भेरी-मृदङ्ग आदि वाद्य बजने लगे। सब देवता नाच, गान, वाद्य करने लगे एवं परमोदार वेदमन्त्रोंसे भगवानकी स्तुति करने लगे ॥३२॥

ससम्भ्रमं समुत्थाय शङ्खणः प्रणिपत्य च । स्तुत्वाथ देवदेवेशं व्यजिज्ञपदिदं नृपः ॥३३॥ देवदेव जगन्नाथ जगद्रक्षणतत्पर ॥ भवद्गतं क्रमायातं स्वामित्वं मम केशव ॥३४॥ हृतं राजभिराक्रम्य राज्याद्भ्रष्टोऽस्म्यभाग्यतः । रक्ष मां करुणासिन्धो महोदार जगत्पते ॥३५॥ न जाने व्रतशीलं च नियमं वा जपादिकम् ॥ दिष्ट्या दृष्टो मया स्वामिन्नमोघं दर्शनं तव ॥३६॥ इत्युक्तः कालमेघाभो बभाषेऽथ श्रियः पतिः ॥३७॥

कौतूहलसे उठकर शङ्खणने भी प्रणाम तथा स्तुति करके देवादिदेव भगवानसे यह निवेदन किया कि हे देव-देव जगन्नाथ! हे संसारकी रक्षा करनेमें तत्पर! मेरा जो स्वामित्व क्रमानुसार मुझको मिल चुका था, वह नष्ट हो गया तथा मैं राजाओंसे आक्रमित होकर अभाग्यवश राज्यसे भ्रष्ट हो गया हूं। अस्तु हे करुणासिन्धो, हे परमोदार, हे जगत् पते, अब मेरी रक्षा करो। मैं न तो व्रतशीलादि ही जानता हूं, और न जपादि नियम ही जानता हूं। किन्तु भाग्यवश ही मुझे हे स्वामिन्, आपके दर्शन मिल गये। यह सुनकर काले मेघके समान वर्णवाले, श्रीपति बोले ॥३७॥

*श्रीनिवास उवाच —*

मा शुचस्त्वं मया दत्तं स्वामित्वं पूर्वमागतम् ॥ यस्मात्तव महाभक्तिः स्वामिपुष्करिणीजले ॥३८॥ ये केचन समागत्य स्नानं कुर्व-

न्तिसंयताः स्वामिपुष्करिणीतीर्थे स्वामित्वं प्राप्नुयुर्नराः ॥३९॥ तेषां व्रतानुगुण्येन स्वामित्वं भवति ध्रुवम्॥ स्याद्धि तेषां पराधीनभावलेशः कदाऽपि न ॥४०॥ त्वं च गत्वा महीपाल कुरु राज्यमकन्टकम् ॥ समक्षं देवदेवानामित्युक्त्वाऽन्तरधीरयत ॥४१॥

श्रीनिवासजी बोले दुख मत करो, मेरा दिया हुआ राज्य तुम्हें पहले ही मिल गया और तुम्हारी इस भक्तिसे यह भी वर देता हूं कि जो कोई यहां आकर संयत हो स्वामिपुष्करिणी तीर्थमें स्नान करेगा, वह मनुष्य अवश्य ही स्वामित्व लाभ करेगा। उसके व्रतादिकोंके गुण एवं माहात्म्यसे अवश्य स्वामित्व होता है और उसको पराधीनताका भाव भी कभी नहीं होता। अस्तु, हे राजन! अब तुम अपने राज्यमें जाकर अकंटक राज्य करो। सब देवताओंके सामने ही यह कहते-कहते वे अन्तर्ध्यान हो गये ॥ ४१॥

स्वामिपुष्करिणीशब्दो रूढस्तस्मिन् सरोवरे ॥ व्युत्पत्तिकथिता तस्यास्तीर्थानां स्वामिनी यतः॥४२॥ स्वामिपुष्करिणीत्येवं तस्मात् पूर्वं पुरातनैः॥ प्रोक्तेदानीं भगवता व्युत्पत्तिस्तस्य सम्मता॥४३॥ स्वामित्वस्य प्रदानाच्च स्वामिपुष्करिणी त्वियम् ॥ ❀

स्वामिपुष्करिणी जो शब्द है यही उस सरोवरमें रूढ़ शब्द है, और इसीलिये उसकी व्युत्पत्ति इस प्रकार की गयी है; क्योंकि 'यह पुष्करिणी तीर्थोंका स्वामी है, इसलिये ही प्राचीन कालसे लोगोंने तथा भगवान्‌ने अपने मतानुसार इसको स्वामिपुष्करिणी कहा है। किन्तु, यहां एक बात और है कि यह स्वामित्व प्रदान करती है; इस कारणसे भी यह स्वामिपुष्करिणी है ॥४३॥

अहो महत्त्वं तीर्थस्य दर्शनं पापनाशनम् ॥४४॥ धन्यास्त्वे ते महाभागा एतद्विषयवासिनः ॥ इत्युक्त्वा त्रिदशाः सर्वे ययुः फुल्लहृदम्बुजाः ॥४५॥ शङ्खणोऽपि महाराजः सभार्यो हृष्टमानसः॥ अवरुह्य गिरेस्तास्मात्स्वं च देशं जगाम ह ॥ तद्राज्यहारिणः सर्वे परस्परजिगीषया ॥४६॥ मम राज्यमिदं राज्यं ममैवेत्युद्यतायुधाः ॥ अन्योन्यमाहताः सन्तः परिक्षीणाश्च तेऽभवन् ॥४७।

अहा! इस तीर्थका कितना महनीय महत्त्व है कि इसके दर्शनसे पापपुञ्ज नाश हो जाते हैं और ये महाभाग तो परमधन्य हैं, जो इसके पास वास करते हैं। यह कहते हुए सब देवता आनन्दित हृदयसे चले गये।

महाराज शंखण भी अपनी स्त्रीके साथ प्रफुल्ल एवं सन्तुष्ट हृदयसे उस पर्वतपरसे उतरकर अपने देशको गये, जहां उसके राज्यको हरण करनेवाले आपसमें ही परस्पर उसको पानेकी इच्छासे युद्धार्थ उद्यत हो रहे थे, और एक दूसरेको मार-मारकर आपसहीमें क्षीण हो रहे थे ॥४७॥ * * *

मध्येऽस्माकं न कस्यापि राज्यं तस्यैव तद्भवेत् ॥ इति निश्चित्य मनुजाः प्रेरिता राजभिस्तदा ॥४८। गोदावरीतीरदेशे शङ्खणं ददृशुर्मुदा ॥ तव राज्यं महाभाग तुभ्यं दत्तं च राजभिः ॥४९॥ आगच्छ भुङ्क्ष्व राज्यं तदित्युक्तस्तैर्महीपतिः ॥ स्वकं देशं ययौ राजा काम्भोजं नाम नामतः ॥५०॥ ❁ ❁ ❁

अन्ततः राजवर्गोंने यह निश्चय करके कि यह राज्य हमलोगोंके मध्य किसीका नहीं होगा; बल्कि उन्हीं राजाका होगा, उन्हें ढूंढनेके लिए दूत भेजे, और उन्होंने गोदावरी तीरपर उस शंखण राजाको सन्तोषसे देखा और कहा कि हे राजन् ! यह राज्य आपहीका है, और राजपुरुषोंने आपहीको दिया है। इसलिये आप चलिये और अपना राज्य भोग कीजिये, ऐसा कहनेपर वह राजा अपने देश कांभोजमें गये ॥ ५० ॥

ततः सर्वेऽपि राजानः शङ्खणं च वरासने ॥ स्थापयित्वा जलैः पूतैरभिषिच्य ययुः पुरात् ॥५१॥ सोऽपि स्वदेशमासाद्य स्वामित्वं प्राप्य पूर्ववत् ॥ वेङ्कटेशप्रसादेन चक्रे राज्यमकण्टकम् ॥५२॥ श्रुतं महत्त्वं तीर्थस्य मुनयः किं तपोधनाः ॥५३॥ ❁ ❁

इति श्रीवराहपुराणे श्रीवेङ्कटाचलमाहात्म्ये भ्रष्टराज्यस्य शङ्खनृपस्य राज्यप्राप्तिक्रमवर्णनं नाम-षट्त्रिंशोऽध्यायोऽत्र षष्ठः ॥६॥

तदनन्तर वहांके सभी राजाओंने शंखणको उत्तम आसनपर बैठाकर पवित्र जलसे अभिषिक्त कर उस नगरसे चले गये। अब उन्होंने अपना राज्य तथा स्वामित्व पाकर श्रीवेङ्कटेश्वरके प्रसादसे यथापूर्व अकंटक राज्य किया। यह कहकर सूतजीने पूछा कि हे ऋषियो ! आपने तीर्थ-माहात्म्य सुना कि नहीं ॥५३ ॥

इति षष्ठोऽध्यायः

## सप्तमोऽध्यायः ॥७॥

विप्र आतमा रामकी, चिन्ता अरु धन-नाश।
विष्णु-भक्ति कपिलादि दश, तीरथ सप्त निवास ॥१॥

दर्शन सनत्कुमारका, धन-हित पश्चाताप ।
शान्ति वचन लक्ष्मी-कृपा, व्यूह लक्ष्मीको जाप ॥२॥
जाप करन आश्चर्यवन, दर्शन प्रभुका ध्यान ।
विनती तुष्टी वर मिलन, प्रभुका अन्तर्धान ॥३॥
बहु सम्पत पाना द्विजहिं, भोग अखण्ड अनन्त ।
इस सप्तम अध्यायमें, कहा सूत भगवन्त ॥४॥

❀ अथ आत्मारामाख्यविप्रस्य सम्पत्प्राप्तिक्रमः ❀

सूत उवाच— * * *

वाल्मीकिना मुनीन्द्रेण यदुक्तं तन्मयापि हि ॥ उक्तं तेनान्यदुक्तं तद्वक्ष्यते श्रूयतां बुधाः ॥१॥ मध्यदेशे द्विजः कश्चिदात्माराम इति श्रुतः ॥ महाकुलप्रसूतश्च देवब्राह्मणपूजकः ॥२॥ पिता च तस्य प्रथितः पृथिव्यां ब्राह्मणोत्तमः॥ अत्यन्तं विष्णुभक्तश्च वेदवेदाङ्गपारगः ॥३॥

### आत्माराम ब्राह्मणकी सम्पत्प्राप्ति

श्रीसूतजी बोले—मुनीन्द्र श्रीवाल्मीकिजीने जो कहा था उसको हमने भी कहा, अब पुनः उन्होंने जो दूसरी बात कही थी वह फिर मैं कहता हूं, आप लोग ध्यान देकर सुनें—मध्यदेशमें कोई आत्माराम नामका ब्राह्मण रहता था। वह महान कुलमें जन्मा था और ब्राह्मण व देवताका अनन्य उपासक था। उसका पिता अत्यन्त विख्यात एवं संसारका सर्वोत्तम ब्राह्मण था और भारी विष्णु-भक्त तथा वेद-वेदान्तका परम ज्ञाता था ॥३॥

असावपि विनीतश्च सर्वविद्वत्परिग्रहः ॥ पितर्युपरते तस्य क्रमायातं धनं गतम् ॥४॥ वृत्तिश्च शिथिला जाता पूज्यता न च कुत्र चित् ॥ महाकुलप्रसूतस्य ममेयं वृत्तिरीदृशी ॥ अपकीर्तिर्महत्येषा पूर्वेषां मम सर्वदा ॥ किं कुर्मः कुत्र गच्छाम इति चिन्तामहाम्बुधौ ॥६॥ मग्नः शनैर्जगामासौ वेङ्कटाद्रेः समीपगम् ॥ आगत्य कापिलं तीर्थं कापिलेश्वरसन्निधौ ॥७। तत्र स्नात्वा तदारभ्य तीर्थेषु दशसप्तसु ॥८॥ क्रमेण स्नातुमारेभे समारुह्य गिरिं वरम् ॥ ❂ ❂ ❂

और इसी तरह उसका यह पुत्र भी परम विनीत, सब विद्वानोंसे समादृत हुआ। इसके पिताको

मृत्यु, होते ही क्रमागत सब धन चला गया। और उसकी जीविका भी शिथिल हो गयी। किसी स्थानमें पूज्यता न रह गई। तब वह सोचने लगा—महाकुलमें उत्पन्न मेरी यह वृत्ति हो गई, यह हमारे महान पूर्वजोंकी भारी अपकीर्ति है, हाय! अब मैं क्या करूं, कहां जाऊं!! इसी सोचमें मग्न वह धीरे-धीरे चलकर वेङ्कटाचलके समीप कपिलेश्वरजीकी सन्निधिमें कपिल तीर्थमें आकर स्नान करके और भी पर्वतपर चढ़कर अन्य सत्रह तीर्थोंमें भी स्नान करने लगा॥९॥ * * *

स्नानेन गतपापश्च चित्तनैर्मल्यसंयुतः ॥९॥ अधित्यकाया-मासीनश्चिन्ताशोकपरायणः ॥ तत्समीपगुहामध्ये ध्यानयोगपरा-यणम् ॥१०॥ सनत्कुमारं योगीन्द्रं ददर्श ज्वलनोपमम् ॥ अदृष्टपूर्वो योगीन्द्रो वेत्ति सर्वमयं बुधः ॥११॥ पृच्छाम्येनं हितं किञ्चिदि-ति कृत्वा प्रणम्य तम् ॥ निरयाधिकदुःखेन दुःखितः पापकर्म कृत् ॥१२॥ त्वामहं शरणं प्राप्तस्त्वं वेत्थ ब्रूहि मे हितम् ॥ इति भूमौ पपातासौ साष्टाङ्गं तस्य सन्निधौ ॥१३॥ ❁

स्नान करनेसे पाप मुक्त होकर निर्मल चित्त हो ऊपरकी अधित्यकापर चिन्तायुक्त तथा शोकपरायण होकर बैठ उसीके समीप गुहाके बीच ध्यानयोगमें संलग्न, जलती हुए अग्निके समान तेजयुक्त योगीन्द्र सनत्कुमारको देखा तथा—'अदृष्टपूर्व परम पंडित महा योगीन्द्र यह सब कुछ जानते हैं, अतएव इनसे अपने हितकी कुछ बात पूछूंगा', ऐसा सोचकर एवं प्रणामकर —"मैं अत्यन्त दुःखसे दुःखित पापकर्म्मा, आपकी ही शरणमें उपस्थित हुआ हूं, आप कृपया हमारे हितकी बात बताइये।" इत्यादि बातें कहते कहते उनके निकट ही भूमिपर साष्टाङ्ग गिर पड़ा। * * *

सोऽपि ध्यायंश्चिरं कालं व्याजहार मिताक्षरम् ॥ उत्तिष्ठ वत्स किं शेषे कृत्वा घोरं पुरा भवे ॥१४॥ पापमस्मिन्भवे पक्वे तस्मिञ्छोचसि किं वृथा ॥ पुरा तु दानविघ्नाश्च प्रत्यूहाश्च प्रतिग्रहे ॥१५॥ सुखस्थितानां पीडा च त्वया नानाविधाः कृताः ॥ किञ्चित्किञ्चिद्द्विजेभ्यो वा वित्तं दत्तं न तु त्वया ॥१६॥ गृहं क्षेत्रं पशुर्धान्यं वस्त्रमाभरणं तथा ॥ अनाचाराः कृतास्तत्र नत्वाचारलवस्त्वया ॥१७॥ प्रणतार्तिहरे विष्णौ प्रणताभीष्ट-दायिनि ॥ न कृतो भक्तिलेशोऽपि कथं सौख्यं भविष्यति ॥१८॥ तथाप्यस्ति तवोपायो वदामि श्रृणु सादरम् ॥ ❁ ❁

तदनन्तर उन्होंने भी ध्यानकर कुछ कालके बाद संक्षेपमें कहा, —हे वत्स, अब उठो, पहले घोर पाप करके अब शेषमें इस जन्ममें जब पाप परिपक हो गया तब क्यों वृथा सोच करते हो? पहले तुमने प्रतिग्रहादि दानादिमें अनेक उपद्रव एवं सुखसे रहनेवालोंको अनन्त पीड़ा दिया था, तथा ब्राह्मणोंको थोड़ा भी धन नहीं दिया था। घर, क्षेत्र, पशु, धान्य, वस्त्र, आभरण इत्यादि छिनकर सबसे अनाचार ही किया था, आचार तो लेशमात्र भी नहीं किया था। प्रणतजनोंके दुःख-हरण करनेवाले तथा अभीष्ट देनेवाले श्रीविष्णु भगवानकी भक्ति लेशमात्र भी न किया, तो किस तरह सुख होगा। तथापि एक उपाय तुम्हारे लिये है। मैं कहता हूं, तुम आदरके साथ सुनो।

इति कर्णामृतंश्रुत्वा वचः प्राह कृताञ्जलिः ॥१९॥ दुःख-
सागरमग्नस्य मम पोत इवागतः॥ आतपविलन्नसस्यानां यथा
वृष्टिस्तथा भवान् ॥२०॥ निधिर्यथा निर्धनानां रोगिणां वा यथा
भिषक् ॥ तथा मया भाग्यलेशादासस्त्वं हि दयानिधिः ॥२०॥
रक्ष मां पापिनं घोरं दययेक्षस्व चक्षुषा ॥ इत्युक्तः प्राह योगीन्द्रः
कारुण्याब्धितराङ्गितः ॥२२॥ महद्रहस्यं तत्वार्थं शृणु वत्स
वदामिते ॥२३॥

यह कर्णामृत वचन सुनकर वह अञ्जलिबद्ध हो कहने लगा कि आप मुझ दुःख-सागरमें डूबने हुएके लिये नौकाके समान, धूप तथा गरमीसे सूखने हुए शस्योंके लिए वृष्टिके समान, निर्धनोंके लिए धननिधिके समान तथा रोगियोंके लिये वैद्यके समान, मेरे सौभाग्यके शेष लेशके फलसे मिले हैं। हे दयानिधि, मुझ महाघोर पापीकी रक्षा कीजिये और अपने कृपा-कटाक्षसे एक बार देखिये। यह सुनकर करुणातरंगमें मग्न होकर योगीन्द्रने कहा—हे वत्स, बड़ी ही गुप्त तथा परम तत्त्व मैं तुमसे कहता हूं, सुनो ॥२३॥

अथ सनत्कुमारकथितव्यूहलक्ष्मीमंत्रोद्धारक्रमः

*सनत्कुमार उवाचः—*

दयालोलतरङ्गाक्षी पूर्णचन्द्रनिभानना ॥ जननी सर्वलोकानां
महालक्ष्मीर्हरिप्रिया ॥२४॥ सर्वपापहरा सैव प्रारब्धस्यापि कर्मणः॥
संहृतौ तु क्षमा सैव सर्वसम्पत्प्रदायिनी ॥२२॥ तस्या व्यूहप्रभे-
दास्तु लक्ष्मीः कीर्त्तिर्जयेति च॥ तत्र या व्यूहलक्ष्मीः सा मुग्धा
कारुण्यविग्रहा ॥२६॥ अनायासेन सा लक्ष्मीः सर्वपापप्रणाशिनी ॥
सर्वैश्वर्यप्रदा नित्यं तस्या मन्त्रमिमं शृणु ॥२८॥

## सनत्कुमार कथित व्यूह-लक्ष्मी मन्त्रोद्धारक्रम

सनत्कुमारने कहा—कृपाकटाक्षसे पूर्ण नेत्रवाली, पूर्ण चन्द्रमाके समान मुखवाली, हरि भगवानकी प्रिया, महालक्ष्मी देवी ही सर्व लोकोंकी जननी हैं। वह सब पापको हरनेवाली तथा कर्मियोंके प्रारब्धको भी संहार करनेमें समर्थ हैं। वही सभी सम्पत्तिको देनेवाली हैं। कीर्ति, जया, लक्ष्मी यह तीन अवान्तर स्वरूप उसी देवीके हैं। उनमें जो व्यूह-लक्ष्मी देवी हैं वही मुग्ध एवं परम कारुणिक हैं। वह अनायास सब तरहके पापोंको नाश करनेवाली तथा सभी ऐश्वर्य्य प्रदान करनेवाली है। उनका यह मन्त्र है। इसे ध्यानसे सुनो:— *

वेदादिमाये मात्रे च लक्ष्म्यै नतिपदं वदेत्॥ परमेति पदं चोक्त्वा लक्ष्म्या इति पदं ततः ॥ २८ ॥ विष्णुवक्षः स्थितायै स्यान्माया श्रीतारिका ततः ॥ वह्निजायान्तमन्त्रोऽयमभीष्टार्थसुरद्रुमः ॥२९॥ द्विभुजा व्यूहलक्ष्मीः स्याद्वद्धपद्मासनप्रिया ॥ श्रीनिवासाङ्कमध्यस्था सुतरां केशवप्रिया ॥ ३० ॥ तामेव शरणं गच्छ सर्वभावेन सत्वरम् ॥ इति मन्त्रमुपादिश्य ददृशे न च कुत्रचित् ॥३१॥

"ॐ श्रीं ॐ नमो परम लक्ष्म्यै, विष्णुवक्षस्थितायै माया श्रीतारकायै वह्निजायै।" यह महालक्ष्मीका महामन्त्र सभी अभीष्टके लिये कल्प-वृक्ष है। तुम उसी द्विभुजा व्यूहलक्ष्मी पद्मासनप्रिया, श्रीविष्णुके हृदय-मध्यमें रहनेवाली सदा भगवान की प्रेयसी महालक्ष्मीदेवीकी शरणमें सर्वतो भावेन अति शीघ्र चले जाओ। उपरोक्त मन्त्र तथा यह बात कहकर आप अन्तर्धान हो गये और कहीं भी दिखाई न पड़े ॥ ३१ ॥ *

भीतोऽसौ विस्मितश्चैव सन्तोषपुलकाङ्कितः ॥ अद्य मे रजनी व्युष्टा शुभा जन्म च तत्फलम् ॥ ३२ ॥ इति मन्त्रं शुचिर्भूत्वा जपन्नारुह्य पर्वतम् ॥ तत्र तत्र गिरौ पश्यन्झरान्पर्वतनिर्गतान् ॥३३॥ स्वामिपुष्करिणीं प्राप शनैर्दिष्ट्या महाद्भुताम् ॥ ३४ ॥ आकाशादवरुह्यात्र स्थितां मन्दाकिनीमिव ॥ विरजामिव पापघ्नीं पुण्यदां पुण्यसेविताम् ॥३५ ॥ ❀ ❀ ❀

अतः वह ब्राह्मण भयभीत होकर आश्चर्य्य तथा सन्तोषसे पुलकित हो सोचने लगा कि आज ही मेरे घोर दुःखोंकी महारात्रिका अन्त हुआ, मेरा जन्म आज शुभ एवं सफल हुआ। तदनन्तर परम पवित्र होकर उस मन्त्रको जपते-जपते पर्वतपर चढ़कर उसके ऊपर पर्वतोंसे निकले हुए झरनेको देखते हुए श्रीस्वामिपुष्करिणीके पास भाग्यवश जा पहुंचा। वह आकाशसे उतरकर नीचे आई हुई मंदाकिनी गंगाके समान अथवा पाप-नाशिनी, पुण्य-प्रदायिनी विरजा नदीके समान, मालूम हुई ॥३५॥ * *

आत्मारामस्तथा तत्र सस्नौ शास्त्रे यथोदितम् ॥ स्नाने कृते तस्य देहो भारापाते यथा लघुः ॥ ३६॥ तत उत्थाय तत्पुण्यं ददर्श वनमुत्तमम् ॥ तत्र दृष्टं महद्धाम विमानं सिद्धसेवितम् ॥३७॥ अनेकगोपुरोपेतं मण्डपानन्त्यसंयुतम् ॥ अनेकरत्नखचितं तप्तहाटकनिर्मितम् ॥ ३८ ॥ गन्धर्वनगरप्रख्यं दृष्टिचित्तापहारकम् ॥ नृत्यवादित्ररुचिरं सुरसङ्घनिषेवितम् ॥ ३९ ॥ किमिदं निर्जने दृष्टं वनेऽस्मिन्महदद्भुतम् ॥ इतिविस्मयसम्फुल्लहृदयाम्भोरुहस्तदा ॥४०। द्रष्टुं विमानं तद्दिव्यं ययौ पुण्यफलोदयं ॥ ❁

उस आत्माराम ब्राह्मणने शास्त्रोक्त विधिके अनुसार स्नान किया। स्नान कर लेनेपर उसका शरीर बोझ उतर जाने जैसा हलका हो गया। तब उसने उठकर उस अत्युत्तम परम पुण्यवनको देखा। उसमें उसने सिद्धोंसे सेवित एक विमान देखा जो महाधाम अनेक गोपुरोंसे युक्त था; जिसमें अनन्त सुन्दर-सुन्दर मण्डप रत्नखचित तपाये सोनेके बने हुए थे और चित्तको हरण करनेवाले थे। नृत्य-वाद्यसे शोभित, सुरवर्गसेवित वह विमान प्रधान गंधर्व नगरीके समान था। इस निर्जन वनमें मैं यह क्या महा अद्भुत पदार्थ देखता हूं ? इस प्रकार आश्चर्यानन्दमें मग्न हो वह उस दिव्य पुण्यफलोदययुक्त विमानको देखने लगा ॥४०॥ * * * *

ददर्श तत्र फुल्लाब्जनयनं वेङ्कटेश्वरम् ॥ ४१ ॥ शङ्खचक्रधरं श्रीशं वरावनतमस्तकम् ॥ किरीटमुकुटोपेतं कुण्डलाभ्यां विराजितम् ॥४२॥ सर्वाभरणसम्पूर्णं पीताम्बरधरं विभुम् ॥ कोटिकन्दर्पलावण्यं श्रीभूमिसहितं परम् ॥४३॥ ❁ ❁

वहां उसने फूले हुए कमलके समान नेत्रवाले वेङ्कटेश्वर भगवानको देखा; जो शंख, चक्र, गदा और पद्म धारण किये हुए तथा वरदान देनेके लिये नीचे किये हुए हाथवाले और किरीट, मुकुट, कुण्डल आदि सर्वाभरण भूषित–पीताम्बरधारी करोड़ों कामदेवके सौन्दर्यसे युक्त श्रीदेवी और भूमिदेवी सहित, विराजमान थे। *

त्वमेव परमं धाम त्वमेव परमा गतिः ॥ त्वमेव जगतां स्रष्टा धाता हर्ता महेश्वरः ॥४४॥ इति स्तुतं शिवेनापि विधिनापि स्तुतं सदा ॥ प्रणम्योत्थाय सन्तोषात्स्तोतुं गद्गदकण्ठधृक् ॥ ४५॥ सर्वं

त्वमेव जानासि सर्वात्मंस्त्वां नमाम्यहम् ॥ इति प्रणम्य भूयोऽपि तूष्णीं पश्यंस्थितोऽग्रतः ॥४६॥ ❁ ❁ ❁

हे देव! आप ही परमधाम हैं! आप ही परमगति हैं ॥ आप ही संसारकी सृष्टि, पालन और संहारके कर्त्ता परमेश्वर हैं !!! इस प्रकार सदा महादेव तथा ब्रह्माजीके भी स्तुत्य भगवानको संतोषसे प्रणाम करके गद्गद् कण्ठसे स्तुति करनेके लिए उठा। हे सर्वात्मन्, आप सब जानते ही हैं मैं क्या स्तुति करूं, केवल प्रणाम करता हूं। इस प्रकार बारम्बार प्रणामकर चुप खड़े-खड़े सामने देखने लगा ॥४६॥

सर्वज्ञः करुणारूपः श्रीनिवासः परात्परः । ज्ञात्वा मुग्धं च तं प्राह मा भैषीर्मा शुचः पुनः ॥४७॥ क्षान्तं त्वया कृतं सर्वं व्यूह-लक्ष्मीं विमृश्य तत् ॥ ऐश्वर्यं सुमहद्दत्तं दीर्घकालानुबन्धनम् ॥४८॥ दीर्घमायुश्च ते दत्तमारोग्यं ज्ञानशीलता ॥ मयादत्तान्द्विजश्रेष्ठ भुंक्ष्व भोगान्बहूनपि ॥ ४९ ॥ एवं ब्रुवति देवेशे प्रणनाम पुनश्च तम् ॥ उत्थाय भूयो देवं च नापश्यत्पुण्यकाननम् ॥५०॥

सर्वज्ञ, करुणारूप, श्रीनिवास, परात्पर भगवान उसे मुग्ध देखकर उससे कहने लगे—हे वत्स, भय न करो, तुम्हारा सब अपराध क्षमा किया। अब तुमने व्यूहलक्ष्मीको खोजकर अलभ्य लाभ एवं अत्यद्भुत कर्म कर दिखाया, अतएव, अनन्त ऐश्वर्य, परमारोग्य, विलक्षण ज्ञान एवं शील मैंने तुमको प्रदान किया; अब तुम अखण्ड भोग करो !!! ऐसा कहते हुए भगवानको उस द्विजश्रेष्ठने पुनः प्रणाम किया, परन्तु जब ऊपर उठा तब पुण्यवन और भगवानको देख न पाया ॥५०॥

अतिभीतः परिक्रम्य सरस्तीरं विमृश्य च । स्वप्नो मतिभ्रमो वापि माया वा सत्यमेव वा ॥५१॥ न जाने देवदेवेश सत्यमेव भवेत्तु वा ॥ इति ब्रुवन्द्विजस्तस्मादवरुह्य गिरेस्ततः ॥५२॥ पर्यन्ते वेङ्कटाद्रेस्तु वासं चक्रे प्रसन्नधीः ॥ यथेप्सितं सुखं रेमे दीर्घ-कालेन वै द्विजः ॥ इति वाल्मीकिना पूर्वमुक्तमुक्तं मया पुनः ॥५३॥

इति श्रीवराहपुराणे श्रीवेङ्कटाचलमाहात्म्ये आत्मारामाख्यविप्रस्य संपत्प्राप्त्यादिवर्णनं नामैकोनचत्वारिंशोऽध्यायोऽत्रसप्तमः ॥७॥

तब बहुत डरकर नदीका तट खोजा और याद करने व सोचने लगा कि यह स्वप्न था वा माया मति-भ्रम था अथवा सत्य-सत्य घटना ही थी। हे देव-देव प्रभो! कुछ जाना नहीं जाता, क्या यह सत्य ही संघटित हुआ है? इत्यादि कहते हुए वह ब्राह्मण उस पर्वतपरसे नीचे उतर आया और वेङ्कटाचल (पर्वत)के निकट ही प्रसन्नचित्तसे निवास करने लगा और पीछे यथेप्सित सुख बहुत दिनोंतक भोगता रहा। यह वाल्मीकि कथित कथा हमने आपलोगोंसे पुनः कही ॥५३॥

इति सप्तमोऽध्यायः

# अष्टमोऽध्यायः ॥८॥

विष्वक्सेना शक्र अरु, कपिल आयुधी पांच।
अग्नि ब्रह्मसप्तर्षिके, सात तीर्थ करि जांच ॥१॥
पूरक सर्वाभीष्टके, दाता पद-निर्वान।
पाण्डु वलिघ्न जराहर, काय रसायन मान ॥२॥
महिमा, फल अरु सिद्धि अघ-नाश,ईश-अवतार।
इस अष्टम अध्यायमें, लिखा-बुद्धि अनुसार ॥३॥

## अथकपिलादिसप्तदशतीर्थमाहात्म्यम्

ऋषय ऊचुः—

वराहाद्रिकथा नृणां श्रोतृणाममृतोपमा ॥ वैकुण्ठाद्रेः कथां श्रोतुं भूयस्तृष्णा विवर्धते ॥१॥ दश सप्त च तीर्थानि विद्यन्ते कनकाचले ॥ इति पूर्वं त्वया सूत कीर्तितं हि प्रसङ्गतः ॥२॥ ब्रूहि तेषां तु तीर्थानां माहात्म्यं पुण्यवर्धनम् ॥ इति पृष्टः पुनः प्राह मुनीनाहूय सादरम् ॥३॥

### कपिलादि सप्तदश तीर्थ माहात्म्य

ऋषियोंने कहा—सुननेवाले मनुष्योंके लिये वराहाद्रिकी कथा अमृतके समान है। अतएव अब पुनः श्रीवैकुण्ठाद्रिकी कथा सुननेकी इच्छा होती है। हे सूतजी, आपने पूर्व प्रसंगमें कहा था कि कनकाचलमें सत्रह तीर्थ हैं। उन तीर्थोंका कृपया पुण्यवर्द्धक माहात्म्य कहिये। यह सुनकर सूतजी उन मुनियोंको साथ बैठाकर आदरसे कहने लगे ॥ ३ ॥

सूत उवाचः—　　— कपील तीर्थ —

तीर्थानां चैव माहात्म्यं तेषां वक्तुं च कृत्स्नशः ॥ न शक्यं लेशतस्तेषामुच्यते श्रूयतामिदम् ।४॥ गिरेरधः प्रदेशे तु कापिलं लिङ्गमुत्तमम् ॥ पातालं पूजितं पूर्वं कपिलेन महात्मना ॥ ५ ॥ कुतश्चित्कारणात्तत्तु लिङ्गं परमपावनम् ॥ भित्त्वा तु धरणीं तस्मान्निर्गतं पूजितं सुरः ॥ तल्लिङ्गं स्थापितं भूमौ प्रार्थितं सर्वदेवतैः ॥ तदग्रे भुवमुद्भिद्य निर्गता कपिला पुरा ॥७॥ तद्धिलं कापिलं तीर्थं सर्वपापप्रणाशनम् ॥

सूतजी बोले—सम्पूर्ण रूपसे तीर्थोंका माहात्म्य नहीं कहा जा सकता, अतः बहुत संक्षेप मात्रमें ही उनका माहात्म्य कहता हूं, आप लोग ध्यानसे सुनें। इस पर्वतके निम्न प्रदेशमे परम उत्तम कपिल-लिङ्ग है, जिसको प्राचीन कालमें कपिल महात्माने पूजा था। किसी कारणसे वह परम पवित्र लिङ्ग पृथिवीको भेदकर बाहर निकल आया और देवताओंसे अत्यन्त पूजित हुआ। उसी लिङ्गको पृथिवीपर स्थापितकर सब देवताओंने प्रार्थना की। तब उसी लिंगके सामनेकी पृथ्वीका भेदनकर कपिला नदी निकली। उसी तीर्थको परम पवित्र कपिल तीर्थ कहते हैं, वह तीर्थ सब पापोंको नाश करनेवाला है ॥ ७ ॥

तदूर्ध्वदेशे शक्रस्य तीर्थं परमपावनम् ॥ ८ ॥ अहल्यासङ्गसम्भूतशापमोक्षस्तु यत्र तत् ॥ विष्वक्सेनसरस्तस्मादूर्ध्वं पुण्यविवर्धनम् ॥ ९ ॥ वरुणस्यात्मजो यत्र तपः कृत्वा सुदुस्तरम् ॥ सारूप्यं च हरेः प्राप्य सेनापत्यमवाप हि ॥ १० ॥ पञ्चायुधानां तीर्थानि तदूर्ध्वं भान्ति सत्तमाः ॥ तदूर्ध्वमग्निकुण्डं स्याद्दुरारोहमुपर्यतः ॥११ ॥ ब्रह्मतीर्थं महाहत्यामोचनं पुण्यवर्धनम् ॥ मुनीनां चैव सप्तानां पुण्यतीर्थानि सन्त्यतः ॥ १२ ॥ दशाधिकफलं तेषां तीर्थानामुत्तरोत्तरम् ॥ एतेषां चैव माहात्म्यं मया वक्तुं न शक्यते ॥ १३ ॥

❀　❀　❀　❀

उसके ऊपर प्रदेशमे परम पावन शक्र तीर्थ है, जहां इन्द्रको अहल्याके सयोगसे लगे हुए शापसे मोक्ष हुआ था। उसके ऊपर पुण्योंको बढ़ानेवाला विष्वक्सेन तीर्थ है, जहा वरुणके पुत्रने अति दुस्तर तपस्याकर साक्षात् हरि भगवान्‌के सारूप्यको पाकर सेनापतित्व पाया था। उसके ऊपर पवित्र पंचायुधोंका तीर्थ है। फिर अति कष्टसे

ऊपर चढ़नेपर भी परम दुर्लभ अग्नि-कुण्ड मिलेगा, उसके ऊपर महा हत्यादि मोचन पुण्य-विवर्धक ब्रह्मतीर्थ पावोगे। तत्पश्चात् सप्तर्षियोंके पुण्य तीर्थ मिलेंगे। इन तीर्थोंका उत्तरोत्तर दश गुणित पुण्य-फल सुसाध्य है। इनका माहात्म्य मैं कह नहीं सकता ॥१३॥

* * *

पुराऽभवद् द्विजः कश्चित्तीर्थयात्राकृतोद्यमः ॥ तमाह कमला-धीशः किमर्थं गच्छसि द्विज ॥ १४ ॥ अस्मिन्पुष्करशैलेन्द्रे सन्ति दिव्यानि सप्त च ॥ दश तीर्थानि तत्राद्यं कापिलं सर उत्तमम् ॥ १५ ॥ स्नात्वा चैतेषु विप्रेन्द्र शास्त्रोक्तज्ञानपूर्वकम् ॥ कृत्स्नतीर्थफलं पुण्यं प्राप्स्यसि त्वं न संशयः ॥१६॥ इति श्रुत्वा द्विजः सर्वं स्वप्ने चोत्थाय विस्मितः ॥ निवृत्तस्तीर्थयात्रातः प्राप्य श्रीवेङ्कटाचलम् ॥ १७ ॥ तेषुतीर्थेषु दशसु सप्तसु क्रमशो गतः ॥ स्नात्वा तथैव विप्रेन्द्र आप्तवानिति मे श्रुतम् ॥ १८ ॥

पहले कोई ब्राह्मण तीर्थयात्राके लिये उद्यत हुआ, तो उसको कमलापति भगवान्ने कहा कि हे ब्राह्मण, तुम किस लिये जाते हो ? इसी पुष्करशैलेन्द्रपर सत्रह दिव्य तीर्थ हैं, जिसमें कपिलतीर्थ पहला है, जो परम उत्तम है। हे विप्रेन्द्र! शास्त्रोक्त रीतिसे इन तीर्थोंहीमें स्नान कर लेनेसे सम्पूर्ण तीर्थोंका स्नान-फल तुम अवश्य पा जाओगे; इसमें सन्देह नहीं। यह सब उस ब्राह्मणने स्वप्नमें कहते सुन करके उठकर अत्यन्त आश्चर्यान्वित हो तीर्थ जानेसे रुक कर उसी वेङ्कटाचलको पाकर उन सत्रहों तीर्थोंमें क्रमशः एकके बाद दूसरेमें स्नानकर तत्फल स्वरूप पूर्व कथित सब कुछ पाया, यह मैंने पीछे सुना ।१८॥

तिस्रः कोट्योऽर्धकोटी च तीर्थानि भुवनत्रये ॥ तेषां प्रकृति-भूतानि तीर्थान्यस्मिन्हरेर्गिरौ ॥१९॥ भूमिप्रदक्षिणे वाञ्छा यद्यस्ति मुनिसत्तमाः ॥ सर्वतीर्थमयं सर्वपुण्यक्षेत्रमयं गिरिम् ॥ २० ॥ वेङ्कटाह्वं नरो गत्वा कुर्यात्तस्य प्रदक्षिणम् ॥ भूमिप्रदक्षिणे पुण्यं यत्तत्पुण्यमवाप्नुयात् ॥२१॥ वेङ्कटाचलशृङ्गाग्रे दृष्टमात्रे हलायुधः॥ तीर्थयात्राफलं कृत्स्नं प्राप्तवानिति मे श्रुतम् ॥२२॥

तीनों लोकोंमें साढ़े तीन करोड़ तीर्थ हैं उन सबका प्रकृतिभूत तीर्थ इसी भगवत् पर्वतपर है। यदि किसीको भूमि परिक्रमा करनेकी इच्छा हो तो वह सर्व तीर्थमय, सर्व पुण्य क्षेत्रमय इसी वेङ्कटाचलकी प्रदक्षिणाकर भूमि प्रदक्षिणाका सम्पूर्ण पुण्य यहीं प्राप्त कर सकता है। श्रीवेङ्कटाचल शिखरके दर्शन मात्रसे ही हलायुध श्रीबलदेव भगवान्ने सम्पूर्ण तीर्थ यात्राका फल पा लिया था, यह हमने सुना है॥ २२ ॥

⊙ अथ पाण्डवतीर्थमाहात्म्यम् ⊛

पाण्डवा धर्मपुत्राद्याः कृष्णेनाक्लिष्टकर्मणा ॥ उपदिष्टा समागम्य वेङ्कटाख्यं नगोत्तमम् ॥२३॥ कास्मींश्चित्पुण्यतीर्थे हि क्षेत्रपालाभिरक्षिते ॥ कुर्वन्तः स्नानपानादीनवसन्नब्दमात्रकम् ॥ तदा कदाचिद्धर्मोऽपि ददर्शस्वप्नमुत्तमम् ॥ यस्मादस्मिन्महातीर्थे स्थितं वत्सरमात्रकम् ॥२५॥ अनेन पुण्ययोगेन भवन्तः क्षीणकल्मषाः॥ युद्धे जयं तथा राज्यं गमिष्यन्ति क्रमागतम् ॥२६॥ तदाप्रभृति तत्तीर्थं पाण्डवं च विदुर्बुधाः ॥

पाण्डव-तीर्थ माहात्म्य पांडव तीर्थ

क्लिष्टकर्मा श्रीकृष्णजीके उपदेशसे पर्वतपर आकर धर्म-पुत्र प्रभृति पाण्डवोंने क्षेत्रपालोंसे सुरक्षित किसी पुण्य तीर्थमें स्नान, पानादि करते हुए वर्षभर निवास किया। उसी समयमें धर्मराजने एक अति उत्तम स्वप्न देखा कि तुमलोगोंने इस तीर्थमें वर्ष पर्य्यन्त निवास किया है अतः तुम्हारे इस पुण्य-योगसे पाप क्षीण होकर युद्धमें तुम्हें जय तथा क्रमागत राज्यकी प्राप्ति होगी। तभीसे यह तीर्थ पाण्डव-तीर्थके नामसे प्रसिद्ध हुआ ॥ २६ ॥ * *

⊛ अथ जराहरादितीर्थत्रयमाहात्म्यम् ⊛

जराहरं वलिष्ठं च रसायनमिति त्रिकम् ॥२७॥ तीर्थानां वर्तते तस्मिंश्चिन्तामणिगिरौ तथा ॥ स्वामिपुष्करिणीपूर्वदेशे पर्वतगह्वरे ॥२८॥ द्वाविंशच्छरपाते तु किन्तु मायातिरोहितम् ॥ न जानन्ति बुधास्तीर्थं तत्तु विस्मयकारकम् ॥२९॥ अष्टानां खनयः सन्ति लोहानां कनकाचले ॥ युगभेदेन दृश्यन्ते नराणां पुण्यकर्मणाम् ॥३०॥ ⊛ ⊛ ⊛ जराहर ती:

रसायनतीर्थ जराहरादि तीन तीर्थोंका माहात्म्य वलिष्ठ तीर्थ

जराहर, वलिष्ठ और रसायन यही तीन, उस चिन्तामणि पर्वतपर पुण्य तीर्थ हैं। ये स्वामिपुष्करिणी तीथके पूर्वीय भागके पर्वतगह्वरमें बाइस बाण-पातकी दूरीपर स्थित हैं, किन्तु मायाके द्वारा छिपे रहनेके कारण, इन विस्मयकारक तीर्थोंको बुद्धिमान लोग नहीं जान सके। कनकाचलमें आठ लोहेकी खानें हैं, जो पुण्यकारीको ही युग-भेदसे दिखाई पड़ती हैं। * * *

वेङ्कटाद्रौ परां भक्तिं वहन्गच्छति चेद्गिरिम् ॥ पङ्गुर्जङ्घाल एव स्यादचक्षुः पद्मलोचनः ॥३१॥ मूकोवाचस्पतिर्दूरश्रावी तु बधिरो भवेत् ॥ वन्ध्या तु बहुपुत्रा च निर्धनः सधनो भवेत् ॥३२॥ एतत्सर्वं गिरौ भक्तिमात्रेणैव भवेद्ध्रुवम् ॥ तत्त्वतो वेङ्कटाद्रेस्तु स्वरूपं वेत्ति कः पुमान् ॥३३॥ श्रीनिवासगिरिश्चायं कदाचित्कनकाचलः॥ कदाचिज्ज्ञानरूपोऽयं कदाचिद्रत्नरूपकः ॥३४॥ श्रीनिवास इवाभाति कदाचिद्भूषणोज्ज्वलः ॥ कालभेदेन केषाञ्चित्प्राकृताचलरूपधृक् ॥३५॥ तस्मादस्य गिरेः पुण्यं माहात्म्यं वेत्ति कः पुमान् ॥ श्रुतेषु किञ्चिद्दृष्टेषु मयोक्तं भवतामिदम् ॥ श्रुतश्च सर्ववृत्तान्तः शक्यो वक्तुं मया न हि ॥३६॥ ❀ ❀

इति श्रीवराहपुराणे श्रीवेङ्कटाचलमाहात्म्ये कापिलादिसप्तदशतीर्थमाहात्म्यादि वर्णनं नाम चत्वारिंशोऽध्यायोऽत्राष्टमः ॥८॥

इस वेङ्कटाद्रिपर जो पराभक्तिसे तीर्थ-यात्रा करता है, वह यदि पंगु हो तो बलिष्ठ पैरवाला हो जाता है, अन्धा कमलाक्ष हो जाता है, गूंगा बृहस्पतिके समान वाचाल और बहिरा बहुत दूरकी भी बात सुनने योग्य, वन्ध्या बहु पुत्रवती, निर्धन धनवान, हो जाता है। यह सब कुछ इस वेङ्कटाचलमें भक्ति रखनेके प्रभावसे हो जाते हैं। इस वेङ्कटाचल पर्वतको पूर्णरूप तथा तत्वतः कौन जान सकता है? श्रीनिवास पर्वत कभी तो कनकाचल, कभी ज्ञानरूप, कभी रत्नरूप, कभी स्वयं श्रीनिवासहीके समान आभूषणोंसे उज्ज्वल मालूम होता है। पुनः यही किसीको काल-भेदसे प्राकृताचल रूपधारी दीखता है। अतः इस पर्वतका पुण्य व माहात्म्य कौन पुरुष जान सकता है? मैंने भी अपने देखने एवं सुननेमेंसे थोड़ा ही कहा है; क्योंकि जितना वृत्तान्त मैंने सुना है वह सब मैं कह ही नहीं सकता ॥ ३६ ॥ * * *

इति अष्टमोऽध्यायः

## नवमोऽध्यायः ॥९॥

रावण-वध-हित रामको, लखन संग अमनान।
राम अञ्जना कथन पुनि, मिलन राम-हनुमान ॥१॥

राम ससैन्य गिरीशपर, सुखपूर्वक विश्राम।
निर्लोभा उद्धार यह, दर्शन प्रभु श्रीराम ॥२॥
सैन्य उमङ्ग अनेक विधि, बल अनुमान अनन्त।
इस नववें अध्यायमें, लिखा सूत श्रीमन्त ॥३॥

## ॥ श्रीवेङ्कटाद्रिं प्रति श्रीरामागमनम् ॥

*मुनय ऊचुः—*

वेङ्कटाद्रेस्तु माहात्म्यं जनकर्णरसायनम् ॥ शृण्वतां नास्ति तृप्तिस्तु मुनीनां नो बुधोत्तम ॥१॥ भूयः कथय वृत्तान्तं श्रुतं किञ्चित्त्वया पुरा ॥ इत्युक्तः प्राह सूतोऽपि श्रुतं च मुनिपुङ्गवान् ॥

### वेङ्कटाद्रि पर श्रीरामागमन।

मुनियोंने कहा—हे मुनियोंमें श्रेष्ठ ज्ञानी सूतजी! मनुष्योंके कर्ण-रसायन वेङ्कटाद्रिका माहात्म्य आपसे सुनकर हमलोगोंको तृप्ति नहीं हुई, अतएव कृपया कुछ और आप कहें जो पहले आपने सुना हो। यह सुनकर श्रीसूतजीने उन मुनिपुंगवोंसे स्वयं जो कुछ सुना था वह कहा। * *

*सूत उवाच—*

पुत्रो दशरथस्यासीद्रामो राजीवलोचनः ॥ स सर्वलक्षणोपेतः सर्वशास्त्रविशारदः ३॥ रावणस्य वधार्थाय पुरा सौमित्रिणा सह ॥ हनूमता वेगवता सुग्रीवेण महात्मना ॥४॥ सह सैन्यैर्यदा पम्पातीराच्छोभितपादपात् ॥ निर्जगाम तदा रामः शुभे श्रीवेङ्कटाचले ॥५॥ स्वामिपुष्करिणीतीर्थे स्नात्वा पश्चाद्रणे रिपुम् ॥ रावणं सगणं हत्वा जयमापेति मे श्रुतम् ॥६॥ तत्सर्वं कथयिष्यामि श्रोतव्यमवधानतः ॥ ॥ ॥ ॥

राजा दशरथके पुत्र रामचन्द्र थे जो पद्माक्ष सर्व लक्षणोंसे युक्त तथा सर्व शास्त्र विशारद थे। वही रामचन्द्र, रावणको वध करनेके लिये लक्ष्मण, महावेग हनूमान, महात्मा सुग्रीव तथा सेनाको साथ ले, वृक्षोंसे सुसज्जित पम्पातीरसे जब निकलकर वेङ्कटाचलपर चले गये तब पहले स्वामिपुष्करिणीमें स्नानकर बाद सगण रावणका वधकर विजय प्राप्त किया था, ऐसा हमने सुना है। वह सभी कथा मैं आपलोगोंसे कहता हूं, आपलोग ध्यानसे सुनिये ॥ ६ ॥ * * *

ऋष्यमूकाचलात्तस्माद्वानरैर्बहुभिर्वृतः ॥७॥ रावणस्य वधार्थाय क्रुतोद्योगः सकार्मुकः ॥ शेषाचलसमीपे तु यदा रामः समागतः ॥८। तदासत्यञ्जना देवी वायुसूनोर्महात्मनः ॥ जननी पुरतो गत्वा रामं रक्तान्तलोचनम् ॥९॥ नमस्कृत्य महाभागा वचनं चेदमब्रवीत् ॥ प्रतीक्षन्ती महाबाहो त्वदागमनमद्भुतम् ॥१०॥ तिष्ठाम्यस्मिन्गिरौ राम मुनयोऽपि च कानने ॥ तपः कुर्वन्ति सततं त्वदागमनकाङ्क्षया ॥११॥ तान्सर्वान्समनुज्ञाप्य गन्तुमर्हसि सुव्रत ॥ इत्युक्तः प्राह रामोऽपि हनूमन्मातरं प्रति ॥१२॥    

ऋष्यमूक पर्वतसे बहुतसी वानर सेनासे समावृत होकर, रावणको वध करनेको उद्यत होकर धनुर्धारी रामचन्द्र जब शेषाचलके समीप आ गये, तब वायुपुत्र हनूमानकी माता साध्वी अञ्जना देवी रक्तान्त लोचन श्रीरामचन्द्रके आगे आकर प्रणामकर यह वचन बोलीं ॥ १०॥  

हे सुव्रत, हे महाबाहो, आपके अद्भुत आगमनकी प्रतीक्षा करती हुई मैं इस पर्वतपर रहती हूँ। अनन्त मुनिगण भी इस जंगलमें आपके आगमनकी आकांक्षासे तप करते हैं, उन सभोंसे अनुज्ञा लेकर आपको जाना उचित है। यह सुनकर रामचन्द्रजीने हनूमानजीकी मातासे कहा ॥१२॥  

श्रीराम उवाच —

कालात्ययो भवेद्देवि मयि तत्र समागते ॥ ममेदानीं वरारोहे कार्यस्य महती त्वरा ॥१३॥ पुनरागमने देवि तथा भवतु सुन्दरि ॥ इत्युक्तं राघवेणैतद्वाक्यं श्रुत्वा महामतिः ॥ १४ ॥ हनूमान् प्रणतो भूत्वा वाक्यं चैतदुवाचह ॥ स्थातव्यमत्र भवता यत्र कुत्रास्ति सर्वदा ॥१५॥ यस्माच्छ्रान्ता महासेना वानराणां तरस्विनाम् ॥ अयं च मार्ग एवाद्रिः सदापुष्पफलद्रुमः ॥ १६॥ बहुप्रस्रवणोपेतो बहुकन्दरसानुमान् ॥ सुस्वादुकन्दमूलोऽयमञ्जनाख्यो महागिरिः ॥१७॥ मधूनि सन्ति वृक्षेषु बहूनि गिरिकन्दरे ॥ वेत्थ सर्वं महाबाहो यथेच्छसि तथा कुरु ॥१८  

श्रीरामचन्द्र बोले—हे देवि, मुझको यहां जानेसे बहुत देर हो जायगी और हे वरारोहे! मेरे काममें अत्यन्त शीघ्रताकी आवश्यकता है; अतएव फिरती बार तुम्हारे कथनानुसार करूंगा। महामति श्रीहनूमान रामचन्द्रजीकी इन बातोंको सुनकर प्रणामकर, नम्र होकर ये वचन बोले कि कहीं-न-कहीं यहां ठहरना ही होगा क्योंकि आपकी यह वानरोंकी सेना थकी हुई है। तपस्वी, पुष्प तथा फलोंसे भरे हुए अनन्त झरने, अनेक कंदरे और शिखरोंसे शोभित तथा स्वादिष्ट कंद-मूलसे परिपूर्ण अञ्जनाद्रि नामका यह पर्वत हमलोगोंके मार्गमें ही है। इसके अनंत, गिरिगुहाके वृक्षोंमें बहुत मधु है, हे महाबाहो, आप यह सब जानते हैं, अब जैसी इच्छा हो वैसी करें ॥१८॥ * * *

इत्युक्तो वायुपुत्रेण श्रीरामः प्रहसन्नसौ ॥ जानेऽहमञ्जनासूनो तथापि वचनं तव ॥ १९ ॥ श्रोतव्यं हि महाबाहो गच्छाग्रे त्वं हरीश्वर ॥ इत्युक्त्वा वाहिनीं तां च कर्षन्पर्वतमाययौ ॥ २० ॥ नागकेसरमाल्लूरपुन्नागतरुशोभितम् ॥ चम्पकाशोकवकुलचूतकिंशुकराजितम् ॥२१॥ मयूरसारिकालापैः कोकिलानां स्वनैरपि शुकमञ्जुलनादैश्च कपोतस्वनहुंकृतैः ॥२२॥ शोभितं फलपुष्पैश्च वेङ्कटाख्यं नगोत्तमम् ॥ ❀ ❀ ❀ ❀

सब सुन श्रीरामचन्द्रजी बहुत प्रसन्न हुए, और कहा कि हे अञ्जनासुत हनूमान! यद्यपि मैं यह सब जानता हूं तथापि, तुम्हारी बात भी सुनना ही चाहिये; अतः हे वानरेन्द्र, तुम आगे चलो। यह कहकर श्रीरामचन्द्र सम्पूर्ण सेनाको साथ लेते हुए पर्वतपर चले। जो पर्वत नागकेसर, माल्लूर, पुन्नाग आदि वृक्षोंसे शोभित, चम्पा, अशोक, वकुल, आम, पलाशसे सुशोभित; मोर, मैना, कोयल, आदि पक्षियोंके सुमधुर शब्दोंसे शब्दायमान, सुग्गे तथा कबूतरके मधुर स्वरसे कलरवित; फल-फूलोंसे शोभित, वेङ्कटाचलके नामसे सुप्रसिद्ध है ॥ २२ ॥

निर्लोमा नामतः कश्चिद्विप्रो वेदविदांवरः ॥२३॥ स्वयम्भुवं समुद्दिश्य ब्रह्मलोकजिगीषया ॥ तपश्चकार धर्मात्मा पर्वतोत्तरदेशतः ॥ ❀ ❀ ❀ ❀ ❀ ❀

वेदविद्यापारंगत, परम धर्मात्मा, निर्लोमा नामका कोई ब्राह्मण, ब्रह्म-लोक पानेकी इच्छासे ब्रह्माजीको उद्देशकर पर्वतके उत्तर भागसे आकर तपस्या करने लगा ॥२४॥

आगत्य भगवान् ब्रह्मा तमाह द्विजसत्तमम् ॥ २४ ॥ रामं दृष्ट्वा

ससौमित्रिं ब्रह्मलोकमवाप्स्यसि ॥ इत्युक्तो ब्रह्मणा पूर्वं दृष्ट्वा रामं परात्परम् ॥२५॥ फलमूलाशनैः सम्यक्पूजयित्वा तमब्रवीत् ॥ अद्य मे सफलं जन्म त्वन्मुखाम्भोजदर्शनात् ॥२६॥ चिरकालार्जितं स्वामिन्फलितं तप उत्तमम् ॥ अनुज्ञापय मां राम ब्रह्मलोकं प्रतीश्वरः ॥ २७ ॥ इत्युक्तः स तु धर्मात्मा तथैवाचर भो द्विज ॥

तब ब्रह्माजीने आकर उस द्विज-श्रेष्ठको कहा - कि हे द्विजश्रेष्ठ ! जब तुमको लक्ष्मणजीके साथ रामचन्द्रजीका शुभ दर्शन होगा, तब तुम्हें ब्रह्म-लोककी प्राप्ति होगी। जैसा ब्रह्माजीने पहले कहा था तदनुसार परमात्मा श्रीरामचन्द्रजीके दर्शन कर उनको फल, फूल, मूल आदिसे सम्यक् प्रकारसे पूजा करनेके पश्चात् कहा हे प्रभो ! आज आपके मुखारविन्दके दर्शनसे हमारा जीवन सफल हुआ; चिरकालसे अर्जित उत्तम तपस्या आज ही फलीभूत हुई, अतएव हे महाप्रभु श्रीरामचन्द्रजी; अब मुझको ब्रह्मलोकको जानेकी आज्ञा दीजिये ॥ २७ ॥

इत्युक्त्वा तं तु विप्रेन्द्रमारुरोह नगोत्तमम् ॥२८॥ शापमोक्षं च यक्षाणां केषांचित्पर्वतोत्तमे ॥ दत्त्वा रामोऽञ्जनादेव्या आश्रमं पुण्यवर्धनम् ॥२९॥ आकाशगङ्गानिकटे प्रतिपेदे महामनाः ॥ तया स पूजितः सम्यक्तस्यै दत्त्वा वरोत्तमम् ॥ ३० ॥ आपृच्छ्य तां महाभागां स्वामिपुष्करिणीं ययौ ॥ ❀ ❀ ❀

उसकी उस प्रार्थनापर 'तथास्तु' कहकर आप उस उत्तम पर्वतपर चढ़ गये और उस पर्वतश्रेष्ठपर अनेक यक्षोंका शाप मोचनकर अञ्जनादेवीके परम पवित्र तथा पुण्यवर्धक आकाश-गंगाके समीपवर्ती आश्रममें चले गये ॥३० ॥

तत्र रामो महातेजाः सौमित्रिर्मारुतात्मजः ॥३१ ॥ सुग्रीवश्चाङ्गदश्चैव जांबवान्नील एव च ॥ चक्रुः स्नानं महातीर्थे सर्वत्र विजयप्रदे ॥ ३२ ॥ फलमूलानि चानीय रामो धर्मभृतां वरः ॥ चकार दानं तत्रैव मुनिभिः शास्त्रवर्त्मना ॥ ३३ ॥ तस्या नैर्ऋतिदिग्भागे कुटीं कृत्वा पृथक्पृथक् ॥ सुस्वादुफलमूलानि मधूनि सुबहूनि च ॥३४॥ आनीय वायुपुत्रस्तं पूजयामास राघवम् ॥ ❀

वहां महाभागा अञ्जनादेवीसे पूर्णतया सम्पूजित होकर एवं उनको परम वरदान देकर, उससे अनुमति लेकर ये स्वामिपुष्करिणी तीर्थको चले गये। वहां श्रीरामचन्द्र, लक्ष्मण, हनूमान, सुग्रीव, अङ्गद, जाम्बवान तथा नील आदि सबोंने उस विजयप्रद महातीर्थमें स्नान किया, एवं फल, मूल लाकर धर्मात्माओंमें श्रेष्ठ श्रीरामचन्द्रजीने शास्त्रानुसार मुनियोंको दान दिया। तदनन्तर वे नैऋत्य दिशामें अलग-अलग कुटी बनाकर रहने लगे। हनूमानजी सुन्दर मधुर, स्वादिष्ट फल-मूल लाकर श्रीरामचन्द्रजीकी पूजा किया करते थे ॥ ३५ ॥

ततो रामः सम्प्रहृष्टः सुग्रीवप्रमुखैः सह॥३५॥ न्यवसत्सुसुखं रामः स्वगेह इव तत्र वै॥ वानराश्च महात्मानो गोलाङ्गूला महाबलाः ॥३६॥ सर्वतस्तत्र पुष्पाणि मूलानि च फलानि च॥ मधूनि स्वादुतीर्थानि भक्ष्यजातान्यनेकशः ॥३७॥ भक्षयित्वा मदोन्मत्ताश्चेरुस्तत्र सहस्रशः ॥ आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ॥ शृङ्गाच्छृङ्गं गिरेस्तत्र वृक्षाद् वृक्षं वनाद्वनम्॥ चेरुस्ते वानराः सर्वे मुदिता बलगर्विताः ॥३९॥

तब रामचन्द्रजी प्रसन्न होकर सुग्रीवादिके साथ वहींपर अपने मकानके समान आरामसे रहने लगे, और इधर उनके बन्दर जो महाबली एवं महा बुद्धिमान थे, सर्वत्र के फल, मूल, फूल, मधु स्वादिष्ट जल तथा अनेक भक्ष्योंको खाकर मदोन्मत्त हो, हजारों इधर, हजारों उधर विचरण करने लगे। कहीं कोई उछलता, कोई तड़पता, कोई उड़ता, कोई गर्जता, तथा कोई एक शिखरसे दूसरे शिखर, एक वृक्षसे दूसरे वृक्षपर, एक वनसे दूसरे वनमें आनन्दित एवं बलगर्वित होकर घूमता था।

केचिदारुरुहुस्तत्र वानरान् वानरोत्तमाः ॥ कांश्चित्पुच्छप्रदेशे तु गृहीत्वा वानरान् क्वचित् ॥४०॥ कर्षन्ति स्म तदा कांश्चित्केचित्कर्णं चुचुम्बिरे॥ दृष्ट्वैव रावणं सङ्ख्ये हन्याम ससुहृद्गणम्॥४१ लङ्कां समूलमुत्पाट्य त्रिकूटं वा महागिरिम्॥ आनेष्यामो वयं सिन्धुं बहुनक्रसमाकुलम् ॥४२॥ तरामो बाहुवेगेन गृह्णीमश्चन्द्रभास्करौ॥ पातयामो गिरीन्सर्वान्रामार्थे भूरुहानपि॥४३॥ पातालं वा महर्लोकं प्रविशाम रसातलम्॥ गच्छामो रावणो यत्र तिष्ठत्यविनयान्वितः ॥४४॥ तमेव हन्मः शूरं तु सगणं लोककण्टकम्॥ चिरायते शिरश्छेदे रामः परमधार्मिकः ॥४५॥

कोई वानरश्रेष्ठ अन्य वन्दरपर चढता, तो कोई किसी दूसरे वानरकी पूंछको पकड़कर खींचता और कोई किसीके कानोंके पास चम्बन करता। वे आपसमें कहते कि दर्शनमात्रसे ही रावणको सपरिवार मार डालेंगे, लङ्काको समूल उखाड देंगे, अथवा समस्तत्रिकूट पर्वतहीको उलट देंगे; और नहीं तो, अनन्त नक्रादि समाकुलित, समुद्रहीको ले आयेंगे। एवं बाहुवेगसे ही आकाशमें उड़कर चन्द्रमा एवं सूर्य्यको पकड लायेंगे। श्रीरामचन्द्रके लिये सम्पूर्ण वृक्षों तथा सब पर्वतोंको खण्ड-खण्ड कर डालेंगे। पाताल, रसातल अथवा महर्लोक सभीमें प्रवेश करेंगे और उस जगह भी चले जायेंगे, जहा घमण्डमें भरकर रावण बैठा होगा। उस लोक-कंटकको उसके सम्पूर्ण परिवारके साथ मार डालेंगे। रामचन्द्रजी परम धार्मिक होनेके कारण उसके शिर काटनेमें विलम्ब करते हैं ॥४५॥

**इति ब्रुवन्तस्ते सर्वे वानराः पर्वतोपमाः॥ तस्मिन् दिव्ये महापुण्ये वेङ्कटाद्रौ वनेचराः ॥४६॥ कोटिकोट्यर्बुदास्तत्र परार्धा बलशालिनः॥ परस्परमसम्बाधं न्यवसन् सुसुखं गिरौ ॥४७॥ अहो गिरिप्रभावोऽयं वर्णनीयः कथं बुधैः ॥४८॥**

इति श्रीवराहपुराणे श्रीवेङ्कटाचलमाहात्म्ये श्रीवेङ्कटाचलं प्रति श्रीरामागमना-
जनाप्रार्थनादिवर्णनं नामैकचत्वरिंशोऽध्यायो ऽत्रनवमः ॥९॥

ऐसे कहते हुए पर्वतमें संचार करनेवाले, महा बलशाली पर्वताकार वानर उस दिव्य महापुण्य-वेंङ्कटाचलपर करोडों-करोडोंके झुण्डोंमे एक दूसरेसे अप्रतिहत तथा परम उदण्ड होकर, सुखसे वास करने लगे। अहा। इस पर्वतका प्रभाव बुद्धिमानोंसे भी किस प्रकार वर्णन किया जा सकता है॥ ४८॥

इति नवमोऽध्याय.।

## दशमोऽध्यायः ॥१०॥

कपि वैकुण्ठ गुहा गमन, दर्शन पुरि सुर यान।
दिव्य चतुर्भुज पुरुष भय, फिरना बाहर मान ॥१॥
पुनि छिन होना दृश्य मग, विस्मित कपि अनुमान।
रावण वध रामहिं फिरन, राज्य लाभ भगवान ॥२॥
गुण वैकुण्ठ गुहा कथन, तेहि मायापति वास।
इम दशवें अध्यायमें, वर्णित ईश-विलास ॥३॥

अथ वैकुण्ठाख्यगुहाप्रविष्टवानरवृत्तांतः

*श्रीसूत उवाच—*

स्वामिपुष्करिणी यत्र तत ईशान्यभागतः ॥ गजो गवाक्षो गवयः शरभो गन्धमादनः ॥१॥ मैन्दश्च द्विविदश्चैव सुषेणश्च महामतिः ॥ काञ्चिद् गुहां तमोरुद्धां प्रविष्टास्तत्र वानराः ॥२॥ उन्निद्रनेत्राः सर्वेऽपि सिंहतुल्यपराक्रमाः॥ जग्मुस्ते तमसाऽऽविष्टां सुदूरं तां गुहां तदा ॥३॥ ❀ ❀ ❀

वैकुण्ठ नाम गुहामें प्रविष्ट वानरोंकी कथा।

श्रीसूतजी बोले—स्वामिपुष्करिणीके ईशान भागमें किसी अन्धकारसे व्याप्त गुहामें गज, गवाक्ष, गवय, शरभ, गन्धमादन, मयन्द, द्विविद तथा सुषेण आदि महामति वानर घुस गये। सिंहतुल्य पराक्रमी सभी आंखें खोले हुए, तमोवृत्त गुहामें बहुत दूरतक चले गये ॥३॥

ददर्शाऽत्र महाज्योतिः सूर्यकोटिरिवोदिता ॥ ज्योतिर्गणानां तडितां मिलितानामिवावभौ ॥४॥ तत्र काचित्पुरी रम्या तप्तहाटकनिर्मिता ॥ कपाटतोरणवती रम्योद्यानशतैर्युता ॥५॥ स्फटिकोपलवच्छुद्धजलनद्या समावृता ॥ रत्नमाणिक्यवैडूर्यमुक्तानिर्मितगोपुरा ॥६॥ अनेकमण्डपैर्युक्ता प्रासादाशतसङ्कुला ॥ महावीथीशतोपेतो रथमाङ्गतसंयुता ॥७॥ वरनारीगणोपेता सर्वमङ्गलशोभिता ॥ शङ्खचक्रधरास्तत्र सर्वे चैव चतुर्भुजाः ॥८॥ सशुक्लमाल्यवसनाः सर्वाभरणभूषिताः ॥ दिव्यचन्दनालिप्ताङ्गाः परमानन्दपूरिताः ॥९॥ ❀ ❀ ❀

वहां उन्होंने करोड़ों सूर्य्यके समान ज्योतिसम्पन्न कोई अद्भुत प्रकाश या तेजको उगते देखा। मानो सम्पूर्ण ज्योतिर्मण्डल एवं विद्युतगण एकमय हो गये हों। उन्होंने वहां एक परम रम्य तप्त सुवर्णसे बनी हुई कोई पुरी देखी, जो किवाड़, तोरण, रम्योद्यान, स्फटिक शिलाके समान उज्ज्वल जलवाला नदीसे समावृत तथा रत्न, माणिक्य, वैदूर्य्यमणि, मुक्तादिसे निर्मित गोपुरादिसे युक्त तथा अनेक मण्डपोंसे सुसज्जित, सहस्रों विशाल-विशाल प्रासादसे समावृत एवं अनेक महा गलियोंसे सुसज्जित थी। वह पुरी रथ, मतवाले हाथियों, श्रेष्ठ नारीगणों, तथा सर्व मंगलोंसे सुशोभित थी। वहांके सभी निवासी शंख-चक्रधारी और चतुर्भुज थे। वे श्वेतमाल और श्वेत वस्त्र धारण किये हुए थे और सर्वाभरणभूषित सुगन्धित चंदन लगाये, परमानन्द पूरित थे।

तन्मध्ये सुमहद्दिव्यं विमानं सूर्यसन्निभम् ॥ अत्युन्नतमहामेरुशृङ्गतुल्यं मनोहरम् ॥१०॥ बहुप्रकाशसम्पन्नं मणिमण्डपसंयुतम् ॥ भेरीमृदङ्गपणवमर्दलध्वनिशोभितम् ॥ ११ ॥ नृत्तवादिलसम्पन्नं किन्नरस्वनसंयुतम् ॥ ददृशुस्तत्र पुरुषं पूर्णचन्द्रनिभाननम् ॥१२॥ चतुर्बाहुमुदाराङ्गं शङ्खचक्रधरं परम् ॥ पीताम्बरधरं सौम्यमासीनं काञ्चनासने ॥१३॥ फणामणिमहाकान्तिविराजितकिरीटिनम् ॥ भोगिभोगे समासीनं सर्वाभरणभूषितम् ॥ १४ ॥ आसनोपरि विन्यस्तवामेतरकराम्बुजम् ॥ प्रसार्य दक्षिणं पादमुद्धृते वामजानुनि ॥ १५ ॥ प्रसार्य वामहस्ताब्जं श्रीभूमिभ्यां निषेवितम् ॥ सेवितं नीलया देव्या वैजयन्त्या विराजितम् ॥१६॥ श्रीवत्सकौस्तुभोरस्कं वनमालाविभूषितम् ॥ कृपारसतरङ्गौघपूर्णनेत्राम्बुजद्वयम् ॥१७॥ शशिप्रभासमच्छत्रं चामरव्यजने शुभे ॥ हस्ताभ्यां धारयन्तीभिर्नारीभिः सेवितं मुदा ॥ १८ ॥ दृष्ट्वा ते वानराः सर्वे विस्मिताः शुभलोचनाः ॥

उसके बीच महा दिव्य सूर्यके समान प्रकाशमान अत्युन्नत बड़े ऊंचे पर्वतके समान ऊंचा, अत्यन्त मनोहर, अनन्त प्रकाशोज्ज्वल, एक मणिनिर्मित मण्डपसे सुशोभित और साथ-ही-साथ नृत्य, गान, किन्नरालापसे गुंजायमान एक विमान था, जिसमें पूर्णचन्द्रके समान परम मनोहर मुखवाले, चतुर्भुज, शंख-चक्रधारी, पीताम्बर पहने, सोनेके सुन्दर आसनपर शान्तिभावसे आसीन, फणा-मणि-जटित किरीट-मुकुट-धारी, शेषनागके फणपर बैठे, सर्वाभरणभूषित एवं दाहिना हाथ आसनपर रखे हुए, दाहिना पैर फैलाये, बांये जानुपर बांया हाथ रखे हुए, श्रीभूमि एवं नीला देवीसे सेवित, वैजयंतीकी माला पहने, श्रीवत्स कौस्तुभमणि छातीपर धारण किये, वनमालाविभूषित, पुरुषोत्तम, कृपारसपूर्ण पद्मके समान नेत्रवाले, चन्द्रमाकी ज्योतिके समान छत्र लगाये, सुन्दर पंखा धारण किये हुए स्त्रियोंसे सेवित भगवान्‌को देखा। वे वानर इनको देखकर अत्यंत आश्चर्यान्वित हुए।

अत्रान्तरे महाभागः पुरुषः परमाद्भुतः ॥ १९ ॥ चतुर्भुजो दण्डहस्तो दृष्ट्वा त्वरितविक्रमः ॥ दण्डमुद्यम्य तान्सर्वान्भर्त्सयामास वै तदा ॥२०॥

इतने हीमें वह अद्भुत चार भुजावाले परम पराक्रमी पुरुष उनको देखकर त्वरासे आक्रमण करते हुए, दण्ड उठाकर उन लोगोंकी भर्त्सना करने लगे।

ते सर्वे वानरा भीता निर्जग्मुर्गिरिगह्वरात् ॥ निर्गत्य सहसा तेभ्यः प्रोचुर्दृष्टं यथा तथा ॥ २१ ॥ रावणस्तु महामायी कामरूपी च वञ्चकः ॥ अन्यो वा रावणो वाथ शोधनीयः प्रयत्नतः ॥ २२ ॥ इत्युक्त्वा वानरास्ते च सर्वे सम्भूय सम्भ्रमात् ॥ यत्र पूर्वं गुहा दृष्टा तत्रागच्छन्वनौकसः ॥२३॥ नापश्यन्नगरीं तत्र चिह्नं वा दृष्टपूर्वकम् ॥ भ्रमात्तमञ्जसा शैलं विचिन्वन्तश्च सर्वतः ॥२४॥ भ्रम इत्येव निश्चित्य तूष्णीमासन्वनौकसः ॥

उस समय वे सब वानर परम भयभीत होकर, उस गिरिगह्वरसे बाहर निकल आये और जो कुछ देखे थे, वह सबसे कहे—"यह महामायावी कामरूप वञ्चक रावण था अथवा कोई अन्य ? इसकी विशेष रूपसे तलाश करनी चाहिये" ऐसा कह सब वानर फिर मिलकर उसी पूर्व दृष्ट गुहामें घुस गये, परन्तु वहांपर वह नगरी अथवा पहले देखे हुये चिन्ह भी नहीं देखे। भ्रमसे उस पर्वतके सभी भागोंको खोजकर अपना भ्रम समझ शान्त हो गये ॥२५॥

ततः प्रभाते विरते रामो राजीवलोचनः ॥२५॥ लक्ष्मणेन सह भ्रात्रा वानरेन्द्रेण धीमता ॥२६॥ सह सैन्यैर्महातेजाः प्रतस्थेऽरिजिगीषया ॥ जित्वा च रावणं युद्धे प्राप्य सीतां महाबलः ॥२८॥ अयोध्यां पुनरभ्येत्य भ्रातृभिः सहितोऽनघः ॥ प्राप राज्यं स्वयं रामः स्वामितीर्थस्य वैभवात् ॥ इति श्रुतं मया पूर्वमब्रुवं भवतामहम् ॥२९॥

पश्चात् प्रभात होनेपर राजीव लोचन महा तेजस्वी श्रीरामचन्द्र, लक्ष्मण तथा महामति वानरेन्द्र और सेनाके साथ शत्रु-जयकी इच्छासे प्रस्थान किए और युद्धमें रावणको जीतकर, सीतादेवीको पा अयोध्यापुरी लौट आये, एवं पुण्यात्मा भाइयोंसे पुनः मिले। वे इसी स्वामि-तीर्थके प्रभावसे अपना पहला राज्य पाये। यही हमने पहले सुना था और उसे आपलोगोंको सुनाया ॥२६॥

❀ अथवैकुण्ठगुहाप्रभाववर्णनम् ❀

मुनय ऊचुः—

वैकुण्ठाद्रौ गुहा दृष्टा काचिद्वानरसत्तमैः ॥ इत्युक्तं भवता सूत वेदवेदाङ्गपारग ॥३०॥ गुहा का वद नो ब्रह्मञ्छ्रोतुं कौतुहलं हि नः ॥३१॥ ❀ ❀ ❀

वैकुण्ठ-गुहा-प्रभाव वर्णन।

मुनियोंने कहा—हे वेदवेदाङ्गपारंगत सूतजी! वैकुण्ठाचलमें वानरश्रेष्ठोंने कोई गुहा देखी ऐसा आपने कहा था, अतएव, हे महामुनि! वह कौनसी गुहा है, आप कृपया बतलाइए। हमलोगोंको बड़ी सुननेकी इच्छा है।

सूत उवाच— * * *

श्रूयतामभिधास्यामि देवमाया मया श्रुता ॥ वैकुण्ठाख्या गुहा सा तु दुर्ज्ञेया मुनियोगिभिः ॥३२॥ दुर्ज्ञेया सा तु देवैश्च मायया परमात्मनः ॥ लीलया विष्णुना पूर्वं वानराणां प्रकाशिता ॥३३॥ ❀ ❀

तब श्रीसूतजी बोले—हे मुनियों, आपलोग सुनिये, मैं कहता हूं। देवमायाके समान वह वैकुण्ठ नामक गुहा मुनियों एवं देवताओंसे भी परमात्माकी मायावश दुर्ज्ञेय है। उसे पूर्वकालमें विष्णुभगवान्‌ने लीलावश वानरोंको दिखलाया था।

तस्यां गुहायां ये दृष्टाः शङ्खचक्रधरा अपि ॥ ते तु मुक्तास्तथा नित्याः परमानन्दरूपिणः ॥३४॥ भुञ्जते ब्राह्ममानन्दमाविर्भूतगुणाश्च ते ॥ सञ्चरन्तः कामरूपा लोकान्भगवता सह ॥३५॥ आनन्दरूपाः कैङ्कर्यं कुर्वन्तो ब्रह्मणो हि ते ॥ वसन्ति तत्र सततं ब्रह्मणा परमेष्ठिना ॥३६॥ यदा यदा कलिः कालो यदा वा जनता गिरौ ॥ तदा गुहायां तस्यां तु वसिष्यन्तीति नः श्रुतम् ॥३७॥

उस गुहामें जो शंख-चक्र-गदा-धारी दिखाई पड़े थे, वे परमानन्दरूप परममुक्त तथा सदा नित्य थे। जो परमात्माके समान गुणोंसे आविर्भूत होकर महानन्द भोग करते हैं और कामरूपसे भगवान्‌के साथ लोकोंमें संचरण करते हैं तथा ब्रह्माकी सेवा करते हुए आनन्दरूप होकर परमेष्ठि ब्रह्माके साथ सदा निवास

करते हैं । जब-जब कलियुग आता है, या जब जनसमूह पर्वतके ऊपर आ जाता है, तब-तब वे इसी पर्वत-गुहामें निवास करते हैं, ऐसा मैंने सुना है ॥ ३७ ॥

एवम्प्रभावः शेषाद्रिर्वसत्यस्मिञ्जगन्मयः ॥ क्रीडते लीलया युक्तो नित्यैर्मुक्तैश्च सूरिभिः ॥३८॥ नीलमेघानिभं श्यामं नीलोत्पलविलोचनम् ॥ नीलाद्रिशिखरस्थं तं भजाम्यत्रैव सुस्थितम् ॥३९॥ ❀ ❀ ❀ ❀

शेषाद्रिका इस तरहका प्रभाव है, जिसमें जगन्मय भगवान् नित्यमुक्त ज्ञानियोंके साथ लीलासे क्रीड़ा करते हैं। उसी नील मेघके समान श्यामवर्ण, नील कमलाक्ष, नीलगिरि-शिखरस्थ भगवानका, सुस्थित होकर मैं यहां भजन करता हूं ॥३९॥

गुहाख्यानं श्रुतं किं वा युष्माभिर्वीतकल्मषैः ॥ शृण्वतामिदमाख्यानं कलिदोषमलापहम् ॥ ४० ॥ धन्यं यशस्यमायुष्यं पुत्रपौत्राभिवर्धनम् ॥ इतीरितः शेषगिरेः प्रभावः श्रुतो मया योगिवरेभ्य आदरात् ॥ समस्तजीवात्मसमष्टिरूपिणो हरेः प्रभावोऽपि करीन्द्रगोप्तुः ॥४१॥ ❀ ❀ ❀

इति श्रीवराहपुराणे श्रीवेङ्कटाचलमाहात्म्ये वैकुण्ठगुहाप्रविष्टवानरवृत्तान्तादिवर्णनं नाम द्विचत्वारिंशोऽध्यायोऽत्र दशमः ॥ १० ॥

क्या निष्कल्मष होकर आपलोगोंने गुहाख्यान सुना ? यह आख्यान श्रोताओंके कलि-दोष-रूप मलका नाशक और धन, यश, पुत्र, पौत्रादिकोंको बढ़ानेवाला है। जिस प्रकार योगिश्रेष्ठोंसे आदरपूर्वक मैंने सुना था उसी प्रकार शेषाचलका प्रभाव तथा समस्त जीवोंके समष्टिरूप, गजेन्द्रकी रक्षा करनेवाले विष्णु भगवान्का वर्णन किया ॥ ४१ ॥

इति दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः ॥११॥

दैत्य-वंशसे दुखित हो, ऋषि कश्यप जाबालि ।
लक्ष्मीपति गृह-गमन चहु, विनय करन वनमालि ॥१॥

प्रभुचर दरशन कथन फल, श्रीनिवास महि वास।
तथा गमन नारद मिलन, कथन दैत्य दुख रास ॥२॥
पुनि सब कह विधिपुर गमन, विनय करन विधि देख।
वर्णन निज अभिप्राय यह, विधिको प्रभु थल देख ३॥

❀ अथ रावणादिपीडितदेवर्षीणां क्षीरार्णवब्रह्मलोकादिगमनम् ❀

*मुनय ऊचुः—*

विश्वविश्रुत विश्वाय विबोधनविचक्षण ॥ वक्तुमर्हसि तत्सूत यत्पृच्छामो वयं पुनः ॥१॥ वेङ्कटाद्राविदानीं तु सर्वप्रत्यक्षगोचरः ॥ आस्ते ह्यञ्जनशैलाभः सर्वाभीष्टफलप्रदः ॥ २ ॥ कस्य वा पुण्यशीलस्य रूपमेतत् प्रदर्शितम् ॥ वक्तव्यं तदशेषेण शृण्वतां नो महामुने ॥ ३ ॥ इत्युक्तो मुनिभिस्तैस्तु सूतः प्राह मुनीन् प्रति ॥४॥

देवर्षियोंका ब्रह्मलोक गमन।

मुनियोंने कहा—हे विश्वविख्यात संसारके सब रहस्योंको बतानेमें विलक्षण महामुनि श्रीसूतजी! फिर जो कुछ हमलोग पूछते हैं, कृपया उसे कहिये। वेङ्कटाद्रिपर इस समय सब लोगोंके प्रत्यक्ष गोचर, सर्वाभिष्ट फलप्रद, अञ्जन पर्वतके समान महापुरुष विराजमान हैं। उन्होंने यह स्वरूप किस पुण्यशील महानुभावको दिखलाया था। यह आप विस्तारपूर्वक कहिये।

*सूत उवाच—*

शृणुध्वं मुनयो यूयं वेङ्कटेश कथां पराम्। व्यासेन मुनिना प्रोक्तां मह्यम् पूर्वं स्वयंभुवः ॥५॥ प्रदर्शितामिदं रूपमिति तत्कथयाम्यहम् ॥ वृत्तान्तमादितः कृत्वा शृण्वन्तु मुनिसत्तमाः ॥६॥

इस प्रकार मुनियोंके प्रश्न करनेपर श्रीसूतजी बोले—मैं श्रीव्यासजीसे कही हुई परमाद्भुत, परमपुण्यप्रद श्रीवेङ्कटेशजीकी कथा कहता हूं। पहले श्रीवेङ्कटेशजीने यह परम विचित्र रूप ब्रह्माजीको दिखलाया था, उसी कथाको मैं कहता हूं। हे मुनिसत्तमो! आपलोग आदिसे ही सारी कथा सुनिये।

पुरा कदाचिज्जावालिः काश्यपो गौतमस्तथा ॥ अगस्त्यो वामदेवश्च शतानन्दो मुनिस्तथा ॥७॥ योगिनः सनकाद्याश्च वासवाद्या दिवौकसः ॥ हिरण्यकशिपोर्वंशसम्भवैश्च दुरात्मभिः ॥८॥

दैत्यैश्च पीडिताः केचिद्विष्णवे तन्निवेदितुम् ॥ निर्जग्मुस्तेऽथ सम्भूय विचेतुं विष्णुमव्ययम् ॥९॥

पहले किसी समयमें जावालि, कश्यप, गौतम, अगस्त्य, वामदेव, शतानन्द आदि मुनि तथा सनकादि योगी, इन्द्रादि देवता, हिरण्यकशिपु वंशज दुरात्मा दैत्योंसे अत्यन्त पीड़ित होकर विष्णु भगवान्के निकट अपने कष्टको निवेदन करनेके लिये निकले ॥९॥

क्षीरोदधेरुत्तरं तीरं गत्वा देवं जनार्दनम् ॥ तुष्टुवुर्विविधैः स्तोत्रैरगस्त्याद्याः सुराश्च ते ॥१०॥

अगस्त्यादि मुनिगण तथा सब देवतागण इकट्ठे होकर, परम अव्यय विष्णुजीको खोजनेके लिये क्षीर-सागरके उत्तरी तीरपर जाकर श्रीजनार्दन भगवान्‌को अनेक स्तोत्रोंसे स्तुति करने लगे ॥१०॥

क्षीरोदशायिन् भगवन् सर्वकारणकारण ॥ सूक्ष्मप्रकृतिसंलीन-जीवतत्त्वैर्युत प्रभो ॥११॥ सृष्टिकाले भवानेव त्वत्तोऽन्यन्न हि विद्यते ॥ स्रष्टा त्वमेव सर्वस्य जङ्गमस्थावरात्मनः ॥१२॥ त्वमेव दृश्यसे विष्णो जगद्रूप नमोऽस्तु ते ॥ अङ्गीकृत्य भवानेव जगत्पालनकर्म च ॥१३॥ शेषे शेते श्रिया सार्द्धं निश्चिन्तं मधुसूदन ! ॥ जागरूकः सदा त्वं तु जगत्पालनकर्मणि ॥१४॥ विचारयसि नास्मांस्त्वं किमर्थं मधुसूदन ॥ प्रसीद भगवन् विष्णो प्रसीद त्वं सुरेश्वर ॥१५। प्रसीद करुणासिन्धो ! प्रसीद वरदामल ॥

हे क्षीर-सागरशायी, हे सब कारणोंके भी कारण, हे कारण-रूप प्रकृतिमें विलीन सूक्ष्म जीवोंसे युक्त प्रभो, सृष्टि-कालमें आप ही रहते हैं, आपसे अतिरिक्त और कोई नहीं रहता। आप ही जंगम-स्थावर स्वरूप सब जगतके स्रष्टा हैं, आप ही जगत-रूपमें दिखाई देते हैं, आपको प्रणाम है। आप ही संसारके पालन करनेका भार स्वीकारकर आदिशेषपर अपनी स्त्री लक्ष्मीजीके साथ क्षीर-सागरमें निश्चिन्त होकर शयन करते हैं। जगत्पालन-कर्ममें आप ही सदा जागरूक ( सावधान ) हैं। हे मधुसूदन ! आप हमारे बारेमें क्यों विचार नहीं करते ? हे भगवन् ! आप प्रसन्न हों ! हे सुरेश्वर, आप अवश्य प्रसन्न हों !! हे करुणासागर ! हे वरदायक ! हे निर्दोष परमात्मन्, आप प्रसन्न हों ॥ १५ ॥

एतस्मिन्नन्तरे कश्चिच्छङ्खचक्रगदाधरः ॥१६॥ पार्षदः परमेशस्य व्योम्नि चागत्य वै मुनीन् ॥ पुरुषः सोऽब्रवीदेवं श्रूयतामिति

तेषामपि महीतले ।६॥ प्रत्यहं मम नैवेद्यं यावत्प्रस्थचतुष्टयम् ॥
सव्यञ्जनं कल्पयन्ति ते हि पुण्यतमा भुवि ॥७॥ ब्रह्मेन्द्रलोकप्र-
मुखास्ते सुखेन जिता नरैः ॥ तदीयदर्शनात्पुंसो भवन्ति महिमा-
दयः ॥८॥ तेषामैश्वर्यसम्पत्तौ वक्तव्यं नावशिष्यते॥ अन्ते यान्ति
परं धाम पुनरावृत्तिवर्जितम् ॥९॥

### पुष्पोद्यान निर्माण

भगवान् बोले - हे विद्वद्गण ! मैं फिर भी कुछ कहता हूं; आप सब उसे सुनें। जो कोई यहां उत्तम तुलसीवन या अनेक सुन्दर सुगन्धित फूल-फलवाले वृक्षोंकी फुलवाड़ी लगाकर उनके फूलसे मेरी पूजा करते हैं, वे प्रत्येक पत्ताके लिए देवताओंके वर्ष-प्रमाणसे करोड़ों वर्षोंतक स्वर्ग भोगकर अन्तमें मेरे पदको पाते हैं और उनकी भूलोककी सभी कामनाएं अवान्तर-रूपसे ही सिद्ध होती हैं। उन पुण्यात्माके वंशका संसारमें कभी उच्छेद नहीं होता। उन उद्यानोंमें प्रतिवर्ष जितने फल, फूल, पत्ते उत्पन्न होते हैं, उनकी उतनी ही कामनायें पृथ्वीतलपर सिद्ध होती हैं। जो मुझको प्रतिदिन व्यञ्जनादिके साथ चार सेर नैवेद्य चढ़ाते हैं,वह संसारमें बड़े पुण्यशाली हैं। वे ब्रह्मादि तथा इन्द्रादि देवलोकोंको अनायास ही जीत लेते हैं और उनके दर्शनसे सभी महिमाएं प्राप्त होती हैं। उनके ऐश्वर्य तथा सम्पत्तिके विषयमें तो कुछ कहना ही नहीं। अन्तमें वे पुनर्जन्मसे रहित होकर परमधामको पाते हैं ॥६॥

भूषणं स्वर्णखचितं वज्रमाणिक्यसंयुतम् ॥ प्रयच्छन्ति च ये
पुण्या मामुद्दिश्य महीतले ॥१०॥ रूपलावण्यसम्पन्ना विद्यावन्त-
श्चिरायुषः ॥ भवन्ति पुत्रास्तेषां च मच्छन्दात्सम्पदोऽपि च ॥११॥
पद्मकह्लारतुलसीचम्पकैर्दामकारिणः ॥ मदर्चननिमित्तं ये प्रत्यहं
श्रद्धयान्विताः ॥१२॥ लक्ष्म्या समेतस्तेषां हि गृहे वस्याम्यहं सु-
राः ॥ तेषां येऽपि च साहाय्यं कुर्वते श्रद्धयान्विताः ॥१३॥ तेषा-
मपि सदा सम्पत्प्रदोऽहं कमलासन ॥

पृथ्वीतलपर जो कोई पुण्यवान मुझे वज्र-माणिक्य-जटित स्वर्णाभूषण अर्पण करते हैं, उनको रूपवान लावण्ययुक्त, विद्वान, धार्मिक तथा परम दीर्घायु पुत्र एवं अनन्त सम्पदाएं मेरी इच्छासे अनायास ही प्राप्त होती हैं। मेरी पूजाके कारण श्रद्धासे जो कोई पद्म कह्लार, तुलसी, चंपा आदिकी मालाएं प्रतिदिन बनाते हैं; उनके गृहमें लक्ष्मीके साथ मैं सदा निवास करता हूं और उनकी जो सहायता करते हैं, उन्हें भी मैं बहुत धन-धान्य तथा संपत्ति प्रदान करता हूँ ॥१३॥

भोः सुरा योगिनः सर्वे येऽपि चात्र समागताः युष्माकं यद्यदिष्टं तद्दास्येऽहं सकलं वरम् ॥ पुत्रान्पौत्राञ्छ्रियं वापि राज्यमारोग्यमेव वा ॥१५॥ आयुः कीर्तिं च यच्चान्यन्मत्तो वाञ्छति यः पुमान् ॥ तत्तद्दाम्यहं तस्मै सत्यं सत्यं न संशयः ॥१६॥ बहुनेह किमुक्तेन ये चात्र वसतां पुनः ॥ कुर्वन्ति चानुकूल्यं वै ते मे प्रियतरा मताः ॥१७॥ निवसद्भ्योऽत्र मनुजा द्रुह्यन्ति विबुधाश्च ये ॥ असुरा राक्षसा यक्षाः पिशाचाः प्राणिनोऽपि वा ॥१८॥ तानहं नाशयिष्यामि सपुत्रपशुबान्धवान्

हे देवता, ऋषि तथा योगिगणो ! यहां आप जितने उपस्थित हैं, उन सबकी जो-जो इष्ट-कामनायें हैं, वह सब कुछ मैं अवश्य प्रदान करता हूं। पुत्र, पौत्र, धन, राज्य, आरोग्य, आयु, कीर्ति या और भी किसी वस्तुकी जो कोई कामना करता है, वह सब मैं उसे अवश्य ही देता हूं, यह बिल्कुल सत्य है; इसमें कुछ भी संशय नहीं। अधिक क्या कहूं, जो कोई यहां निवास करनेवालोंका उपकार करते हैं, वे मेरे अत्यन्त प्रिय हैं। जो कोई मनुष्य, देवता या राक्षस, यक्ष या पिशाच, कोई भी प्राणी यहां निवास करनेवालोंसे द्रोह करते हैं, मैं उनका सपुत्र बन्धुबान्धवों एवं पशुओंके साथ नाश करता हूं॥ १९ ॥

नियतोऽनियतो वाऽपि वेङ्कटाद्रिमिमं जनः ॥१९॥ व्याजाद्वा यः समारुह्य स्नात्वा स्वामिसरोजले ॥ नमस्यति च मां सोऽपि सकामः सर्वथा सुराः ॥२०॥

नियम या अनियमसे, श्रद्धा या छलसे, चाहे किसी प्रकारसे भी कोई इस वेंकटपर्वतपर चढ़कर स्वामिपुष्करिणीके जलमें स्नानकर मुझे प्रणाम करेगा वह सदा सफल मनोरथ होगा ॥२०॥

कुलङ्कपमहौदार्यगुणक्षीरपयोनिधिः॥ इति श्रीवेङ्कटाधीशस्तेभ्यो दत्त्वा वराण्यहो ॥२१॥ भेरीमृदङ्गपणवमङ्गलस्वनसंयुतः ॥ पुष्पवृष्ट्या युतः श्रीमाञ्छ्रीभूमीसहितस्तदा ॥२२॥ विवेशान्तर्महद्दिव्यं विमानं रत्नतोरणम् ॥

इस प्रकार वरप्रदान करके औदार्य गुणका गम्भीर क्षीर-सागररूप श्रीवेंकटाधीशने भेरी, मृदंग, पणव, आदिकी मंगल-ध्वनिके साथ पुष्प-वृष्टि होते-होते लक्ष्मी तथा पृथ्वीदेवियोंके साथ उस महा-दिव्य रत्नतोरण युक्त विमानमें प्रवेश किया ॥२३॥

ब्रह्मादयो देवगणाः सम्भूय प्रीतमानसाः ॥२३॥ जयेति चास्तु-
वंस्तेन घोषेणापूरितं जगत् ॥ ब्रह्मापि वेङ्कटेशस्य दिव्यमङ्गलस-
म्भ्रमम् ॥२४॥ ऋषिभिः सह धर्मात्मा यथाशास्त्रमकारयत् ॥२५॥

ब्रह्मादि देवगणोंने प्रेमपूर्ण मनसे एकत्र होकर जय-जयकार ध्वनियोंसे स्तुति की, जिससे जगत् गूञ्जित हो उठा। और खासकर ब्रह्माजीने, ऋषियों तथा तपस्वियोंके साथ शास्त्र विधिसे श्रीवेंकटेशका दिव्य, मंगल उत्सव समारोहसे मनाया ॥२५॥

❀ अथ महोत्सवावभृथस्नानप्रशंसा ❀

ततः श्रवणनक्षत्रे देवदेवस्य शार्ङ्गिणः ॥ चकारावभृथं पुण्यं
पवित्रं पापनाशनम् ॥२६॥ स्वामिपुष्करिणीपुण्यसलिले लोकपू-
जिते ॥ सस्नुर्ब्रह्मादिदेवाश्च मुनयो योगिनोऽपि च ॥२७॥ राजानश्च
तथा विप्राः सर्वे चैव नरास्तदा ॥ ❀ ❀ ❀

महोत्सव समाप्तिकी प्रशंसा

धनुर्धारी देवादिदेव भगवान्के पुण्य, पवित्र तथा पाप-नाशक एवं लोकपूजित, स्वामिपुष्करिणीके जलमें श्रवण नक्षत्रमें ब्रह्मादि देवता, मुनि, योगी, राजा, ब्राह्मण तथा अन्यान्य मनुष्यगणोंने स्नान किया ॥२८॥

तत्र स्नात्वा तु योगीन्द्रः सनकः सर्ववित्स्वयम् ॥२८॥ सर्वेषां
पुरतश्चेदमुवाच वचनं तदा ॥ सर्वे शृण्वन्तु मद्वाक्यमुद्धृत्य भुज-
मुच्यते ॥२९॥ ज्ञातं च ध्यानयोगेन सम्यक्छास्त्रैश्च चिन्तितम् ॥
समस्ततीर्थभूतस्य देवदेवस्य चक्रिणः ॥ ३० ॥ यः स्नात्यवभृथे
पुण्यं तस्य तत्पूर्वजन्मसु ॥ अनन्तेषु कृतं पापं तत्क्षणादेव
नश्यति ॥३१॥ इति श्रुत्वा महादेवस्तत्तथैवेति चाब्रवीत् ॥ एवमे-
वेति भगवान्विष्णुरप्यब्रवीत्तदा ॥३२॥ प्रशशंसुस्तथा देवाः स्वामि-
पुष्करिणीं तदा ॥ विविधैर्दिव्यकुसुमै राशीभूतैः सुगन्धिभिः ॥३३॥
उपचारैरनेकैश्च वेदघोषैः सुखश्रवैः ॥ नृत्यगीतादिवादित्रैर्दिव्यम-
ङ्गलनिस्वनैः ॥ ३४ ॥ इष्ट्वा प्रसूनयागं च तोषयित्वा जनार्दनम् ॥
प्रणाममकरोद् ब्रह्मा सर्वदेवैः समन्वितः ॥३५॥ ❀ ❀

स्नानोत्तर सर्वज्ञ ऋषिप्रवर श्रीसनकजी सबको लक्ष्यकर निम्न लिखित बातें बोले—आप सब मेरी बातें सुनिए। मैं हाथ उठाकर कहता हूं कि जो कुछ मैंने योग-बल तथा ध्यान-बलसे जाना है एवं शास्त्रोंमें मनन किया है, वह यह है कि चक्रधारी श्रीभगवान्‌के इस पुण्यमय महोत्सवके अवभृतमें जो स्नान करते हैं उनके अन्यान्य अनन्त जन्मोंमें किये, सभी महापाप तत्क्षण नष्ट हो जाते हैं। श्रीसनक ऋषीश्वरकी उपरोक्त बातोंको सुनकर श्रीमहादेवजी बोले—"तथैव" अर्थात् "ऐसा ही है"। पुनः श्री विष्णु भगवान्‌ने भी कहा—"ठीक ऐसा ही है।" तब सभी देवताओंने स्वामिपुष्करिणीकी बहुत प्रशंसा की और नाना भांतिकी दिव्य सुगन्धित फूलराशियों तथा सुश्राव्य वेदध्वनियों आदि अनेकों उपचारों तथा नृत्य, गीत, वाद्य एवं दिव्य मंगल ध्वनियोंसे प्रसून*यज्ञकर भगवान् जनार्दनको सन्तुष्ट करके सबके अन्तमें सब देवताओंके साथ ब्रह्माजीने भगवान्‌को प्रणाम किया॥३५॥

ततः प्रीतिसमायुक्तो ब्रह्मकृतसोत्सवेन सः ॥ उवाच च विधिं वि-
ष्णुर्ब्रह्मन् प्रीतोऽस्मि साम्प्रतम् ॥३६॥ एतत्प्रीतिसमं किञ्चिद्दातुं
तव न विद्यते ॥ब्रह्मन् यद्वाथ किं दास्ये जगत्स्राष्टिपटो विधे॥३७॥
त्वमेवाहमहं त्वं हि यद्यस्त्यन्यद्वदस्व तत् ॥ ❀ ❀

ब्रह्माजी द्वारा व्यवस्थित इस उत्सवसे प्रसन्न होकर श्रीविष्णुने उनसे कहा—हे ब्रह्माजी! मैं अब प्रसन्न हूं। इस प्रसन्नताके बदलेमें देने योग्य कोई भी वस्तु नहीं है। हे संसारसृष्टिपटु ब्रह्माजी! और अधिक क्या दूं? क्योंकि जो आप हैं, वही मैं हूं; और जो मैं हूं, वही आप हैं। अब आप ही बतावें कि अन्य कौन-सी वस्तु मैं प्रदान कर सकता हूं॥३७॥

इति पृष्टोऽवदद् ब्रह्मा स्वामिन् यद्यस्ति ते कृपा॥३८॥कृतार्थो-
ऽस्मि वरं नान्यल्लोकस्यानुग्रहं विना ॥ एवमेव हरे स्वामिन् ददते-
प्सितमर्थिने ॥ स्थातव्यं भवता विष्णो लोकानुग्रहकाम्यया ॥
इदमेव ममाभीष्टं याचनीयं पुनः पुनः॥ ४० । इति पृष्टो रमाधी-
शस्तथैवास्त्विति चावदत् ॥ ❀ ❀ ❀ ❀

ऐसा पूछनेपर ब्रह्माजी कहने लगे कि हे स्वामिन्! यदि सचमुच ही आपकी कृपा है, तो मैं धन्य हूं। संसारकी कल्याण कामनाके सिवाय मुझे और कुछ भी अभिलाषा नहीं है। अतः इसी प्रकार हे भगवन्! प्रार्थी लोगोंके अभीष्ट पूर्ण करते हुए, अनुग्रह-भावसे आपको रहना चाहिये, यही मेरी बारम्बार प्रार्थना है। ऐसा कहे जानेपर रमापति भगवान्‌ने कहा कि ऐसा ही होगा॥४१॥

---

* प्रत्येक बृहस्पतिवारको ३ बजे दिनमें पहले सात दिनके वस्त्राभूषणोंको उतारकर संध्या समय केवल पुष्पाभरणसे श्रीवेङ्कटेशजीको सजाते हैं। इसी सजावटको प्रसून-यज्ञ या पूलङ्गी कहते हैं। फिर शुक्रवारको मध्याह्न समय उन पुष्पाभरणों-को उतारकर महा अभिषेक किया जाता है और उसी दिनके वस्त्राभूषण आगामी बृहस्पतिवार तक रहते हैं। इस बृहस्पतिवारके होनेवाले पुष्प-यज्ञका दर्शन बहुत ही पुण्य-प्रद है।

❀ अथ ब्रह्मादीनां स्वावासगमनार्थं भगवदभ्यनुज्ञा ❀

उक्त्वा चैवं पुनः प्राह ब्रह्माणममितौजसम् ॥४१॥ ब्रह्मंस्त्वं सृष्टिकार्येषु नियुक्तः पूर्वमेव हि ॥ गत्वा त्वदीयलोकं च कुरु सृष्टिं सुखी भव ॥४२॥ इदं गच्छ स्वकं लोकं शाधि राज्यं स्वकीयकम् ॥ ❀ ❀ ❀ ❀

ऐसा कहनेके बाद, तेजयुक्त ब्रह्माजीसे विष्णुभगवान्ने फिर कहा कि हे ब्रह्माजी ! आप सृष्टि-कार्यमें पहलेसे ही नियुक्त किये गये हैं, अतएव आप अपने लोकमें जाकर अपनी सृष्टि-क्रिया आरम्भ कीजिए तथा सुखपूर्वक निवास कीजिये ॥

पिनाकपाणे भूतेश लोकं गत्वा त्वदीयकम् ॥४३॥ उमया विहरस्व त्वमवाप्तसकलेप्सितः ॥ अगस्त्य मुनिशार्दूल शिष्यैः सह तपोधन ॥ ४४ ॥ स्वमाश्रमं प्रविश्यैव कुरु नित्यान्यतन्द्रितः ॥ योगिनश्च यथायोग्यं गच्छतावासमुत्तमम् ॥४५॥ ध्यानामृतसुतृप्तैश्च स्थातव्यं योगिभिश्चिरम् ॥ ❀

हे पिनाकपाणि महादेवजी ! आप भी अपने लोकमें जाइए और अपने राज्यका शासन कीजिए तथा सफल-मनोरथ हो उमादेवीके साथ विहार कीजिए । हे मुनिशार्दूल अगस्त्यमुनि ! आप भी अपने शिष्यों तथा तपस्वियोंके साथ अपने आश्रममें जाकर आलस्यरहित हो नित्य-कर्मोंके अनुष्ठानमें प्रवृत्त होइए । हे योगिगण ! आपलोग भी अपने-अपने उत्तम स्थानोंको जाइए और ध्यानामृतानन्दसे तृप्त योगियोंके साथ सदा निवास कीजिए ॥४६॥

इति श्रीवेङ्कटाधीशः सर्वानुत्सवसङ्गतान् ॥४६॥ तत्तत्स्थानं समुद्दिश्य विसृज्य प्रीतिपूर्वकम् ॥ अन्तर्विमानं श्रीभूमिसहितः प्रविवेश ह ॥४७॥ ❀ ❀ ❀ ❀ ❀

इति श्रीवराहपुराणे श्रीवेङ्कटाचलमाहात्म्ये श्रीवेङ्कटाद्रौ पुष्पोद्याननिर्माणादिप्रशंसावर्णनं नाम द्विपञ्चाशोऽध्यायोऽत्र विंशः ॥ २० ॥

इस प्रकार श्रीवेङ्कटेश भगवान्ने, उत्सवमें सम्मिलित सभी समाजको अपने-अपने स्थानोंमें प्रीतिपूर्वक विदा कर, स्वयं भी दिव्य विमानमें श्री तथा भूमिदेवीके साथ प्रवेश किया ॥४७॥

इति विंशोऽध्यायः ॥२०॥

# एकविंशोऽध्यायः ॥२१॥

यहाँ वेङ्कटाद्रीशका, बहु वैभव यश गान ॥
देव विदाई बादके, करतब विविध बखान ॥१॥
चढ़ि निज-निज वाहन परम, ब्रह्मा रुद्र महेन्द्र ॥
गमन धाम निज निज मुनिन, बास वहीं योगेन्द्र ॥२॥
महिमा फल्गुनि तीर्थ यह, जाबाली ऋषि धाम ॥
चक्रसुदर्शन पूर्व दिशि, असुर साथ संग्राम ॥

## ❁ अथ श्रीवेंकटाद्रीशवैभवप्रशंसा ❁

मनय ऊचुः—

भगवन् वेदशास्त्रार्थतत्त्वज्ञानसुनिष्ठित । श्रुतं सूत महाश्चर्यमिहाख्यानमनुत्तमम् ॥ १ ॥ वेङ्कटाद्रिप्रभावोऽयमीदृशः पापनाशनः ॥ तत्रैव भगवत्प्रीतिरीदृशी निस्तुला खलु ॥ २ ॥ वेङ्कटेशो महाश्चर्यदिव्यचारित्रभूषणः ॥ आश्चर्यं तस्य चारित्रमद्भुतं परमाद्भुतम् ॥ ३ ॥ अदृष्टाश्रुतपूर्वं तत्कुत्राऽपि जगतीतले ॥ शृण्वतामिदमाख्यानं नास्ति तृप्तिस्तपोधन ॥४॥ विसृज्य विबुधान्विष्णुरकरोत्किं रमापतिः ॥ विसृष्टास्तेन देवाश्च किमकुर्वन्मुने वद ॥५॥ इति पृष्टोऽवदत्सूतः श्रूयतामिति तान्मुनीन् ॥६॥

## वेङ्कटाधीशके वैभवकी प्रशंसा

मुनियोंने कहा—हे भगवान् सूतजी ! हे सकल वेद-वेदान्तादि शास्त्रोंके तत्त्वोंके ज्ञानमें परमनिष्ठावाले ! आपके उपर्युक्त कथित परमाश्चर्यमय आख्यानको हमलोगोंने सुना कि वेङ्कटाद्रिका यह प्रभाव ऐसा पाप-नाशक है !!

भगवान्‌की भी उस पर्वतपर इतनी अपरिमित प्रीति है !! श्रीवेङ्कटेशजी, महाश्चर्यमय तथा परम दिव्य चरित्र भूषणवाले हैं। उनका चरित्र अपूर्व, अदृष्ट, परमाद्भुत तथा पृथ्वीपर कहीं भी न देखा और न सुना ही है। हे तपोधन ! इस आख्यानको सुननेवालोंको तृप्ति नहीं होती है। हे मुनिवर। देवताओंको विदाकर रमापति भगवानने क्या किया ? तथा विदा होनेपर देवताओंने ही क्या किया ? ११ पूछनेपर श्रीसूतजी उन मुनियोंसे बोले कि हे तपोधनवृन्द ! आपलोग सुनिये ॥६॥

## ❁ अथ ब्रह्मादीनां स्वावासगमनम् ❁

*सूत उवाच—*

आरुह्य हंसं ब्रह्मा तु स्तूयमानः सुरैस्तथा ॥ सत्यलोकं जगामाशु सर्वलोकपितामहः ॥७॥ दिव्यं विमानमास्थाय सहस्राक्षः पुरन्दरः ॥ गन्धर्वैर्गीयमानश्च प्रविवेशामरावतीम् ॥८॥ नन्दिकेश्वरमुख्यैश्च गणैः प्रमथसंज्ञकैः ॥ सहितः पार्वतीनाथः पर्वतं वेङ्कटाभिधम् ॥९॥ कुर्वन्प्रदक्षिणं पश्यन्वस्तुं स्थलमनुत्तमम् ॥ आग्नेय्यां दिशि चाद्रार्त्द्वेङ्कटाद्रेः सरः शिवम् ॥१०॥ तत्र दृष्ट्वा सरः पुण्यं कापिलं लोकपावनम् ॥ रमणीयमिदं स्थानं स्थातव्यमुमया सह ॥११॥ अत्रैवेति विनिश्चित्य जगाम रजताचलम् ॥

श्रीसूतजी कहने लगे कि सर्वलोक पितामह ब्रह्माजी सभी देवताओंसे स्तुति किये जाते हुए, हंसपर सवार हो सत्यलोकको चले गये। गंधर्वोंसे गान किये जाते हुए दिव्य विमानपर चढ़कर सहस्राक्ष इन्द्र अमरावतीपुरीको रवाना हुए। प्रमथ तथा नन्दिकेश्वरादिगणोंके साथ पार्वतीपति महादेव वेङ्कटाचलकी प्रदक्षिणा कर निवास करनेयोग्य उत्तम स्थानको देखते-देखते, उस वेङ्कटपर्वतकी अग्निदिशामें परम मङ्गल लोक-पावन, पवित्र कापिल नामक तालाब देखकर "यही स्थान रमणीक है, यहीं उमादेवीके साथ रहना चाहिए" ऐसा निश्चय कर रजताचल पर्वतपर चले गये ॥१-॥

योगिनः सनकाद्याश्च पापनाशनतीरतः ॥१२॥ अतिष्ठन्परमप्रीताः काननेषु महत्सु वै ॥ ऋषयः सप्त तत्रैव दिशि चोत्तरपूर्वतः ॥१३॥ फल्गुनीझरतीरे तु स्वाश्रमेष्ववसन् सुखम् ॥ फाल्गुन्यां

पूर्णिमायां तु तत्तीरे कमलालया ॥१४॥ अरुन्धतीतपःप्रीता प्रादुरासीत्पुरा किल ॥१५॥

पाप-नाशिनी तीर्थके तटके निकट सनकादि योगिवृन्द आनन्द-पूर्वक घोर जंगलमें निवास करने लगे। तथा सप्तर्षिगण भी उसी पर्वतके ईशान भागमें फल्गुनी तीर्थके तटपर अपने आश्रममें आनन्दसे निवास करने लगे। प्राचीन कालमें अरुन्धती देवीकी तपस्यासे प्रसन्न होकर श्री लक्ष्मीदेवी फाल्गुनी पूर्णिमाके दिन फल्गुनीके तीरपर प्रकट हुई थीं ॥१६॥

## अथ फल्गुनीतीर्थमाहात्म्यम्

तस्यै दत्त्वा वरं चेष्टं प्रार्थिता च तया रमा॥ ददौ च सरितो नाम फल्गुनीशब्दपूर्वकम् ॥१६॥ फाल्गुने मासि राकाख्ये फल्गुनीतारके तिथौ ॥ स्नास्यन्त्यत्र तु ये केचिज्जनास्तेषामहं सदा ॥१७॥ प्रीता गृहे निवत्स्यामि सर्वकामफलप्रदा ॥ इति दत्त्वा वरं तस्यै पुनः श्रीकमलासना ॥१८॥ अन्तर्धानं गता तत्र तत्तीरे मुनयोऽवसन् ॥

### फल्गुनीमाहात्म्य

उनको इच्छित वर देकर, उनसे प्रार्थना किये जानेपर उस नदीका नाम फल्गुनी नदी रखा। फाल्गुन मासमें पूर्वाफाल्गुनी नक्षत्र सहित पूर्णिमाको जो मनुष्य इस फल्गुनी तीर्थ नदीमें स्नान करेंगे, उनपर मैं अत्यन्त प्रसन्न होकर, उनकी सफल कामना पूर्ण करते हुए उनके घरमें निवास करूंगी। ऐसा वरदान भगवती अरुन्धती देवीको देकर श्रीलक्ष्मीजी अन्तर्धान हो गयीं और मुनिगण उसी स्थानमें निवास करने लगे ॥१८॥

देवाः केचन सम्भूय विनिश्चित्य विचार्य च ॥१९॥ अत्रैव वर्त्तते श्रीशस्तस्मादत्रैव सर्वदा ॥ सेवमाना वेङ्कटेशं स्थास्याम इति निश्चिताः ॥२०॥ उत्तरे स्वामितीर्थस्य देवनद्यास्तथोत्तरे ॥ कृत्वाऽऽश्रमं सुखं तत्र न्यवसंस्ते दिवौकसः ॥२१॥

कई देवताओंने इकट्ठा हो विचारकर निश्चय किया कि यहीं लक्ष्मीपति भगवान् रहते हैं, अतएव हमलोग भी श्रीवेङ्कटेश भगवान्की सेवा करते हुए इसी स्थानपर निवास करें। तदनन्तर स्वामितीर्थसे उत्तर देव नदी तीर्थसे कुछ ही उत्तरकी ओर अपना-अपना आश्रम बनाकर उन लोगोंने वहीं सुखपूर्वक निवास करना आरम्भ किया।

## अथ जाबालितीर्थमाहात्म्यम्

तत उत्तरदिग्भागे सरसः पश्चिमे तटे ॥ जाबालिः स्वाश्रमे शिष्यैर्न्यवसद्विगतश्रमः ॥२३॥ केचिद्गिरौ स्थिताश्चैव नित्यमीशं नमन्ति च ॥ गिरेः परिसरे केचिन्न्यवसन्नित्यमेव हि ॥२२॥ पुनरप्यागमिष्याम इति जग्मुः परे तदा ॥ अगस्त्यो भगवांस्तत्र श्रीमद्वेङ्कटनायकम् ॥२४॥ अर्चयन्विविधैः पुष्पैः कृत्वा चोद्यानमुत्तमम् ॥ चिरकालं महाभागः सह शिष्यैर्महामुनिः ॥२५॥ पिबन्नानन्दपीयूषं न्यवसद्वेङ्कटाचले ॥

उसी तीर्थकी उत्तर दिशामें तालाबके पश्चिम तटपर जाबालि ऋषि अपने शिष्यगणोंके साथ आरामसे निवास करते थे; और भी कई अन्य ऋषि उसी पर्वतपर प्रतिदिन भगवान्को प्रणाम करते हुए रहते थे। अन्यान्य कई लोग भी उस पर्वतके आस-पासमें निवास करने लगे। कितने मुनि यह कहकर जाने लगे कि हमलोग फिर भी आयंगे। महामुनि, महाभाग भगवान् अगस्त्यजी उस पर्वतके ऊपर उत्तम-उत्तम उद्यान लगाकर भांति-भांतिके पुष्पोंसे श्रीवेङ्कटेश भगवान्की पूजा करते, अपने शिष्योंके साथ आनन्दामृत पान करते हुए उसी पर्वतपर चिरकालतक निवास करने लगे ॥२६॥

वेङ्कटेशः श्रिया भूम्या समेतः पुरुषोत्तमः ॥२६॥ कृतत्रेताद्वापरेषु देवराजैर्महीक्षितैः ॥ कल्पितैर्विविधैर्नित्यमुत्सवैः परमाद्भुतैः ॥२७॥ पूजितो मोदते नित्यं ददन्निष्टं च याचते ॥ कलौ युगे तद्विद्वत्तिरास्ते श्रीवेङ्कटाचले॥२८॥ एतद्वः सर्वमाख्यानं कथितं मुनयोऽमलाः ॥ श्रोतुमिच्छथ ? भूयोऽपि किञ्चिद्वक्ष्यामि शंसत ॥२९॥ इत्युक्ता मुनयः सर्वे प्रोचुरेतद्वचस्तदा ॥३०॥

पुरुषोत्तम श्रीवेङ्कटेश भगवान् पृथ्वीदेवी तथा लक्ष्मीदेवीके साथ कृत, त्रेता एवं द्वापर इन तीनों युगोंमें इन्द्रादि राजाओं द्वारा परमाद्भुत विविध नित्योत्सवोंसे पूजित हो, उनका तथा प्रार्थी जनोंका अभीष्ट

पूर्ण करते हुए आनन्दसे रहते हैं । कलियुगमें तो श्रीवेङ्कटेश भगवान् वेङ्कटाचलपर विद्युतके समान चमकते हुए रहते हैं । हे निर्मल मुनिगण ! यह सब कथा तो आप सर्वोको मैंने कह सुनाया; और भी कुछ कहना चाहता हूँ; आपलोग सुनना चाहते हैं ? तो कहिए । यह सुनकर सब मुनियोंने यह बात कही ॥३०॥

❀ अथ पूर्वस्यां दिशि सुदर्शनकृतासुरवधप्रकारः ❀

मुनय ऊचुः—

वेङ्कटेशाभ्यनुज्ञातश्चक्रेण निहता रणे ॥ दुष्टदानवसङ्घाश्च
दुष्टचोरा महीभृतः ॥३१॥ इत्युक्तं हि त्वया पूर्वं कथं के वा हता
मुने ॥ श्रोतुमिच्छा हि महती यद्यस्मासु दया तव ॥३२॥ शंस
सूत रथाङ्गस्य वृत्तान्तं रणभूमिषु ॥ इति पृष्टो जगादासौ सूतः
परमधार्मिकः ॥३३॥ ❀ ❀

❀ सुदर्शन द्वारा पूर्वीय असुरोंका वध ❀

मुनियोंने पूछा—हे सूतजी ! वेङ्कटेश भगवान्की आज्ञासे सुदर्शनचक्रने दुष्ट, दानव, चोर तथा पापी राजाओंका नाश किया था, यह वृत्तान्त आपने पहले ही कहा है । यदि हमपर आपकी दया है, तो हमलोगोंको पुनः वही विशेष रूपसे सुननेकी उत्कट इच्छा है ॥३३॥

श्रीसूत उवाच—

श्रूयतां चक्रराजस्य चरितं परमाद्भुतम् ॥ पराक्रमं सङ्ग्रहेण
वक्ष्यामि शृणुतामलाः ॥३४॥ न शक्यं विस्तराद्वक्तुं चक्रराजस्य
वैभवम् ॥ दुष्टान्निबर्हयेत्युक्तश्चक्रराजो महाद्युतिः ॥३५॥ आज्ञां
वेङ्कटनाथस्य धारयञ्छिरसा तदा ॥ निर्जगाम गिरेः शृङ्गाद्गन्धर्व-
गणसेवितः ॥३६॥ उद्यतायुधशस्त्रैस्तैर्महामुसलपाणिभिः ॥ प्रास-
तं मरहस्तैश्च शूलपट्टिशधारिभिः ॥३७॥ असिचर्मधरैः शूरैर्बाण-

शार्ङ्गासिधारिभिः ॥ गजवाजिरथैरुष्ट्रैर्युद्धसन्नाहसम्भ्रमैः ॥३८॥
भेरीमृदङ्गपटहैर्ढक्कानिःसाणमर्दलैः ॥ जयव्यञ्जकवाद्यैश्च संयुतो-
ऽयं पदातिभिः ॥३९॥ राजवेषधरः श्रीमान्सहस्रभुजमण्डितः ॥
किरीटहारमुकुटकेयूराङ्गदशोभितः ॥ ४० ॥ दंष्ट्राकरालवदनो
ज्वलदग्निसमप्रभः ॥ प्रवर्तकास्त्रसंयुक्तः पञ्चाशच्छतपाणिकः ॥४१॥
निवर्तकास्त्रसंयुक्तः पञ्चाशच्छतहस्तकः ॥ पद्मरागसमोद्योतरक्तव-
स्त्रविभूषितः ॥४२॥ अनेकतुरगव्यूढं दिव्यं स्यन्दनमास्थितः ॥
प्राचीं दिशं ययौ पूर्वं महाघोषसमन्वितः ॥४३॥ तेन घोषेण महता
जगत् त्रस्तं चराचरम् ॥ स्फुटितं वा महद् व्योम दारिताः किमु पर्व-
ताः ॥४४॥ इति भूतानि सर्वाणि चुक्रुशुश्च भृशं तदा ॥४५॥

इति श्रीवराहपुराणे श्रीवेङ्कटाचलमाहात्म्ये श्रीवेङ्कटाद्रिवैभवप्रशंसादिवर्णनं नाम त्रिपञ्चाशोऽध्यायोऽत्रैकविंशः ॥ २१ ॥

श्रीसूतजी बोले—आपलोगोंने चक्रराज सुदर्शनका परमाद्भुत चरित सुना। पर उनका विकट पराक्रम विस्तारपूर्वक कहना असम्भव है। दुष्टोंको एकदम नाश कर दो,ऐसा कहे जानेपर महा तेजस्वी चक्रराजने श्रीवेङ्कटेश भगवान्‌की आज्ञा शिरपर रख,पर्वत-शिखरसे निकल, गन्धर्वोंसे सेवित हो, आयुध शस्त्रसे तैयार, महा मुसल धारण किये हुए, प्रास, तोमर, शूल, पट्टिश धारण करनेवाले तथा तलवार ढाल, धनुष, बाण धारण करनेवाले शूरोंके साथ; गज, घोड़े, ऊँट आदि अनेक युद्ध वाहनोंके साथ, भेरी, मृदंग, पटह, ढाक, नगाड़, मर्दल तथा अनेक जयव्यंजक बाजाओंके साथ, पदातिसेनासे युक्त हो, राजाका भेष धारण कर, परमसुशोभित हजार भुजासे मंडित हो, किरीट, हार, मुकुट, बाजू विजायठ, आदि सब भूषणोंसे सुशोभित हो दाढ़ोंसे कराल मुखसे जलते हुए अग्निके समान तेजस्वी, प्रवर्तकादि अस्त्र लिये पचास हाथोंसे युक्त, निवर्तकादि अस्त्र लिये हुए अन्य पचास हाथों-सहित पद्मराग मणिकी आभावाले, रक्त वस्त्र पहन अनेक घोड़े जुते हुए दिव्य रथपर सवार हो, पूर्व दिशाकी ओर महा विजयध्वनिके साथ प्रस्थान किया। उस महानादसे संसारके चराचर भयभीत हो गये, और ऐसा विचारते कि मानो आकाश फट पड़ा हो, अथवा सब पर्वत विदीर्ण हो गये हों; ऐसा विचारकर सभी प्राणी हा-हाकार करने लगे ॥४५॥

इति एकविंशोऽध्यायः ॥२१॥

अत्यन्त दुःखगाह वन-प्रदेशमें रहनेवाले, खासकर साधु ब्राह्मणोंको सर्वदा बाधा देनेवाले, काले बादलोंके समान गर्जन करनेवाले, नील कज्जल-राशिके समान राक्षस-समूह निवास करते थे। उनमेंसे ही सैकड़ों, हजारोंकी संख्यामें निकल-निकलकर बाहर आने लगे और चक्रराज सुदर्शनकी सेनाके भी कुछ विख्यात पराक्रमी प्रधान-प्रधान वीरगण आ-आकर आमने-सामने जमने लगे। पीछे इन दोनों सेनाओंमें परस्पर अपूर्व, उत्तम तथा तुमुल युद्ध हुआ ॥६॥

समासायुष्यशेषास्ते शलभा इव पावकम् ॥ विविशुश्चक्रराज-
स्य ज्वलन्तीं वाहिनीं तदा ॥७॥ विनिर्दग्धाश्च ते सर्वे दस्युरूपा
वनेचराः ॥ तद्वंशजास्तादृशाश्च शिशुबालाः स्त्रियोऽपि च ॥८॥
ययुस्ते विलयं सर्वे चोरा मायोपजीविनः ॥ निष्कण्टकमभूत्तच्च
वनं पक्षिमृगाकुलम् ॥९। वेङ्कटाद्रिं समारभ्य यावद्वेला महोद-
धेः ॥ तावान्देशश्च सग्रामः सपत्तनवनालयः ॥१ ॥ सर्वबाधावि-
निर्मुक्तः सपर्वतनदीतटः ॥ बभूव परमानन्दो राहुमुक्त इवोडुरा-
ट् ॥११॥ बभूवुर्मुदिताः सर्वे जना जानपदाश्च ये ॥ तुष्टुवुर्ब्रा-
ह्मणाः सर्वे मुनयो योगिनोपि च ॥१२॥

अग्निमें प्रवेश करनेवाले पतङ्गोंके समान आयु-क्षीण हो, इन्होंने भी चक्रराजकी ज्वलन्त अग्नि-रूपी सेनामें प्रवेश किया और सब चोर, वनचर जलकर भस्म हो गये। उसी प्रकार उनके वंशके अन्यान्य मायावी मनुष्य, स्त्री, बालक आदि सब चोरगण नष्ट हो गये। वह जंगल निष्कंटक तथा पशु पक्षियोंसे व्याप्त हो गया। श्रीवेङ्कटाचलसे समुद्रके तीर पर्य्यन्त शहर, ग्राम, घर, जङ्गल, नदी एवं पहाड़युक्त सारा देश सभी प्रकारकी बाधाओंसे निर्मुक्त हो, राहुसे मुक्त चन्द्रमाके समान निर्मल और आनन्दपूर्ण हो गया। सभी मनुष्य और देशवासी बहुत आनन्दित हुए। ब्राह्मण, मुनि तथा योगिगण सभी स्तुति करने लगे ॥१२॥

निवसन्ति तदारभ्य तस्मिन्देशे हि देहिनः तदा प्रभृति तद्दे-
शे वासवश्चक्रशासनात् ।१३। काले वर्षति सस्यानि फलन्ति
बहुधा तदा ॥ बहुक्षीरदुहा गावस्तथा स्वादूदकं सरः ॥१४॥ नीरो-
गाश्च जनाः सर्वे यथा कृतयुगे तथा ॥ कुशलाः कृषिविद्यायां
विप्रा वेदेषु निष्ठिताः ॥१५॥ तपस्विनस्तपोधर्मे योगाभ्यासे च यो-
गिनः ॥ वाणिज्ये वणिजः सर्वे स्वस्वधर्मेषु निष्ठिताः ॥१६॥ देशा-

# द्वाविंशोऽध्यायः ॥२२॥

पूर्वदिशा सुर नाशकर, सुखी सुरक्षित देश ॥
शान्तिसम्पदा धर्म्मरुचि, बर्ताया चक्रेश ॥१॥
घोर दुष्ट दानव भरित, अग्निदिशामें जाय ॥
सकल दैत्यको नाशकर, जयधुनि दियो बजाय ॥२॥
न्यायधर्म्म सम्राजमें, रहन प्रजा सीमान्त ॥
बाइसवें अध्यायमें, लिखा केशरी कान्त ॥३॥

● अथ सुदर्शनसैन्यासुरसैन्ययोर्युद्धप्रशंसा ●

शेषाचलस्य पूर्वस्यां दिशि केचिन्महानगाः ॥ आसंस्तत्र व-
नोद्देशे दस्यवो बलदर्पिताः ॥१॥ उद्यतायुधनिस्त्रिंशाः खड्गचर्मा-
सिपाणयः ॥ मायाविनो महाघोरा वञ्चकाः प्राणिहिंसकाः ॥२॥
क्षेत्रवित्तापहारेण नानाप्राणिभयङ्कराः ॥ असाध्या नृपवर्याणां
वनदुर्गसमाश्रयाः ॥३॥ बाधमाना द्विजान्नित्यं साधूंश्चापि विशेषतः ॥ गर्जन्तो मेघसङ्काशा नीलाञ्जनचयोपमाः ॥४॥ तेषां
शतसहस्राणि चोराणां निर्गतानि च ॥ सुदर्शनमहाराजसेनायां तु
पुरस्सराः ॥५॥ केचिद्विख्यातसामर्थ्या निर्गताश्च तयोर्मिथः ॥ अ-
भूतपूर्वं तुमुलमभूद्युद्धमनुत्तमम् ॥६।

सुदर्शन तथा असुरोंका युद्ध ।

वेङ्कटाचलके पूर्व दिशामें अनेक बड़े-बड़े पर्वत थे। उन्हीं पर्वतोंके वन-प्रदेशमें अनेकों महा बलवान, परम मायावी, हिंसक, वंचक, महा भयङ्कर, पूरे अभिमानी, सदा तलवार, ढाल तथा अन्यान्य शस्त्रास्त्रोंसे सुसज्जित सब प्राणियोंके क्षेत्र, धन, सम्पत्ति आदि अपहरण कर उनको भयभीत करनेवाले, राज्यवर्गोंसे भी असाध्य,

अत्यन्त दुःखगाह वन-प्रदेशमें रहनेवाले, खासकर साधु-ब्राह्मणोंको सर्वदा बाधा देनेवाले, काले बादलोंके समान गर्जन करनेवाले, नील कज्जल-राशिके समान राक्षस-समूह निवास करते थे। उनमेंसे ही सैकड़ों, हजारोंकी संख्यामें निकल-निकलकर बाहर आने लगे और चक्रराज सुदर्शनकी सेनाके भी कुछ विख्यात पराक्रमी प्रधान-प्रधान वीरगण आ-आकर आमने-सामने जमने लगे। पीछे इन दोनों सेनाओंमें परस्पर अपूर्व, उत्तम तथा तुमुल युद्ध हुआ ॥६॥

समासायुष्यशेषास्ते शलभा इव पावकम् ॥ विविशुश्चक्रराजस्य ज्वलन्तीं वाहिनीं तदा ॥७॥ विनिर्दग्धाश्च ते सर्वे दस्युरूपा वनेचराः ॥ तद्वंशजास्तादृशाश्च शिशुबालाः स्त्रियोऽपि च ॥८॥ ययुस्ते विलयं सर्वे चोरा मायोपजीविनः ॥ निष्कण्टकमभूत्तच्च वनं पक्षिमृगाकुलम् ॥९॥ वेङ्कटाद्रिं समारभ्य यावद्वेला महोदधेः ॥ तावान्देशश्च सग्रामः सपत्तनवनालयः ॥१०॥ सर्वबाधाविनिर्मुक्तः सपर्वतनदीतटः ॥ बभूव परमानन्दो राहुमुक्त इवोडुराट् ॥११॥ बभूवुर्मुदिताः सर्वे जना जानपदाश्च ये ॥ तुष्टुवुर्ब्राह्मणाः सर्वे मुनयो योगिनोऽपि च ॥१२॥

अग्निमें प्रवेश करनेवाले पतङ्गोंके समान आयु-क्षीण हो, उन्होंने भी चक्रराजकी ज्वलन्त अग्नि-रूपी सेनामें प्रवेश किया और सब चोर, वनचर जलकर भस्म हो गये। उसी प्रकार उनके वंशके अन्यान्य मायावी मनुष्य, स्त्री, बालक आदि सब चोरगण नष्ट हो गये। वह जंगल निष्कंटक तथा पशु पक्षियोंसे व्याप्त हो गया। श्रीवेङ्कटाचलसे समुद्रके तीर पर्यन्त शहर, ग्राम, घर, जङ्गल, नदी एवं पहाड़युक्त सारा देश सभी प्रकारकी बाधाओंसे निर्मुक्त हो, राहुसे मुक्त चन्द्रमाके समान निर्मल और आनन्दपूर्ण हो गया। सभी मनुष्य और देशवासी बहुत आनन्दित हुए। ब्राह्मण, मुनि तथा योगिगण सभी स्तुति करने लगे ॥१२॥

निवसन्ति तदारभ्य तस्मिन्देशे हि देहिनः तदा प्रभृति तद्देशे वासवश्चक्रशासनात् ॥१३॥ काले वर्षति सस्यानि फलन्ति बहुधा तदा ॥ बहुक्षीरदुहा गावस्तथा स्वादूदकं सरः ॥१४॥ नीरोगाश्च जनाः सर्वे यथा कृतयुगे तथा ॥ कुशलाः कृषिविद्यायां विप्रा वेदेषु निष्ठिताः ॥१५॥ तपस्विनस्तपोधर्मे योगाभ्यासे च योगिनः ॥ वाणिज्ये वणिजः सर्वे स्वस्वधर्मेषु निष्ठिताः ॥१६॥ देश-

मध्ये समागत्य सुदर्शनहरिः प्रभुः ॥ समाहूय जनान्सर्वान्वचनं चेदमब्रवीत् ॥१७। कर्तव्यं भवतां किं तदस्ति चेद्वक्तुमर्हथ ॥१८॥

उसके उस देशमें सभी प्राणी निवास करते हैं। इन्द्र उसी समयसे चक्रके शासनके कारण उस देशमें समय-समयपर वर्षा करने लगे, सस्य खूब जोरसे फलने लगा। गायें बहुत दूध देनेवाली और तालाब स्वादिष्ट जलपूर्ण हो गये। सभी जन सत्ययुगकी तरह नीरोग रहने लगे। मनुष्य कृषि-क्रियामें, ब्राह्मण-वृन्द वेदोंमें, तपस्विगण तपस्यामें, योगिगण योगाभ्यासमें तथा सभी वणिक्वृन्द वाणिज्य आदिमें—इसी प्रकार सभी अपने-अपने धर्मोंमें निष्ठित हो गये। महाप्रभु सुदर्शनहरि देशके मध्य भागमें आ सभी मनुष्योंको बुलाकर यह वचन बोले कि आपलोगोंके लिये मुझे क्या कुछ और करना चाहिए ? यदि हो तो कह सकते हैं ॥१८॥

जना ऊचुः—

इतः पूर्वं वयं सर्वे पीडिताः सुभृशं प्रभो दस्युभिस्तस्करै-श्चोरैश्चोरप्रायैश्च राजभिः ॥१९॥ प्रसादाद्भवतः स्वामिन्देशोऽयं निरुपद्रवः ॥ आसीद्वयं कृतार्थाः स्मेत्युक्तः प्राह च चक्रराट् ॥२०॥ धर्मात्मानं नृपं कञ्चित्कृत्वा देशाधिपं पुनः ॥ न्याय्ये वर्त्मनि वर्तध्वं यूयं तेन गतश्रमाः ॥२१॥ एवं सुरक्षितं चक्रे तं देशं हे-तिभूपतिः ॥२२॥

तब सभी मनुष्य बोले—हे प्रभो ! इसके पहले हम सब लोग चोरों, तस्करों, डकैतों तथा चोरोंके ही समान राजाओंसे अत्यन्त पीड़ित रहते थे। हे स्वामिन् ! आपके प्रसादसे यह देश निरुपद्रव हो गया और हमलोग अब कृतार्थ हो गये। उनके ऐसा कहनेपर किसी धर्मात्मा राजाको उस देशका मालिक बनाकर चक्रराज बोले कि आपलोग न्यायके रास्तेपर आरामसे रहें। इस तरह हेतिराज चक्रसुदर्शनने उस देशको सुरक्षित कर दिया ॥२२॥

❁ अथाग्नेयदिशि सुदर्शनकृतासुरवधप्रकारः ❁

आग्नेय्यां दिशि शेषाद्रेः केचिद्दैत्यांशसम्भवाः ॥ महामाया-विनो घोरा वञ्चकाः क्षत्रबान्धवाः ॥ २३ ॥ बाधमाना द्विजानास-न्साधून्सर्वाञ्जनांस्तथा ॥ देवब्राह्मणविश्वासस्तेषां नासीत् कदाचन ॥

वने दुर्गं गिरौ दुर्गं स्थले दुर्गं तथैव च ॥ एवमावासदेशं तु कृत्वाऽतिष्ठंस्तु तत्र हि ॥२५॥ ❁ ❁ ❁ ❁

## अथ अग्निदिशामें सुदर्शनकृत असुर-वध

शेषाद्रिकी अग्निदिशामें कई दैत्योंके अंशसे उत्पन्न, महा मायावी, घोर तथा वंचक क्षत्रियाधम ब्राह्मण, साधुओं तथा सभी मनुष्योंको बाधा देते रहते थे। उनको देवता-ब्राह्मणोंमें कभी कुछ भी विश्वास नहीं था। वे वनों, पर्वतों एवं मैदानोंमें रहनेके दुर्ग बनाकर वहीं रहते थे ॥२५॥

ते हि ज्ञात्वा महासेनामागतामुद्यतायुधाम् ॥ अयुध्यन्त महाघोरं शस्त्रैरस्त्रैः परश्वधः ॥ २६ ॥ पाशैः खड्गैस्त्रिशूलैश्च तोमरैर्मुद्गरैस्तथा ॥ निघ्नन्ति स्म तथा योधानश्वानुष्ट्रांश्च वारणान् ॥२७॥ शिरांसि बहुधा युद्धे पदातीनां च चिच्छिदुः ॥ केचित्पादेषु संभिन्नाः केचिद्धस्तेष्वशेरत ॥२८॥ शिरोभिश्छिन्नपादैश्च कबन्धैश्च तथा करैः ॥ शस्त्रैरस्त्रैस्तनुत्राणैरुष्णीषैश्च शिरोरुहैः ॥२९॥ रक्तौघैर्मांसखण्डैश्च कीकसैरान्त्रराशिभिः ॥ आस्तृता युद्धभूमिः सा प्रेतराजस्य विस्तृता ॥३०॥ पुरीवासीत्तदा तत्तु सैन्यं सन्नं च तत्तदा ॥ सेनैकदेशं क्षुब्धं तं दृष्ट्वा दौरात्म्यमेव च ॥३१॥ क्रुद्धो बभूव हेतीनां राजा परमकोपनः ॥ त्रिपुरारिर्यथा क्रुद्धः पुराणां सूदनेऽभवत् ॥३२॥ तादृशानां च चोराणां मायिनां निग्रहे तथा ॥ ज्वालामुखं बलाध्यक्षं ससैन्यं सन्दिदेश ह ॥३३॥ निःशेषं कुरु राज्ञस्तांश्चोरांश्च मददुर्मदान् ॥ इत्याज्ञप्तस्तदा तेन चक्रराजेन वै बली ॥३४॥ ज्वालामुखस्तथा चक्रे युद्धं परमदारुणम् ॥ तत्सैन्यं लोलयामास मदमत्त इव द्विपः ॥३५॥ ❁ ❁

उन्होंने उद्धत, शस्त्रास्त्र लिये महासेनाको आया हुआ जानकर, परशु आदि शस्त्रास्त्रसे महाघोर युद्ध किया। वे पाश, खड्ग, त्रिशूल, तोमर, मुद्गर, आदि शस्त्रास्त्रोंसे वीरोंको तथा घोड़ों, ऊँटों एवं हाथियोंको मारते थे। युद्धमें सेनाके अनेकों वीरोंके शिर काट डाले। कोई पैरों तथा कोई हाथोंसे भग्न होकर पड़ा था। कटे हुए मस्तक, पैर,

कबंध, हाथ, अस्त्र, शस्त्र, कवच, पगड़ी, केशपाश, रक्तकी धार, मांसखण्ड, नरकङ्काल तथा अन्तड़ियोंसे छायी हुई वह युद्ध-भूमि प्रेतराजकी विशाल यमपुरीके समान दीख पड़ती थी। उस समय उनसे सारी सेना विदीर्ण कर दी गयी। इस तरह सेनाके एक भागको क्षुब्ध तथा दुष्टोंकी दुष्टता देखकर परम क्रोधित हेतिराज सुदर्शन उसी प्रकार क्रोधित हुए जिस तरह भगवान् त्रिपुरारि शंकर त्रिपुरको मारनेके समय क्रोधित हुए थे। उस तरहके चोरों तथा महा मायावियोंके निग्रहके लिये, सेनापति ज्वालामुखको ससैन्य आज्ञा दी कि उन चोर राजाओं, चोरों एवं मदान्धोंको निःशेष कर दो ॥३५॥

छिन्ना भिन्नास्तथा जग्मुश्चोरास्तत्र वनेचराः ॥ पलायन्तेस्म भीतास्ते त्यक्तशस्त्रायुधास्तदा ॥३६॥ त्यक्त्वा समरभूमिं च वने लीनाश्च सानुषु ॥ न हि तत्र जनः कश्चिद्ददृशे वनभूमिषु ॥३७॥ गिरेर्दुर्गेषु सर्वेषु वनदुर्गेषु सानुषु ॥ महाबिलेषु कुञ्जेषु कुटीरेषु गुहासु च ॥३८॥ मृगयामासुरव्यग्रास्तस्य चानुचरास्तदा दृष्टं शुर्न हि कञ्चिच्च विनिर्गत्य तु विस्मिताः ॥३९॥ ज्वालामुखाय ते सर्वे प्रोचुरेवं पदातयः ॥

चक्रराजसे इस प्रकार आज्ञा पाकर उस महाबली ज्वालामुखने परम दारुण एवं घोर महायुद्ध किया और उनकी सेनाको मदमत्त हाथीके समान तितर-बितर कर दिया। वनचर चोर सभी छिन्न-भिन्न हो, शस्त्रायुधोंको त्यागकर भयभीत हो भाग गये तथा समर-भूमिको छोड़कर पर्वतोंकी चोटियों तथा जंगलोंमें छिप गये और वहाँके वन-प्रदेशमें कोई जन भी नहीं दीख पड़ा। तब सुदर्शनके अनुचरोंने गम्भीर होकर उन सभोंको पर्वत तथा वनके दुर्गों, चोटियों, बड़ी-बड़ी कन्दराओं, कुञ्जों, कुटियों, तथा गुफाओं आदि सभी स्थानोंमें खोज डाला; परन्तु किसीको भी न देख बाहर निकलकर आश्चर्यान्वित हो ज्वालामुखसे सब हाल कह सुनाया ॥४०॥

विस्मितः सोऽपि तां मायां ज्ञात्वा परमदुर्जयः ॥४०॥ तद्देशवासिनः साधूनाहूयेदं वचोऽब्रवीत् ॥ इमं देशं विसृज्याशु गन्तव्यं देशमन्यकम् ॥४१॥ क्षणमात्रादिति प्रोक्त्वा जग्राह परमं धनुः ॥ अस्त्रं च सन्दधे तस्मिन्नाग्नेयं मन्त्रवत्तदा ॥४२॥ प्रजज्वाल च तद्दिव्यमस्त्रं परमभास्वरम् कृशानवस्तदस्त्राच्च निष्पेतुश्च सहस्रशः ॥४३॥

⊙ ⊙ ⊙

परम दुर्जेय ज्वालामुख भी उनकी माया जानकर परम विस्मित हो, उस देशके निवासियों तथा

साधुओंको बुलाकर यह वचन बोला कि शीघ्र इस देशको छोड़कर आपलोगोंको अभी ही दूसरे देशमें चला जाना चाहिए । उन्होंने ऐसा कहकर परम उत्कृष्ट धनुष धारण किया और उसपर अग्नेय अस्त्रको मन्त्रके साथ चढ़ाया। वह परम तेजोमय दिव्यास्त्र प्रज्वलित हो उठा । उस दिव्यास्त्रसे हजारों अङ्गारे निकलने लगे ॥४३॥

विचुक्रुशुश्च भूतानि चुक्षुभुः सागरास्तदा ॥ अन्तर्धानं गता यत्र
चोरास्तिष्ठन्ति वञ्चकाः ॥४४॥ गत्वा च देशे तत्रापि भस्मसात्कुरु
तानरीन् ॥ इति चिक्षेप तद्दिव्यमस्त्रमाग्नेयमुत्तमम् ॥ ४५
आक्रम्य रोदसी तच्च ज्वालामालासमाकुलम् ॥ चोरदेशं स-
माक्रम्य गिरिदुर्गवनानि च ॥४६॥ यत्र यत्र च तिष्ठन्ति मायिन-
स्ते वनेचराः ॥ अदहत्तानि सर्वाणि स्थलान्यन्यानि यानि च ॥४७॥

तब सभी भूत चिल्लाने लगे तथा समुद्र क्षुब्ध हो गये। "अन्तर्धान होकर जहां सब चोर, वंचक रहते हैं, वहां जाकर उनको भस्मसात् कर दो।" ऐसा कहकर परमाद्भुत आग्नेय महास्त्रको छोड़ा। पृथ्वी तथा आकाश उन ज्वालामालासे व्याप्त हो गया। उसने उन चोरोंके देशों, पर्वतों, दुर्गों तथा वनोंपर चढ़ाई कर जहां-जहां ये मायावी वनचर रहते थे, उन सबोंके साथ सारे देशको तथा अन्यान्य सब जीवोंको जला डाला ॥४७॥

ते च सर्वे दुरात्मानो दग्धकेशतनूरुहाः ॥ तेषां स्त्रियश्च बाला-
श्च सर्वे दग्धाश्च वह्निना ॥४८॥ बिलेभ्यः कन्दरेभ्यश्च निष्पेतुः
क्षत्रबान्धवाः ॥ वनं तदीयं तत्सर्वं भस्मीभूतं च तत्क्षणात् ॥४९॥
निर्बीजं तत्कुलं सर्वं दग्धमस्त्रस्य तेजसा ॥ भस्मीकृत्य तु तान्
सर्वान्प्रविवेशेषुधिं तदा ५० ॥ ❀ ❀

उन सब दुरात्माओंका शरीर केशपाशके साथ जल गया तथा उनकी स्त्रियां, बच्चे सभी क्षत्रियाधम गड्ढों, खोहों, कन्दराओं आदि सभीसे निकल भागे। उनका वह सारा वन तत्क्षण भस्मीभूत हो गया। उनका कुल अस्त्रके तेजसे एकदम निर्बीज हो गया। उन सबोंको भस्म कर वह महास्त्र तरकसमें लौटकर घुस गया ॥ ५०॥

वृष्टिं समानयामास सद्यः शीतलकारिणीम् ॥ अप्लावयत तं
देशमाजग्मुर्निर्गता जनाः ॥५१॥ निहताः सर्वचोराश्च तेजसा
भवतः प्रभो ॥ इति विज्ञापितस्तेन बलाध्यक्षेण स प्रभुः ॥५२।

सन्तुष्टस्तत्र तं देशमागत्य च सुदर्शनः ॥ तानि दुर्गाणि सर्वाणि स्थलीकृत्य वनानि च ॥५३॥ प्रकाशानि ततश्चक्रे देशं प्रहतमार्गकम् ॥ तत्रत्यान् स्थापयामास साधून्विप्रादिकानपि ॥ ५४॥ स्थापयित्वा च तद्देशे धर्माध्यक्षं दयापरम् ॥ वृष्टिशाल्यादिवृद्ध्या च पोषयामास देशिकान् ॥५५॥ ५५ ❀ ❀ ❀

इति श्रीवराहपुराणे श्रीवेङ्कटाचलमाहात्म्ये सुदर्शनसन्यासुरसैन्ययोर्युद्धप्रशंसादिवर्णनं नाम चतुःपञ्चाशोऽध्यायोऽत्र द्वाविंशः ॥ २२ ॥

उन्होंने तुरन्त शीतलकारी वर्षा लाकर पुनः उस देशको जलसे प्लावित कर दिया और गये हुए मुनिगण तथा मनुष्य पुनः आ गये। "आपके तेज प्रभावसे सभी चोर मारे गये" ऐसा उस सेनापतिसे विज्ञापित होनेपर सन्तुष्ट हो महाप्रभु सुदर्शनजीने उस देशमें आकर, उन सब दुस्तर जङ्गलोंको निवास-योग्य बनाकर, उस देशको सुन्दर रास्तोंसे युक्त तथा प्रकाशित बनाकर वहांपर वहांके साधुओं तथा ब्राह्मणों आदिको स्थापित किया और उस देशपर धर्माध्यक्ष, दयावान राजाको स्थापित कर वर्षा, धान वगैरहकी बढ़ती आदिसे उन सब देशवासी लोगोंको हृष्ट-पुष्ट कर दिया ॥५५॥

इति द्वाविंशोऽध्यायः

## अथ त्रयोविंशोऽध्यायः ॥२३॥

दैत्ययाम दिग्दुष्टसे, पीड़ित प्राणीमात्र ॥
चक्रासुर रण विधि विविध, असुरनाश सर्वत्र ॥१॥
अति अद्भुत शस्त्रास्त्रसे, सकल दैत्य संहार ॥
धर्मराज्य कण्टकरहित, चक्र किया विस्तार ॥

### ❀ अथ सुदर्शनायासुरवधार्थं दक्षिणादिग्गमनम् ❀

सूत उवाच— * * *

सुदर्शनो महाराजः कृत्वा देशमकण्टकम् ॥ तस्माद्देशादपक्रम्य भागं दाक्षिणमाययौ ॥ १ ॥ आगत्य दक्षिणं देशं ससैन्यः सपरिच्छदः ॥ वादयामास वाद्यानि निःसाणप्रमुखानि च ॥२॥ तेन शब्देन महता दारिता इव भूधराः ॥ मदमत्तगजैरश्वैः सुन्दरैः पर्वतोत्तमैः ॥३॥ अनेकैश्च वनं तत्र चूर्णितं हि सहस्रधा ॥ विपिनानि प्रकाशानि कृतानि गिरयस्तथा ॥४ ॥ वनदुर्गाणि तैः सर्वैः सुगमानि कृतानि वै ॥ ❀ ❀

### ❀ असुरवधार्थ सुदर्शनका दक्षिणदिशा जाना ❀

श्रीसूतजी बोले—महाराज सुदर्शन उस देशको अकंटक कर तथा उसे पार कर दक्षिण भागमें आ गये। ससैन्य तथा सपरिच्छद उस दक्षिण देशमें आकर नगाड़े आदि बाजे बजवाये। उस महान् शब्दसे मानो सब पर्वत फट पड़े। सुन्दर-सुन्दर पर्वतोत्तम तथा अनेक मदमत्त हाथी, घोड़ोंसे वहाँका जङ्गल चूर्ण-चूर्ण हो गया। जङ्गल, पहाड़ सब साफ हो गये। उन सबोंके द्वारा सभी वनदुर्ग सुगम बना दिये गये ॥४॥

तत्र दैत्यांशसंभूताः शूराः शूद्रकुलोद्भवाः ॥५ ॥ अङ्को वङ्कः पुलिंदश्च पिडालो वालुकस्तथा ॥ एते शूराः प्रधानाश्च पञ्चैते पञ्च पापिनः ॥६॥ बाधन्ते स्म द्विजान्नित्यं क्षेत्रवित्तापहारतः ॥ योगनिष्ठांस्तपोनिष्ठान्यज्ञकर्मसु निष्ठितान् ॥ पीडयन्ति स्म बालांश्च स्त्रियो वृद्धांश्च नित्यशः ॥ अग्निहोत्राणि वेदाश्च यज्ञाश्चोत्सव एव च ॥ आचारा वैदिकास्तत्र प्रावर्तन्त न च क्वचित् ॥ पीड्यमानाः सदा चोरैः पञ्चभिः प्राणिनो भृशम् ॥९॥ क्षुद्राश्च बहवश्चासन् प्राणिपीडाकरा अपि॥ ते सर्वे सहसा तत्र विचार्य च

पुनः पुनः ॥१०॥ सुदर्शनं च राजानं ज्ञात्वा तत्र समागतम् ॥ सर्वैः सम्भूय योद्धव्यं नान्यथा गतिरस्ति नः ॥११॥ ❀ ❀

राजा सुदर्शनो नाम सहस्रभुजमण्डितः,, विक्रमे स च राजा तु सहस्रकिरणोपमः ॥१२॥ यत्र यत्र स वै राजा क्रुद्धः वश्यति सत्वरम् ॥ तत्तत्सर्वं च सहसा दग्धं किल भविष्यति ॥१३॥ अतः सर्वे वयं चोराः सावधानाश्च सर्वदा ॥ योत्स्याम इति निश्चित्य तेऽथ सम्भूय दस्यवः ॥१४॥ परिघान्पट्टिशान्प्रासाञ्छक्तिशूलपरश्वधान् ॥ धनूंषि च सबाणानि खड्गांश्च विपुलाञ्छुभान् १५ प्रगृह्य परमक्रुद्धा वरदानबलोद्धताः ॥ विचित्रवसनाः सर्वे विविधाः शस्त्रपाणयः ॥१६॥ निर्ययुर्मदमत्ताश्च चलन्त इव पर्वताः ॥

वहांपर शूद्र कुलोद्भव दैत्योंके अंशोंसे पैदा हुए वीर, अङ्ग, वङ्ग, कलिङ्ग, विडाल तथा बाल्क यही पांच महापापी, महावीर नित्य ब्राह्मणोंको क्षेत्र, धन, सम्पत्ति हरण करते हुए बाधा देते रहते थे। योग-कर्मोंमें निष्ठ, तपस्या-निष्ठ तथा अन्यान्य धर्म-कर्ममें निष्ठोंको, बच्चे, स्त्रियों तथा वृद्धोंको नित्य पीड़ा देते रहते थे। अग्नि-होत्र, वेदपाठ, यज्ञोत्सव, वैदिक आचार आदि कहीं कुछ भी नहीं होने पाता था। प्राणी-मात्र इन पांचों चोरोंसे सदा अत्यन्त पीड़ित होते। वहांपर और भी बहुतसे क्षुद्रलोग प्राणियोंको पीड़ा देनेवाले थे। वे सभी चोरगण राजा सुदर्शनको वहां सहसा आया हुआ जानकर, बारम्बार विचार कर कि "सभीको मिलकर युद्ध करना चाहिए, नहीं तो हमलोगोंकी अन्य कोई दूसरी गति नहीं है, सुदर्शन नामका राजा हजार हाथोंसे युक्त, विक्रममें भी सहस्रकिरण सूर्यके समान, जहां-जहां क्रोधित होकर देखता है, वहां वहांके सभी तत्क्षणात् अवश्य जल जाते हैं, अतः हम सब चोरगण सर्वदा सावधान होकर युद्ध करें" परिघ, पट्टिश, प्रास, शक्ति, शूल, परशु-धनुष, बाण, खड्ग आदि बहुतसे आयुधोंको लेकर वरदानके कारण बलोद्धत, परम क्रोधी, होकर सभी विचित्र कपड़े पहने, अनेकों शस्त्र हाथोंमें लिये, पर्वतके समान चलते हुए निकले ॥१६॥

ते युद्धकुशलाः शूरास्तोमराङ्कुशपाणयः ॥१७॥ अन्ये लक्षणसयुक्ता वरचर्मासिपाणयः ॥ अहमेव वधिष्यामि सर्वानिति बलोद्धताः ॥१८॥ तत्र सर्वे समाजग्मुर्युद्धार्थं यमचोदिताः ॥

उनमेंसे कुछ युद्धकुशल वीर तोमर तथा अंकुश हाथोंमें लिये और कुछ बड़े-बड़े ढाल, तलवार लिये "मैं ही सबको मार डालूंगा" ऐसा बलोद्धत हो कहते यमराजसे प्रेरित होकर युद्धार्थ वहींपर आ गये ॥१९॥

सुदर्शनोऽपि तान्दृष्ट्वा क्रुद्धो नाग इव श्वसन् ॥१९॥ स्फुलिङ्गा-
क्षं बलाध्यक्षं ज्वालाकेशं महासटम्॥ कालान्तकं रणघ्नं च पञ्च
सृष्ट्वा तु मानसान् ॥२०॥ ससैन्यान्प्रेषयामास चोराणां निग्रहे
तथा ॥ ❀ ❀ ❀ ❀ ❀ ❀

इनको देखकर सुदर्शनने भी क्रोधित नागके समान फुफकार मारते हुए, सेनापति स्फुलिङ्गाक्ष, बलाध्यक्ष, ज्वालाकेश, महासट, कालान्तक और रणघ्न इन पाँचोंको मनसे सृष्टि कर चोरोंको निग्रह व दमन करनेके लिये ससैन्य भेजा ॥२१॥

निर्ययुस्ते रथैरश्वैर्नागानीकैः सुसंवृताः ॥२१॥ परिघान्पट्टिशां-
श्चैव शूलखड्गपरश्वधान् ॥ गृहीत्वा विविशुर्युद्धभूमिं ज्वलितकु-
ण्डलाः ॥२२॥ चिक्षिपुर्दुष्टचोरेषु बाणान्प्राणहरान् रणे ॥ ते गदा
भिर्विचित्राभिः प्रासैः खड्गैः परश्वधैः ॥२३॥ अन्योन्यं समरे ज-
घ्नुरस्त्रैः शस्त्रैश्च योधकाः ॥ ❀ ❀ ❀ ❀

वे चमकते हुए कुण्डलोंको धारण कर रथ, घोड़े तथा अनेकों हाथी आदिसे समावृत हो, परिघ, पट्टिश, शूल,खड्ग, फरशा आदि शस्त्रास्त्रोंको लेकर निकल पड़े घोर युद्ध-भूमिमें घुस पड़े, युद्धमें दुष्ट चोरों-पर प्राणघातक बाणोंको फेंकने लगे एवं वीरगण विचित्र-विचित्र गदा, प्रास, खड्ग, फरशा आदि शस्त्रास्त्रोंसे युद्धक्षेत्रमें परस्पर एक दूसरेको मारने लगे ॥२४॥

एवम्प्रवृत्ते सङ्ग्रामे निर्धूतं सुमहद्रजः ॥२४॥ दुष्टानां दैत्य-
जातानां शान्तं शोणितविस्रवैः ॥ रथमातङ्गकूलाश्च हयमत्स्या
ध्वजद्रुमाः ॥२५॥ शरीरसङ्घातवहाः सुस्रुवू रक्तनिम्नगाः ॥

इस प्रकार युद्ध प्रारम्भ होनेसे उठी हुई घोर धूलि दुष्ट दैत्योंसे निकली हुई रक्तकी धारासे शान्त हुई। शरीरोंके संघातसे निकली हुई रक्तकी नदियां—जिनके कूल वा तट मदान्ध हाथी, घोड़े, मछलियां तथा ध्वजाएं तटस्थ वृक्षसमूह थे—बहने लगीं ॥२६॥

स्फुलिङ्गाक्षो बलाध्यक्षः शरैरङ्कं जघान च ॥२६॥ वङ्कं जघान
समरे ज्वालाकेशः शितैः शरैः ॥ महासटः पुलिन्दं च जघान समरे

शरैः ॥२७॥ कालान्तको विडालं च वालुकं रणहा युधि ॥ जघान समरे क्रूरैः शरैराशीविषोपमैः ॥२८॥ ❀ ❀ ❀

इस युद्धमें सेनापति स्फुलिङ्गाक्षने वाणोंसे अंकको, ज्वालाकेशने तेज वाणोंसे शंकुको, महासटने पुलिन्दको, कालान्तकने विडालको तथा रणघ्नने वालुकको महाविष वाणोंसे मार डाला ॥२८॥

ततः सुदर्शनो राजा हयशीर्षं महाशरम् ॥ अन्तर्धानं गता यत्र तिष्ठन्ति गिरिसानुषु ॥२९॥ प्राणिपीडाकरा ये तु ये तु दैत्यांशसम्भवाः ॥ यत्र कुत्र च तिष्ठन्ति ताञ्जहीति सुदारुणम् ॥३०॥ सन्धाय धनुषि क्षिप्रं विससर्ज महाप्रभुः ॥ तदस्त्रनिर्गमध्वानैर्भग्नं सैन्यं दुरात्मनाम् ॥३१॥ ❀ ❀

तत्पश्चात्, महाप्रभु राजा सुदर्शनने हयग्रीव नामक दारुण महाबाणको "पर्वत चोटियोंपर जाकर छिपे हुए, प्राणिपीड़ाकारक, दैत्यांशसम्भव, जितने जो कोई जहां कहीं रहते हों, उन सबोंको मार डालो।" ऐसा कह धनुषपर चढ़ाकर जल्दीसे छोड़ दिया। उस अस्त्रके निकलनेके शब्दसे ही सभी दुरात्माओंकी सेना छिन्न-भिन्न हो गयी ॥३१॥

दैत्यानश्वान्खरानुष्ट्रान् रथान्युद्धसमागतान् ॥ द्विधा चकार समरे हयशीर्षं महाशरः ॥३२॥ वनेषु गिरिदुर्गेषु ग्रामे वा पत्तनेऽपि वा ॥ यत्र यत्र दुरात्मानस्ते सर्वे च द्विधा कृताः ॥३३॥ तज्जातीयाश्च शिशवस्तेषां दाराश्च बालिकाः ॥ द्विधा कृताश्च ते सर्वे चित्रमस्त्रस्य तेजसा ॥ ❀ ❀ ❀ ❀

महाबाण हयशीर्षने युद्धमें आये हुए दैत्यों, घोड़ों, गदहों, ऊंटों तथा रथोंके दो-दो टुकड़े कर डाले। वनों, पहाड़ों, दुर्गों, ग्रामों तथा नगरोंमें जहां-जहां दुरात्मागण थे, वहां-वहां सभी दो-दो खण्ड कर दिये गये। अहा! कैसी विचित्रता है कि उनके स्वजातीय बालक, स्त्री तथा बालिकाएं सभी उस ज्योतिर्मय अस्त्रके तेजसे दो-दो टुकड़े कर दिये गये ॥३४॥

तद् दृष्ट्वा देवताः सर्वा देशीयाश्च जना अपि ॥ विस्मयं परमं जग्मुः किमिदं चेति तेजसा ॥३५॥ छिन्नं भिन्नं शरैर्दग्धं प्रभग्नं शरपीडितम् ॥ बलं सर्वं तु दुष्टानां ददृशे रणभूमिषु ॥३६॥ देश-

बाधकदुष्टेषु न कश्चिद्ददृशे तदा ॥ जलदुर्गं गिरौ दुर्गं वनदुर्गं तथैव च ॥३७॥ स्थलदुर्गं च यश्चान्यो निवासो दुष्टदेहिनाम् ॥ तत्तत्सर्वं महाराजो भग्नं कृत्वा महागजैः ॥३८॥ कृत्वा प्रकाशं तं देशं कृत्वा प्रहतमार्गकम् ॥ महामार्गं च सर्वत्र कृत्वा निहतकण्टकम् ॥३९॥ विप्रक्षत्रादिकान्साधूनन्यानपि जनान्बहून् ॥ स्वे स्वे धर्मे नियुज्यैव स्थापयामास वै सुखम् ॥४०॥ नीरोगाश्च जनाः सर्वे कामक्रोधपराङ्मुखाः ॥ वेदशास्त्रपराः सर्वे सर्वे यज्ञैः सुनिष्ठिताः ॥४१॥ काले वर्षन्तु मेघाश्च फलन्तु च महीरुहाः ॥ समृद्धानि च सस्यानि सन्तु नः शासनादिति ॥ ४२ ॥ अनुगृह्य च तान्सर्वांस्तस्थौ तद्देशवासिनः ॥ ववृधे वेङ्कटाधीशकरपङ्कजभानुमान् ॥४३॥ तत्र देवाः समागत्य स्तुत्वा देवं हरिं प्रभुम् ॥ ववर्षुः पुष्पवर्षाणि गन्धर्वाश्च जगुः कलम् ॥४४ ❀

उसको देखकर देवता तथा सभी देशवासी लोग परम विस्मित हुए कि यह क्या हुआ ! दुष्टोंकी सारी सेना बाणोंसे छिन्न-भिन्न, जलायी तथा पीड़ित हो उस रण-भूमिमें विनष्ट-प्राय दीख पड़ी । देश-बाधक दुष्टोंमें कोई भी उस समय न देखा गया । जल-दुर्ग, गिरि-दुर्ग, वन-दुर्ग तथा स्थल-दुर्ग एवं अन्यान्य उन दुष्टोंके निवास-स्थान सभीको महाराज सुदर्शनने बड़े-बड़े हाथियोंसे तोड़वाकर, उस देशको साफ कर, सर्वत्र महा-मार्ग, सड़क तथा राज-पथादि बनवाकर निष्कंटक करके ब्राह्मणों, क्षत्रियों, साधुओं तथा अन्यान्य अनेकों मनुष्योंको अपने-अपने धर्मोंमें नियुक्त कर वहाँ सुखपूर्वक स्थापित कर दिया । "मेरी आज्ञासे सभी मनुष्य नीरोग, काम-क्रोध-पराङ्मुख, वेदशास्त्र-परायण तथा यज्ञोंमें सुनिष्ठित रहें और समयानुसार मेघ बरसे, बड़े-बड़े वृक्ष फलें एवं सस्य उपजकर पैदा हों" । ऐसा उस देशके सभी निवासियोंपर अनुग्रह कर श्रीवेङ्कटाधीशके करकमलस्थ सूर्यरूपी चक्रराज बढ़ने लगे । वहां सब देवताओंने आकर प्रभु हरिकी स्तुति कर पुष्प-वर्षा की, तथा गन्धर्वगण मधुर गान गाये ॥४४॥

इदानीमत्र वसतां लब्धं ब्राह्मण्यमुत्तमम् ॥ प्रसादाद्भवतः सोऽयं कृतो देशः सुखी प्रभो ॥४५॥ इदानीं पश्चिमे भागे किञ्चित्

कार्यं भविष्यति ॥ इति विज्ञाप्य ते सर्वे दिवं जग्मुर्यथा गतम् ॥४७। ❀ ❀ ❀ ❀ ❀

इति श्रीवराहपुराणे श्रीवेङ्कटाचलमाहात्म्ये सुदर्शनस्यासुरवधार्थं दक्षिण-दिग्गमनादिवर्णनं नाम पञ्चपञ्चाशोऽध्यायोऽत्र त्रयोविंशः ॥२३॥

हे प्रभु ! आपके प्रसादसे यह देश सुखी हुआ तथा यहांके बसनेवालोंने परमोत्तम ब्राह्मण्य पाया। 'अब पश्चिम भागमें कुछ काम होगा' ऐसा विज्ञापन कर सभी देवता जहां-जहांसे आये थे, वहां-वहां चले गये ॥४६॥

इति त्रयोविंशोऽध्यायः ॥ २३॥

## चतुर्विंशोऽध्यायः ॥२४॥

वरुण दिशा सेना सहित, गये सुदर्शन राज ॥
काननकर्ता दैत्यपति, रहता सहित समाज ॥१॥
युद्ध हेतु वर सैन्य सजि, आयुध विपुल सजाय ॥
लड़े सुदर्शन सैन्यसे, अतुलित बल दिखलाय ॥२॥
अन्त सुदर्शन राजने, युग्म मुहूर्तहिं मांह ॥
ताहि वधा सेनासहित, फैलायी सुख-छांह ॥३॥

॥ अथ वरुणदिश्यसुरसुदर्शनसेनायुद्धप्रशंसा ॥

*श्रीसूत उवाच—*

राजा सुदर्शनः श्रीमान्प्रतापहरकण्टकः ॥ दक्षिणां दिशमासाद्य कृत्वा निर्बाधमेव ताम् ॥ १ ॥ देशस्य रक्षणार्थाय

कञ्चिन्नृपवरं तदा ॥ धर्मात्मानं प्रतिष्ठाप्य प्रतस्थे पश्चिमां दिशम् ॥२॥

श्रीसूतजी बोले—प्रतापसे कण्टकोंको नाश करनेवाले श्रीमान् महाराज श्रीसुदर्शन भगवान्ने दक्षिण दिशामें जाकर, उसको बाधा-रहित करके, देशकी रक्षाके लिये किसी परम धर्मात्मा राजाको स्थापित कर पश्चिम दिशाको प्रस्थान किया ॥२॥

शतं शतसहस्राणि भेरीणां व्यनदंस्तदा ॥ पताकिनो गजास्तत्र ध्वजयुक्ताश्च वाजिनः ॥३॥ मत्तेभाः कलभाश्चैव तथा गम्भीरवेदिनः ॥ शस्त्रवर्मायुधोपेताः सन्नद्धा युद्धकारणात् ॥४॥ घोटाश्च द्वीपसम्भूता वायुवेगास्तथाऽपरे ॥ वर्मास्त्रशस्त्रसम्भिन्ना निर्ययुश्च सहस्रशः ॥५॥ ❀ ❀ ❀

उस समय सैकड़ों, हजारों भेरियां बजने लगीं। पताकावाले हाथियों, ध्वजायुक्त घोड़ों, गम्भीर नाद करनेवाले मदान्ध मदमत्त हाथियों तथा उनके बच्चों एवं शस्त्र कवच धारण किये युद्धके अन्यान्य चिह्नोंसे तैयार द्वीपोंमें पैदा हुए वायुवेगगामी घोड़ोंकी कवच तथा अस्त्र-शस्त्रपूर्ण हजारों-हजारोंकी पंक्तियां निकलने लगीं ॥५॥

शताश्वास्त्रिशताश्वाश्च सहस्राश्वाश्च यूथशः ॥ सर्वायुधैश्च सम्पूर्णाः पताकालङ्कृतास्तथा ॥६॥ विमानानीव सिद्धानां शतशोऽथ सहस्रशः ॥ स्यन्दनानि विचित्राणि निर्ययुर्भास्वराणि च ॥७॥ ❀ ❀ ❀ ❀ ❀ ❀

कोई सौ, कोई तीन सौ, कोई हजार घोड़ोंके यूथोंमें, सभी आयुधोंसे पूर्ण तथा पताकाओंसे अलंकृत, एवं सिद्धोंके विमानोंके समान सैंकड़ों और हजारों विचित्र-विचित्र चमकदार रथ भी निकले ॥७॥

उद्यतायुधनिस्त्रिंशास्तथोद्यतपरश्वधाः ॥ उद्यतासिगदाशूलास्तथोद्यतकरायुधाः ॥ ८ ॥ अट्टहासान्विमुञ्चन्तो निर्ययुश्च पदातयः ॥ ❀ ❀ ❀ ❀ ❀

खड्गको उठाये, फरसाको खड़ा किये, तलवार निकाले, गदा शूल तथा अन्यान्य हस्तायुधोंको तैयार किये, अट्टहास करते हुए बड़ी भारी पैदल सेना निकली ॥९॥

मध्ये रराज राजासौ सहस्रभुजमण्डितः ॥९॥ निदाघे प्रतपन्सूर्यः सहस्रांशुरिवावभौ ॥ ❀ ❀ ❀

उनके मध्य यह महाराजा हजार भुजाओंसे शोभित गर्मीमें तपते हजार किरणवाले सूर्यके समान मालूम हुए। १०॥

तत्रासीत्पश्चिमे भागे वेङ्कटाद्रेरदूरतः ॥१०॥ काननं पर्वताकीर्णं सिंहव्याघ्रनिषेवितम् ॥ मातङ्गैर्नर्दमानैश्च वराहमहिषैस्तथा ॥ ११ ॥ वृकभल्लूकसंयुक्तं तस्मिन्महति कानने ॥ दैत्यांशः कश्चिदुत्पन्नः किरातः पर्वतोपमः ॥१२॥ नाम्ना काननकर्ता च रिपुघ्नस्य सुतो वली ॥ स तु शम्भुं समुद्दिश्य व्रतचर्यापरोऽभवत् ॥१३॥ यक्षराक्षससिद्धानां मनुष्याणां महात्मनाम् ॥ दुर्जयत्वमसाविच्छन् साहसी तु कदाचन ॥१४॥ ❀ ❀ ❀

वहांपर वेङ्कटपर्वतके निकट ही पश्चिम भागमें पर्वतोंसे समाकीर्ण, सिंह तथा व्याघ्रोंसे परिपूर्ण, चिंघाड़ते हुए हाथियों, वराहों, भैंसों, हुंडारों एवं भालुओंसे सेवित भयंकर जंगल है। उस वनमें पर्वतोपम, दैत्योंके अंशसे उत्पन्न, रिपुघ्नका लड़का, महा बलवान काननकर्ता नामक कोई किरात था। वह भगवान् शंकरके उद्देशसे व्रतचर्यापरायण हुआ। इस महा साहसीने किसी समय यक्षों, राक्षसों, सिद्धों, मनुष्यों, महात्माओं आदि सभोंसे दुर्जयत्वके लिये इच्छा किया ॥१४॥

क्रतुध्वंसकरं रुद्रं ध्यात्वा च धृतिमान्नरः ॥ खड्गमादाय चिच्छेद स्वशिरः पुष्पसम्भृतम् ॥१५॥ अलङ्कृतं च गन्धाद्यैः शम्भवेऽर्पयितुं तदा ॥ प्रसादात्तत्क्षणात् रुद्रो जीवयित्वा च तं पुनः ॥१६॥ ददौ च तदभिप्रेतं लब्ध्वा सादरमुत्तमम् ॥ वनकर्ता समागत्य वने तस्मिन् दुरासदम् ॥१७॥ स्थानं दुर्गं पराभेद्यमधिष्ठाय महाबलः ॥ अनेकशतसाहस्रैरनीकैः परिवारितः ॥१८॥ लोकानुत्सादयामास वरदानबलोद्धतः ॥

दक्षयज्ञध्वंसकारी रुद्रको ध्यान कर उस साहसी, धीरने खड्ग लेकर, माला पहने हुए, गन्धादिसे

लंकृत अपने शिरको भगवान् शंभुके पूजार्पणके लिये काट डाला। तत्क्षण रुद्र भगवान्‌ने प्रसन्न हो, उसको तुरन्त ही जीवित कर उसे अभीष्ट वर प्रदान किया। उस परमोत्तम वरको सादर पाकर उस काननकर्त्ताने घोर जंगलमें आकर, वरदानमें मिले हुए बलसे उद्धत हो, दुरासद तथा दूसरोंसे अभेद्य परम दुर्गस्थान स्थापित कर, कई हजार सेनाओंसे परिवृत हो सारे लोकको तंग कर दिया ॥२०॥

चुक्रुशुः पीडिताः सर्वे विप्राद्याः प्राणिनस्तदा ॥१९॥ स तु ज्ञात्वा दुरात्मा च सुदर्शनमहानृपम् ॥ नृप इत्येव तं मत्वा निर्जगाम रणाय सः ॥२०॥ एकामक्षौहिणीं सेनां गृहीत्वा सशरासनः ॥ सन्नद्धः कवची खड्गी दण्डी परबलार्दनः ॥२१॥ रथमारुह्य सज्जश्च सर्वशस्त्रास्त्रभूषितः ॥ ययुश्च तस्य पुरतस्तुरगाश्च महागजाः ॥ २२ ॥ पदातयश्च सरथा ययुः शस्त्रास्त्रपाणयः ॥

सभी ब्राह्मणादि प्राणिवर्ग अत्यन्त पीड़ित हो रोने लगे। वह दुरात्मा महाराज सुदर्शनको एक साधारण राजा ही मात्र समझकर उनसे लड़ाई करनेके लिये धनुष-बाण धारण कर, एक अक्षौहिणी सेना ले, कवच, खड्ग तथा दण्ड धारण कर, शत्रु-बलघाती, तैयार रथपर चढ़कर, सजे हुए सभी शस्त्रास्त्रोंसे भूषित हो निकल पड़ा। उसके आगे-आगे घोड़े, हाथी, पैदल सेना तथा रथसेना हाथमें शस्त्रास्त्र धारण किये हुए निकली ॥२३॥

प्रावर्तत महायुद्धं सेनयोरुभयोरपि ॥ २३ ॥ शस्त्रैरस्त्रैश्शितैर्बाणैर्भिन्दिपालैः परश्वधैः ॥ कुन्ततोमरचक्रैश्च परिघैः पट्टिशैः सितैः ॥२४॥ शक्तितोमरशूलैश्च गजचर्मासिसाधनैः ॥ शतघ्नीपरिघाभिश्च चित्रैरन्यैश्च साधनैः ॥२५॥ अन्योन्यं च यथापूर्वं देवदानवराजयोः ॥ सुदर्शनभटाश्चापि निजघ्नुस्तान्किरातकान् ॥२६॥

अस्त्र, शस्त्र बाण, फरसा, भिंदिपाल, कुन्त, तोमर, चक्र, परिघ, तेज पट्टिश, शूल, ढाल, तलवार, शतघ्नी, तोप, परिघ तथा अन्यान्य अनेकों तरहके साधनोंसे परस्पर यथापूर्व महा तुमुल युद्ध हुआ, जिसमें सुदर्शनके महावीर योद्धाओंने उन किरातोंको मार डाला ॥२६॥

विविधायुधहस्ताश्च शूलमुद्गरपाणयः ॥ गदाभिः पट्टिशैर्दण्डैराय-

सैर्मुसलैर्भृशम् ॥२७॥ परिघैर्भिन्दिपालैश्च भल्लैः प्रासैः परश्वधैः॥
रथैः कवचिनस्त्वन्ये ध्वजैश्च समलंकृतैः ॥२८॥ हिरण्यजालवि-
हितैः खरैश्च विविधाननैः ॥ हयैः परमशीघ्रैश्च गजेन्द्रैश्च मदोत्क-
टैः ॥२९॥ सुदर्शनभटांश्चापि निजघ्नुस्ते किरातकाः ❀

अनेकों प्रकारके आयुधोंको हाथोंमें लिये, शूल, मुद्गर तथा कवचधारी, गदाओं, पट्टिशों, दण्डों, लोहेके मुशलों, परिघों, भिंदिपालों, भालों प्रासों, फरसों, ध्वजाओं, रथों तथा सुवर्णजालशोभित, विविधानन गदहों, खचरों, परम तेज घोड़ों तथा मदोत्कट हाथियोंके साथ उन किरातोंने भी सुदर्शनके वीरोंको मारा।

तैर्गदाभिश्च भीमाभिः पाट्टिशैः कूटमुद्गरैः ॥३०॥ घोरैश्च परि-
घैश्चित्रैस्त्रिशूलैरपि संशितैः ॥ विदार्यमाणास्ते शूरा निपेतुर्भुवि
संयुगे ॥३१॥ अमर्षाज्जनितोद्धर्षाश्चक्रुः कर्माण्यभीतवत् ॥ श-
रनिर्भिन्नगात्रास्ते शूलानिर्भिन्नदेहिनः ॥३२॥ ममन्थुर्दुष्टचोरांश्च
नामानि च बभाषिरे ॥ तद्बभुवाद्भुतं घोरं युद्धं सैन्यद्वयस्य
च ॥३३॥ ❀ ❀ ❀ ❀ ❀

वे भयंकर गदाओं, पट्टिशों, कूटमुद्गरों, घोर परिघों, विचित्र-विचित्र तेज त्रिशूलोंसे विदारित होकर पृथ्वीपर गिर पड़े तथा अमर्षसे उद्धत होकर, निर्भयके समान बाणोंसे विद्ध हो परम भयङ्कर कार्य करने लगे। बाणोंसे विद्ध शरीर तथा शूलोंसे भिन्न देह होकर उन लोगोंने दुष्ट चोरोंको एक-एक कर ललकार कर उन्हें पीस डाला।

ववर्षू रुधिरं केचिन्मुखैस्ते वनवासिनः ॥ पार्श्वेषु दारिताः के-
चित्केचिद्धस्तेषु दारिताः ॥३४॥ पट्टिशैश्चूर्णिताः केचित्प्रासैः केचि-
द्विदारिताः ॥ ध्वजैर्निपतितैर्नागैरश्वैश्च विनिपातितैः ॥३५॥
रथैर्विमृदिताः केचित् व्यथिताः कानने स्थिताः ॥ मुद्गरैराहताः
केचित्पातिता धरणीतले ॥३६॥ परिघैर्मथिताः केचिद्भिन्दिपा-
लैश्च दारिताः ॥ केचिद्विनिहता भूमौ रुधिरार्द्रा वनौकसः ॥३७॥
केचिद्विलासिता नष्टाः केचित्पार्श्वेन शायिताः ॥ विभिन्नहृदयाः
केचित् त्रिशूलैर्दारिताः परे ॥३८॥

इस तरह वहाँ दोनों सेनाओंमें अत्यद्भुत महाघोर युद्ध हुआ। कोई-कोई वनेचर अपने मुखोंसे रक्तकी धार बहाने लगे; कोई बगल एवं कोई हाथसे विदीर्ण हुआ। कोई पट्टिशसे चूर्ण-चूर्ण किया गया तो कोई प्रासोंसे विदारित हुआ। गिरती हुई ध्वजाओं, हाथियों, घोड़ों तथा रथोंसे विमर्दित हो कितने ही उस जङ्गलमें पीड़ित होकर पड़े थे। कितने मुद्गरोंसे आहत होकर पृथ्वीतलपर गिरे थे और कितने वनेचर राक्षस परिघोंसे मथित तथा भिंदिपालोंसे विदारित एवं कितने ताड़ित हो पृथ्वीपर रुधिरमें भीगे पड़े थे। कितने त्रस्त, नष्ट तथा कितने बगलकें बल पड़े थे। कितने विभिन्न हृदय तथा कितने त्रिशूलोंसे विदारित हुए थे ॥३८॥

एवं विद्रावितं सैन्यं वनकर्ता विलोक्य तत् ॥ बभूव क्रोधताम्राक्षः सेनाध्यक्षमुवाच ह ॥३९॥ ज्वालापातं महाशूरं जहि त्वं गच्छ शीघ्रतः ॥

इस प्रकार सारी सेनाको दूर भागते तथा अस्त्रंखल होते देखकर वह काननकर्ता क्रोधसे ताम्बेके समान लाल-लाल आँखें कर सेनापति महावीर ज्वालापातसे कहने लगा कि तुम शीघ्र जाओ तथा मार डालो ॥४०॥

इत्याज्ञप्तस्ततस्तूर्णं ज्वालापातः प्रतापवान् ॥४०॥ धनुर्विस्फारयामास रथस्थः कनकाङ्गदः ॥ सुदर्शनमहाराजः सेनाध्यक्षं सृजन् रुषा ॥४१॥ बडवामुखनामानं बडवानलविक्रमम् ॥ जहि त्वं समरे गच्छ शत्रुसैन्यमशेषतः ॥४२॥ इत्यब्रवीत्ततः सोऽपि निर्गतः सरथस्तथा ॥ शार्ङ्गमादाय सुमहत्तस्मिन्बाणान्युयोज च ॥४३॥ मुमोच च ततः सैन्ये शरसङ्घान्महारथः ॥ शतं सहस्रमयुतं नराणां बडवाननः ॥४४॥ बाणेनैकेन सहसा निजघान महारथः ॥ दश वा विंशतिं वापि त्रिशतं वा रथान्हयान् ॥४५॥ गजानां च घटामेकामेकेन शितपत्रिणा ॥ जघान स महातेजाः कालानलयमोपमः ॥४६॥ बडवापावको यद्वदम्भांसि ग्रसते क्षणात् ॥ तद्वत्सैन्यं परं चक्रे भस्मसाद्बडवाननः ॥४७॥ एकामक्षौहिणीं सेनां सुदर्शनबलाग्रणीः ॥ प्रापयद्यमलोकं हि मुहूर्तद्वयमात्रतः ॥४८॥

उसकी ऐसी आज्ञा पाकर कनकांगद पहने, परम प्रतापी ज्वालापातने रथपरसे ही धनुषको ताना। महाराज सुदर्शनने क्रोधित हो, बड़वानलके समान विक्रमवाले बड़वानन नामक महाप्रतापी वीर सेनापतिकी सृष्टि कर उससे कहा कि लड़ाईमें जाओ और अशेष सेनाको मार डालो। ऐसा कहे जानेपर उस महारथने भी रथके

सैर्मुसलैर्भृशम् ॥२७॥ परिघैर्भिन्दिपालैश्च भल्लैः प्रासैः परश्वधैः॥ रथैः क्वचिनस्त्वन्ये ध्वजैश्च समलंकृतैः ॥२८। हिरण्यजालविहितैः खरैश्च विविधाननैः ॥ हयैः परमशीघ्रैश्च गजेन्द्रैश्च मदोत्कटैः ॥२९॥ सुदर्शनभटांश्चापि निजघ्नुस्ते किरातकाः ❀

अनेकों प्रकारके आयुधोंको हाथोंमें लिये, शूल, मुद्गर तथा कवचधारी, गदाओं, पट्टिशों, दण्डों, लोहेके मुशलों, परिघों, भिंदिपालों, भालों प्रासों, फरसों, ध्वजाओं, रथों तथा सुवर्णजालशोभित, विविधानन गदहों, खचरों, परम तेज घोड़ों तथा मदोत्कट हाथियोंके साथ उन किरातोंने भी सुदर्शनके वीरोंको मारा।

तैर्गदाभिश्च भीमाभिः पट्टिशैः कूटमुद्गरैः ॥३०॥ घोरैश्च परिघैश्चित्रैस्त्रिशूलैरपि संशितैः ॥ विदार्यमाणास्ते शूरा निपेतुर्भुवि संयुगे ॥३१॥ अमर्षाज्जनितोद्धर्षाश्चक्रुः कर्माण्यभीतवत् ॥ शरनिर्भिन्नगात्रास्ते शूलानिर्भिन्नदेहिनः ॥३२॥ ममन्थुर्दुष्टचोरांश्च नामानि च बभाषिरे ॥ तद्बभूवाद्भुतं घोरं युद्धं सैन्यद्वयस्य च ॥३३॥ ❀ ❀ ❀ ❀ ❀

ये भयंकर गदाओं, पट्टिशों, कूटमुद्गरों, घोर परिघों, विचित्र-विचित्र तेज त्रिशूलोंसे विदारित होकर पृथ्वीपर गिर पड़े तथा अमर्षसे उद्धत होकर, निर्भयके समान बाणोंसे विद्ध हो परम भयङ्कर कार्य करने लगे। बाणोंसे विद्ध शरीर तथा शूलोंसे भिन्न देह होकर उन लोगोंने दुष्ट चोरोंको एक-एक कर ललकार कर उन्हें पीस डाला।

ववर्षू रुधिरं केचिन्मुखैस्ते वनवासिनः ॥ पार्श्वेषु दारिताः केचित्केचिद्धस्तेषु दारिताः ॥३४॥ पट्टिशैश्चूर्णिताः केचित्प्रासैः केचिद्विदारिताः ॥ ध्वजैर्निपतितैर्नागैरश्वैश्च विनिपातितैः ॥३५॥ रथैर्विमृदिताः केचित् व्यथिताः कानने स्थिताः ॥ मुद्गरैराहताः केचित्पातिता धरणीतले ॥३६॥ परिघैर्मथिताः केचिद्भिन्दिपालैश्च दारिताः ॥ केचिद्विनिहता भूमौ रुधिरार्द्रा वनौकसः ॥३७॥ केचिद्विलासिता नष्टाः केचित्पार्श्वेन शायिताः ॥ विभिन्नहृदयाः केचित् त्रिशूलैर्दारिताः परे ॥३८॥

इस तरह वहाँ दोनों सेनाओंमें अत्यद्भुत महाघोर युद्ध हुआ। कोई-कोई वनेचर अपने मुखोंसे रक्तकी धार बहाने लगे; कोई मगल एवं कोई हाथसे विदीर्ण हुआ। कोई पट्टिशसे चूर्ण-चूर्ण किया गया तो कोई प्रासोंसे विदारित हुआ। गिरती हुई ध्वजाओं, हाथियों, घोड़ों तथा रथोंसे विमर्दित हो कितने ही उस जङ्गलमें पीड़ित होकर पड़े थे। कितने मुद्गरोंसे आहत होकर पृथ्वीतलपर गिरे थे और कितने वनेचर राक्षस परिघोंसे मथित तथा भिंदिपालोंसे विदारित एवं कितने ताड़ित हो पृथ्वीपर रुधिरमें भीगे पड़े थे। कितने त्रस्त, नष्ट तथा कितने बगलके बल पड़े थे। कितने विभिन्न हृदय तथा कितने त्रिशूलोंसे विदारित हुए थे ॥३८॥

एवं विद्रावितं सैन्यं वनकर्ता विलोक्य तत् ॥ बभूव क्रोधताम्राक्षः सेनाध्यक्षमुवाच ह ॥३९॥ ज्वालापातं महाशूरं जहि त्वं गच्छ शीघ्रतः ॥

इस प्रकार सारी सेनाको दूर भागते तथा अस्त-व्यस्त होते देखकर वह वनकर्ता क्रोधसे ताम्बेके समान लाल-लाल आँखें कर सेनापति महावीर ज्वालापातसे कहने लगा कि तुम शीघ्र जाओ तथा मार डालो ॥४०॥

इत्याज्ञप्तस्ततस्तूर्णं ज्वालापातः प्रतापवान् ॥४०॥ धनुर्विस्फारयामास रथस्थः कनकाङ्गदः ॥ सुदर्शनमहाराजः सेनाध्यक्षं स्वजन् रुषा ॥४१॥ वडवामुखनामानं वडवानलविक्रमम् ॥ जहि त्वं समरे गच्छ शत्रुसैन्यमशेषतः ॥४२॥ इत्यब्रवीत्ततः सोऽपि निर्गतः सरथस्तथा ॥ शार्ङ्गमादाय सुमहत्तस्मिन्बाणान्युयोज च ॥४३॥ मुमोच च ततः सैन्ये शरसङ्घान्महारथः ॥ शतं सहस्रमयुतं नराणां वडवाननः ॥४४॥ बाणेनैकेन सहसा निजघान महारथः ॥ दश वा विंशतिं वापि त्रिशतं वा रथान्हयान् ॥४५॥ गजानां च घटामेकामेकेन शितपत्रिणा ॥ जघान स महातेजाः कालानलयमोपमः ॥४६॥ वडवापावको यद्वदम्भांसि ग्रसते क्षणात् ॥ तद्वत्सैन्यं परं चक्रे भस्मसाद्वडवाननः ॥४७॥ एकामक्षौहिणीं सेनां सुदर्शनबलाग्रणीः ॥ प्रापयद्यमलोकं हि मुहूर्तद्वयमात्रतः ॥४८॥

उसकी ऐसी आज्ञा पाकर कनकांगद पहने, परम प्रतापी ज्वालापातने रथपरसे ही धनुषको ताना। महाराज सुदर्शनने क्रोधित हो, बड़वानलके समान विक्रमवाले बड़वानन नामक महाप्रतापी वीर सेनापतिकी सृष्टि कर उससे कहा कि लड़ाईमें जाओ और अशेष सेनाको मार डालो। ऐसा कहे जानेपर उस महारथने भी रथके

साथ निकल, बड़े भारी धनुषको लाकर उसपर बाणको ताना तथा शत्रु-सैन्यपर छोड़ दिया। महारथी वड़वाननने एक ही बाणसे सैकड़ों, हजारों तथा लाखों शत्रुओंको मार डाला। प्रलयानल तथा यमराजके समान महातेज वड़वाननने दश-दश, बीस-बीस, तथा तीस-तीस हाथियोंके समूहोंको एक ही तेज बाणसे मार डाला। जैसे बड़वानल समुद्रके जलको क्षणभरमें सोख लेता है, वैसे ही इस बड़वाननने भी सारे महा सैन्यको भस्मसात् कर डाला ; एवं इस प्रकार महाराज सुदर्शनके सेनापतिने एक अक्षोहिणी सेनाको दो मुहूर्त-मात्रमें ही यमलोक पहुंचा दिया ॥४८॥

निःशेषं स्वबलं सर्वं हतमालोक्य वेगतः ॥ दिव्यमस्त्रं च सन्धाय तिष्ठ तिष्ठेति च ब्रुवन् ॥४९॥ आजगाम रथाच्छीघ्रं किरातो लघु-विक्रमः ॥ सुदर्शनमहाकोपसञ्जातो वडवाननः ॥५०॥ विष्णुचक्रेण तं घोरं जघान वनगोचरम् ॥ हते किरातराजे तु तद्वनं निर्मलं बभौ ॥५१॥

इति श्रीवराहपुराणे श्रीवेङ्कटाचलमाहात्म्ये वरुणदिश्यसुरसुदर्शनसेनायुद्धप्रशंसादिवर्णनं नाम षट्पञ्चाशोऽध्यायोऽत्र चतुर्विंशः ॥ २४ ॥

लघुविक्रम वह किरातराज अपनी सारी सेनाको मरा देख, शीघ्र दिव्य अस्त्र चढ़ाकर, 'ठहरो, ठहरो' पुकारते हुए, रथपर सवार हो अति शीघ्र आ गया। तब सुदर्शनके महाक्रोधसे उत्पन्न वड़वाननने उस भयङ्कर राक्षसको विष्णुचक्रसे मार डाला। उस किरातराजके मर जानेपर वह सारा वन निर्मल हो गया ॥५१॥

इति चतुर्विंशोऽध्यायः ॥२४॥

# पञ्चविंशोऽध्यायः ॥२५॥



वरुण दिशामें अति सुखद, थापि सुशासित राज्य।
उत्तर दिशि आये करन, निष्कंटक साम्राज्य ॥१॥

मेरुण्डासुर दैत्य-पति, साथ लड़े चक्रेश।
नाश सैन्य निज देखिके, क्रोधित हुए बिशेष ॥२॥
जन्मा उनके क्रोधसे, वर पावक संकाश।
तमचर कुलका नाशकर, फैलाया परकाश ॥३॥

अथ सुदर्शनस्यासुरवधार्थमुत्तरादिग्गमनम्।

*सूत उवाच—*

**सुदर्शनमहाराजः सहस्रकिरणोपमः ॥ तं देशं हतदुष्टं च हतावग्रहकण्टकम् ॥ १ ॥ कृत्वा सर्वाणि दुर्गाणि गिरिस्थलवनानि च ॥ विनिहत्य गजैरश्वैः सर्वदिक्षु महापथम् ॥२॥ कृत्वा च तत्र मनुजान् स्थापयित्वा यथासुखम् ॥ तद्देशरक्षकं कश्चिद्धर्मिष्ठं सत्यवादिनम् ॥३॥ निवेश्य देशमध्ये च जनानामन्त्र्य सत्वरम् ॥ प्रतस्थे सबलस्तस्मात् दुष्टचोरजिगीषया ॥४॥ ततश्चोत्तरदिग्भागं सहस्रकिरणो यथा ॥ नीहारशोषणार्थाय श्रीमान्भुजसहस्रवान् ॥५॥ प्रतापविक्रमादित्यः सुदर्शनमहाप्रभुः ॥ श्रीवेङ्कटनगाधीशदिव्याज्ञापरिपालकः ॥६॥**

असुरोंका वध करनेके लिये सुदर्शनका उत्तर दिशामें जाना

श्रीसूतजी बोले—सूर्यभगवान्के समान, प्रताप, विक्रमादित्य तथा श्रीवेङ्कटाधीशके आज्ञापरिपालक महाराज सुदर्शनने उस पश्चिम देशको दुष्टोंसे रहित तथा निष्कंटक कर, सभी दुर्ग, पहाड़, जंगलको समतल मैदान बनवा, हाथियों तथा घोड़ोंसे भूमिको रौंदवा कर, वहां राजपथ बनवा मनुष्योंके सुखपूर्वक रहनेकी व्यवस्था कर, उस देशपर किसी सत्यवादी परम धर्मनिष्ट राजाको स्थापित कर, तथा देशके अन्यान्य लोगोंकी अनुमति ले, सेनाके साथ दुष्टों और चोरोंको जीतनेकी इच्छासे वर्फके शोषणार्थ सूर्यभगवान्की तरह उत्तर दिशामें प्रस्थान किया ॥६॥

**पदातयो गजाश्वाश्च रथाश्च गिरिसन्निभाः ॥ ययुरग्रे च वाद्यानि वादयन्ति स्म सर्वतः ॥ ७ ॥ ततः प्रचोदिता भेर्यो मर्दला-**

नकपुष्कराः ॥ हेमकोणहतास्तीव्रं वलानां चाग्रतस्तदा ॥ ८ ॥
विनेदुश्च महाघोषाः शङ्खाः शतसहस्रशः ॥ तडिद्भास्करकल्पाश्च
खड्गाः प्रासाश्च पट्टिशाः ॥९॥ वभुस्तस्मिन्महासैन्ये यथा मेघेषु
विद्युतः ॥ उत्तरे वेङ्कटाद्रेस्तु भागे कश्चिन्महासुरः ॥१०॥

पैदल सेना, हाथियों, घोड़ों तथा पर्वताकार रथोंके साथ, सब तरफ बाजा बजाते हुए आगे-आगे चले। तब मर्दल, पुष्कर, भेरी आदि लड़ाईके बाजे सोनेके बजनोंके अग्र भागसे ताड़ित होकर जोरसे बजने लगे। घोर आवाजवाले सैकड़ों-हजारों शङ्ख बज उठे। विद्युतके समान चमकवाले खड्ग, प्रास, पट्टिश मेघमें बिजलीकी तरह उस महा सैन्यमें चमक उठे ॥१०॥

। अथ भेरुण्डासुरसुदर्शनयोर्युद्धप्रशंसा ।

भेरुण्डो नाम दैत्यानां प्रवरो बलदर्पितः ॥ ब्रह्मणासीत्पुरा
दत्तवरः पर्वतसन्निभः ॥११॥ स तु तत्र निवासं च कृत्वा तु बहु-
भिर्वृतः ॥ वेङ्कटाद्रौ तदन्यस्मिन्गिरौ वा काननेऽपि वा ॥१२॥
तपांसि कुर्वतां विघ्नं कुर्वन्प्राणिभयङ्करः ॥ ग्रामे वा पत्तने वापि
स्थितान्विप्रादिमानुपान् ॥ १३ ॥ वबाधे सततं तीक्ष्णं तेन देशः
प्रपीडितः ॥

श्रीवेङ्कटपर्वतकी उत्तर दिशामें कोई महासुर, दैत्यश्रेष्ठ, बलदर्पित, भेरुण्ड नामक, पर्वतके समान शरीरवाला, प्राचीन समयमें ब्रह्मासे वर पाकर, रहता था। वह वहां बहुतोंसे परिवृत होकर निवास करता हुआ, वेङ्कटाद्रि तथा दूसरे-दूसरे पर्वतों एवं जङ्गलोंमें तपस्या करनेवालोंको विघ्न डालता, प्राणि-मात्रको भय देता हुआ, ग्राम तथा नगरोंमें बसनेवाले ब्राह्मणादि मनुष्योंको सदा घोर बाधा पहुंचाता था। उससे सारा देश बहुत पीड़ित हो रहा था ॥१४॥

काम्भोजा यवनाश्चापि म्लेच्छाः सङ्करजातिजाः ॥१४। भेरु-
ण्डस्य बलोद्रिक्तास्तत्रासन्प्राणिपीडकाः ॥ ते सर्वे पापकर्माणः स-
म्भूय मुसलायुधाः ॥१५॥ भेरुण्डमग्रतः कृत्वा सरथाश्वगजास्त-
दा ॥ युद्धार्थमागतं ज्ञात्वा राजानं च सुदर्शनम् ॥१६॥ युद्धाय

निर्ययुः सर्वे गदाशक्तिपरश्वधान् ॥ गृहीत्वाङ्कुशपाशांश्च खड्गा-
ञ्श्च कनकत्सरून् ॥१७॥

काम्भोज, यवन, म्लेच्छ एवं वर्णसंकरसे उत्पन्न सभी प्राणिपीड़क भेरुण्डके बलसे उत्साहित होकर वहीं रहते थे। वे सभी पापिगण मुसल धारण किये एकत्र हो, भेरुण्डको आगे कर, रथों, अश्वों तथा गजोंके साथ सुदर्शनको युद्धार्थ उपस्थित हुआ जान, गदा, शक्ति, परशु, अंकुश, पाश, खड्ग एवं स्वर्णके कटार धारण कर निकल पड़े ॥१७॥

केचिच्चर्मायुधधराः केचित्तोमरपाणयः ॥ केचित् त्रिशूलहस्ता-
श्च शरचापधरा अपि ॥१८॥ अट्टहासं विमुञ्चन्तो नर्दन्तस्ते म-
हाबलाः ॥ वाद्यघोषांश्च महतः कारयन्ति स्म केचन ॥१९॥
सन्नद्धाश्चैवमागत्य चक्रुस्ते कदनं महत् ॥ सुदर्शनभटाश्चापि भे-
रुण्डस्य भटा अपि ॥२०॥

सुदर्शन तथा भेरुण्ड दोनों ही के वीरोंमेंसे कोई चर्मायुध, कोई तोमर, कोई त्रिशूल तथा कोई हाथोंमें धनुष-बाण लेकर, कोई अट्टहास, कोई गर्जन तथा कोई महाबली जोरसे वाद्यघोष करते, हुए तैयार हो आकर महाघोर युद्ध प्रारम्भ किये।

हताः सुदर्शनभटाः किरातैरधिकोर्जितैः ॥ निकृत्तशिरसः के-
चिच्छिन्नपादास्तथाऽपरे ॥२१॥ केचित्कृत्तशिरस्त्राणाः केचिद्वक्षसि
ताडिताः ॥ केचिच्छिन्नतनुत्राणाः केचिच्छिन्नोरुबाहवः ॥२२॥
एवं हतं बलं सर्वमसुरेण दुरात्मना ॥

अधिक बलशाली किरातोंसे सुदर्शनके कोई वीर भग्नमस्तक, कोई छिन्नपाद, कोई 'छिन्नपगड़ी कोई बगलमें घायल, कोई अङ्गछिन्न, कोई भग्नजानु तथा भुजारहित कर दिये गये। इस तरह सारी सेना दुरात्मा असुरसे नष्ट कर दी गयी ॥२३॥

तं दृष्ट्वा निहतं सैन्यं सुदर्शनमहाप्रभुः ॥२३॥ क्रोधेनारुणता-
म्राक्षः प्रजज्वालान्तको यथा ॥ क्रुद्धे तस्मिन्प्रभौ सर्वं न बभौ-
कलुषं जगत् ॥२४॥ चन्द्रसूर्यौ तदाऽऽकाशे बभतुर्न च किञ्चन ॥
नक्षत्राणि न भान्ति स्म पे[illegible]

जवनोऽत्यर्थं सह धूल्या प्रभञ्जनः ॥ चकम्पे वसुधा कृत्स्ना पेतुः शैलाश्च पादपाः ॥२६। चुक्षुभुः सागराः सर्वे नेदुर्भूतानि तत्क्षणात् ॥ युद्धार्थमागता दैत्याः किराताः पुल्कसास्तथा ॥२७॥ कश्मलोपहताः सर्वे विषण्णवदनास्तदा ॥ तत्कोपाग्निसमुत्थश्च पुरुषः परमाद्भुतः । २८॥ चापी खड्गी रथी तूणी कश्चित्कनकपिङ्गलः ॥ नाम्ना पावकसङ्काशः साक्षात्पावकविक्रमः ॥२९॥

महाप्रभु सुदर्शन उस सारी सेनाको नष्ट देखकर, क्रोधसे ताम्बेके समान लाल-लाल आँखें कर, यमराजके समान प्रज्वलित हो उठे। उनके क्रोधित हो जानेपर सभी संसार मलिन, धुन्धला तथा प्रकाश रहित हो गया। आकाशमें चन्द्रमा और सूर्य्य उस समय कुछ भी प्रकाश नहीं करते थे। नक्षत्रगण भी नहीं शोभते थे तथा हजार हजार उल्का (नष्टतारा) पात होने लगे। वायु अत्यन्त तेजीसे अनन्त धूलिके साथ बहता था। सारा पृथ्वीमण्डल कांपने लगा। वृक्ष तथा पर्वत गिरने लगे। सभी सागर क्षुब्ध हो गये। सभी प्राणी चिल्लाने लगे। युद्धार्थ आये हुए सभी दैत्य, किरात तथा पुल्कस सब-के-सब उस समय घबड़ा गये तथा मलिनमुख हो गये। उसी समय परमाद्भुत चाप, खड्ग तथा तूणधारी, रथी, सोनेके समान पीला एवं साक्षात् अग्निके समान विक्रमवाला पावकसंकाश नाम का कोई पुरुष उनकी क्रोधाग्निसे उत्पन्न हुआ ॥२१॥

स तमाज्ञापयद्राजा जहि दैत्यानितीश्वरः ॥ पावकः सर्वशस्त्रास्त्रसम्पन्नः समरे बभौ ॥३०॥ प्रलयाग्निरिवादित्यसहस्रसदृशप्रभः ॥ मुमोच बाणवर्षाणि परसैन्येषु पावकः॥ ३१ ॥ विनोदं कारयामास किञ्चिद्विस्मयकारकम् ॥ सम्मोहनार्थं दैत्यानां गान्धर्वं समचोदयत् ॥३२॥ मोहिताः परमास्त्रेण त्यक्तोद्यतवरायुधाः ॥ परसैन्यं च तत्सर्वं मत्वा स्वजनसार्थगम् ॥ नायुध्यन्त तदा योधा दृष्ट्वा सेनापतिं पुनः ॥ नाम्ना पावकसङ्काशं जनकं स्वकुलोद्भवम् ॥३४॥ मत्वा सर्वे नमन्ति स्म पतित्वा वसुधातले ॥

उस भगवान् सुदर्शनराजने उसको आज्ञा दिया कि दैत्योंको मार डालो। युद्धमें वह पावक सभी शस्त्रास्त्रोंसे सम्पन्न हो, प्रलय-कालीन अग्नि तथा सहस्ररश्मि सूर्य्यके समान चमकता था। उसने शत्रुसैन्यपर बाणोंकी वर्षा की और कुछ विस्मयकारक विनोद किया कि दैत्योंको मोहित करनेके लिये गान्धर्वास्त्र छोड़ा, जिससे

मोहित होकर उन सब योद्धाओंने उत्तम तथा तैयार अस्त्रोंको त्याग दिया एवं शत्रुओंकी सेनाको अपना मानकर युद्ध करना छोड़ दिया। पुनः पावकसंकाश नामक सेनापतिको देखकर सभी अपना वंशोद्भव तथा अपना पिता मानकर पृथ्वीपर पड़कर प्रणाम करते थे ॥३५॥

तद्दृष्ट्वा देवगन्धर्वसिद्धविद्याधरादयः ॥३५॥ विस्मयं परमं जग्मुः साधु साध्विति चाब्रुवन् ॥ तान्दृष्ट्वा पावकप्रख्यो मोहितानां प्रमापणम् ॥३६॥ अयुक्तमिति तद्दिव्यमुपसंहृतवांस्तदा ॥

उसे देखकर देव, गन्धर्व, सिद्ध, विद्याधर आदि सभी परम विस्मित हुए और साधु! साधु!! ऐसा कहने लगे। उनको देखकर पावकने ऐसा समझकर कि मोहितोंको मारना अनुचित है, उस दिव्य अस्त्रको वापिस बुला लिया ॥३६॥

विमुक्तमोहास्ते सर्वे गृहीत्वा शस्त्रबाणकान् ॥३७। चक्रुस्ते कदनं घोरमसिभिः पट्टिशायुधैः ॥ क्रौञ्चमस्त्रं समादाय परेषां युद्धकांक्षिणाम् ॥३८॥ छिन्धि भोः कर्णनासे त्वमिति मन्त्रं जजाप ह ॥ तत्क्षणकृत्तनासाश्च कृत्तकर्णाश्च संयुगे ॥३९॥ विलोक्य ते हि तत्कर्म क्रुद्धा जघ्नुश्च तद्बलम् ॥

मोहसे विमुक्त होकर उन सभोंने शस्त्र तथा बाणादिको धारण कर, तलवार, पट्टिश तथा अन्यान्य आयुधोंसे महान् युद्ध किया। पुनः क्रौञ्चास्त्र लाकर "हे अस्त्र ! युद्धार्थी शत्रुओंके नाक-कान काट लो" ऐसा कहकर उसने मन्त्र जपा। तत्क्षण ही लड़ाईमें वे नासिका तथा कर्णहीन हो गये। तब वे उस कर्मको देखकर क्रोधित हो, उसकी सेनाको मारने लगे ॥४०॥

पुनः पावकसङ्काशः सर्वास्त्रकुशलो युधि ॥ भिण्डिपालेन सर्वेषां बाहूंश्चिच्छेद सर्वतः ॥ सर्वे ते वीतहस्ताश्च परान्खादितुमुद्यताः ॥४१॥

पुनः सब अस्त्रोंमें कुशल पावकने युद्धमें भिंडिपाल नामक आयुधसे सभी जगह उन सबोंके हाथोंको काट डाला। तब वे सब हस्तहीन हो शत्रुओंको खाने दौड़े ॥४१॥

तच्च दृष्ट्वा तु पैशाचमस्त्रं मन्त्रेण मन्त्रितम् ॥ विससर्ज तदा घोरं सर्वविस्मयकारकम् ॥ ४२ ॥ ग्रस्ताः पिशाचभूतैश्च

म्लेच्छा दैत्यादयस्तथा ॥ अन्योन्यखादने सक्ता ययुर्विलयम
ञ्जसा ॥४३॥

उसे देखकर मन्त्रसे अभिमन्त्रित कर सबको विस्मय करनेवाले परम घोर पिशाचास्त्रको छोड़ा। तब म्लेच्छ-दैत्यादि सभी शत्रु भूत, प्रेत तथा पिशाचोंसे ग्रस्त हो अपनेहीमें एक दूसरेको खानेमें आसक्त होकर शीघ्र नष्ट हो गये ॥४३॥

स्वसैन्यं निहतं दृष्ट्वा निःशेषं युद्धभूमिषु ॥ भेरुण्डस्तु ततः
क्रुद्धश्शूलं परमदारुणम् ॥४४॥ गृहीत्वा पावकप्रख्यमभिदुद्राव
संयुगे ॥ योजनत्रितयोत्सेधः कम्पयन्मोदिनीं तदा ॥४५॥

तब भेरुण्ड अपनी सारी सेनाको युद्ध-भूमिमें मरा देखकर बहुत क्रोधित हुआ और परम दारुण शूल लेकर युद्धमें पावकसंकाशपर तीन योजन ऊंचा बढ़कर पृथ्वीको कम्पाते हुए दौड़ा ॥४५॥

वायव्यमस्त्रं प्रायुङ्क्त पावकार्चिसमप्रभः ॥ भ्रामयामास
वात्येव तृणं पर्वतसन्निभम् ॥४६॥ प्रदक्षिणं कारयित्वा वेङ्कटाद्रे-
श्च दानवम् ॥पुनरुत्क्षिप्य तं दैत्यमाकाशे दशयोजनम् ॥४७।
पातयामास भूमौ तद्वायव्यं परमाद्भुतम् ॥ जीर्णकूष्माण्डवद् भूमौ
स शीर्णः पर्वतोपमः ॥४८॥

अग्निज्वालाके समान उस सेनापति पावकने वायव्यास्त्रका प्रयोग किया। बवण्डर जैसे घासको घुमा देता है वैसे ही उस परमाद्भुत वायव्यास्त्रने उस पर्वत समान दैत्यको वेङ्कटपर्वतकी प्रदक्षिणा करवाकर, पुन उसको दश योजन ऊपर आकाशमें उठा पृथ्वीपर पटक दिया। वह पर्वतोपम दैत्य पके कोंहड़ेके समान पृथ्वीपर फटकर टुकड़े-टुकड़े हो गया ॥४८॥

एवं निहत्य तं दैत्यं कृत्वा देशमकण्टकम् ॥ वनदुर्गाणि स-
र्वाणि खिलीकृत्य तदा जनान् ॥४९॥ स सुखं स्थापयामास वेङ्क-
टाद्रौ सुदर्शनः ॥

इस प्रकार सुदर्शनने उस दैत्यको मारकर उस देशको अकंटक कर, सभी वन-दुर्गोंको समतल कर वहां सभी मनुष्योंको सुख-पूर्वक वेङ्कटपर्वतपर स्थापित कर दिया ॥५०॥

आकाशे देवगन्धर्वाः पुष्पवर्षं विकीर्य च ॥५०॥ साधु साध्वि-
ति तं देवमस्तुवन् स्तुतिभिस्तदा ॥ स्वामिञ्जनपदाः सर्वे कृताः

स्वस्थास्त्वया प्रभो ॥५१॥ गच्छ त्वं वेङ्कटाधीशसमीपं त्वरितं पुनः॥ इत्युक्त्वा च ययुः सर्वे दिवं देवा मुदाऽन्विताः ॥५२।

आकाशमें देवता तथा गन्धर्व पुष्पोंकी वर्षा कर उस देवको साधु ! साधु !! कह अनेक स्तुतियोंसे स्तुति करने लगे। "हे स्वामिन् ! हे प्रभु ! आपसे सभी मनुष्य स्वस्थ या निर्बाध कर दिये गये। आप श्रीवेङ्कटाधीशके समीप शीघ्र लौट जावें" ऐसा कहकर सभी देवता प्रसन्न हो स्वर्गलोकको चले गये ॥५२॥

स्वसैन्येषु हता ये तु जीवयित्वा च तान्पुनः ॥ स्वस्थं चकार तं देशं वेङ्कटेशाज्ञया तदा ॥५३॥ काले ववर्ष पर्जन्यः फलवन्तश्च पादपाः ॥ सर्वसस्यानि तत्र स्म फलन्ति सुतरां तदा ॥ नीरोगाश्च जनाः सर्वे दुष्टबाधा न च क्वचित् ॥ वैकुण्ठोयमथाऽन्यो वा स्वर्गो वा भोगतः किमु ॥५५॥ इति तं मेनिरे सर्वे देशं श्रीवेङ्कटाभिधम् ॥ वाञ्छन्ति जन्म तत्रैव देवा अपि दिवौकसः ॥५६॥ सुदर्शनमहाराजः सहस्रभुजमण्डितः॥ आज्ञां वेङ्कटनाथस्य कृत्वा सम्यक्प्रतापवान् ॥५७॥ जयमङ्गलघोषैश्च कुसुमोत्करवृष्टिभिः ॥ सर्वसैन्यैश्च संयुक्तः सर्वाभरणभूषितः ॥५८॥ प्रविवेश विमानं तद्वेङ्कटेशस्य मङ्गलम् ॥५९॥

इति वराहपुराणे श्रीवेङ्कटाचलमाहात्म्ये सुदर्शनस्यासुरवधार्थमुत्तरदिग्गमनादिवर्णनं नाम सप्तपञ्चाशोऽध्यायोऽत्र पञ्चविंशः ॥ २५ ॥

अपनी सेनाके मरे हुए वीरोंको पुनः जीवित कर सुदर्शनने उस देशको श्रीवेङ्कटेशकी आज्ञासे सुखी तथा नीर्बाध कर दिया। समयपर वर्षा बरसने लगी तथा सब वृक्ष एवं सस्य उस समय सुतरां खूब फलने लगे। सभी मनुष्य नीरोग हो गये। कहीं दुष्टोंकी बाधा न रही और सभी उस वेङ्कट नामक देशको देख यह तर्क करने लगे कि क्या यह वैकुण्ठ है अथवा कोई अन्य स्वर्ग है ? यह क्या है ? स्वर्गवासी देवगण भी उस जगह जन्म लेनेकी इच्छा करने लगे। परम प्रतापी, सहस्र भुजावाले, महाराज श्रीसुदर्शन प्रभुने श्रीवेङ्कटेश भगवान्की आज्ञा पूरी तरह प्रतिपालन कर, जय तथा मंगल घोषोंके साथ फूलोंकी अविरल वृष्टिके बीच सब सेनासे युक्त तथा सभी आभूषणोंसे सुशोभित होकर श्रीवेङ्कटेश भगवान्के परम मंगलमय विमानमें प्रवेश किया ॥५९॥

इति पञ्चविंशोऽध्यायः ॥२५॥

# षड्विंशोऽध्यायः ॥२६॥

उपहत कलिमल दोष नर, करुणा वेङ्कट नाथ।
अधिक कृपा वरदान बहु, बहु महिमा गिरिसाथ ॥१॥
ऊंच नीच द्विज शूद्र सब, भक्ति प्रधान समान।
भक्ति-रूप फल देय सब, प्रभु क्रीड़ा गुण-गान ॥२॥
कलियुग गिरि वेङ्कट प्रभुहिं, महिमा वर्णनि पूर।
छब्बिसवें अध्यायमें, पुण्य-लाभ अघ दूर ॥३॥

अथ श्रीवेङ्कटेशस्य कलिदोषोपहतेषु विशेषतः कृपाधिक्यवर्णनम्

सूत उवाच—

मुनयः श्रुतमाख्यानं किमु चक्रकृताश्रयम् ॥ वक्तुमर्हथ यूयं हि किं भूयः श्रोतुमिच्छथ ॥१॥

कलिदोषदूषितोंपर श्रीवेङ्कटेशकी विशेष कृपाधिक्यका वर्णन

श्रीसूतजी बोले—हे मुनियो! क्या चक्रराजसे सम्बन्ध रखनेवाली कथा आपलोगोंने सुनी? पुनः अब आप जो कुछ सुननेकी इच्छा करते हों, वसे पूछ सकते हैं ॥१॥

मुनय ऊचुः—

पिबतां वेङ्कटेशस्य कथां दिव्यरसायनम् ॥ अस्त्यत्र तृप्तिर्नास्माकं भूयस्तृष्णा च भूयसी ॥२॥ कलौ कलौ यथा तिष्ठद्वेङ्कटाद्रिशिखामणिः ॥ पूजयिष्यति को वा तं वरदानं च कीदृशम् ॥३॥ वक्तुमर्हसि तत्सर्वं शृण्वतां नो महामुने ॥ इति पृष्टोऽब्रवीत्सूतः कथां श्रीवेङ्कटेशितुः ॥४॥

मुनिगण बोले—श्रीवेङ्कटेशके दिव्य रसायन-रूप कथामृतको पीनेवाले हमलोगोंकी तृप्ति नहीं हुई, बल्कि तृष्णा और भी बढ़ गयी। हे महामुनि! प्रत्येक कलियुगमें श्रीवेङ्कटाद्रि शिखामणि कैसे रहेंगे तथा उनकी कौन पूजा करेगा? उनका वरदान कैसा होगा? इन सभी बातोंको आप हम श्रोताओंसे कहिये? ऐसा पूछनेपर श्रीसूतजी श्रीवेङ्कटेशकी कथा कहने लगे ॥४॥

*श्रीसूत उवाच—*

**सन्धावपि कलेश्चैवं वेङ्कटेशस्य वर्तनम्॥ ततः परमियान्भेदो मौनं तत्रैव तु स्थितिः ॥५॥ अर्चावतारवद्भूयान्नराणां मांसचक्षुषाम्॥ वैकुण्ठादागतं दिव्यं विमानं तु तिरोहितम् ॥६॥ विमानमात्रं तु कलौ कारयिष्यन्ति मानवाः॥ पुण्यशीला महात्मानः कदाचित्क्षत्रसम्मताः ॥७॥ कदाचित् ब्राह्मणाः पुण्याः कदाचिद्वाह्वा नराः॥ अर्चावतार इत्येवं वदिष्यन्ति च मोहिताः ॥८॥ तथैवावमतिं केचित्करिष्यन्ति कलौ युगे॥**

श्रीसूतजी बोले—कलियुगकी सन्धि पर्यन्त तो श्रीवेङ्कटेशजीकी स्थिति इसी प्रकार रहेगी। परन्तु इतनी ही विशेषता होगी कि उनको वहां मौन होकर रहना होगा, स्थिति तो वही रहेगी। ये मांसचक्षुवाले मनुष्योंको केवल अर्चावतारवत (शिलादि-मूर्ति-रूप) ही मालूम पड़ेंगे। वैकुण्ठसे आया हुआ दिव्य विमान तो अन्तर्धान हो गया है। कलियुगमें पुण्यवान मनुष्यगण भगवान्‌का क्षत्रसम्मत विमान-मात्र बनावेंगे। कभी ब्राह्मण तथा कभी वल्लव लोग मोहित होकर श्रीवेङ्कटेश भगवान्‌को अर्चावतार (मूर्तिमात्र) ही कहेंगे। इसी तरह कलियुगमें कितने ही लोग श्रीवेङ्कटेशजीका अपमान भी करेंगे।

**साक्षात्पश्यन् हि तत्सर्वमपश्यन्निव तिष्ठति ॥९॥ साक्षाद्भाषणमेकं तु नास्ति तस्य तपोधनाः॥ परं तु सर्वमस्त्येव निग्रहानुग्रहावपि ॥१०॥ अधिकं वरदानं तु भविष्यति कलौ युगे॥ कृतकं तु विमानं स्यादित्याख्यामात्रमेव हि ॥११॥ किन्तु दर्शनमात्रेण पापकोटिं हरेद् ध्रुवम्॥ कदाचिन्महती पूजा स्वल्पैव तु कदाचन ॥ १२ ॥ स्वयं हि वेङ्कटाधीशः प्रकाशं हि व्रजेत्क्वचित्॥ अप्रकाशं कदाचिच्च वेङ्कटाद्रिशिरोमणिः ॥१३॥ एवं हि रमया सार्धं**

क्रीडत्येव च तत्र हि ॥ कलौ युगे तु वैचित्र्यं दर्शयिष्यति केशवः ॥१४॥

भगवान् इन बातोंको देखते हुए भी नहीं देखनेके समान रहेंगे। तपोधनो! उनका साक्षात भाषण-मात्र ही एक नहीं रहेगा और सभी अनुग्रह तथा निग्रह अवश्य ही रहेंगे; परन्तु कलियुगमें वरदान अधिक होगा। यह विमान कृत्रिम है, यही कथा-मात्र है; किन्तु कलियुगमें दर्शन-मात्रसे ही ये करोड़ों पाप अवश्य हरण करेंगे। इनकी कभी बड़ी तथा कभी छोटी पूजा होगी। श्रीवेङ्कटाधीश भगवान् स्वयं कभी-कभी प्रत्यक्ष हो जाया करेंगे तथा कभी-कभी अप्रकाश ( छिप ) भी हो जायंगे। इस प्रकार लक्ष्मीजीके साथ वे वहां विहार करते रहेंगे। कलियुगमें तो केशव भगवान् एक विचित्रता भी दिखलावेंगे ॥१४॥

अल्पदानेन वै भक्त्या स्वल्पया पूजया तथा ॥ भविष्यति प्रसन्नश्च स्मृतिमात्रेण केशवः ॥१५॥ नृणां गमनमात्रेण वेङ्कटाख्यगिरिं प्रति ॥ प्रसन्नः स्यादयं क्षिप्रं दास्यतीष्टं च तद्बहु ॥१६॥ स्वयमप्राकृतो विष्णुश्चरित्रं प्राकृतो यथा॥ करिष्यति तथा देवो मोहयिष्यति ताञ्जनान् ॥१७॥ मानुषांश्चैव भोगांश्च भोक्ष्यते प्रीतमानसः ॥

थोड़ा दान, थोड़ी भक्ति तथा थोड़ी ही पूजा या स्मरण-मात्रसे ही केशव भगवान् प्रसन्न हो जायंगे। श्रीवेङ्कट नामक पर्वतके पास जानेसे ही यह भगवान् शीघ्र प्रसन्न होकर मनुष्योंको इच्छित अनेक वर देंगे। विष्णु भगवान् स्वयं अप्राकृत होनेपर भी प्राकृतके समान चरित्र करेंगे लोगोंको मोहित करेंगे, तथा प्रसन्न चित्त हो मनुष्योंके भोगनेके भोग भोग करेंगे ॥१८॥

उत्सवान् विविधांस्तस्य कारयिष्यन्ति मानवाः ॥१८॥ आगमिष्यन्ति देवाश्च सेवार्थे वै कलौ युगे॥ स्नास्यन्ति स्वामितीर्थे वै करिष्यन्ति निवेदनम् ॥१९॥ निवेदितं भक्षयेयुर्मनुष्याणामगोचरा ॥ विमानं तद्धि पश्येयुः पूजयेयुर्हि सादराः ॥२०॥ प्रार्थयिष्यन्ति देवाश्च भविष्यामो नरा इति ॥ तेषां हि वेङ्कटाधीशः क्षिप्रं दास्यति चेप्सितम् ॥२१॥

मनुष्यगण भगवान्के नाना प्रकारके उत्सव करायेंगे। कलियुगमें सेवाके लिये देवता लोग भी आ जायंगे और स्वामितीर्थमें स्नान करेंगे तथा भगवानको नैवेद्य चढ़ायेंगे। ये मनुष्योंको नहीं दिखायी देते हुए भी

निवेदन किया हुआ नैवेद्य खा जायेंगे। पुनः लोग उस विमानके दर्शन पावेंगे एवं आदरके साथ पूजा करेंगे। सभी देवगण यह प्रार्थना भी करेंगे कि हमलोग भी मनुष्य हो जायं। भगवान् भी उनको इप्सित वर तुरन्त दे देंगे ॥२१॥

स्वल्पधर्मेण सन्तुष्टः पुत्रं क्षेत्रं कलत्रकम् ॥ आरोग्यं भूतिमै-
श्वर्यं राज्यप्राप्तिं च सत्वरम् ॥२२॥ आयुश्च दुर्लभं नृणां स्वर्गलो-
कादिकानपि ॥ जन्मकोटिशतैश्चैव कृतैः पुण्यैर्दुरासदाम् ॥२३॥
नित्यभूतिं च देवोऽसौ दास्यत्याचार्यसंश्रयात् ॥

आचार्यकी शरणमें जानेसे थोड़ेसे ही धर्मसे सन्तुष्ट होकर श्रीवेङ्कटेश भगवान् पुत्र, क्षेत्र, स्त्री, आरोग्य, सम्पत्ति, ऐश्वर्य्य, राज्यप्राप्ति, मनुष्य-दुर्लभ पूर्ण आयु, स्वर्गादि लोक तथा करोड़ों जन्मोंमें किये हुए पुण्योंसे मिलनेवाली कठिन नित्यविभूति या मोक्ष भी दे देंगे ॥२४॥

अहो वै वैष्णवो धर्मश्चित्रो वेङ्कटभूधरे ॥२४॥ आश्चर्यमाश्चर्य-
मिति ब्रुवन्तो वैमानिकास्ते कमलासनाद्याः ॥ यथा व्रजेयुर्हि त-
था मयापि गीतं भविष्यद्भवतां पुरस्तात् ॥२५॥

"अहो! श्रीवेङ्कटाचलपर वैष्णवधर्म कैसा चमत्कारी है!! बड़े ही आश्चर्यकी बात है! बड़े ही आश्चर्य्यकी बात है!!" ऐसा कहते हुए विमानारोही ब्रह्मादि देवता जैसे चलेंगे वैसा ही मेरे द्वारा भी आपके सामने भावी वृत्तान्त कहा गया ॥२५॥

कलौ युगे तु सम्प्राप्ते विशेषाद्वेङ्कटाचलः ॥ प्रख्यातो ह्यधि-
कं भूमौ भविष्यति तपोधनाः ॥२६॥ सान्निध्यमधिकं तत्र करिष्यति
रमापतिः ॥ म्लेच्छसङ्करजातीनां श्वपाकाधमयोषिताम् ॥२७॥
किरातपुल्कसादीनां शूद्राणां हीनजन्मनाम् ॥ भक्तिः श्रीवेङ्कटा-
धीशे ह्यधिकं च भविष्यति ॥२८॥ तेषामपि रमाधीशः शीघ्रं दा-
स्यत्यभीप्सितम् ॥ सान्निध्यं तत्र कुरुते भक्त्या क्रीतो यतो
हरिः ॥२९॥

हे तपस्वियो! कलियुग आ जानेपर पृथ्वीपर विशेषकर श्री वेङ्कटाचल बहुत अधिक प्रसिद्ध होगा। वहांपर श्रीरमापति भगवान् अत्यन्त सान्निध्य करेंगे। वहांके श्रीवेङ्कटाधीशमें म्लेच्छों, संकर जातियों, श्वपाकों, अधमों, स्त्रियों, किरातों, पुल्कस आदिकों तथा हीन जन्मवाले शूद्रोंको बहुत ही अधिक भक्ति होगी। रमापति

भगवान् उनका अभीप्सित बहुत ही शीघ्र प्रदान करेंगे। उन भक्त लोगोंमें भगवान् श्रीवेङ्कटेश सर्वदा प्रत्यक्ष रहते हैं; क्योंकि भगवान् भक्तिसे खरीदे जा चुके हैं ॥२९॥

आर्यास्तुरुष्का मालव्या गौडा वङ्गाः कलिङ्गकाः॥ आन्ध्राः कर्णाटदेशीयाः कोसलोद्भूतमानुषाः ॥३०॥ अङ्गाश्चोलाश्च पाण्ड्याश्च नानदेशेषु सम्भवाः॥ द्वीपान्तरगताश्चापि वेङ्कटेशमहोत्सवे ॥३१॥ धारयन्तो महाभक्तिमागमिष्यन्ति कोटिशः॥ सर्वे लब्ध्वा वरं चेष्टं भविष्यन्ति मुदाऽन्विताः ॥३२॥

आर्य, तुरुष्क, मालव्य, गौड़, बङ्गाली, कलिङ्गवासी, आंध्रवासी, कर्नाटकदेशवासी, कोसलावासी, अङ्गवासी, चोल, पाण्ड्य तथा अन्यान्य नाना देशों एवं दूसरे द्वीपोंमें उत्पन्न लोग भी श्रीवेङ्कटेश भगवान्‌के उत्सवमें महा भक्ति रखते हुए करोड़ों-करोड़ोंकी संख्यामें आयेंगे और सभी अपना-अपना इष्ट लाभ कर प्रसन्न हो जायँगे ॥३२॥

अप्राकृतः स्वर्णसानुरपि श्रीवेङ्कटाचलः॥ प्राकृताचलवद्भूमौ भविष्यति कलौ युगे ॥३३॥ मतान्तरप्रविष्टानामपि भक्तिर्भविष्यति॥ सर्वात्मके रमाधीशे वेङ्कटेशे परात्मनि ॥३४॥

सुवर्णशिखरयुक्त वेङ्कटाचल अप्राकृतिक होता हुआ भी कलियुगमें पृथ्वीपर प्राकृत पर्वतके समान रहेगा। सर्वात्मक परमात्मा रमाधीश श्रीवेङ्कटेश भगवान्‌में अन्य धर्मोंमें प्रवेश किये हुए लोगोंकी भी भक्ति होगी ॥३४॥

एवं कृत्वा पराम्भक्तिं भविष्यन्ति च पावनाः॥ भक्तिमन्तं परो दृष्ट्वा भक्तिं गच्छेद्धि केशवे ॥३५॥ तथा दृष्टफलार्थं च भजमानाय सादरम्॥ दृष्टप्रदं वेङ्कटेशं दृष्ट्वा तं तु व्रजेत्पुनः ॥३६॥ सोऽपि दृष्टफलं लब्ध्वा वरानपि शतं भजेत्॥

इस तरह पराभक्ति करते-करते मनुष्य पवित्र हो जायँगे। दूसरे भक्तोंको देख भगवान् केशवमें दूसरोंको भी भक्ति उत्पन्न होगी तथा ऐहिक धन-धान्यादि फलके लिये आदरके साथ भगवान्‌का भजन करनेवालेको श्रीवेङ्कटेश भगवान्‌को ऐहिक फल देते देख, दूसरा भी उस भगवान्‌के पास जायगा। वह (दूसरा) ऐहिक फल लाभ कर सैकड़ों वरदान भी पायेगा ॥३७॥

चित्रं कलियुगे श्रीशो विहरिष्यति भूधरे ॥३७॥ अत एव कलिः
साधुः साधुः शूद्रश्च योषितः ॥ विशेषाद्वेङ्कटाधीशसेवनं साधुभूष-
णम् ॥३८॥ इत्येवं मुनयो देवा वदिष्यन्ति कलौ युगे ॥

"बड़ा ही आश्चर्य है कि कलियुगमें लक्ष्मीपति भगवान् पर्वतपर विहार करेंगे ! इसीलिये कलियुग धन्य है ! तथा शूद्र एवं स्त्रियां भी धन्य-धन्य हैं; विशेषकर श्रीवेङ्कटेशजीका सेवन ही साधुओंका भूषण है" ऐसा कलियुगमें मुनि और देवता लोग कहेंगे ॥३८॥

कलिदोषपरीतानां नराणां पापकर्मणाम् ॥३९॥ वेङ्कटेशात्परो
देवो नास्त्यन्यः शरणं भुवि ॥ वेङ्कटेशसमो देवो नास्ति नास्ति
महीतले ॥४०॥ स्वामिपुष्करिणीतीर्थसमं नास्ति न चास्ति हि ॥

कलियुगके दोषोंसे घिरे हुए, पापकर्मी मनुष्योंके लिये पृथ्वीपर श्रीवेङ्कटेश भगवान्को छोड़कर कोई दूसरा आश्रय नहीं है। श्रीवेंकटेश भगवान्के समान पृथ्वीपर कोई भी दूसरा देवता नहीं है तथा स्वामिपुष्करिणीके समान कोई तीर्थ नहीं है ॥४१॥

द्रव्यार्जनपरो नित्यं भविष्यति कलौ युगे ॥४१॥ अनुग्रहाय
लोकानां कामैः पूर्णोऽपि सर्वदा ॥ इदं द्रव्यं त्वया तावद्दातव्यं
मम सम्प्रति ॥४२॥ तवाभीष्टमहं दास्ये दास्य इत्येव च ब्रुवन् ॥
इति सर्वजनैः सार्धं क्रीडमानो भविष्यति ॥ ४३ ॥ कलौ तदीय-
चारित्रं वक्तुं कल्पशतैरपि ॥ न शक्यमुक्तं लेशेन चरितं तस्य
मङ्गलम् ॥४४॥

इति श्रीवराहपुराणे श्रीवेङ्कटाचलमाहात्म्ये श्रीवेङ्कटेशस्य कलिदोषोपहतेषु विशेषतः कृपाधि-
क्यवर्णनं नामाष्टपञ्चाशोऽध्यायोऽत्र षड्विंशः ॥२६॥

सर्वदा सभी कामनाओंके पूर्ण होनेपर भी, लोकानुग्रहके लिये "तुम्हें सम्प्रति इतना द्रव्य मुझको देना चाहिए, तब मैं तुम्हारा अभीष्ट अवश्य दूंगा, अवश्य दूंगा" ऐसा बोलते हुए भगवान् श्रीवेंकटेश कलियुगमें नित्य द्रव्यके उपार्जनपरायण ही होंगे। इस तरह सभी मनुष्योंके साथ क्रीड़ा करते हुए भगवान् ( कलियुगमें ) रहेंगे। कलिकालमें उनका चरित्र सैकड़ों कल्पोंमें भी कहनेमें अशक्य होनेसे उनका परम मंगलमय चरित्र मैंने लेश-मात्र ही कहा ॥४४॥

इति षड्विंशोऽध्यायः ॥२६॥

# सप्तविंशोऽध्यायः ॥२७॥

गुरु महिमा आश्रयण गुरु, अनुपम वैष्णवधर्म ।
संयम-नियम-विचार शुचि, यज्ञ त्यागफल-कर्म ॥१॥
कर्म योग समज्ञान अरु, ध्यान निरत स्वाध्याय ।
अनुपम भगवत भक्तिमय, सत्ताइस अध्याय ॥२॥

अथ चेतनस्याचार्याश्रयणात्पुरुषार्थप्राप्तिनिरूपणम्

*मुनय ऊचुः—*

भगवन्सर्वशास्त्रार्थवेदवेदाङ्गपारग ॥ आचार्यसंश्रयादेव लभन्ते हि परां गतिम् ॥१॥ अहो हि वैष्णवो धर्म इति चोक्तं त्वया पुरा ॥ सूत त्वया तु तत्सर्वं वक्तव्यं नस्तपोधन ॥२॥

अथ चेतन विप्रका आचार्यश्रयणसे पुरुषार्थप्राप्तिका वर्णन

मुनियोंने कहा—सर्व शास्त्रोंके अर्थ तथा वेद-वेदाङ्ग-पारंगत हे भगवान् सूतजी ! आचार्यके शरणहीसे मनुष्य परागतिको लाभ करता है। अहो! वैष्णवधर्म धन्य है—यह आपने पहले कहा था। हे तपोधन सूतजी, वह सभी आप हम लोगोंसे कहें ॥२॥

*श्रीसूत उवाच—*

श्रूयतामभिधास्यामि सङ्ग्रहेण तपोधनाः॥ उद्धृत्य भूमिं पातालाद्वेङ्कटाह्वयभूधरे ॥ ३ ॥ सितेन भूवराहेण धरण्यै भाषिताः पुरा ॥ पृच्छन्त्यै वैष्णवान्धर्मान्ये ये धर्मा मनोहराः ॥४॥ व्यासप्रसादात्तान्धर्मान्वेद्म्यहं मुनिसत्तमाः ॥ सङ्ग्रहेण प्रवक्ष्यामि गोप्याद्गोप्यतरानपि ॥५॥

श्रीसूतजी बोले—हे तपोधनो! मैं संक्षेपमें कहूंगा आप सब सुनें। श्वेतवराहने पातालसे भूमिका उद्धार कर श्रीवेङ्कट नामक पर्वतपर पृथ्वी देवीके पूछनेपर वैष्णवोंका जो-जो मनोहर धर्म पहले कहा था; हे तपोधन मुनिसत्तमो! व्यासजीके प्रसादसे उन सभी धर्मोंको मैं जानता हूं। उन्हीं गोप्यसे गोप्यतर धर्मोंको संक्षेपमें मैं कहता हूं ॥५॥

तेषां वैष्णवधर्माणां विश्वासस्तु परा गतिः॥ यावानपि च विश्वासस्तावती सिद्धिरीरिता ॥६॥ गुरुरेव परो धर्मो गुरुरेव परा गतिः॥ पापं क्षपयति क्षिप्रं गुरुरेवात्मभावनः ॥७॥ तस्मात्सर्वप्रयत्नेन विश्वसेत्परमं गुरुम् ॥

इन वैष्णवधर्मोंमें विश्वास ही परागति है। जितना ही उनमें विश्वास हो, उतनी ही सिद्धि कही गई है। गुरु ही परो धर्म है; गुरु ही परा गति है। आत्मस्वरूपका बोध करानेवाले गुरु ही पापका शीघ्र नाश करते हैं। इसलिये सभी यत्नसे परमगुरुका विश्वास करना चाहिये ॥८॥

तत्पापं तद्गुरुर्हन्ति तत्पापं तद्गुरुर्हरेत् ॥८॥ पारम्पर्यक्रमाद्विष्णुः सर्वपापहरो गुरुः ॥ कारुण्यमूर्तिः श्रीविष्णुर्गुरुरूपी च पापिनः ॥९॥ शास्त्रहस्तेन संसारमग्नानुद्धरते जनान् ॥ न्यायविच्छास्त्रवेदी च धर्माधर्मविवेकवान् ॥१०॥ तपोनिष्ठो ब्रह्मनिष्ठस्तपःस्वाध्ययने रतः ॥ निर्ममो निरहङ्कारः शान्तो दान्तो विमत्सरः ॥११॥ गुरुरित्युच्यते यस्तु परार्थैकप्रयोजनः ॥

उसके पापोंको उसका गुरु हरता है, और उस गुरुके पापोंको गुरुके गुरु नाश करते हैं; इसी तरह श्री विष्णुभगवान् परम्परा क्रमसे सभी पापोंको हरनेवाले परमगुरु हैं। कृपाकी मूर्ति श्रीविष्णुभगवान गुरुरूप-धारण कर शास्त्र-रूपी हाथोंसे संसार सागर-मग्न पापियोंका उद्धार करते हैं। जो न्याय जाननेवाले, शास्त्रवेत्ता, धर्माधर्ममें विवेक रखनेवाले तपोनिष्ठ, वेदनिष्ठ, ब्रह्मनिष्ठ, तपस्या तथा स्वाध्यायमें निरत रहनेवाले, ममता-रहित, अहंकारशून्य, शान्त, दान्त, मत्सरहीन, परोपकार ही एक मात्र प्रयोजनवाले हों वही यथार्थ गुरु कहलाते हैं ॥१२॥

भीतः संसारदात्रेभ्यः शान्तो दान्तः शुचिर्बुधः ॥१२॥ अतः परमनिर्विण्णो निर्वैरः सर्वजन्तुषु ॥ समाश्रयेद् गुरुं भक्त्या महाविश्वासपूर्वकम् ॥१३॥ निक्षिपेत्सर्वभारांश्च गुरोः श्रीपादपङ्कजे ॥

नित्यनैमित्तिके कुर्वन्यथाशक्ति भयाद्धरेः ॥१४॥ मोक्षार्थं निर्भरस्तिष्ठेन्मन्त्रान्तरविवर्जितः ॥ साधनान्तरहीनश्च ह्यथानुष्ठानतत्परः ॥१५॥ नाष्टाक्षरात्परो मन्त्रो नास्ति नारायणात्परः॥ नास्ति न्यासात्परो योगो ब्रवीति च तथा श्रुतिः ॥१६॥ एवं हि वर्तमानस्य देहान्ते परमं पदम् ॥

अतएव संसाररूपी दावानलसे डरनेवालेको शान्त, दान्त ( इन्द्रियदमन करनेवाला ), पवित्र, बुद्धिमान, संसारसे पूर्ण विरक्त, प्राणिमात्रसे वैररहित हो महा विश्वासपूर्वक भक्ति भावसे अपने उस गुरुका आश्रय लेना चाहिये। भगवान्‌के भयसे नित्य तथा नैमित्तिक ( दोनों ) कर्मोंको यथाशक्ति करता हुआ, दूसरेका अनुष्ठान नहीं करता हुआ, अन्य मन्त्रों तथा अन्य साधनोंसे रहित एवं निश्चिन्त होकर मोक्षके लिये निर्भर हो, शिष्य अपने सभी भारोंको श्रीगुरुके चरणकमलमें निवेदन करे। वेद ऐसा कहते हैं कि अष्टाक्षरसे परे मन्त्र नहीं, नारायणसे बढ़कर कोई दूसरा नहीं तथा संन्याससे परे कोई योग नहीं है। इस तरहसे वर्तनेवालेको इस शरीरके अन्तमें परमपद प्राप्त होना है ॥१७॥

न्यासविद्यापरश्चैव वर्तते परमार्थवित् १७॥ ध्याननिष्ठश्च लघ्वाशी वैराग्यं परमाश्रितः ॥ अहङ्कारविहीनश्च यतवाक्कायमानसः ॥१८॥ सर्वेन्द्रियाणि संन्यस्य विविक्तं स्थलमाश्रितः ॥ बलदर्पविहीनश्च कामक्रोधविवर्जितः ॥१९॥ शान्तश्च निर्ममश्चापि परिग्रहविवर्जितः ॥ कल्पते ब्रह्मभूयाय ब्रह्मध्यानस्य वैभवात् ॥२०॥

परमार्थ जाननेवाला इस तरह न्यास विद्यामें तत्पर, ध्यानमें निष्ठा रखनेवाला, हलका भोजन करनेवाला, उत्तम वैराग्यमें लगा हुआ, अहंकार रहित, मन, वचन तथा कायाको वशमें रखनेवाला, सभी इन्द्रियोंको संयमकर एकान्त-स्थानवासी हो, बलके अभिमानसे रहित, कामक्रोधादि रहित, शान्त, ममतारहित तथा सङ्ग रहित होता है, वह ब्रह्मध्यानके प्रभावसे ब्रह्मभाव पानेका अधिकारी होता है ॥२०॥

ब्रह्मभावं गतस्यास्य प्रसन्नं मानसं भवेत् ॥ तस्य शोको न चेच्छा च सर्वभूतसमो भवेत् ॥२१॥ हरिभक्तिर्भवेत्तस्य भक्त्या जानाति केशवम् ॥ भगवत्तत्त्वयाथात्म्यं वेत्ति पश्चात्प्रसन्नधीः ॥२२॥ ततः परमसद्भावं विष्णोः सायुज्यमश्नुते ॥

ब्रह्मभावको प्राप्त हुआ इस मनुष्यका मन प्रसन्न हो जाता है। न उसको शोक होता है और न इच्छा ही उत्पन्न होती है। सभी जीवोंमें वह सम बुद्धि हो जाता है। उसको भगवान्‌की भक्ति हो जाती है। उस भक्तिसे वह परमात्माको जान जाता है। पीछे वही भगवान्‌के तत्त्वको जानता है। पश्चात् प्रसन्न एवं निर्मल बुद्धिसम्पन्न होता है। फिर वह विष्णुके सङ्गसे विष्णुभगवान्‌का सायुज्य या मुक्ति पाता है ॥२३॥

न्यासविद्यानिविष्टस्य कर्मणां त्याग इष्यते ॥२३॥ त्यागश्च फलतः प्रोक्तः स्वरूपेण न च क्वचित् ॥ कर्मणो नियतस्यैव त्यागो वै मोहमूलकः ॥ २४ ॥ कर्माणि त्यजतः पुंसो नास्ति देहस्य धारणम् ॥ यज्ञादीनां त्यक्तसङ्गः कुर्यात्कर्माण्यशेषतः ॥२५॥

न्यासविद्यामें संलग्न मनुष्योंके लिये कर्मोंका त्याग कहा गया है; किन्तु स्वरूपसे कर्मोंका त्याग कहीं भी नहीं होता, त्याग फलसे ही कहा गया है। नित्य कर्मोंका त्याग मोहमूल ही होता है। कर्मोंको छोड़नेसे मनुष्योंका देहधारण भी नहीं हो सकता। अतएव प्राणिमात्र सङ्ग अर्थात फलकी आशा छोड़कर यज्ञादि अशेष कर्मोंको करते रहें ॥२५॥

सृष्ट्वा यज्ञान्प्रजाश्चापि प्राह ब्रह्मा चतुर्मुखः ॥ यज्ञ एव परो धर्मो भगवत्प्रीतिकारकः ॥ २६ ॥ अभीष्टकामधुग्यज्ञस्तस्माद्यज्ञः परा गतिः ॥ तस्माद्यज्ञं प्रजाः सर्वाः कुर्युः सङ्गविवर्जिताः ॥२७॥ यज्ञैः प्रीतो हरिः सर्वमभीष्टं च प्रयच्छति ॥ लब्ध्वाऽभीष्टं वरं तस्माद्यज्ञं कुर्यान्न चेत्पुनः ॥२८॥ स्तेन एव स विज्ञेयः सर्वकर्मबहिष्कृतः ॥

चतुर्मुख श्रीब्रह्माजीने यज्ञों तथा प्रजाओंकी रचना कर उनसे कहा कि भगवान्‌को प्रसन्न करनेवाला यज्ञ ही परम धर्म है। यज्ञ अभीष्ट एवं कामनाओंके लिये कामधेनुके समान है, इसीलिये यज्ञ ही परागति है। इसीलिये सभी प्रजा फलकामना रहित होकर यज्ञ करें, यज्ञोंसे प्रसन्न होकर भगवान् सब अभीष्टोंको प्रदान करते हैं। यदि उनसे सर्वाभीष्ट या वरदान पाकर भी पुनः यज्ञ न करे तो वह सभी कर्मोंसे बहिष्कृत भारी चोर है ॥२६॥

ततः कर्म च कर्तव्यं फलसङ्गविवर्जितम् ॥ २९ ॥ कर्मणैव पुरा केचित्परां सिद्धिमितो गताः ॥ भगवत्तत्त्वनिष्ठस्य तदाज्ञाल-

ङ्घनं महान् ॥३०॥ दोषस्तदाज्ञा वेदाश्च स्मृतयो धर्मसङ्ग्रहाः॥ आज्ञानुवर्तनं पुंसामादौ कार्यं हि सर्वदा ॥३१॥

अतः फलकी आशा छोड़कर कर्म करना चाहिए। पहले कितनोंने जनकादि कर्मसे ही परम सिद्धि प्राप्त की है। भगवान्के तत्त्वोंमें निष्ठ लोगोंको उनकी आज्ञाका उल्लंघन करना महान् दोष है। वेद, स्मृतियाँ और धर्मशास्त्र सब उनकी आज्ञा हैं। उनका सर्वदा अनुवर्तन अथवा पालन करना ही पुरुषोंका कार्य्य है॥३१॥

हरौ सर्वाणि कर्माणि संन्यसेद्योगवित्तमः ॥ निर्ममो नित्यतृप्तश्च भगवद्ध्यानमाश्रितः ॥३२॥ सुखदुःखे समे कृत्वा लाभं हानिं जयं तथा ॥ पराजयं च शीतोष्णं मानं चाप्यवमानकम् ॥३३॥ सर्वत्रगं परं ब्रह्म ध्यायन्सन्ततमात्मनि ॥ प्रातरारभ्य कर्माणि कुर्वन्निज्यादिकं तथा ॥ ३४ ॥

भगवद्भक्त, ममतारहित, नित्यतृप्त, पूर्ण सन्तुष्ट, भगवान्के ध्यानमें लीन, सुख दुःख, लाभ-हानि, जय-पराजय, शीत-ऊष्ण, मान-अपमान सबको समान समझकर सर्वव्यापी परमब्रह्मका आत्मामें निरन्तर ध्यान करते हुए, प्रातःकालसे लेकर भगवतपूजादि कर्मोंको करते हुए योगिवर्ग सभी कार्योंको भगवान्के समर्पण करें॥३४॥

स्वाध्यायं च तथा योगं तत्तत्काले न हापयेत् ॥ नित्यं नैमित्तिकं कर्म यथाशक्ति विनिर्वहेत् ॥३५॥

तत्तत्कालमें स्वाध्याय एवं योगाभ्यासको भी न छोड़े एवं नित्य तथा नैमित्तिक सभी कर्मोंका भी यथाशक्ति निर्वाह करता रहे॥३५॥

वृन्दावनं वेङ्कटाद्रौ मालाकरणमेव च ॥ विमानलेपनं चैव यच्चान्यत्प्रीतिकारकम् ॥३६॥ उत्सवैः सेवनं चैव यथाशक्ति निवेदनम्॥ तदीयाराधनं चापि कुर्वन्नद्वेषमात्मसु ॥३७॥ श्रीमद्वेङ्कटनाथस्य जलैस्तु विनिवेदितैः ॥ अन्नैर्वस्त्रैस्तथा माल्यैः शरीरस्य च पोषणम् ॥३८॥ कुर्वन्नाचार्यमाहात्म्यात्परां गतिमवाप्नुयात् ॥३९॥

इति श्रीवराहपुराणे श्रीवेङ्कटाचलमाहात्म्ये चेतनस्याचार्याश्रयणात्पुरुषार्थप्राप्तिवर्णनं नामैकोनषष्टितमोऽध्यायोऽत्र सप्तविंशः ॥२७॥

श्रीवेंकटाचलपर तुलसीवन लगाना, माला बनाना, विमानको लीपना, भगवान्‌के प्रीतिकारक अन्यान्य कर्म, उत्सवमें उनका सेवन, यथाशक्ति भोग तथा प्राणिमात्रमें विद्वेषके बिना उनकी आराधना, श्रीवेंकटनाथके लिये समर्पित प्रसाद, जल, अन्न, वस्त्र तथा मालाओंसे अपने शरीरका पोषण करता हुआ, आचार्यके माहात्म्यके प्रभावसे पुरुष परमगति प्राप्त करता है ॥३९॥

इति सप्तविंशोऽध्यायः ॥२७॥

# अष्टाविंशोऽध्यायः ॥२८॥

कठिन योग अष्टाङ्ग का, रूप-निरूपण ज्ञान ।
ब्रह्म जीव अक्षर पुरुष, समय ध्यान बखान ॥१॥
कुम्भक योग समाधिके, मारग जटिल दुरूह ।
विशद रूपमें लिखित यहै, लाभ अमल फल दूह ॥२॥
सनक सनन्दन तीर्थ अरु, काम रसायन धाम ।
महिमा अगम अनन्त फल, मुक्ति धर्म धन काम ॥३॥

अथ अष्टाङ्गयोगस्वरूपनिरूपणम् ।

*सूत उवाच—*

द्वे ब्रह्मणी वेदितव्ये परं चापरमेव च ॥ अपरं ब्रह्म जीवस्तु क्षराक्षरविभेदवान् ॥१॥ क्षरस्तु सर्वभूतं स्यात्कूटस्थो ह्यक्षरः स्मृतः ॥ परं ब्रह्म तु सर्वात्मा परमात्मा प्रकीर्तितः ॥२॥ बिभर्ति सर्वलोकांश्च प्रविश्यान्तर्नियच्छति ॥ ईश्वरो योऽव्ययो नित्यः स एव पुरुषोत्तमः ॥३॥ अतीतः क्षरमत्यर्थमक्षरं च परः पुमान् ॥ यस्मात्तस्मात्तु विख्यातो लोकेऽसौ पुरुषोत्तमः ॥४॥ इति यो वेत्ति पुरुषमसम्मूढः परार्थवित् ॥ स सर्वविद्भजेदेनं वेङ्कटेशं समाधिना ॥५॥

## अथ अष्टाङ्ग योग निरूपण ।

श्रीसूतजी बोले – पर तथा अपर दो प्रकारके ब्रह्म जानने योग्य हैं। क्षर तथा अक्षर रूप जीव ही अपर ब्रह्म है। सब चराचर प्राणिमात्र क्षर हैं और अक्षर तो कूटस्थ प्रकृति है। परम ब्रह्म ही सर्वात्मा, परमात्मा आदि नामोंसे पुकारा जाता है। वही सम्पूर्ण लोकोंको पालता तथा सभीके भीतर प्रवेशकर सबका शासन करता है। जो अव्यय नित्य तथा ईश्वर हैं वही पुरुषोत्तम हैं। वह जिस कारणसे क्षर तथा अक्षर दोनोंके परे हैं, इसलिये संसारमें पुरुषोत्तम रूपसे प्रसिद्ध हैं। जो मनुष्य इस प्रकारके पुरुषोत्तमको जानता है वही तत्त्वज्ञानी तथा सर्वज्ञ है। वही मनुष्य समाधियोगसे श्रीवेंकटेश भगवान्का भजन कर सकता है ॥५॥

यस्तु वेदविदां श्रेष्ठो योगमारभ्य बुद्धिमान् ॥ यमं च नियमं चैव पीठभेदांस्तथैव च ॥६॥ प्राणायामांश्च विविधान्प्रत्याहारं च साधयेत् ॥ धारणं ध्यानभेदांश्च स समाधिं प्रसाधयेत् ॥७॥

जो वेदज्ञोंमें श्रेष्ठ, बुद्धिमान योगको आरम्भ करके, यम, नियम, आसनों एवं प्राणायामोंके विविध भेदों, प्रत्याहार, ध्यान तथा धारणकी साधना करता है वही समाधिकी साधना कर सकता है ॥७॥

यमादिध्यानपर्यन्ताः समाधेः सिद्धिहेतवः ॥ समाधिः स्वाङ्गसहितस्त्वष्टाङ्गो योग उच्यते ॥८॥ कुर्याद्धि प्रत्यहं योगमेतावदिति निश्चयः ॥

यमसे लेकर ध्यान पर्यन्त सभी समाधिसिद्धिके कारण हैं। अपने सभी अङ्गोंके साथ समाधि ही अष्टाङ्ग योग कही जाती है। प्रति-दिन इतना ही योग करना चाहिए, ऐसा निश्चय है ॥८॥

निषिद्धाचारतः पुंसो निवृत्तिर्यम उच्यते ॥ ९ ॥ स्वाध्यायो नियमः प्रोक्तः स्वस्तिकाद्यासनं विदुः ॥ रेचकः पूरकश्चापि कुम्भकश्चेति विश्रुतः ॥ १० ॥ प्राणायामस्त्रिधा प्रोक्तः प्रत्याहारः स कथ्यते ॥ चित्तोपसंहृतिर्या तु विषयेभ्यश्च योगिनः ॥११॥ आरम्भेवात्र मनसः स्थापनं धारणं स्मृतम् ॥ तैलधारावदच्छिन्नज्ञानसन्तानलक्षणम् ॥१२॥ ध्यानं स्यादात्मविज्ञानं ज्ञातृज्ञेयभिदात्मदात्मकम् ॥ ज्ञातुर्ज्ञेयस्य बुद्धेश्च भेदज्ञानं यदा न हि ॥ १३ ॥ परमानन्दजनने परानन्दे चिदात्मनि ॥ मनो यदा महायोगं

समाधिर्गीयते तदा ॥१४॥ एवमभ्यस्य मेधावी पञ्चकालपरायणः ॥
तत्तत्कालविधानोक्तमाचारं च समाचरेत् ॥१५॥

पुरुषके निषिद्धाचारसे निवृत्ति अथवा त्याग ही यम कहलाता है। स्वाध्याय ही नियम कहलाता है। स्वस्तिकादि आसन ही आसन कहे जाते हैं। रेचक, पूरक तथा कुम्भक यह जो सुना है उसीको तीन प्रकारका प्राणायाम कहा गया है। योगियोंकी चित्तवृत्तिका विषयोंसे उपसंहार ही प्रत्याहार कहलाता है और अपनी आत्मामें ही मनकी जो स्थापना है वही धारणा कही जाती है। तेलकी धाराके समान अविच्छिन्न ज्ञानधाराका नाम ध्यान है; जिसमें ज्ञाता, ज्ञान तथा ज्ञेय ऐसा भेद रहता है। जब ज्ञाता, ज्ञान, और ज्ञेय इस प्रकार भेदज्ञान नहीं रह जाय, परमानन्दको उत्पन्न करनेवाले, परानन्द चैतन्य-रूप परमात्मामें जब मन बिलकुल लग जाय तब वही महायोग समाधि कहलाता है। इस प्रकार बुद्धिमान पञ्चकालपरायण होकर अभ्यास करता हुआ, उन-उन समयोंके कर्तव्य आचारोंका आचरण करे ॥१५॥

सायङ्काले प्रतिदिनं योगं कुर्याद्विचक्षणः ॥ विविक्तदेशे की-
टादिसर्वबाधाविवर्जिते ॥१६॥ मृदुआसने सुखासीनः स्वस्तिकाद्यासने
तथा ॥ ऋजुकायशिरोग्रीवो नासाग्रन्यस्तलोचनः ॥१७॥ इडया
वायुमाकृष्य कुम्भयेच्च शनैःशनैः उद्बोध्य कुण्डलीं सुप्तां सुषु-
म्णायां प्रवेशयेत् ॥१८॥

एकान्त तथा कीड़े, कांटे आदि बाधारहित स्थानमें मुलायम आसनपर सुखपूर्वक स्वस्तिकादि आसनमें बैठकर शरीर, मस्तक तथा गर्दन सीधा रखकर, नासिकाग्रपर त्राटक लगाये, इड़ा नाड़ीसे वायु खींचकर धीरे-धीरे रोके, सुषुम्ना नाड़ीमें सोई हुई कुण्डलनी (चक्र) को जगाकर प्रतिदिन बुद्धिमान पुरुष सन्ध्या समय योग करे।

यदा तु योगिनो देहे जिहासा वर्तते तदा ॥ ओमित्युच्चारये-
द्योगी वेङ्कटेशमनुस्मरन् ॥१९॥ ब्रह्मरन्ध्राद्विनिर्गच्छन्प्रविशेदर्चि-
राकृतिम् ॥ अर्चिरादिकमार्गेण प्रविश्य परमं पदम् ॥२०॥ सायु-
ज्यं वेङ्कटेशस्य लब्ध्वानन्दी भवेच्चिरम् ॥

जब योगियोंको शरीर छोड़नेकी इच्छा हो, तब श्रीवेंकटेश भगवान्का स्मरण कर 'ओ३म्' ऐसा उच्चारण करे तथा ब्रह्मरन्ध्रसे बाहर निकलते हुए अर्चिराकृति मार्गमें प्रवेश करे और अर्चिरादिक मार्गोंसे परम पदमें प्रवेश कर श्रीवेङ्कटेश भगवान्का सायुज्य लाभकर बहुत कालतक आनन्द भोगी हो जाय ॥२१॥

यदि स्याद्वेङ्कटेशस्य कैङ्कर्ये धीर्बलीयसी ॥२१॥ तदा योगं स्थिरः कुर्यादुपदेशाद् गुरोः स्वयम् ॥ पूर्वोक्तेनैव मार्गेण योगं कुर्याद्विचक्षणः ॥२२॥ इडया वायुमाकृष्य सुषुम्णायां प्रवेशयेत् ॥ अर्चिषा सह कोष्ठाग्नेः प्रविशेद् हृदयाम्बुजम् ॥२३॥ तत्रस्थं केशवं बुध्वा शङ्खचक्रगदाधरम् ॥ आज्ञास्थानमतीत्यैवं भ्रूमध्यं प्रविशेत्सुधीः॥२४॥नीवारशूकवत्सूक्ष्मं तत्र पश्येच्छ्रियः पतिम् ॥ सहस्रपत्रकमलमध्यस्थं चन्द्रमण्डलम् ॥२५॥ तत्र पश्येद्रमाधीशं सुराधीशं सुधात्मकम् ॥

यदि श्रीवेङ्कटेश भगवानकी सेवाके लिये बलवती इच्छा हो तो स्वयं गुरुका उपदेशसे स्थिर होकर योग करे। विचक्षण या विद्वान पूर्वोक्त ही मार्गसे योग करे। इडा नाड़ीसे वायुको खींचकर सुषुम्ना नाड़ीमें प्रवेश करावे। जाठराग्निकी ज्वालाको हृदय-कमलमें प्रवेश करावे। वहांपर स्थित शंख, चक्र, गदाधारी, केशव भगवानको देखकर इसी प्रकार आज्ञास्थान ( चक्र विशेष ) को पारकर वह बुद्धिमान् योगी भ्रूमध्यमें प्रवेश करे। वहाँ नीवार (धान्य विशेष)के अग्रभागके समान सूक्ष्म श्रीलक्ष्मीपति भगवानका दर्शन करे और हजार दल कमलके मध्यमें वर्तमान जो चन्द्रमण्डल है, उसमें सुराधीश, अमृत स्वरूप श्रीरमापति भगवानके दर्शन करे ॥२५॥

तत्सङ्कल्पाच्चन्द्रबिम्बात्स्रवत्पीयूषबिन्दुना ॥२६॥ अन्तर्बहिस्तथा व्याप्तं स्वस्य देहं विचिन्तयेत् ॥ सुषुम्णायास्तथा मार्गादवरुह्य शनैः शनैः॥२७॥ प्राणादीन् स्थापयेद्वायौ तत्तत्स्थानेषु पूर्ववत् ॥ एवं च प्रत्यहं कुर्वन्सन्ध्यामध्यमरात्रिषु ॥२८॥ विना हस्तेन कुर्वीत वायोर्धारणमात्मनि ॥ शरीरादधिकं वायुं द्वादशाङ्गुलमानकम् ॥२९॥ शरीरेण समं कुर्यान् न्यूनं वा वायुमात्मनि ॥ एवमभ्यासयोगेन वज्रकायो भवेन्नरः ॥३०॥ कालमृत्युं विनिर्जित्य जीवेदाचन्द्रतारकम् ॥

उनके संकल्पसे चन्द्रबिम्बसे चूता हुआ अन्दर बाहर सब जगह अपना शरीर व्याप्त है—ऐसी भावना करे। पीछे सुषुम्ना मार्गसे धीरे २ नीचे उतारकर प्राणादि वायुओंको अपने अपने उन उन स्थानोंमें जैसे पहले थे वैसे ही ज्योंके त्यों रख दे। इसी प्रकार प्रतिदिन तीनों सन्ध्या प्रातः मध्याह्न तथा सायं और अर्द्ध रात्रिमें करता हुआ, बिना

हाथके ही आत्मामें वायुको धारण करे। शरीरके ऊपर बारह अंगुलतक निकलते हुए वायुको शरीरमें ही सम अथवा कम कर दे। इस प्रकारके योगाभ्याससे मनुष्य वज्रकाय हो जाता है तथा कालमृत्युको भी जीतकर चन्द्र तथा तारोंकी स्थितिपर्यन्त जीवित रहता है ॥३१॥

अथ सनकसनन्दनतीर्थमाहात्म्यम्

अस्य योगस्य विघ्नाश्चेद्भवन्ति बहवो भुवि ॥३१॥ अविघ्नयोगसिद्ध्यर्थं वेङ्कटाह्वयभूधरे ॥ अस्ति किञ्चित्सरः पुण्यं नाम्ना सनकनन्दनम् ॥३२॥ उत्तरे पापनाशस्य क्रोशार्धे सिद्धसेविते ॥ अतिगोप्यं न तत्केऽपि जानन्ति मनुजा भुवि ॥३३॥ मार्गशीर्षे सिते पक्षे द्वादश्यामरुणोदये ॥ स्वामिपुष्करिणीतीर्थे स्नात्वा नियतमानसः ॥३४॥ त्रयोदशीं समारभ्य स्नायात्सनकनन्दने ॥ स्नात्वा तु विमलो वेङ्कटाद्रिपतेः पुनः ॥३५॥ श्रीमदष्टाक्षरं मन्त्रं जपेदयुतमन्वहम् ॥३६॥

अथ सनकसनन्दनतीर्थका माहात्म्य

इस भूमिमें योगाभ्यास करनेमें अनेक प्रकारके विघ्न यदि हों, तो बिना विघ्नके योगसिद्धिके लिये, वेङ्कट नामक पर्वतपर कोई सनकसनन्दन नामक पुण्य तालाब है, जो पापनाशक तीर्थसे आधे कोस उत्तरमें सिद्ध तथा मुनिगणोंसे सेवित अति गोप्य है, जिसको संसारमें कोई भी मनुष्य नहीं जानता, अगहन मासके शुक्ल पक्षमें द्वादशीको अरुणोदयके समय दृढ़मन होकर स्वामिपुष्करिणीतीर्थमें स्नान कर, त्रयोदशीसे आरम्भ कर उस सनकसनन्दन तीर्थमें स्नान करे। वहां स्नान कर निर्मल हो, पुनः वेङ्कटाद्रिपति भगवान्के श्रीमत् अष्टाक्षर महामंत्रका प्रतिदिन दस हजार बार जप करे ॥३६॥

अथ कायरसायनतीर्थमाहात्म्यम्

पश्चात्समभ्यसेद्योगं ततः सिद्धो भविष्यति ॥ रहस्यं तत्समीपेऽस्ति तीर्थं कायरसायनम् ॥ ३७ ॥ तस्य पानात्तु देहोऽपि शुद्धो भवति तत्क्षणात् ॥ यत्किंचित्पाण्डुपुत्रं तु परीक्षार्थं विनिक्षिपेत् ॥३८॥ तस्मिंस्तीर्थे क्षणादेव श्यामं भवति शोभनम् ॥ शिलया पिहितं तत्तु योगिभिः सनकादिभिः ॥३९॥ महात्मनां

पुण्यवतां दर्शनं हि ददाति तत् ॥ येन केन प्रकारेण कृत्वा देहं दृढं बुधः ॥४०॥ कैंकर्यमेव कुर्वीत वेङ्कटेशस्य सर्वदा ॥ स्वरूपमात्मनो यस्मात्कैंकर्यं शेषिणो हरेः ॥ ४१ ॥ कैंकर्यहीनः पुरुषः स्वामिद्रोही न संशयः तस्मादेव तु कुर्वीत नित्यं नैमित्तिकं बुध ः॥४२॥ अन्यच्च प्रीतिकर्मापि यत्तु शास्त्रैरनिन्दितम् ॥ इत्युक्तं प्राग्वराहेण धरण्यै वेङ्कटाचले ॥४३॥

### अथ कायरसायनतीर्थका माहात्म्य

पीछे योगका अभ्यास करे तो सिद्ध हो जाय। उसीके समीप परम गुह्य कायरसायनतीर्थ है। उसका जल पान करनेसे तत्क्षण देह भी शुद्ध हो जाती है। यदि कोई पीली पत्ती परीक्षार्थ उसमें डाली जाय तो उस तीर्थमें वह क्षणमात्रमें ही श्याम तथा सुन्दर हो जाती है। सनकादि योगियोंने उसको पत्थरकी चट्टानसे छिपा दिया है। पुण्यात्मा महात्माओंको ही वह दर्शन देता है। जिस किसी भी उपायसे बुद्धिमान शरीरको दृढ़ कर श्रीवेङ्कटेश भगवान्की सदा सेवा करता रहे; क्योंकि शेषीरूप भगवान्का दासत्व ही जीवका स्वरूप है। कैंकर्य्यसे हीन पुरुष स्वामीका द्रोही है, इसमें सन्देह नहीं। इसीलिये विद्वान नित्य तथा नैमित्तिक कर्मोंको अवश्य ही करता रहे; और भी अपनी प्रसन्नताके साधक जो कर्म हैं उनको भी करे, जो शास्त्रोंमें निन्दित न हों। यही पहले श्रीवराह भगवान्ने वेङ्कटाचल पर्वतपर श्रीपृथ्वीदेवीसे कहा था ॥४३॥

शरीरधारणं भोगो ज्ञानं सामर्थ्यमेव च ॥ क्षेत्रं गृहं धनं धान्यं यच्चान्यदुपकल्पितम् ॥४४॥ सर्वं वेङ्कटनाथस्य कुर्यात्स्वाधीनमञ्जसा ॥ विनश्वरमिदं सर्वं जगत्पश्येद्धि बुद्धिमान् ॥४५॥

शरीरका धारण करना, भोग, ज्ञान, सामर्थ्य, खेत, घर, धनधान्य तथा अन्यान्य जो कुछ साधन इकट्ठे किये गये हों, बुद्धिमान मनुष्य उन सभी चीजोंको तुरन्त श्रीवेङ्कटेश भगवान्के अधीन कर दे और इस सारे जगतको नाशवान जाने ॥४५॥

निरये पापकारी तु पतत्येव न संशयः ॥ पुण्यकृत्सुखमाप्नोति ध्रुवमित्येव बुद्धिमान् ॥४६॥ चिन्तयेत्सततं योगी चित्ते वेङ्कटनायकम् ॥ धर्मशास्त्रं सदा पश्येद् गुरुशुश्रूषणे रतः ॥४७॥ गृहस्थः स्वेषु दारेषु रमेद्योगी जितेन्द्रियः ॥ साधूनेव सदा योगी पृच्छेद्धै

हितमात्मनः ॥४८॥ विचारयेच्च वेदार्थान्सदा वेदान्तमभ्यसेत् ॥ बहुनेह किमुक्तेन विहितं नैव सन्त्यजेत् ॥४९॥ निषिद्धं नानुतिष्ठेद्धि सारोऽयं तत्त्वसङ्ग्रहः ॥५०॥

इति श्रीवाराहपुराणे श्रीवेङ्कटाचलमाहात्म्ये अष्टाङ्गयोगस्वरूपादिवर्णनं नाम षट्त्रिंशोऽध्यायोऽष्टाविंशः ॥२८॥

पापी अवश्य नरकमें गिरता है तथा पुण्यात्मा निश्चय ही सुख पाता है, इसमें संशय नहीं—ऐसा जानकर योगी श्रीवेङ्कटनायक भगवान्‌का चित्तमें सदा चिन्तन करे। गुरुसेवामें निरत रहकर धर्मशास्त्रोंको सदा देखा करे। योगी यदि गृहस्थाश्रमवाले हो, तो जितेन्द्रिय होकर अपनी ही स्त्रीसे रमण करे तथा साधुओंसे ही सदा अपनी हितवार्ता पूछता रहे। वेदों तथा वेदान्तोंका अर्थ सदा विचार करता रहे विशेष यहाँ कहनेसे क्या होगा? शास्त्रोंमें विहित कर्मोंको कभी न छोड़े तथा धर्मशास्त्रोंमें निषिद्ध कर्मोंको कभी न करे। यही धर्मोंका सार या तत्त्वका संग्रह है ॥५०॥

इति अष्टविंशोऽध्यायः ॥२८॥

## ऊनत्रिंशोऽध्यायः ॥२९॥

श्री वेङ्कट भगवान्‌का, अष्टोत्तर शत नाम।
पूरक सर्वाभिष्टके, मुक्ति धर्म्म धन काम ॥१॥
शेष कथित यह कपिलसे, सुना सूत सर्वज्ञ।
तेहि पुनि मुनि वृन्दन कही, नाम ईश परमज्ञ ॥२॥

अथ श्रीवेङ्कटेशाष्टोत्तरशतनामावलिः

*मुनय ऊचुः—*

सूत सर्वार्थतत्त्वज्ञ सर्ववेदान्तपारग ॥ येन चाराधितः सद्यः श्रीमद्वेङ्कटनायकः ॥१॥ भवत्यभीष्टसर्वार्थप्रदस्तद् ब्रूहि नो मुने॥

पुण्यवतां दर्शनं हि ददाति तत् ॥ येन केन प्रकारेण कृत्वा देहं दृढं बुधः ॥४०॥ कैंकर्यमेव कुर्वीत वेङ्कटेशस्य सर्वदा ॥ स्वरूपमात्मनो यस्मात्कैंकर्यं शेषिणो हरेः ॥ ४१ ॥ कैंकर्यहीनः पुरुषः स्वामिद्रोही न संशयः तस्मादेव तु कुर्वीत ।नित्यं नैमित्तिकं बुध ः॥४२॥ अन्यच्च प्रीतिकर्मापि यत्तु शास्त्रैरनिन्दितम् ॥ इत्युक्तं प्राग्वराहेण धरण्यै वेङ्कटाचले ॥४३॥

## अथ कायरसायनतीर्थका माहात्म्य

पीछे योगका अभ्यास करे तो सिद्ध हो जाय। उसीके समीप परम गुह्य कायरसायनतीर्थ है उसका जल पान करनेसे सत्वर देह भी शुद्ध हो जाती है। यदि कोई पीली पत्ती परीक्षार्थ उसमें डाली जाय तो उस तीर्थमें वह क्षणमात्रमें ही श्याम तथा सुन्दर हो जाती है। सनकादि योगियोंने उसको पत्थरकी चट्टानसे छिपा दिया है। पुण्यात्मा महात्माओंको ही वह दर्शन देता है। जिस किसी भी उपायसे बुद्धिमान शरीरको दृढ़ कर श्रीवेङ्कटेश भगवान्‌की सदा सेवा करता रहे; क्योंकि शेषीरूप भगवान्‌का दासत्व ही जीवका स्वरूप है। कैंकर्य्यसे हीन पुरुष स्वामीका द्रोही है, इसमें सन्देह नहीं। इसीलिये विद्वान नित्य तथा नैमित्तिक कर्मोंको अवश्य ही करता रहे, और भी अपनी प्रसन्नताके साधक जो कर्म हैं उनको भी करे, जो शास्त्रोंमें निन्दित न हों। यही पहले श्रीवराह भगवान्‌ने वेङ्कटाचल पर्वतपर श्रीपृथ्वीदेवीसे कहा था ॥४३॥

शरीरधारणं भोगो ज्ञानं सामर्थ्यमेव च ॥ क्षेत्रं गृहं धनं धान्यं यच्चान्यदुपकल्पितम् ॥४४॥ सर्वं वेङ्कटनाथस्य कुर्यात्स्वाधीनमञ्जसा ॥ विनश्वरमिदं सर्वं जगत्पश्येद्धि बुद्धिमान् ॥४५॥

शरीरका धारण करना, भोग, ज्ञान, सामर्थ्य, खेत, घर, धनधान्य तथा अन्यान्य जो कुछ साधन इकट्ठे किये गये हों, बुद्धिमान मनुष्य उन सभी चीजोंको तुरन्त श्रीवेङ्कटेश भगवान्‌के अधीन कर दे और इस सारे जगतको नाशवान जाने ॥४५॥

निरये पापकारी तु पतत्येव न संशयः ॥ पुण्यकृत्सुखमाप्नोति ध्रुवमित्येव बुद्धिमान् ॥४६॥ चिन्तयेत्सततं योगी चित्ते वेङ्कटनायकम् ॥ धर्मशास्त्रं सदा पश्येद् गुरुशुश्रूषणे रतः ॥४७॥ गृहस्थः स्वेषु दारेषु रमेद्योगी जितेन्द्रियः ॥ साधूनेव सदा योगी पृच्छेद्धि

नाम्नामष्टशतस्यास्य ऋषिर्ब्रह्मा प्रकीर्तितः ॥ छन्दोऽनुष्टुप्तथा
देवो वेङ्कटेश उदाहृतः ॥१०॥ नीलगोक्षीरसम्भूतो वीजामित्यु-
च्यते वुधैः ॥ श्रीनिवासस्तथा शक्तिर्हृदयं वेङ्कटाधिपः ॥११॥
विनियोगस्तथाऽभीष्टसिध्यर्थे च निगद्यते ॥

इन अष्टोत्तर शत नामोंके ब्रह्माजी ऋषि कहे जाते हैं। इनका छन्द अनुष्टुप और देवता श्रीवेंकटेश हैं और ज्ञानियोंने इनका बीज "नीलगोक्षीर सम्भूतम्" बताया है। "श्रीनिवास' इनकी शक्ति और "वेंकटाधिप" हृदय हैं एवं विनियोग "इसका अभीष्ट सिद्ध्यर्थं" ही माना गया है ॥१२॥

ॐ नमो वेङ्कटेशाय शेषाद्रिनिलयाय च ॥१२॥ वृषदृग्गोच-
रायाथ विष्णवे सततं नमः ॥ * सदञ्जनगिरीशाय वृषाद्रिप-
तये नमः ॥ मेरुपुत्त्रगिरीशाय सरः स्वामितटीजुषे ॥ १३ ॥ कु-
माराकल्पसेव्याय वज्रदृग्विषयाय च ॥ सुवर्चलासुतन्यस्तसेना-
पत्यभराय च ॥ १४ ॥ रामाय पद्मनाभाय सदा वायुस्तुताय च ॥
त्यक्तवैकुण्ठलोकाय गिरिकुञ्जविहारिणे ॥१५ ॥ हरिचन्दनगोत्रे
न्द्रस्वामिने सततं नमः ॥ शङ्खराजन्यनेत्राब्जविषयाय नमो
नमः ॥१६॥ वसूपरिचरत्रात्रे कृष्णाय सततं नमः ॥ अब्धिकन्या-
परिष्वक्तवक्षसे वेङ्कटाय च ॥१७॥

१ ॐ वेङ्कटेशाय—श्रीवेङ्कटेशाय नमः। २ ॐ शेषाद्रिनिलयाय—श्री—नमः। ३ ॐ वृषदृग्गोचराय—श्री—नमः। ४ ॐ विष्णवे—श्री—नमः। ५ * ॐ सदञ्जनगिरीशायश्री—नमः। ६ ॐ वृषाद्रिपतये—श्री—नमः। ७ ॐ मेरुपुत्त्रगिरीशाय—श्रीवेङ्कटेशाय नमः। ८ ॐ सर स्वामितटीजुषे—श्री—नमः। ९ ॐ कुमाराकल्पसेव्याय श्री—नमः। १० ॐ वज्रदृग्विषयाय—श्री—नमः। ११ ॐ सुवर्चलासुतन्यस्तसेनापत्यभराय—श्री—नमः— १२ ॐ रामाय—श्री—नमः। १३ ॐ पद्मनाभाय—श्री—नमः। १४ ॐ सदा वायुस्तुताय—श्री—नमः। १५ ॐ त्यक्तवैकुण्ठलोकाय—श्री—नमः। १६ ॐ गिरिकुञ्जविहारिणे—श्री—नमः। १७ ॐ हरिचन्दनगोत्रेन्द्र-स्वामिने—श्री—नमः। १८ ॐ शङ्खराजन्यनेत्राब्जविषयाय—श्री—नमः। १९ ॐ वसूपरिचरत्रात्रे—श्री—नमः।

---

*नामद्वयमिदमान्ध्रलिपि श्रीवेङ्कटाचलमाहात्म्यानुसारेण योजितम्। देवनागरलिपि श्रीवेङ्कटाचलमाहात्म्ये तु प्राचीने न नामद्वयमिदं दृश्यते।

इति पृष्टस्तदा सूतो ध्यात्वा स्वात्मनि तत्क्षणात् ॥२॥ उवाच मु-
निशार्दूलान् श्रूयतामिति वै मुनिः ॥

श्रीवेंकटेशाष्टोत्तरशतनामावलि ।

मुनियोंने कहा—सर्वार्थ तत्वज्ञ, सर्व वेदान्तपारंगत हे सूतजी! जिनकी आराधना करनेसे सर्वाभीष्ट तथा सकल कामनाएं पूर्ण होती हैं, उन्हीं श्रीवेङ्कटेश भगवान्‌के विषयमें कहिये। यह सुनकर श्रीसूतजीने कुछ देरतक आत्मध्यान कर मुनिशार्दूलोंसे कहा कि हे महामुनियो! आप सब ध्यानपूर्वक सुनें ॥२॥

सूत उवाच—

अस्ति किञ्चिन्महद्गोप्यं भगवत्प्रीतिकारकम् ॥३॥ पुरा शेषेण
कथितं कपिलाय महात्मने ॥ नाम्नामष्टशतं पुण्यं पवित्रं पापना-
शनम् ॥४॥ आदाय हेमपद्मानि स्वर्णदीसम्भवानि च ॥ ब्रह्मा तु
पूर्वमभ्यर्च्य श्रीमद्वेङ्कटनायकम् ॥५॥ अष्टोत्तरशतैर्दिव्यैर्नामभि-
र्मुनिपूजितैः ॥ स्वाभीष्टं लब्धवान्ब्रह्मा सर्वलोकपितामहः ॥६॥
भवद्भिरपि पद्मैश्च समर्च्यस्तैश्च नामभिः ॥

श्रीसूतजी कहने लगे—प्राचीन कालमें शेष भगवान्‌ने श्रीकपिलमुनिसे एक अत्यन्त गोपनीय तथा भगवान्‌का परम प्रीतिकारक विषय कहा था। वह परम पवित्र, पुण्योत्पादक, पापनाशक, भगवान्‌की अष्टोत्तरशत-नामावली है। सर्वलोकपितामह ब्रह्माजीने पहले आकाशगङ्गासे स्वर्णके समान चमकनेवाले कमलोंको मंगाकर भगवान् श्रीवेंकटेशकी मुनिपूजित दिव्य अष्टोत्तरशत नामोंसे पूजा कर अपना अभीष्ट प्राप्त किया। आपलोग भी पद्म तथा अष्टोत्तरशतनामावलीसे उनकी पूजा करें ॥३॥

तेषां शेषनगाधीशमानसोल्लासकारिणाम् ॥७॥ नाम्नामष्टशतं
वक्ष्ये वेङ्कटाद्रिनिवासिनः ॥ आयुरारोग्यदं पुंसां धनधान्यसुख-
प्रदम् ॥८॥ ज्ञानप्रदं विशेषेण महदैश्वर्यकारकम् ॥ अर्चयेन्नामभि-
र्दिव्यैर्वेङ्कटेशपदाङ्कितैः ॥९॥

उस शेषपर्वताधीश श्रीवेङ्कटेश भगवान्‌के मनको प्रसन्न कर देनेवाले श्रीवेङ्कटाधीश भगवान्‌के नामोंके अष्टोत्तरशतको कहता हूं, जो आयु, आरोग्य, धन-धान्य, सुख देनेवाला तथा विशेष रूपसे ज्ञानदायक और महान ऐश्वर्यकारक है। इन्हीं दिव्य वेंकटेशपदाङ्कित अष्टोत्तरशतनामोंसे अर्चना करना उचित है ॥४॥

४२ ॐ वामदेवप्रियाय—श्री—नमः । ४४ ॐ जनकेष्टप्रदाय—श्री—नमः । ४५ ओं मार्कण्डेयमहातीर्थजातपुण्यप्रदाय—श्री—नमः ४६ ॐ वाक्पतिब्रह्मदात्रे—श्री—नमः । ४७ ॐ चन्द्रलावण्यदायिने—श्री—नमः । ४८ ॐ नारायणनगेशाय श्रीवेङ्कटेशाय नमः । ४९ ॐ ब्रह्मक्लृप्तोत्सवाय—श्री—नमः । ५० ॐ शङ्खचक्रवरानम्रलसत्करतलाय—श्री—नमः । ५१ ॐ द्रवन्मृगमदासक्तविग्रहाय—श्री—नमः । ५२ ॐ केशवाय—श्री—नमः । ५३ ॐ नित्ययौवनमूर्तये—श्री—नमः ।

अर्थितार्थप्रदात्रे च विश्वतीर्थाघहारिणे ॥ तीर्थस्वामिसरःस्नातजनाभीष्टप्रदायिने ॥२८॥ कुमारधारिकावासस्कन्दाभीष्टप्रदाय च ॥ जानुद्घ्नसमुद्भूतपोत्रिणे कूर्ममूर्तये ॥२९॥ किन्नरद्वन्द्वशापान्तप्रदात्रे विभवे नमः ॥ वैखानसमुनिश्रेष्ठपूजिताय नमो नमः ॥३०॥ सिंहाचलनिवासाय श्रीमन्नारायणाय च ॥ सद्भक्तनीलकण्ठार्च्यनृसिंहाय नमो नमः ॥३१॥ कुमुदाक्षगणश्रेष्ठसेनापत्यप्रदाय च ॥ दुर्मेधःप्राणहर्त्रे च श्रीधराय नमो नमः ॥३२॥

५४ ॐ अर्थितार्थप्रदात्रे—श्री—नमः । ५५ ॐ विश्वतीर्थाघहारिणे—श्री—नमः । ५६ ॐ तीर्थस्वामिसरःस्नातजनाभीष्टप्रदाय—श्री—नमः ५७ ॐ कुमारधारिकावासस्कन्दाभीष्टप्रदाय—श्री—नमः । ५८ ॐ जानुदघ्नसमुद्भूतपोत्रिणे—श्री—नमः । ५९ ॐ कूर्ममूर्तये—श्री—नमः ६० ॐ किन्नरद्वन्द्वशापान्तप्रदात्र श्रीवेङ्कटेशाय नमः ६१ ॐ विभवे—श्री—नमः ६२ ॐ वैखानसमुनिश्रेष्ठपूजिताय—श्री—नमः । ६३ ॐ सिंहाचलनिवासाय—श्री—नमः । ६४ ओं श्रीमन्नारायणाय—श्री—नमः । ६५ ओं सद्भक्तनीलकण्ठार्च्यनृसिंहाय—श्री—नमः । ६६ ॐ कुमुदाक्षगण श्रेष्ठसेनापत्यप्रदाय—श्री—नमः । ६७ ॐ दुर्मेधःप्राणहर्त्रे—श्री—नमः ६८ ॐ श्रीधराय—श्री—नमः ।

क्षत्रियान्तकरामाय मत्स्यरूपाय ते नमः ॥ पाण्डवारिप्रहर्त्रे च श्रीकराय नमो नमः ॥ ३३ ॥ उपत्यकाप्रदेशस्थशङ्करध्यातमूर्तये ॥ रुक्माब्जसरसीकूललक्ष्मीकृततपस्विने ॥३४॥ लसल्लक्ष्मीकराम्भोजदत्तकल्हारकस्रजे ॥ शालग्रामनिवासाय शुकदृग्गोचराय च ॥३५॥ नारायणार्थिताशेषजनदृग्विषयाय च ॥ मृगयारसिकायाथ वृषभासुरहारिणे ॥३६॥ अञ्जनागोत्रपतये वृषभाचलवासिने ॥ अञ्जनासुतदात्रे च माधवीयाघहारिणे ॥३७॥

२० ॐ कृष्णाय—श्री—नमः। २१ ॐ अग्निकन्यापरिञ्जितवक्षसे श्रीवेङ्कटेशाय नमः। २२ ॐ —वेङ्कटाय—श्री —नमः ॥१७॥

सनकादिमहायोगिपूजिताय नमो नमः॥ देवजित्प्रमुखानन्त-दैत्यसङ्घप्रणाशिने ॥ १८ ॥ श्वेतद्वीपवसन्मुक्तपूजिताङ्घ्रियुगाय च॥ शेषपर्वतरूपत्वप्रकाशनपराय च ॥१९॥ सानुस्थापितताक्ष्यार्य ताक्ष्याचलनिवासिने॥ मायागूढविमानाय गरुडस्कन्धवासिने॥२०॥ अनन्तशिरसे नित्यमनन्ताक्षाय ते नमः॥ अनन्तचरणायाथ श्रीशैलनिलयाय च ॥ २१ ॥ दामोदराय ते नित्यं नीलमेघनिभाय च ॥ ब्रह्मादिदेवदुर्दर्शविश्वरूपाय ते नमः ॥२२॥

२३ ॐ सनकादिमहायोगिपूजिताय—श्री—नमः। २४ ॐ देवजित्प्रमुखानन्तदैत्यसङ्घप्रणाशिने—श्रीं—नमः। २५ ॐ श्वेतद्वीपवसन्मुक्तपूजिताङ्घ्रियुगाय—श्री—नमः। २६ ॐ शेषपर्वतरूपत्वप्रकाशनपराय—श्री—नमः। २७ ॐ सानुस्थापितताक्ष्यार्य—श्री—नमः। २८ ॐ ताक्ष्याचलनिवासिने—श्री—नमः। २९ ॐ मायागूढविमानाय—श्री—नमः। ३० ॐ गरुडस्कन्धवासिने—श्री—नमः। ३१ ॐ अनन्तशिरसे—श्री—नमः। ३२ ॐ अनन्ताक्षाय—श्री—नमः। ३३ ॐ अनन्तचरणाय—श्री—नमः। ३४ ॐ श्रीशैलनिलयाय—श्री—नमः ३५ ॐ दामोदराय श्रीवेङ्कटेशाय नमः। ३६ ॐ नीलमेघनिभाय—श्री—नमः। ३७ ॐ ब्रह्मादिदेवदुर्दर्शविश्व-रूपाय—श्री—नमः ॥२३॥

वैकुण्ठागतसद्धेमविमानान्तर्गताय च॥ अगस्त्याभ्यर्थिताशेषजनदृग्गोचराय च॥२३॥ वासुदेवाय हरये तीर्थपञ्चकवासिने॥ वामदेवप्रियायाथ जनकेष्टप्रदाय च ॥२४॥ मार्कण्डेयमहातीर्थ-जातपुण्यप्रदाय च ॥ वाक्पतिब्रह्मदात्रे च चन्द्रलावण्यदायिने ॥२५॥ नारायणनगेशाय ब्रह्मक्लृप्तोत्सवाय च॥ शङ्खचक्रवरा-नम्रलसत्करतलाय च ॥२६॥ द्रवन्मृगमदासक्तविग्रहाय नमो नमः॥ केशवाय नमो नित्यं नित्ययौवनमूर्तये ॥२७॥

३८ ॐ वैकुण्ठागतसद्धेमविमानान्तर्गताय—श्री—नमः। ३९ ॐ अगस्त्याभ्यर्थिताशेषजनदृग्गोचराय—श्री—नमः ४० ॐ वासुदेवाय—श्री—नमः। ४१ ॐ हरये—श्री—नमः। ४२ ॐ तीर्थपञ्चकवासिने—श्री—नमः।

अष्टोत्तरशतं नाम्नां चतुर्थ्या नमसान्वितम् ॥ यः पठेच्छृणु-
यान्नित्यं श्रद्धाभक्तिसमन्वितः ॥४५॥ तस्य श्रीवेङ्कटेशस्तु
प्रसन्नो भवति ध्रुवम् ॥ अर्चनायां विशेषेण ग्राह्यमष्टोत्तरं शत-
म् ॥४६॥ वेङ्कटेशाभिधेयैर्यो वेङ्कटाद्रिनिवासिनम् ॥ अर्चयेन्ना-
मभिस्तस्य फलं मुक्तिर्न संशयः ॥४७॥ गोपनीयमिदं स्तोत्रं स-
र्वेषां न प्रकाशयेत् ॥ श्रद्धाभक्तियुजामेव दापयेन्नामसंग्रहम् ॥४८॥
इति शेषेण कथितं कपिलाय महात्मने ॥ कपिलाख्यमहायोगि-
सकाशात्तु मया श्रुतम् ॥४९॥ तदुक्तं भवतामद्य सद्यः प्रीतिक-
रं हरेः ॥५०॥

इति श्रीवराहपुराणे श्रीवेङ्कटाचलमाहात्म्ये श्रीवेङ्कटेशाऽष्टोत्तरशतनामावलि कीर्तनं नामैकषष्टितमोऽध्यायोत्रैकोनत्रिंशत्तमः ॥२९॥

यही अष्टोत्तर शत श्रीभगवान्‌के नाम हैं। इनको चतुर्थी विभक्तिके साथ नमः शब्द तथा "श्रीवेंकटेशाय नमः" इसको भी मिलाकर जो कोई श्रद्धा तथा भक्तिके साथ पढ़े या सुने, उसपर श्रीवेंकटेश भगवान् अवश्य ही प्रसन्न होते हैं। किसी भी पूजामें इस अष्टोत्तर शतनामका पाठ अवश्य करना चाहिये। श्रीवेंकटेशके नामोंसे जो वेंकटपर्वत निवासी भगवान्‌की पूजा करते हैं, उसके फलस्वरूप अवश्य ही उनकी मुक्ति होती है; इसमें संशय नहीं। यह स्तोत्र परम गोपनीय है, इसे सबके सामने प्रकाश न करना चाहिये। जो परम श्रद्धालु तथा भक्त हों, उन्हें ही इस नामसंग्रहको देना चाहिये। श्रीशेष भगवान्‌ने यही स्तोत्र कपिल महात्माको सुनाया था। पुनः महर्षि कपिलजीसे मैंने सुना और अभी भगवान्‌के तुरन्त प्रीतिकारक उसी स्तोत्रको मैंने आप लोगोंसे कहा ॥५०॥

इति एकोनत्रिंशत्तमोऽध्यायः ॥२९॥

## त्रिंशोऽध्यायः ॥३०॥



अष्टोत्तर शत नामका, ऋषिगण सुनि परमार्थ।
वेङ्कट गिरिपर जा जुटे, वेङ्कटेश सेवार्थ ॥१॥

६९ ॐ क्षत्रियान्तकरामाय—श्री—नमः ७० ॐ मत्स्यरूपाय ··श्री--नमः ७१ ॐ पाण्डवारिप्रहर्त्रे--श्री---नमः ७२ ॐ श्रीकराय-----७३ श्री---नमः ॐ उपत्यकाप्रदेशस्थशङ्कराध्यातमूर्तये---७४ ॐ रुक्माब्जसरसीकूल-लक्ष्मीकृततपस्विने--श्री - नमः । ७५ ॐ लसल्लक्ष्मीकराम्भोजदत्तकह्लारकस्रजे---श्री---नमः । ७६ ॐ शालग्रामनिवासाय—श्री---नमः । ७७ ओं शुकदृग्गोचराय--श्री---नमः ७८ ॐ नारायणार्थिताशेषजनदृग्विषया-श्री---नमः ७९ ओं मृगयारसिकाय---श्री---नमः श्री ८० वृषभासुरहारिणे —श्री---नमः ८१ ओं अञ्जनागोत्रपतये श्री---नमः ८२ ओं वृषभाचलवासिने---श्री---नमः ८३ अञ्जनासुतदात्रे--श्री---नमः ८४ ओं माधवीयाघहारिणे श्री—नमः ।

प्रियङ्गुप्रियभक्षाय श्वेतकोलवराय च ॥ नीलधेनुपयोधारासेक
देहोद्भवाय च ॥३८॥ शंकरप्रियमित्राय चोलपुत्रप्रियाय च ॥ सुध-
र्मिणि सुचैतन्यप्रदात्रे मधुघातिने ॥३९॥ कृष्णाख्यविप्रवेदान्तदे-
शिकत्वप्रदाय च ॥ वराहाचलनाथाय बलभद्राय ते नमः ॥४०॥
त्रिविक्रमाय महते हृषीकेशाय ते नमः ॥ अच्युताय नमो नित्यं
नीलाद्रिनिलयाय च ॥४१॥ नमः क्षीराब्धिनाथाय वैकुण्ठाचलवा-
सिने ॥ मुकुन्दाय नमो नित्यमनन्ताय नमो नमः ॥४२॥

८५ ॐ प्रियङ्गुप्रियभक्षाय—श्री—नमः ८६ ॐ श्वेतकोलवराय—श्री—नमः । ८७ ॐ नीलधेनुपयोधारासेकदेहोद्भवाय—श्री—नमः । ८८ ओं शङ्करप्रियमित्राय श्रीवेङ्कटेशाय नमः । ८९ ॐ चोलपुत्रप्रियाय—श्री—नमः । ९० ओं सुधर्मिणीसुचैतन्यप्रदात्रे—श्री—नमः ९१ ॐमधुघातिने—श्री—नमः ९२ ओं कृष्णाख्यविप्रवेदान्तदेशिकत्वप्रदाय—श्री—नमः । ९३ ॐ वराहाचलनाथाय----श्री नमः । ९४ ॐ बलभद्राय—श्री—नमः ९५ ॐ त्रिविक्रमाय---श्री—नमः ९६ ओं महते---श्री---नमः ९७ ॐ हृषीकेशाय—श्री---नमः ९८ ॐ अच्युताय---श्री—नमः ९९ ॐ नीलाद्रिनिलयाय—श्री---नमः १०० ॐ क्षीराब्धिनाथाय श्रीवेङ्कटेशाय नमः । १०१ ॐ वैकुण्ठाचलवासिने--श्री--नमः १०२ ॐ मुकुन्दाय—श्री—नमः १०३ ॐ अनन्ताय—श्री—नमः ।

विरिञ्चाभ्यर्थितानीतसौम्यरूपाय ते नमः ॥ सुवर्णमुखरीस्ना-
तमनुजाभीष्टदायिने ॥४३॥ हलायुधजगत्तीर्थसमस्तफलदायिने ॥
गोविन्दाय नमो नित्यं श्रीनिवासाय ते नमः ॥४४॥

१०४ ॐ विरिञ्चाभ्यर्थितानीतसौम्यरूपाय—श्री—नमः १०५ ॐ सुवर्णमुखरीस्नातमनुजाभीष्टदायिने-श्री—नमः १०६ ॐ हलायुधजगत्तीर्थसमस्तफलदायिने—श्री—नमः १०७ ॐ गोविन्दाय—श्री—नमः १०८ ॐ श्रीनिवासाय—श्री—नमः ।

अष्टोत्तरशतं नाम्नां चतुर्थ्या नमसान्वितम् ॥ यः पठेच्छृणुयान्नित्यं श्रद्धाभक्तिसमन्वितः ॥४५॥ तस्य श्रीवेङ्कटेशस्तु प्रसन्नो भवति ध्रुवम् ॥ अर्चनायां विशेषेण ग्राह्यमष्टोत्तरं शतम् ॥४६॥ वेङ्कटेशाभिधेयैर्यो वेङ्कटाद्रिनिवासिनम् ॥ अर्चयेन्नामभिस्तस्य फलं मुक्तिर्न संशयः ॥४७॥ गोपनीयमिदं स्तोत्रं सर्वेषां न प्रकाशयेत् ॥ श्रद्धाभक्तियुजामेव दापयेन्नामसंग्रहम् ॥४८॥ इति शेषेण कथितं कपिलाय महात्मने ॥ कपिलाख्यमहायोगिसकाशात्तु मया श्रुतम् ॥४९॥ तदुक्तं भवतामद्य सद्यः प्रीतिकरं हरेः ॥५०॥

इति श्रीवराहपुराणे श्रीवेङ्कटाचलमाहात्म्ये श्रीवेङ्कटेशाऽष्टोत्तरशतनामावलि कीर्तनं नामैकषष्टितमोऽध्यायोऽत्रैकोनत्रिंशत्तमः ॥२९॥

यही अष्टोत्तर शत श्रीभगवान्‌के नाम हैं। इनको चतुर्थी विभक्तिके साथ नमः शब्द तथा "श्रीवेंकटेशाय नमः" इसको भी मिलाकर जो कोई श्रद्धा तथा भक्तिके साथ पढ़े या सुने, उसपे श्रीवेंकटेश भगवान् अवश्य ही प्रसन्न होते हैं। किसी भी पूजामें इस अष्टोत्तर शतनामका पाठ अवश्य करना चाहिये। श्रीवेंकटेशके नामोंसे जो वेंकटपर्वत निवासी भगवान्‌की पूजा करते हैं, उसके फलस्वरूप अवश्य ही उनकी मुक्ति होती है; इसमें संशय नहीं। यह स्तोत्र परम गोपनीय है, इसे सबके सामने प्रकाश न करना चाहिये। जो परम श्रद्धालु तथा भक्त हों, उन्हें ही इस नामसंग्रहको देना चाहिये। श्रीशेष भगवान्‌ने यही स्तोत्र कपिल महात्माको सुनाया था। पुनः महर्षि कपिलजीसे मैंने सुना और अभी भगवान्‌के तुरन्त प्रीतिकारक उसी स्तोत्रको मैंने आप लोगोंसे कहा ॥५०॥

इति एकोनत्रिंशत्तमोऽध्यायः ॥२९॥

## त्रिंशोऽध्यायः ॥३०॥



अष्टोत्तर शत नामका, ऋषिगण सुनि परमार्थ।
वेङ्कट गिरिपर जा जुटे, वेङ्कटेश सेवार्थ ॥१॥

बहु विधि प्रभु सेवा करी, दर्शन दिये सुरेश ।
ऋषिगण प्रभु विनती करी, तुष्ट हुए सर्वेश ॥२॥
प्रभु गिरि सेवा अटल फल, शौनक कृत गुण गान ।
सूत महर्षि लिखित यह, विस्तृत बहु विज्ञान ॥३॥
वेंकट अचल महात्मका, भाग यहां प्रथमान्त ।
श्री वाराह पुराणका, लिखा सूत ऋषि कान्त ॥४॥

## अथ महर्षीणां श्रीवेङ्कटेशसेवार्थं श्रीवेङ्कटाचलागमनम्

श्रीसूत उवाच—

ब्रूत यूयं पुनः श्रोतुं किमिच्छथ तपोधनाः ॥ वक्ष्यामि तदशेषं च नात्र कार्या विचारणा ॥१॥ इत्युक्ता मुनयः सर्वे प्रोचुरेवमिदं वचः ॥

### महर्षि लोगोंका वेंकटाचलपर आगमन

श्रीसूतजी बोले—हे ऋषिगण बोलिये, आपलोग अब और क्या सुनना चाहते हैं ? मैं उसे सम्पूर्णरूपसे कहूंगा । इसमें चिन्ता न करें । यह सुनकर सभी ऋषिवृन्दोंने यह वचन कहा ॥२॥

मुनय ऊचुः—

भगवन्भगवद्भक्तिक्षीरसागरचन्द्रमाः ॥२॥ वेङ्कटेशस्य माहात्म्यमुक्तं सूत त्वयाऽनघ ॥ विचित्रं तस्य चारित्रमौदार्यं निस्तुलं तथा ॥३॥ रहस्यानि च नामानि सम्यगस्माभिरेव हि ॥ श्रोत्राभ्यां पीतमेतत्तु वेङ्कटेशकथामृतम् ॥४॥ तस्माच्चक्षुर्द्वयस्यापि पिपासा तु गरीयसी ॥ अस्मांस्त्वमनुजानीहि सेवार्थं वेङ्कटेशितुः ॥५॥

मुनिगण बोले—हे भगवानकी भक्तिरूप क्षीरसागरके लिए चन्द्रमास्वरूप भगवन् सूतजी! श्रीवेंकटेशका माहात्म्य, उनका आश्चर्यमय चरित्र, निरुपम औदार्य, रहस्यभूत नामावली तथा कथारूपी अमृत आपने जो

सब अच्छी तरह कहा, उन सबोंको हमलोगोंने श्रवणपान किया। इसलिये इन आंखोंको भी उनके दर्शन करनेकी बड़ी उत्कण्ठा है, अतएव आप हमलोगोंको श्रीवेंकटेशकी सेवार्थ जानेकी आज्ञा दें।

रहस्यानि च नामानि शेषाद्रेश्च तदीशितुः॥ स्वामिपुष्करिणी-
तीर्थमाहात्म्यं च प्रकाशितम् ॥६॥ अत्यद्भुतं गिरेर्दिव्यं कलौ माहा-
त्म्यमेव तु ॥ श्रुतं च मुनिशार्दूल सम्यगस्माभिरेव हि ॥७॥
श्रोत्राभ्यां सम्यगापीतं वेङ्कटेशकथामृतम् ॥ इत्युक्तस्तु ततः
सूतः प्रोवाच मुनिपुंगवान् ॥८॥

आपने वेंकटाचल तथा श्रीवेङ्कटेशजीका रहस्य, नाम एवं स्वामिपुष्करिणीतीर्थका माहात्म्य भी प्रकाशित कर दिया है। कलियुगमें भगवानका अत्यद्भुत माहात्म्य हमलोगोंने आपसे पूर्णरूपेण सुन लिया, और इस तरह कानों द्वारा वेङ्कटेश कथामृतका अच्छी तरहसे पान किया। उनके ऐसा कहनेपर श्रीसूतजी पुनः उन मुनिपुंगवोंसे बोले ॥

गच्छध्वं मुनयो यूयं शनैः श्रीवेङ्कटाचलम् ॥ तत्र गत्वा गि-
रिं पुण्यं कृत्वा चापि प्रदक्षिणम् ॥९॥ स्नात्वा पर्यन्ततीर्थेषु नत्वा
पर्यन्तगान्सुरान् ॥
आरुह्य रत्नसानुं तं शुककोकिलमञ्जुलम् ॥१०॥ स्वामिपुष्करिणीं
पद्मवनवातेन रञ्जिताम् ॥ प्राप्य स्नात्वा च तत्तीर्थे प्रदक्षिणविधा-
नतः ॥११॥ परिसृत्य विमानञ्च दर्शनात्पापनाशनम् ॥ हृदयान-
न्दजननं पुलकोद्गमकारकम् ॥१२॥ प्रविश्य भूवराहं च नत्वा श्री-
वेङ्कटाधिपम् ॥ श्रीभूमिभ्यां मुदा युक्तं शङ्खचक्रवरायुधे ॥१३॥
दधानं पुण्डरीकाक्षं स्मयमानमुखाम्बुजम् ॥ दयामृततरङ्गाढ्य-
मन्दस्मितमनोहरम् ॥१४॥ सम्यग्दृष्ट्वा च नत्वा च स्तुत्वा ना-
मभिरेव च॥ अर्चयित्वा च कमलैर्लब्ध्वाऽभीष्टं च दुर्लभम् ॥१५॥
कृतकृत्या निवर्तध्वमित्युक्ता मुनयस्तथा॥ आमन्त्र्य सूतं ते सर्वे
प्रहृष्टाश्च प्रतस्थिरे ॥१६॥

हे मुनिगण! आप सब वेङ्कटाचलपर धीरे-धीरे जावें और वहां जाकर उस पवित्र पर्वतकी प्रदक्षिणा कर, पुनः प्रान्तस्थानमें स्थित सब तीर्थोंमें स्नान कर उस स्थानमें रहनेवाले देवताओंको प्रणाम कर, रत्नमय तटवाले

शुक-कोयल-कूजित उस पर्वतपर चढ़कर, पद्मवायुरंजित स्वामिपुष्करिणीमें प्रदक्षिणाविधिसे स्नान कर, दर्शन-मात्रसे ही पापनाशक, हृदयानन्ददायक तथा रोमांचकारक दिव्य विमानमें प्रदक्षिणापूर्वक प्रवेश कर,वहां भूवराहको प्रणाम कर, श्रीभूमिसे युक्त, शंख-चक्र-वरायुध धारण किये पुण्डरीकाक्ष, हंसते हुए मुखकमल युक्त, दयामृतसागर कृपातरङ्गके कारण, मनोहर एवं मन्द हास्ययुक्त मुखवाले भगवान् श्रीवेङ्कटेशके दर्शन तथा प्रणाम करके, नामावली-पाठसे स्तुति कर, कमलोंसे पूजा कर, अत्यन्त दुर्लभ-दुर्लभ अपने अभीष्ट प्राप्त कर, कृतकृत्य हो पुनः लौट आवें। यह सुनकर मुनियोंने श्रीसूतजीकी अनुमति लेकर तथा परम आनन्दित होकर प्रस्थान किया ॥१६॥

भरद्वाजः कौशिकश्च जावालिरथ काश्यपः ॥ क्रतुर्दक्षः पुलस्त्यश्च गौतमः पुलहस्तथा ॥१७॥ आङ्गीरसो देवलश्च देवदर्शन एव च ॥ कौत्सः कण्वो मृकण्डुश्च शतानन्दो महामुनिः ॥१८॥ मैत्रेयप्रमुखास्तत्र सङ्गता ये तपोधनाः ॥ घुष्यन्तः सकृशश्चोच्चैर्गोविन्देति पुनः पुनः ॥१९॥ तीर्त्वा भागीरथीं पश्चाद्गौतमीं कृष्णवेणिकाम् ॥ तत्र तत्र महानद्यां स्नात्वा स्नात्वा तपोधनाः ॥२०॥ वेङ्कटाद्रिं समागत्य तप्तजाम्बूनदात्मकम् ॥ सर्वतीर्थमयं पुण्यं सर्वसिद्धनिषेवितम् ॥२१॥ मदमञ्जुलमायूरकेकास्वनमनोहरम् ॥ दिव्यनिर्झरसम्पूर्णं फलपुष्पैर्द्रुमैर्युतम् ॥२२॥ अनतिक्रम्य सूतोक्तसेवाक्रममिमे बुधाः ॥ चक्रुः श्रीवेङ्कटेशस्य सेवां परमपावनीम् ॥२३॥

महामुनि भरद्वाज, कौशिक, जावालि, कश्यप, क्रतु, दक्ष, पुलस्त्य, गौतम, पुलह, आंगिरस, देवल, देवदर्शन, कौत्स, कण्व, मृकण्डु, शतानन्द तथा मैत्रेय प्रमुख जितने तपोधन महर्षिवृन्द वहां गये थे, सभी खूब ऊंचे स्वरमें 'गोविन्द'—ऐसा नामका घोष बारम्बार करते हुए, भागीरथी पार कर, पीछे गौतमी-कृष्णवेणिका आदि उन स्थानोंकी महा नदियोंमें स्नान कर, तप्तस्वर्णका बना हुआ सर्वतीर्थमय, पवित्र, सभी सिद्धोंसे सेवित, मन्द-मन्द मयूरकी ध्वनिसे मुखरित, दिव्य झरनापूर्ण, फल, फूल, द्रुमादिसे भरा हुआ, परम मनोहर तथा शोभायमान वेङ्कटाद्रिपर आकर, श्रीसूतोक्त सेवाक्रमको न छोड़कर श्रीवेङ्कटेशकी परम पावनी सेवा करने लगे ॥२३॥

स्नानं मन्त्रैश्च कुर्वन्तो निर्झरेषु सरस्सु च ॥ पश्यन्तस्तानि रम्याणि सानूनि मणिमन्ति च ॥२४॥ शृण्वन्तः श्रोत्ररम्याणि पक्षिणां वचनान्यपि ॥ गायन्तः सामगानानि पठन्तः स्तुतिसञ्च-

यम् ॥२५॥ नृत्यन्तः सम्भ्रमात्सर्वे क्ष्वेलन्तश्च तपोधनाः ॥ उत्पतन्तः
पतन्तश्च हर्षावेशवशं गताः ॥२६॥ गिरिप्रदक्षिणं सम्यक्कुर्वन्तस्ते
शनैः शनैः ॥ स्नात्वा कापिलतीर्थे च दृष्ट्वा नत्वा शिवं गिरिम् ॥२७॥
आरुह्य मेरुशृङ्गाभं सिद्धगन्धर्वसेवितम् ॥ अत्यद्भुताद्रत्नसानोर्हे-
माद्रेरद्भुतो गिरिः ॥२८॥ अयं ह्यभूतपूर्वो हि श्रीमद्वेङ्कटभूधरः ॥
इति ब्रुवन्तस्ते सर्वे ददृशुर्दिव्यमुत्तमम् ॥२९॥

उन लोगोंने झरनों तथा तालाबोंमें मन्त्र पढ़-पढ़कर स्नान करते-करते, ऊंचे-ऊंचे शिखरवाले मणिमय रम्य पर्वतोंको देखते-देखते, कर्णानन्ददायक मधुर चिड़ियोंके मीठे गानोंको सुनते-सुनते, सामगान गाते-गाते, अनेक स्तुति पाठ करते-करते, सम्भ्रमवश सभी नाचते-नाचते, लोटते-लोटते, आनन्दवश होकर उछलते, पड़ते, धीरे-धीरे पर्वतकी प्रदक्षिणा करते, कपिलतीर्थमें स्नान कर, शिवगिरिको देख तथा प्रणाम कर, सिद्धगन्धर्व-सेवित, मेरुके समान उस पर्वतपर चढ़, अत्यद्भुत रत्न-सानु हेमाद्रिसे भी बढ़कर अभूतपूर्व श्रीवेङ्कटेशभूधर यही है—ऐसा कहते हुए, अत्यन्त मनोहर, दिव्य तथा परमोत्तम विमानको देखा।

विमानम्, स्वामितीर्थे च स्नात्वा देवं श्रियः पतिम् ॥ कोटिक-
न्दर्पलावण्यं किरीटमुकुटोज्ज्वलम् ॥३०॥ उरःस्थितश्रियाकान्तमु-
क्तादामोपशोभितम् ॥ चतुर्भुजमुदाराङ्गं शङ्खचक्रधरम्परम् ॥३१॥
नीलमेघनिभं श्यामं पीतवाससमच्युतम् ॥ श्रीभूमिसहितं विष्णुं
पद्मार्चितपदाम्बुजम् ॥३२॥ प्रणेमुः सहसा दृष्ट्वा हर्षोत्फुल्लविलो-
चनाः ॥ तुष्टुवुर्वेदमन्त्रैश्च स्तोत्रैश्च श्रुतिसम्मतैः ॥३३॥

स्वामितीर्थमें स्नान कर श्रीपति, करोड़ों कामदेवके लावण्ययुक्त, किरीट-मुकुटसे प्रकाशित, वक्षस्थित श्रीकान्त, मुक्ताहारसे शोभित, चतुर्भुज, शंखचक्रधारी, नील मेघके समान श्याम वर्णवाले, पीताम्बरधारी, श्रीभूमिसहित, लक्ष्मीसे पूजितपदाम्बुज, श्रीविष्णु भगवान्को हर्षोत्फुल्ल नयन हो सानन्द प्रणाम किया तथा वेद और श्रुतिसम्मत स्तुतियों तथा मन्त्रोंसे स्तुति की ॥३३॥

### अथ महर्षिकृतभगवत्स्तुतिः

मुनय ऊचुः

यः पार्थिवानि गणयेद्रजांसि सुबहून्यपि ॥ विष्णोर्वीर्याणि
गणयेन्निःशेषं स पुमान्हरेः ॥ ३४ ॥ त्रेधा च निदधे पादान्भूमौ

विष्णुस्त्रिविक्रमः ॥ धर्मांश्च धारयन्यस्तु तस्मै ते विष्णवे नमः ॥३५॥ अत्यतिष्ठद्विश्वतो यो व्याप्य भूमिं दशाङ्गुलम् ॥ भूतं भव्यं च यद्व्याप्तं तस्मै ते विष्णवे नमः ॥३६। पादो विश्वं त्रिपाद् व्योम यस्य तस्मै नमो नमः ॥ ऋचः सामानि यस्मात्तु जज्ञिरे तुरगास्तथा ॥ विप्रो मुखाद्भुजाद्राजा वैश्यश्चोर्वोरनन्तरम् ॥ शूद्रः पद्भ्यां मुखादग्निरिन्द्रश्च मनसो विभुः ॥३८॥ नेत्रात्सूर्योऽथ सञ्जज्ञे तस्मै ते ब्रह्मणे नमः ॥ इयत्तया गुणानां ते निवर्तन्ते न मानवाः ॥३९॥ बुद्धीनां किन्तु दौर्बल्याद्वेदश्चापि तथैव भोः ॥ एवं तं बहुधा स्तुत्वा स्तोत्रैः श्राव्यैर्मनोहरैः॥४०॥ आदाय पद्मपात्राणि श्रीपादं वेङ्कटेशितुः ॥ अर्चयामासुरव्यग्रं नामभिः सूतभाषितैः ॥४१॥

मुनिगण कहने लगे—जो पृथ्वीके समस्त धूलिकणोंको गिन सकेगा, वही पुरुष भगवान्‌के अनन्त गुण तथा वीर्य्योंकी भी गणना कर सकेगा। जिस त्रिविक्रम महाविष्णुने समस्त पृथ्वीपर तीन बार पैर रखा तथा जिसने धर्मोंको धारण किया, उसी विष्णु भगवानको प्रणाम है। जो दस अङ्गुलका होकर भी सारे संसारमें व्याप्त रहते हैं, जिससे भूत, भविष्यत तथा वर्तमान सभी व्याप्त हैं, उसी विष्णुको प्रणाम है। जिसके एक भागमें संसार तथा त्रिपाद आकाश है, उसको नमस्कार करता हूं। जिससे ऋक् साम तथा तुरग आदि उत्पन्न हुए हैं, जिसके मुखसे ब्राह्मण, बाहुसे क्षत्रिय, ऊरुसे वैश्य, पैरोंसे शूद्र एवं मुखसे अग्नि, मनसे इन्द्र तथा नेत्रोंसे सूर्य्य और चन्द्रमा उत्पन्न हुए हैं उसी परब्रह्मको नमस्कार है। मानव लोग आपके गुणोंकी सीमा होनेके कारण आपके पाससे लौटते हैं, ऐसा नहीं; वरन् अपनी बुद्धि दौर्बल्यहीके कारण लौटते हैं। वेद भी उसी तरह ही हैं। इसी तरह ऋषियोंने अनेक स्तुति मन्त्रोंसे स्तुति कर, पद्मपत्र लाकर सूत कथित नामावलीसे पाठ तथा अर्चना की ॥४१॥

ततः प्रीतो जगद्धाता बभाषे वेङ्कटेश्वरः ॥ तत्रैव नैमिशारण्ये प्रीतोऽस्मि भवतामहम् ॥४२॥ वेङ्कटाचलमाहात्म्यश्रवणान्मुनयो बुधाः ॥ चिरकालतपोलभ्यमपि दत्तं फलं मया ॥४३ यद्यदिष्टं मुनीनां तु भवतां दत्तमेव तत् ॥ वेङ्कटाद्रेस्तु माहात्म्यं बहुदूरस्थितोऽपि यः ॥४४॥ श्रृणोति वा श्रावयति पठेद्वा

श्रद्धयान्वितः॥ कन्यामासे विशेषेण तस्याहं सुलभो ह्यहम् ॥४५॥ धनं धान्यं महीमिष्टां पुत्रान्पौत्रान्ददाम्यहम् ॥ ददामि सर्वान्कामांश्च देहान्ते मत्पदं तथा ॥४६॥

तब जगद्धाता वेङ्कटेशभगवान् प्रसन्न होकर बोले—"मैं तो उसी नैमिषारण्यमें ही आपलोगोंसे प्रसन्न हो गया था। वेङ्कटाचलमाहात्म्यके सुननेसे चिरकालतक तपस्या करनेसे जो फल होता है, वह फल हमने आप लोगोंको दिया। हे मुनियो! आपलोगोंको जो-जो अभीष्ट हो, वह सब मैं आपलोगोंको दे चुका। बहुत दूरपर रहते हुए भी, जो वेङ्कटाद्रिमाहात्म्य परम श्रद्धा एवं भक्तिसे विशेषकर कन्यामासमें सुनता या सुनाता, पढ़ता या पढ़ाता है, उसके लिये मैं सुलभ हो जाता हूं और उसको धन, धान्य, पृथ्वी, कामना, पुत्र, पौत्र, सब कुछ मैं देता हूं तथा उसकी सभी कामनाएं पूर्ण कर शरीरान्त होनेपर अपना पद या लोक भी प्रदान करता हूं" ॥४६॥

इति लब्ध्वा वरांस्ते तु तत्र वत्सरपञ्चकम् ॥ स्नात्वा सर्वेषु तीर्थेषु वेङ्कटाद्रौ तपोधनाः ॥४७॥ आश्चर्याण्यपि दृष्ट्वा ते सम्यगाराध्य माधवम् ॥ पुनश्च नैमिशारण्यं ययुः सर्वे तपोधनाः ॥४८॥

इस वरको पाकर वे ऋषिवृन्द पांच वर्षोंतक, वेङ्कटाद्रिके सभी तीर्थोंमें स्नान कर तथा अनेकों आश्चर्य देख भगवान् माधवकी पूर्णतः पूजा करके अन्ततः नैमिषारण्यमें लौट आये ॥४८॥

अथ सूतं प्रति शौनकादिस्तुतिः

गत्वा तु नैमिशारण्यं मुनिसङ्घनिषेवितम् ॥ उपसृत्य पुनः सूतं प्रोचुरेवमिदं वचः ॥४९॥ अहो तव तु विज्ञानमहो सामर्थ्यमेव ते॥ यथोक्तं भवता विष्णोर्वेङ्कटाद्रिनिवासिनः ॥५०॥ रूपमौदार्यरूपं च गिरिरूपं तथैव च ॥ स्थितं तथैव तत्सर्वमहो वेङ्कटभूधरः ॥५१॥ त्वत्प्रसादाद्वयं सर्वे कृतार्थाः स्मो महामुने ॥ संस्थानं वेङ्कटेशस्य गिरेस्तस्य च सर्वतः ॥५२॥ दृष्टमेतत्त्वया किं वा श्रुतं वा सूत तन्मुने ॥ इति स्तुतस्ततः सूतः प्रोवाचेदं वचस्तदा ॥ ५३ ॥

## अथ सूतके प्रति शौनकादिकी स्तुति

तपाधनवृन्द नैमिषारण्यमें जाकर मुनिसंघसेवित श्री सूतजीसे पुनः इस प्रकार कहने लगेः –"हे भगवान् सूतजी ! आपका ज्ञानभण्डार धन्य है ! आपका सामर्थ्य धन्य-धन्य !! आपने वेङ्कटाद्रिनिवासी भगवानका रूप, औदार्य तथा गिरिस्वरूप जैसा कहा वैसा हो सब कुछ है। हे महामुनि ! आपकी कृपासे हमलोग परम कृतार्थ हो गये। हे मुनि ! उस वेङ्कटेशजीके तथा पर्वतके सब प्रकारके संस्थानको, क्या आपने देखा था अथवा सुना था ? यह सब सुन श्री सूतजी यह वचन बोले ॥५३॥

**व्यासस्यानुग्रहात्सर्वं वेद्मि तत्त्वं तपोधनाः ॥ वेङ्कटाचलमाहात्म्यं कल्पकोटिशतैरपि ॥५४॥ न शक्यं वर्षसाहस्रैः शेषाणां च सहस्रकैः ॥ वक्तुं तथापि माहात्म्यं कीर्तितं किञ्चिदेव हि ॥५५॥ पुण्यं पवित्रमायुष्यं माहात्म्यमिदमुत्तमम् ॥ यः पठेत्प्रयतो भक्त्या शृणुयाद्वा लिखेदपि ॥५६॥ सर्वान्कामानवाप्नोति संप्राप्नोति च मङ्गलम् ॥५७॥**

इति श्रीवराहपुराणे वेङ्कटाचलमाहात्म्ये महर्षीणां श्रीवेङ्कटेश्वरसेवार्थं श्रीवेङ्कटाचलाग-मनादिवर्णनं नाम द्विषष्ठितमोऽध्यायोऽत्र त्रिंशत्तमः ॥

हे तपोधनगण, मैं श्री व्यासजीकी कृपासे सब कुछ जानता हूं। वेङ्कटाचल पर्वतका माहात्म्य, करोड़ों-करोड़ों कल्पपर्य्यन्त, हजारों-हजारों वर्षतक, हजारों शेषनाग द्वारा भी वर्णन नहीं किया जा सकता। अतएव उस माहात्म्यका कीर्तन कुछ-कुछ कहा गया है। परमपवित्र, पुण्यकारक तथा आयुवर्द्धक, इस परमोत्तम माहात्म्य-को जो भक्तिभावसे पढ़ता, सुनता अथवा लिखता है, वह सब कामना तथा परम मङ्गल प्राप्त करता है ॥५७॥

॥ इति त्रिंशत्तमोऽध्यायः ३० ॥

इति श्री वराहपुराणान्तर्गत श्रीवेंकटाचलमहात्म्यस्य पूर्वार्धं समाप्तम्।

इति प्रथमो भागः।

ॐ तत्सत्

॥ श्री श्रीनिवासपरब्रह्मणे नमः ॥

श्रीवराहपुराणान्तर्गतस्य

# श्रीवेङ्कटाचलमाहात्म्यस्य

## द्वितीयो भागः

श्रियः कान्ताय कल्याणनिधये निधयेऽर्थिनाम् ॥
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ॥१॥

अथ नारदस्य सुमेरुशिखरस्थयज्ञवराहदर्शनम्

### प्रथमोऽध्यायः ॥१॥

नारद शिखर सुमेरुथित, दर्शन यज्ञ वराह ।
मणि-मण्डप महँ दिव्य शुचि, शोभित बहु सुरनाह ॥१॥
भू देवीका आगमन, देव वराह समीप ।
धरणी प्रभु संवाद पुनि, शेषाचल आधीप ॥२॥
स्वामी पुस्करिणी कथन, सर्व तीर्थ प्राधान्य ।
महिमा धार कुमारकी, पाण्डव तुम्ब नमान्य ॥३॥
देव तीर्थ मज्जन सुफल, विनती धरा वराह ।
प्रभु धरणी सह गिरि गमन, श्रुतिफल परम अथाह ॥४॥

हरिः ॐ

ऋषय ऊचुः—

रोमहर्षण सर्वज्ञ पुराणार्थविशारद ॥ माहात्म्यं श्रोतुमिच्छामो गिरीन्द्राणां महीतले ॥ १ ॥ ब्रूहि त्वं नो महाभाग के प्रधाना महीधराः ॥

नारदजीका यज्ञवराहदर्शन

ऋषियोंने कहा—हे रोमहर्षण ! हे पुराणार्थ विशारद ! हे महामति महाभाग श्रीसूतजी ! कृपया आप यह बतावें कि पृथ्वीपरके सब गिरीन्द्रोंका माहात्म्य क्या है । हम सुनना चाहते हैं, तथा हे महाभाग यह भी अब बतलाइये कि कौन-कौन पर्वत प्रधान हैं ? ॥२॥

सूत उवाच—

एतमेव पुरा प्रश्नमपृच्छं जाह्नवीतटे ॥२॥ व्यासं मुनिवरश्रेष्ठं सोऽब्रवीन्मे गुरूत्तमः ॥

श्रीसूतजी बोले—श्रीगंगाजीके तटपर पहले हमने भी यही प्रश्न मुनिश्रेष्ठ परमोत्तम गुरु श्री-व्यासजीसे पूछा था, जिसका उत्तर उन्होंने दिया था ॥३॥

व्यास उवाच—

पुरा देवयुगे सूत नारदो मुनिसत्तमः ॥ ३ ॥ सुमेरुशिखरं गत्वा नानारत्नोपशोभितम् ॥ तन्मध्ये विपुलं दीप्तं ब्रह्मणो दिव्यमालयम् ॥४॥ दृष्ट्वा तस्योत्तरे देशे पिप्पलद्रुममुत्तमम् ॥ सहस्रयोजनोच्छ्रायं विस्तीर्णं द्विगुणं तथा ॥५॥ तन्मूले मण्डपं दिव्यं नानारत्नसमन्वितम् ॥ पद्मरागमणिस्तम्भैः सहस्रैः समलङ्कृतम् ॥६॥ वैडूर्यमुक्तामणिभिः कृतस्वस्तिकमालिकम् ॥ नवरत्नसमाकीर्णं दिव्यतोरणशोभितम् ॥७। मृगपक्षिभिराकीर्णं नवरत्नमयैः शुभैः ॥ पुष्परागमहाद्वारं सप्तभूमिकगोपुरम् ॥८॥ सन्दीप्तवज्रसुकृतकवाटद्वयशोभितम् ॥ प्रविश्यादौ ददर्शान्तर्दिव्यमौक्तिकमण्डपम् ॥९॥ वैडूर्यवेदिकं तुङ्गमारुरोह महामुनिः ॥

श्रीव्यासजीने कहा थाः— हे सूत! प्राचीन कालके देवयुगमें मुनिश्रेष्ठ नारदमुनिने नाना रत्न-सुशोभित सुमेरु शिखरके ऊपर जाकर, उसके मध्यमें अत्यन्त तेजपूर्ण ब्रह्माका दिव्य स्थान देखा, जिसके उत्तरीय भागमें एक परमोत्तम, हजार योजन ऊंचा और इसके दुगने विस्तारमें फैला हुआ एक पीपलका वृक्ष था; उसके मूलमें नाना रत्नजटित, पद्मरागके हजारों स्तम्भोंसे सुशोभित, वैदूर्य्य-मुक्ता-मणि आदि समलंकृत, स्फटिक मालाओंसे युक्त, नवरत्नसमाकीर्ण, स्वर्गीय तोरणोंसे सुशोभित, नवरत्नमय, मनोहर, मृग तथा पक्षियोंसे समाकीर्ण, पुष्परागके फाटकसे युक्त, सात सोपानके गोपुर सहित चमकते हुए वज्रमणिके दोनों कपाटोंसे सुशोभित दिव्य मण्डपमें प्रवेश कर पहले-पहल दिव्य मुक्तामण्डपको देखा। तत्पश्चात् वैदूर्य्यकी ऊंची वेदीपर महामुनि नारदजी चढ़ गये ॥१०॥

तन्मध्ये तुङ्गमतुलं वसुपादविराजितम् ॥१०॥ ददर्श मुक्तास-
ङ्कीर्णं सिंहासनमहर्द्युतिम् ॥ तन्मध्ये पुष्करं दिव्यं सहस्रदलशो-
भितम् ॥११॥ श्वेतं चन्द्रसहस्राभं कर्णिकाकेसरोज्ज्वलम् ॥ तस्य
मध्ये समासीनं पूर्णचन्द्रायुतप्रभम् ॥ १२ ॥ कैलासपर्वताकारं
सुन्दरं पुरुषाकृतिम् ॥ चतुर्बाहुमुदाराङ्गं वराहवदनं शुभम् ॥१३॥
शङ्खचक्राभयवरान्बिभ्राणं पुरुषोत्तमम् ॥ पीताम्बरधरं देवं पुण्ड-
रीकायतेक्षणम् ॥१४॥ पूर्णेन्दुसौम्यवदनं वपागन्धिमुखाम्बुजम् ॥
सामध्वनिं यज्ञमूर्तिं वक्रतुण्डं सुवनासिकम् ॥१५॥ क्षीरसागरस-
ङ्काशं किरीटोज्ज्वलिताननम् ॥ श्रीवत्सवक्षसं शुभ्रं यज्ञसूत्र-
विराजितम् ॥ १६ ॥ कौस्तुभश्रीसमुद्द्योतं समुन्नतमहोरसम् ॥
जाम्बूनदमयैर्दिव्यैः सुरत्नाभरणैर्युतम् ॥१७॥ विद्युन्मालापरि-
क्षिप्तशरन्मेघमिवोज्ज्वलम् ॥ वामपादतलाक्रान्तपादपीठविराजि-
तम् ॥१८॥ कटकाङ्गदकेयूरकुण्डलोज्ज्वलितं सदा ॥ चतुर्मुखव-
सिष्ठात्रिमार्कण्डेयैर्मुनीश्वरैः ॥१९॥ भृग्वादिभिरनेकैश्च सेव्यमा-
नमहर्निशम् ॥ इन्द्रादिलोकपालैश्च गन्धर्वाप्सरसां गणैः ॥२०॥
सेवितं देवदेवेशं प्रणिपत्याभिगम्य च ॥ दिव्यैरुपनिषद्भागैरभि-
ष्टुत्य धराधरम् ॥२१॥ नारदः परमप्रीतः स्थितो देवस्य
सन्निधौ ॥२२॥

उस ( वेदी ) के बीचमें बहुत ऊंचे आठ पादोंसे सुशोभित, मुक्तामालासे समाकीर्ण, दिनको शोभा देनेवाला दिव्य सिंहासन देखा और उस सिंहासनके बीचमें सहस्रदल कमलोंसे सुशोभित, दिव्य कमलों एवं हजारों चन्द्रमाकी प्रभासदृश उज्वल, कर्णिकाके केसरके समान उज्वल, दिव्य श्वेत पुष्करके तथा उसके मध्य करोड़ों पूर्णचन्द्रकी प्रभावाले, कैलासपर्वताकार, सुन्दर पुरुषाकृति, परमपुरुषोत्तम, शंख, चक्र, अभय, तथा वर आदि धारण किये, पीताम्बर पहने,पुण्डरीकके समान बड़े-बड़े आंखवाले, पूर्णेन्दुके समान सुन्दर वदनवाले तथा वपा ( अंतड़ी )की सुगन्धिसे सुगन्धित मुखारविन्दयुक्त सामध्वनिसे युक्त, यज्ञमूर्ति, स्रुकके समान मुखवाले, स्रुवके समान सुन्दर नासिकायुक्त, क्षीरसागरके समान किरीटकी प्रभासे प्रकाशित उज्वल मुखवाले, वक्षस्थलपर श्रीवत्ससे शोभित, परम पवित्र, यज्ञसूत्रविराजित, कौस्तुभकी रमणीय सौन्दर्य्यसे दीप्त एवं उन्नत छातीवाले, स्वर्णमय दिव्य सद्रत्नोंके आभरणयुक्त, विद्युन्मालासे परिक्षिप्त, शरत्कालीन मेघके समान उज्वल, बायें पैरके नीचे स्वर्णपीढ़ ( पीढ़ा ) से विराजित, कड़ा, वलया, बीजायष्ठ तथा कुण्डल आदिसे सुशोभित एवं चतुर्मुख, वसिष्ठ, अत्रि, मार्कण्डेय, भृगु आदि अनेकों मुनीश्वरों , इन्द्रादि लोकपाल, गन्धर्व एवं अप्सरागणसे अहर्निश सेवित, देवाधिदेव भगवान्के अत्यन्त निकट जाकर, प्रणिपात कर, पृथ्वीको धारण करनेवाले वराह परमात्माकी दिव्य उपनिषदोंसे स्तुति कर, परम प्रसन्न होकर भगवान्के निकट ही नारदजी खड़े हो गये ॥२२॥

अथ वराहसान्निधिं प्रति धरण्यागमनम्

एतस्मिन्नन्तरे चाभूद्दिव्यदुन्दुभिनिःस्वनः ॥ ततस्समागता देवी धरणी सखिसंयुता ॥२३॥ सरत्नसागराकारदिव्याम्बरसमुज्ज्वला ॥ सुमेरुमन्दराकारस्तनभारावनामिता ॥२४॥ नवदूर्वादलश्यामा सर्वाभरणभूषिता ॥ इलया वै पिंगलया सखीभ्यां च समन्विता ॥२५॥ ततस्ताभ्यां समानीतं पुष्पाणां निचयं मही ॥ श्रीमद्वराहदेवस्य पादमूले विकीर्य च ॥२६॥ प्रणम्य देवदेवेशं कृताञ्जलिपुटा स्थिता ॥ तां देवीं श्रीवराहोऽपि ह्यालिंग्यांके निधाय च ॥२७॥ पप्रच्छ कुशलं पृथ्वीं प्रीतिप्रवणमानसः ॥२८॥

इसी समय देवताओंके नगाड़ेका शब्द सुनायी पड़ा और उसी समय सरत्न सागराकार दिव्य कपड़ोंसे सुशोभित, सुमेरु तथा मन्दराचल पर्वतके समान स्तनभारसे झुकी हुई, नवदूर्वादलके समान श्यामवर्णवाली, सर्वाभरणभूषिता पृथ्वीदेवी, इला तथा पिंगला नामकी अपनी दो सखियोंसे संयुक्त हो, आकर, इन्हीं सखियोंसे लाई हुई पुष्पराशिको श्रीवराहदेवके चरणकमलोंमें चढ़ाकर, प्रणाम कर तथा हाथ जोड़कर खड़ी हो गयीं । श्रीवराहदेवने भी उस पूज्य पृथ्वीदेवीको आलिङ्गन कर, गोदमें बैठाकर प्रीतिपूर्ण मनसे कुशल प्रश्न पूछा ॥२८॥

अथ धरणिवराहसम्वादः

*श्रीवराह उवाच—*

त्वां निवेश्य महीदेवि शेषशीर्षे सुखावहे ॥ लोकं त्वयि निवेश्यैव त्वत्सहायान्धराधरान् ॥२९॥ इहागतोऽस्म्यहं देवि किमर्थं त्वमिहागता ॥

श्रीवराहजी बोले—हे प्रिये ! पृथ्वीदेवी ! तुमको सुखपूर्ण श्रीशेषनागके मस्तकरूप स्थानपर एवं संसारके बड़े-बड़े पर्वतोंको तेरे ऊपर स्थापित कर मैं यहां चला आया था। हे देवि ! यहां किस कारणसे आयी हो ?

*पृथिव्युवाच—*

मां समुद्धृत्य पातालात्सहस्रफणशोभिते ॥३०॥ रत्नपीठ इवो त्तुङ्गे सरत्नेऽनन्तमूर्धनि ॥ कृत्वा मां सुस्थिरां देव धरांश्चापि न्यवेशयः ॥३१॥ मद्धारणक्षमान्पुण्यांस्त्वन्मयान्पुरुषोत्तम ॥ तेषु- मुख्यान्महाबाहो मदाधारान्वदस्व मे ॥३२॥

पृथ्वीदेवी बोलीं—मुझे पातालसे निकालकर, रमणीय रत्नपीठके समान सहस्रफणके अनन्त मूर्धापर सुस्थिर कर जिन पर्वतोंको मेरे ऊपर रख दिया है, हे पुरुषोत्तम ! मुझको धारण करनेमें समर्थ, मुख्य-मुख्य मेरे आधाररूप उन पर्वतोंको मुझे बता दें ॥३२॥

अथ शेषाचलस्य सर्वपर्वतातिशायित्ववर्णनम्

*श्रीवराह उवाच—*

सुमेरुर्हिमवान् विन्ध्यो मन्दरो गन्धमादनः ॥ सालग्रामश्चित्रकूटो माल्यवान्पारियात्रकः ॥ ३३ ॥ महेन्द्रो मलयः सह्यः सिंहाद्रिरपि रैवतः ॥ मेरुपुत्रोऽञ्जनो नाम शैलः स्वर्णमयो महान् ॥३४॥ एते शैलवराः सर्वे त्वदाधारा वसुन्धरे ॥ ये मया देवसङ्घैश्च ऋषिसङ्घैश्च सेविताः ॥३५॥

तब श्रीवराह भगवान् बोले—हे वसुन्धरे ! सुमेरु, हिमालय, विन्ध्याचल, मन्दराचल, गन्धमादन, शाल-

ग्राम, चित्रकूट, माल्यवान, परियात्रक, महेन्द्र, मलयाचल, सह्य, सिंहाचल, रैवताचल, मेरुपुत्र, स्वर्णमिय अञ्जनाचल आदि सभी महान्-महान पर्वत ही तुम्हारे आधार हैं जो मुक्त देवताओं तथा ऋषियोंसे सदा सेवित रहते हैं ॥३५॥

एतेषु प्रवरान्वक्ष्ये तत्त्वतः शृणु माधवि ॥ सालग्रामश्च सिंहाद्रिश्शैलेन्द्रो गन्धमादनः ॥३६॥ एते शैलवरा देवि दिशं हैमवतीं श्रिताः ॥ दक्षिणस्यां प्रतीतांस्तु वक्ष्ये शैलान्वसुन्धरे ॥३७॥ अरुणाद्रिर्हस्तिशैलो गृध्राद्रिर्घटिकाचलः ॥ एते शैलवराः सर्वे क्षीरनद्यास्समीपगाः ॥३८॥

उनमें सर्वश्रेष्ठोंको मैं बतलाता हूं, तुम ध्यानपूर्वक सुनो। शालग्राम, सिंहाचल तथा गन्धमादन ये तीनों पर्वतश्रेष्ठ हिमालयपर्वतकी दिशामें आश्रित हैं और दक्षिण दिशामें जो-जो प्रसिद्ध विशाल पर्वत हैं, उनको भी कहता हूं। अरुणाद्रि, हस्तिशैल, गृध्राद्रि तथा घटिकाचल ये पर्वत क्षीर नदीके निकट हैं ॥३८॥

हस्तिशैलादुत्तरतः पञ्चयोजनमात्रतः ॥ सुवर्णमुखरी नाम नदीनां प्रवरा नदी ॥३९॥ तस्या एवोत्तरे तीरे कमलाख्यः सरोवरः ॥ तत्तीरे भगवानास्ते शुकस्य वरदो हरिः ॥४०॥ बलभद्रेण संयुक्तः कृष्णो भक्तार्तिनाशनः ॥ वैखानसैर्मुनिगणैर्नित्यमाराधितोऽमलैः ॥४१॥

हस्तिशैलके पांच योजन उत्तरीय भागमें स्वर्णमुखरी नामकी एक श्रेष्ठ नदी है और उसके भी उत्तरीय भागमें कमल नामक सरोवर है। उसी सरोवरके तीरपर श्रीशुकदेवजीको वर देनेवाले वैखानसाभिमल मुनिगणाराधित तथा भक्तार्तिनाशन भगवान् श्रीकृष्ण बलभद्रके साथ रहते हैं ॥४१॥

कमलाख्यस्य सरस उत्तरे काननोत्तमे ॥ क्रोशद्वयार्धमात्रे तु हरिचन्दनशोभिते ॥४२॥ श्रीवेङ्कटाचलो नाम वासुदेवालयो महान् ॥ सप्तयोजनविस्तीर्णः शैलेन्द्रो योजनोच्छ्रितः ॥४३॥ अस्ति स्वर्णमयो देवि रत्नसानुभृदायतः ॥ इन्द्राद्या दैवतगणा वसिष्ठाद्या मुनीश्वराः ॥ ४४ ॥ सिद्धाः साध्याश्च मरुतो दानवा दैत्यराक्षसाः ॥ रम्भाद्या अप्सरःसङ्घाः वसन्ति नियतं धरे ॥४५॥

तपश्चरन्ति नागाश्च गरुडाः किन्नरास्तथा ॥ एतैरधिष्ठितास्तत्र सरितः पुण्यदर्शनाः ॥४६॥ सरांसि विविधान्यत्र सन्ति दिव्यानि माधवि ॥ ४७ ॥

इसी कमल नामक तालाबके उत्तरीय भागके अढ़ाई कोसोंमें हरिचन्दन शोभित परमोत्तम जंगलमें वेङ्कटाचल नामका महान् वासुदेवालय है। यह वेङ्कटाचल सात योजन विस्तीर्ण और एक योजन ऊंचा है। हे देवि ! यह पर्वत रत्नमय चोटियोंसे परिपूर्ण है, जहां इन्द्रादि देवतागण, वसिष्ठादि मुनीश्वर, सिद्ध, साध्य, मरुत दानव, दैत्य, राक्षस, रम्भादि अप्सरासंघ सभी स्थायी रूपसे निवास करते हैं; तथा गरुड़गण, किन्नरगण तपस्या करते रहते हैं। हे माधवि ! हे पृथ्वी देवि !! इन्हीं सबोंसे अधिष्ठित वहांपर अनेकों पुण्यदर्शन पवित्र सलिला नदियां तथा पुष्करिणियां हैं ॥४७॥

अथ स्वामिपुष्करिण्याः सर्वतीर्थातिशायित्ववर्णनम्

तीर्थानां चैव सर्वेषां श्रृणुष्व प्रवराणि वै ॥ चक्रतीर्थं देवतीर्थं वियद्गङ्गा तथैव च ॥४८॥ कुमारधारिकातीर्थं पापनाशनमेव च ॥ पाण्डवं नाम तीर्थं च स्वामिपुष्करिणी तथा ॥ ४९ ॥ सप्तैतानि वरण्याहुर्नारायणगिरौ शुभे ॥

यहांके सभी तीर्थोंमें श्रेष्ठ तीर्थोंके विषयमें कहता हूं। चक्रतीर्थ, देवतीर्थ, आकाशगंगा, कुमारधारिका-तीर्थ, पापनाशन तीर्थ, पाण्डवतीर्थ तथा स्वामिपुष्करिणीतीर्थ इन्हीं सातोंको नारायणगिरिपर श्रेष्ठ बताते हैं ॥५०॥

एतेषु प्रवरा देवि स्वामिपुष्करिणी शुभा ॥५०॥ अस्यास्तु पश्चिमे तीरे निवसामि त्वया सह ॥ आस्तेऽस्या दक्षिणे तीरे श्रीनिवासो जगत्पतिः ॥५१॥ गङ्गाद्यैः सकलैस्तीर्थैः समा सा सागराम्बरे ॥ त्रैलोक्ये यानि तीर्थानि सरांसि सरितस्तथा ॥ ५२ ॥ तेषां स्वामित्वमापन्ने धरे स्वामिसरोवरे ॥ स्वामिपुष्करिणीं पुण्यां सेवितुं दिव्यभूधरे ॥ ५३ ॥ वसन्ति सर्वतीर्थानि तेषां संख्यां वदामि ते ॥

हे देवि ! इन सबोंमें भी प्रधान स्वामिपुष्करिणी तीर्थ ही है। इसी स्वामिपुष्करिणीके पश्चिम तारपर मैं तुम्हारे साथ वास करता हूं और इसीके दक्षिण भागमें जगत्पति श्रीनिवास रहते हैं। यह पुष्करिणीतीर्थ गंगादि सभी तीर्थोंके समान है तथा त्रैलोक्यमें जितनी नदी, तालाब आदि तीर्थ हैं, उन सब तीर्थोंका स्वामित्व इसी स्वामिपुष्करिणीपर है। सभी तीर्थ परम पवित्र पुण्य स्वामिपुष्करिणीके सेवार्थ आकर बसते हैं जिनकी संख्याके विषयमें मैं तुमसे कहता हूं ॥५४॥

षट्षष्टिकोटितीर्थानि पुण्येऽस्मिन्भूधरोत्तमे ॥५४॥ तेषु चात्यन्तमुख्यानि षट् तीर्थानि वसुन्धरे ॥ पञ्चानां तीर्थराजानां तुम्बो गर्भसमो महान् ॥ ५५ ॥ गर्भवासभयध्वंसी स्नातानां भूधरोत्तमे ॥५६॥

हे पृथ्वी ! इस पुण्य भूधरोत्तमपर छाछठ करोड़ तीर्थ हैं, उनमें विशेषकर छः ही मुख्य तीर्थ हैं। पर्वत श्रेष्ठमें स्नानकारियोंको गर्भभयसे मुक्त करनेवाला तुम्बतीर्थ पांच तीर्थराजोंमें गर्भके समान है ॥५६॥

*धरण्युवाच—*

षट्तीर्थानि महाबाहो त्वयोक्तानि महीतले ॥ माहात्म्यं वद तेषां मे यथाकालं यथाविधि ॥ ५७ ॥ फलानि तेषु स्नातानां नराणां वद भूधर ॥

पृथ्वीदेवी बोलीं—हे महाप्रभु ! हे महाबाहु !! आपने जो इस पर्वतपर छः तीर्थ बताये, उनका यथाकाल यथाविधि माहात्म्य तथा उनमें स्नान करनेवालोंके फलोंको मुझसे बतावें ॥५८॥

*श्रीवराह उवाच—*

नारायणाद्रिमाहात्म्यं वदामि शृणु माधवि ॥ ५८ ॥ देवाश्च ऋषयश्चैव योगिनः सनकादयः ॥ कृतेऽञ्जनाद्रिं त्रेतायां नारायणगिरिं तथा ॥ ५९ ॥ द्वापरे सिंहशैलं च कलौ श्रीवेङ्कटाचलम् ॥ प्रवदन्तीह विद्वांसः परमात्मालयं गिरिम् ॥६०॥ योजनानां सहस्रान्ते द्वीपान्तरगतोऽपि वा ॥ यो नमेद् भूधरेन्द्रं तद्दिशमुद्दिश्य भक्तितः ॥६१॥ सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥

श्रीवराह भगवान् बोले—हे माघवि देवि ! मैं नारायणादिका माहात्म्य वर्णन करता हूं, उसे तुम सुनो। देवता, ऋषि तथा विद्वद्वर सनकादि योगी परमात्माके निवास स्थान इस पर्वतको कृतयुगमें अंजनाद्रि, त्रेतायुगमें नारायणगिरि, द्वापरयुगमें सिंहशैल तथा कलियुगमें श्रीवेङ्कटाचल कहते हैं। जो भक्तिभावसे, हजारों योजन दूर किसी दूसरे द्वीपान्तरमें रहकर भी उस दिशाको लक्ष्यकर इस पर्वतको प्रणाम करता है, वह सब पापोंसे मुक्त होकर विष्णु लोकमें चला जाता है ॥६२॥

## अथ कुमारधारामाहात्म्यम्

तस्मिन् षट्तीर्थमाहात्म्यं यथाकालं वदामि ते ॥६२॥ शृणु-
ष्वावहिता भद्रे सर्वपापप्रणाशनम् ॥ कुम्भसंस्थे रवौ माघे पौ-
र्णमास्यां महातिथौ ॥६३॥ मघानक्षत्रयुक्तायां भूधरेन्द्रे वसुन्धरे ॥
कुमारधारिका नाम सरसी लोकपावनी ॥६४॥ यत्रास्ते पार्वती-
सूनुः कार्तिकेयोऽग्निसम्भवः ॥ देवसेनासमायुक्तः श्रीनिवासार्च-
कोऽमले ॥६५॥ तस्यां यः स्नाति मध्याह्ने तस्य पुण्यफलं शृणु ॥

## अथ कुमारधारा माहात्म्य

उन षट् तीर्थोंका यथाकाल पापनाशकारक सर्व माहात्म्य मैं तुमको बतलाता हूं; सावधान हो सुनो। हे वसुन्धरे ! इस पर्वतपर कुमारधारिका नामक लोकपावन तथा परम पवित्र सरोवर है, जहाँ पार्वतीपुत्र, अग्निसम्भव श्रीकार्तिकेयजी देवसेना नामक निज पत्नीके साथ श्रीनिवासकी अर्चना करते हुए रहते हैं। जो कोई उसमें कुम्भमासके रविवार दिनको माघकी पौर्णमासीकी महापुण्य तिथिमें मघानक्षत्रयुक्त होनेपर मध्याह्न कालमें स्नान करता है, उसका फल, हे अमले तुम सुनो ॥६५॥

गङ्गादिसर्वतीर्थेषु यः स्नाति नियमाद्वरे ॥६६॥ द्वादशाब्दं
जगद्धात्रि तत्फलं समवाप्नुयात् ॥ योऽन्नं ददाति तत्तीर्थे शक्त्या
दक्षिणयान्वितम् ॥ ६७ ॥ स तावत्फलमाप्नोति स्नाने तूक्तं फलं
यथा ॥६८॥

हे जगद्धात्रि ! गंगादि सब तीर्थोंमें नियमबद्ध होकर जो बारह वर्षतक स्नान करता है, उसका फल इसमें उस दिन केवल एकबार स्नान करनेवाला पाता है और जो कोई इस तीर्थमें यथाशक्ति दक्षिणाके साथ अन्नदान करता है, उसे भी उपर्युक्त ही फल मिलता है ॥६८॥

अथ तुम्बतीर्थमाहात्म्यम्

मीनसंस्थे सवितरि पौर्णमासीतिथौ धरे ॥ उत्तराफाल्गुनीयुक्ते चतुर्थे कालसत्तमे ॥६९॥ पञ्चानामपि तीर्थानां तुम्बेऽथ गिरिगह्वरे ॥ यः स्नाति मनुजो देवि पुनर्गर्भे न जायते ॥७०॥

अथ तुम्बुतीर्थ माहात्म्य

हे देवि ! जो मनुष्य मीनस्थ सूर्यकी पौर्णमासी तिथिमें उत्तर फाल्गुनी नक्षत्र होनेपर चतुर्थकालमें उक्त पांचों तीर्थोंमेंसे इस गिरिगह्वरस्थ तुम्ब तीर्थमें स्नान करेगा, वह पुनः गर्भसे उत्पन्न नहीं होगा ॥७०॥

अथ आकाशगङ्गामाहात्म्यम्

अग्निवाहस्थिते भानौ चित्रानक्षत्रसंयुते ॥ पूर्णिमाख्ये तिथौ पुण्ये प्रातःकाले तथैव च ॥७१॥ आकाशगङ्गासरिति स्नातो मोक्षमवाप्नुयात् ॥७२॥

अथ आकाशगंगा माहात्म्य

मेषराशि स्थ सूर्यका चित्रा नक्षत्रसे योग होनेपर पुण्य पूर्णिमा तिथिके प्रातःकालमें इस आकाशगंगा नामक सरितामें स्नान करनेसे मनुष्य मोक्ष पाता है ॥७२॥

अथ पाण्डवतीर्थमाहात्म्यम्

वृषभस्थे रवौ राधे द्वादश्यां रविवासरे ॥ शुक्ले वाप्यऽथ वा कृष्णे पक्षे भौमसमन्विते ॥ ७३ ॥ तीर्थे पाण्डवनाम्न्यत्र सङ्गवे स्नाति यो नरः ॥ नेह दुःखमवाप्नोति परत्र सुखमश्नुते ॥७४॥

अथ पाण्डवतीर्थ माहात्म्य

हे राधे ! वैशाख मास द्वादशी तिथि रविवार भौमसमन्वित शुक्ल या कृष्ण पक्षमें संगव कालमें इस पाण्डवतीर्थमें जो मनुष्य स्नान करेगा, वह इस लोकमें कभी दुःख न पावेगा तथा परलोकमें भी परम सुख लाभ करेगा ॥७४॥

अथ पापनाशनतीर्थमाहात्म्यम्

शुक्ले पक्षेऽथ वा कृष्णे याऽर्कवारेण सप्तमी ॥ युक्ता पुण्यर्क्ष-संयुक्ता हस्तर्क्षेण युतापि वा ॥७५॥ तस्यां तिथौ महाभागे पाप-नाशनसंज्ञके ॥ तीर्थे यः स्नाति नियमाद् भूधरेन्द्रस्य मस्तके ॥७६॥ कोटिजन्मार्जितैः पापैर्मुच्यते स नरोत्तमः ॥

अथ पापनाशनतीर्थ माहात्म्य

हे महाभागे ! भूधरेन्द्र-शिखरस्थ पापनाशन तीर्थमें जो मनुष्य पुष्य अथवा हस्त नक्षत्रयुक्त पौष मासके शुक्ल अथवा कृष्ण पक्षके रविवार दिनको सप्तमी तिथिमें नियम बद्ध होकर स्नान करता है, वह पुरुषश्रेष्ठ करोड़ों जन्ममें किये हुए पापोंसे मुक्त हो जाता है ।.७६॥

अथ देवतीर्थमाहात्म्यम्

शृणु देवि परं गुह्यमनन्ताख्ये महागिरौ ॥७७॥ मद्दिव्यालय-वायव्ये शिखरे गिरिगह्वरे ॥ देवतीर्थमिति ख्यातं तटाकमतिशो-भनम् ॥७८॥ तस्मिन्पुण्यतमे देवि स्नानकालं वदामि ते ॥ गुरु-पुष्ये व्यतीपाते सोम श्रवणके तथा ॥७९॥ दिनेष्वेतेषु यः स्ना-ति तस्य पुण्यफलं शृणु ॥

अथ देवतीर्थ माहात्म्य

हे देवि ! अनन्त नामक पर्वतमें मेरे दिव्यालयके वायव्यकोणमें गिरिशिखरके गह्वरमें अतिरहस्यमय देव-तीर्थ नामक अत्यन्त सुन्दर तालाब है । उस पुण्यतम तालाबमें स्नान करनेका समय मैं बतलाता हूँ । गुरुवारके दिन पुष्यके व्यतीत हो जानेपर अथवा सोमवारको श्रवण नक्षत्र पड़नेपर जो कोई स्नान करता है, उसका फल सुनो ॥८०॥

यानि कानीह पापानि ज्ञानाज्ञानकृतानि च ॥८०॥ तानि स-र्वाणि नश्यन्ति देवतीर्थेऽतिपावने ॥ पुण्यान्यपि च वर्धन्ते देव-तीर्थनिमज्जनात् ॥८१॥ दीर्घमायुरवाप्नोति पुत्रपौत्रसमन्वितः ॥

अन्ते स्वर्गं समासाद्य चन्द्रलोके महीयते ॥८२॥ तद्दिनेष्वन्नदो देवि यावज्जीवान्नदो भवेत् ॥ अतिगुह्यतमं देवि प्रोक्तं तुभ्यं वसुन्धरे ॥८३॥

ज्ञान वा अज्ञान चाहे किसी तरहसे किया गया, जो कोई भी पाप हो वह सभी इस अति पवित्र देवतीर्थमें विलीन अथवा नाश हो जाता है। इस देवतीर्थमें स्नान करनेसे पुण्यकी अत्यन्त वृद्धि भी होती है तथा मनुष्य पुत्र-पौत्र सबोंसे परिपूर्ण होकर दीर्घ आयु पाता है, अन्तमें स्वर्गलोक पाकर चन्द्रलोकमें बढ़ता है एवं हे देवि ! उस दिन अन्नदान करनेवाला जीवनभर अन्नका अखण्ड-रूपसे दान करनेवाला होता है। हे वसुन्धरे ! तुमसे हमने अत्यन्त गुह्यतम वार्ता कही है ॥८३॥

श्रुत्वाथ पृथिवी देवी प्रीतिप्रवणमानसा ॥ इष्टाभिर्वाग्भिरतुलं तुष्टाव धरणीधरम् ॥८४॥

यह सब सुनकर पृथ्वी देवीने अत्यन्त प्रसन्न चित्तसे अनुपम धरणीधर भगवान् वराहदेवकी मीठे स्वरोंमें स्तुतिकी ॥८४॥

अथ धरणीकृतवराहस्तुतिः

धरण्युवाच—

नमस्ते देवदेवेश वराहवदनाच्युत ॥ क्षीरसागरसङ्काश वज्रशृङ्ग महाभुज ॥८५॥ उद्धृतास्मि त्वया देव कल्पादौ सागराम्भसः सहस्रबाहुना विष्णो धारयामि जगन्त्यहम् ॥८६॥ अनेकदिव्याभरण यज्ञसूत्रविराजित ॥ अरुणारुणाम्बरधर दिव्यरत्नविभूषित ॥८७॥ उद्यद्भानुप्रतीकाशपादपद्म नमो नमः ॥

अथ धरणीकृत वराहस्तुति

धरणी देवी बोली—हे वराहवदन ! देवाधिदेव, भगवान, अच्युत, क्षीरसागरके समान रूपवाले, वज्रशृङ्ग तथा महाभुज, हे प्रभो ! आपको प्रणाम करती हूं। हे विष्णु ! सहस्रबाहु ! कल्पके आरम्भकालमें समुद्रके जलथलसे आपसे ही बाहर निकाली हुई मैं जगतको धारण करती हूं। हे अनेक दिव्य आभूषणोंको धारण करनेवाले, यज्ञसूत्र विराजित, रघुवन्, एकान्त, लाल वस्त्रधारी, दिव्यरत्न विभूषित तथा उगते हुए सूर्य्यकी प्रभाके समान पादपद्मवाले भगवन् ! आपको प्रणाम है ॥८८॥

बालचन्द्राभदंष्ट्राग्र महाबलपराक्रम ॥८८॥ दिव्यचन्दनलिप्ताङ्ग तप्तकाञ्चनकुण्डल ॥ इन्द्रनीलमणिद्योतिहेमाङ्गदविभूषित ॥ ८९ ॥ वज्रदंष्ट्राग्रनिर्भिन्नहिरण्याक्ष महाबल ॥ पुण्डरीकाभिताम्राक्ष सामस्वनमनोहर ॥९०॥ श्रुतिसीमन्तभूषात्मन् सर्वात्मन् चारुविक्रम ॥ चतुराननशम्भुभ्यां वन्दितायतलोचन ॥९१॥ सर्वविद्यामयाकार शब्दातीत नमो नमः ॥ आनन्दविग्रहानन्त कालकाल नमो नमः ॥ ९२ ॥ इति स्तुत्वाऽचला देवी ववन्दे पादयोर्विभुम् ॥

बालचन्द्रमाके समान नोकीले चमकदार दांतवाले, महाबल, पराक्रमी, दिव्य चन्दन लिप्तांग, तप्तकांचनमय कुण्डलधारी, इन्द्रनीलमणि जटित स्वर्ण-वलयधारी, वज्रके समान दन्ताग्रोंसे महाबलवान, हिरण्याक्षको विदीर्ण कर देनेवाले, पुण्डरीकके समान लाल आंखवाले, सामवेदके स्वरसे मनोहर, वेदान्त भूषण, सर्वात्मा, विचित्र प्रभावाले ! ब्रह्मा तथा शंकरसे नमस्कृत, विशाल नेत्रवाले, सर्व विद्यामयाकार तथा शब्दातीत हे भगवन ! आपको बारम्बार प्रणाम है। हे आनन्द विग्रह ! हे अनन्त, हे कालके भी काल ! आपको बारम्बार प्रणाम है। इस प्रकार स्तुति कर धरणीदेवीने भगवान्के चरण कमलोंमें प्रणाम किया ॥९३॥

### अथ वराहस्य भगवतो धरण्या सार्कं शेषाचलगमनम्

वन्दमानां समुद्वीक्ष्य प्रीत्युत्फुल्लविलोचनः ॥ ९३ ॥ उद्धृत्य धरणीं देवीमालिलिङ्गेऽथ बाहुभिः ॥ आघ्राय धरणीवक्त्रं वामाङ्के सन्निवेश्य च ॥९४॥ आरुह्य गरुडेशानं जगाम वृषभाचलम् ॥ मुनीन्द्रैर्नारदाद्यैश्च स्तूयमानो महीपतिः ॥९५॥ स्वामिपुष्करिणीतीरे पश्चिमे लोकपूजिते ॥ तदाद्यैस्तैः श्रीवराहो मुनीन्द्रैस्तत्र पूजितः ॥९६॥ वैखानसैर्महाभागैर्ब्रह्मतुल्यमहात्मभिः ॥

### पृथ्वीके साथ भगवान्का शेषाचलपर जाना

भगवान्ने परम प्रफुल्लित नयन हो पृथ्वीदेवीको प्रणाम करते देखकर उसे ऊपर उठा, हृदयसे लगा, चारों भुजासे आलिङ्गन कर लिया और धरणीदेवीके मुखकमलको सूंघकर तथा अपने बायें बगल बैठाकर गरुड़पर सवार हो वृषभाचलपर चले गये। लोक पूजित स्वामिपुष्करिणीके

पश्चिमीय तीरपर नारदादि मुनियों तथा ब्रह्मतुल्य महात्मा महाभाग श्रीवैखानसोंसे श्रीवराह भगवान् वहीं पूजित हुए रहते हैं ॥६७॥

अथ अध्यायफलश्रुतिः

*व्यास उवाच—*

तद् दृष्ट्वा नारदः सूत मुनीनामुक्तवान्पुरा ॥ तदेतदहमश्रौषं तत्र वै मुनिसंसदि ॥६८॥ यत्पृष्टोऽहं त्वया सूत माहात्म्यं धरणी-भृताम् ॥ मया तूक्तं यथावद्धि नारदाच्च पुरा श्रुतम् ॥९९॥ य इदं धर्मसंवादमावयोः सूत पावनम् ॥ पठेद्वा देवपुरतो ब्राह्मणानां पुरस्तथा ॥१००॥ सर्वेषामपि वर्णानां शृण्वतां भक्तिपूर्वकम् ॥ स प्रतिष्ठितमाप्नोति पुत्रपौत्रसमन्वितः ॥ १०१ ॥ शृण्वतामपि सर्वेषां यदिष्टं तद्भविष्यति ॥१०२

व्यासजी बोले—हे सूतजी ! प्राचीन कालमें वह सब देखकर नारदजीने मुनियोंसे कहा और उन मुनियोंकी सभामें हमने यही सब सुना था। हे सूतजी ! आपने जो मुझको धरणीदेवीके माहात्म्यादिके विषयमें पूछा, वही मैंने नारदजीसे सुना हुआ आपसे कहा। जो कोई हमलोगोंका परम पवित्र यह धर्म संवाद देवमन्दिर अथवा ब्राह्मणों वा और सभी वर्णोंके सामने भक्तिभावसे पढ़ेगा, सुनेगा वा सुनावेगा वह पुत्र-पौत्रसे संपन्न हो कर अद्भुत प्रतिष्ठा लाभ करेगा और अन्यान्य कोई भी जो इसे सुनेगा, वहभी अपना सारा अभीष्ठ प्राप्त करेगा ॥१०२॥

*सूत उवाच—*

इति मे भगवान्व्यासः प्रोवाच मुनिसेवितः ॥ यथाश्रुतं मया पूर्वं कृष्णद्वैपायनाद् गुरोः ॥१०३॥ तत्तथा सर्वमेवात्र मयाप्युक्तं मुनीश्वराः ॥ श्रुत्वा सूतवचस्त्वित्थं ते प्रीतमनसोऽभवन् ॥१०४॥

श्रीसूतजी बोले—हे मुनीश्वरो ! जो कुछ मैंने भी भगवान् कृष्ण द्वैपायन श्रीगुरुदेव व्यासजीसे जैसे सुना, ठीक वही एवं उसी प्रकार कहा। इसी तरह मुनिगणसे सेवित श्रीव्यासजीने मुझसे कहा। मुनिगण यह सूतजीके वचन सुन अत्यन्त प्रसन्न होकर कहने लगे ॥१०४॥

*ऋषय ऊचुः—*

सूत त्वयोक्तं भुवि पर्वतेषु पुण्येषु पुण्यस्य महीधरस्य ॥ माहात्म्यमस्माकमहीन्द्रनाम्नः पापापहं मोक्षफलप्रदायकम् ॥१०५॥

ततो वृषाद्रिं सम्प्राप्य वराहो धरणीयुतः ॥ किमुक्तवान् धरण्यै स तन्नो ब्रूहि महामते ॥१०६॥

इति श्रीवराहपुराणे भूगोलोपाख्याने धरणीवराहसंवादे श्रीवेङ्कटाचलमाहात्म्ये उत्तरभागे नारदस्य सुमेरुशिखरस्थयज्ञवराहदर्शनप्राप्त्यादिवर्णनं नाम प्रथमोऽध्यायः ॥१॥

ऋषियोंने कहा—हे महाभाग श्रीसूतजी! आपने हमलोगोंको पापहारक, मोक्षफलदायक, पृथ्वीतलपरके परमपुण्य तथा पर्वतोंमें श्रेष्ठ शेष नामक पर्वतका माहात्म्य कहा है; किन्तु अब कृपया यह बतावें कि पृथ्वी देवीके साथ वराह भगवान्ने वृषाद्रिपर आकर पृथ्वीदेवीसे क्या क्या कहा? ॥१०६॥

इति प्रथमोऽध्यायः ॥१॥

# द्वितीयोऽध्यायः ॥२॥



धरणीसे वाराहका, मन्त्र वराह बखान।
मन्त्र प्रभावहिं धर्म मनु, इष्ट सिद्धयुपाख्यान ॥१॥
आराधन विधि मन्त्रका, विस्तृत श्रीवाराह।
इस द्वितीय अध्यायमें, शिक्षा कीन्ह प्रवाह ॥२॥

अथ श्रीवाराहमन्त्राराधनविधिः

*श्रीसूत उवाच—*

श्रृणुध्वं मुनयः सर्वे कथां पुण्यां पुरातनीम् ॥ वैवस्वतेन्तरे पूर्वं कृते पुण्यतमे युगे ॥१॥ नारायणाद्रौ देवेशं निवसन्तं क्षमापतिम् ॥ वराहरूपिणं देवं धरणी सखिभिर्वृता ॥२॥ प्रणम्य परिपप्रच्छ रक्तपद्मायतेक्षणम् ॥

## अथ श्रीवराह मन्त्राराधनविधि

श्रीसूतजी बोले – हे सकल मुनिवर्गो ! आप लोग प्राचीन कालकी परम पुण्यप्रद कथा सुनें । अत्यन्त प्राचीन कालमें वैवस्वत मन्वन्तरके अन्तर्गत परम पुण्यतम कृत्ययुगमें श्रीनारायण पर्वतपर निवास करनेवाले एवं रक्तकमलके समान दीर्घ आंखवाले वराहरूप क्षमापति भगवान्को सखियोंसे आवृत होकर श्रीपृथ्वीदेवी प्रणाम कर पूछने लगीं ॥१॥

धरण्युवाच

आराध्यः केन मन्त्रेण भवान् प्रीतो भविष्यति ॥२॥ तं मे वद त्वं देवेश यः प्रियो भवतः सदा ॥ जपतां सर्वसम्पत्तिकारकं पुत्रपौत्रदम् ॥४॥ सार्वभौमत्वदं चैव कामिनां कामदं सदा ॥ अन्ते यत्त्वत्पदप्राप्तिं ददाति नियतात्मनाम् ॥५॥ एवम्भूतं वद प्रीत्या मयि वाराह मानद ॥६॥

धरणीदेवी बोलीं—हे देवेश ! आप किस मन्त्रसे आराधित होकर प्रसन्न होते हैं । हे मान-दाता वराह भगवन् ! आप प्रसन्न होकर अपने परम प्रिय मन्त्रको कृपया कहें । जो सदा जपनेवालोंको सम्पत्ति, पुत्र एवं पौत्रसे भरा पूरा कर देता है, जो सार्वभौमत्व एवं सब तरहकी कामनाओंको पूर्ण करता है और अन्तमें आपके पदको भी देता है ॥६॥

श्रीसूत उवाच—

इति पृष्टस्तया भूम्या प्राह प्रीतिस्मिताननः ॥७॥

श्रीसूतजी कहने लगे—श्रीभूमिदेवीके इस प्रकार पूछनेपर प्रसन्नमुख श्रीवराह भगवान् कहने लगे ॥७॥

श्रीवराह उवाच—

शृणु देवि परं गुह्यं सद्यः सम्पत्तिकारकम् ॥ भूमिदं पुत्रदं गोप्यमप्रकाश्यं कदाचन ॥८॥ किञ्च शुश्रूषवे वाच्यं भक्ताय नियतात्मने ॥

श्रीवराह भगवान् बोले—हे देवि ! सुनो, जो परम गोप्य तुरन्त ऐश्वर्य, सम्पत्ति तथा भूमि आदि सबको देनेवाला है और जो कभी प्रकाश करने लायक नहीं है, उसे मैं कहता हूं । यह मन्त्र केवल नियतात्मा परम भक्तको ही बताया जा सकता है ॥९॥

ॐ नमः श्रीवराहाय धरण्युद्धरणाय च ॥९॥ वह्निजायासमायुक्तः सदा जप्यो मुमुक्षुभिः॥ अयं मन्त्रो धरादेवि सर्वसिद्धिप्रदायकः ॥१०॥ ऋषिः सङ्कर्षणः प्रोक्तो देवता त्वहमेव हि ॥ छन्दः पंक्तिः समाख्याता श्रीं बीजं समुदाहृतम् ॥११॥ चतुर्लक्षं जपेन्मन्त्रं सद्गुरोर्लब्धतन्मनुः ॥ जुहुयात्पायसान्नं वै क्षौद्रसर्पिःसमन्वितम् ॥१२॥

॥ मन्त्र ॥

"ओं नमः श्रीवराहाय धरण्युद्धरणाय स्वाहा"

यह मन्त्र सदा मोक्षाभिलाषियोंको जप करना चाहिये। हे देवि! यह मन्त्र सब सिद्धियोंको देनेवाला है। इसके ऋषि संकर्षण हैं, और इसका देव मैं ही हू। इसके छन्द पंक्तिछन्द और बीज "श्री" है। इसको सद्गुरुसे पाकर चार लाख जप करे, और घी तथा मधुके साथ पायसान्नका होम करे ॥१२॥

अथ ध्यानं प्रवक्ष्यामि मनःशुद्धिप्रदायकम् ॥ शुद्धस्फाटिकशैलाभं रक्तपद्मायतेक्षणम् ॥१३॥ वराहवदनं सौम्यं चतुर्बाहुं किरीटिनम् ॥ श्रीवत्सवक्षसं चक्रशङ्खाभयकराम्बुजम् ॥१४॥ वामोरुस्थितया युक्तं त्वया मां सागराम्बरे ॥ रक्तपीताम्बरधरं रक्ताभरणभूषितम् ॥ श्रीकूर्मपृष्ठमध्यस्थशेषमूर्त्यब्जसंस्थितम् ॥१५॥ एवं ध्यात्वा जपेन्मन्त्रं सदा चाष्टोत्तरं शतम् ॥१६॥ सर्वान्कामानवाप्नोति मोक्षं चान्ते व्रजेद् ध्रुवम् ॥ प्रोक्तं मया ते धरणि! यत्पृष्टोऽहं त्वयाऽमले ॥१७॥ अतः किं ते व्यवसितं ब्रूहि तद्विमलानने ॥ १८ ॥

अनन्तर मनको शुद्धि-प्रदान करनेवाले इस मन्त्रके ध्यानको बतलाता हूं। शुद्ध स्फटिकके समान स्वच्छ, रक्तपद्मके समान आंखवाले, वराहवदन, सौम्य, चतुर्बाहु, किरीटधारी, श्रीवत्सांकित, शंख-चक्र अभयास्त्रधारी, तुमसे सुशोभित वामोरुवाले, रक्तपीताम्बरधारी, लाल-लाल आभूषणयुक्त, श्रीकूर्मकी पीठपर रहनेवाले, शेषरूप कमलकोशमें बैठे हुए मेरे स्वरूपका ध्यान करता हुआ मनुष्य सदा उपर्युक्त अष्टोत्तर शत मंत्र जप करे तो, सब

कामनाओंकी पूर्ति लाभकर अन्तमें मोक्ष अवश्य ही प्राप्त करता है। हे अमल ! पृथ्वीदेवि ! तुमने जो पूछा था वह तो मैंने कह दिया। हे विमलानने ! अब और क्या सुननेकी इच्छा है, उसे भी पूछ लो ॥१८॥

### अथ श्रीवराहमन्त्रेण धर्मादीनां स्वाभीष्टसिद्धिवर्णनम्

*श्रीसूत उवाच*

एतत् श्रुत्वा ततो भूमिः पप्रच्छ पुनरेव तम् ॥ केनैवानुष्ठितं देव पुरा प्राप्तं फलं च किम् ॥१९ इति पृष्टः पुनर्देवः श्रीवराहोऽब्रवीदिदम् ॥

श्रीसूतजी बोले—यह सुनकर धरणीदेवी पुनः उनसे पूछने लगीं कि हे देव ! पहले इस मन्त्रका अनुष्ठान किसने किया था तथा उसका उसने क्या फल पाया ? यह सुनकर श्रीवराह भगवान् पुनः कहने लगे ॥२०॥

पुरा कृतयुगे देवि धर्मो नाम मनुर्महान् ॥२०॥ ब्रह्मणोऽमुं मनुं लब्ध्वा जप्त्वाऽस्मिन् धरणीधरे ॥ मां च दृष्ट्वा वरं लब्ध्वा प्राप्तोऽभून्मामकं पदम् ॥२१॥ इन्द्रो दुर्वाससः शापात्पुरा भ्रष्टास्त्रिविष्टपात् ॥ अनेनेष्ट्वाऽत्र मां देवि पुनः प्राप्तस्त्रिविष्टपम् ॥२२। अन्येऽपि मुनयो भूमे जप्त्वा प्राप्ताः परां गतिम् ॥ अनन्तः पन्नगाधीशो ह्यमुं लब्ध्वाऽथ कश्यपात् ॥२३॥ श्वेतद्वीपे जपित्वैव बभूव धरणीधरः ॥ तस्माज्जप्यः सदा चेह मनुष्यैश्च धरार्थिभिः ॥२४॥

"हे देवि ! पहले कृतयुगमें धर्म नामक महामनुने ब्रह्मासे इस मन्त्रको पाकर इसी पर्वतपर जप किया था और उसके फलस्वरूप मेरे दर्शन तथा वर पाकर अन्तमें मेरे स्वरूपको भी पाया। प्राचीन समयमें दुर्वासा ऋषिके शापसे स्वर्गसे गिराये गये इन्द्रदेवने इसी मन्त्रसे मेरा पूजन कर पुनः स्वर्ग प्राप्त किया। पृथ्वीतलमें और अनेकों मुनियोंने इस मन्त्रको जपकर परमगति लाभ किया। पन्नगाधीश श्रीअनन्त भगवान् भी कश्यप ऋषिसे इसी मन्त्रको पाकर श्वेतद्वीपमें जपकर धरणीधर हो गये, अतएव भूमि चाहनेवालेको यह मन्त्र सर्वदा जपना चाहिये ॥२४॥

*श्रीसूत उवाच—*

एतत् श्रुत्वाऽथ सुप्रीता पुनः प्राह धराधरम् ॥२५॥

श्रीसूतजी बोले—यह सुनकर परम प्रसन्न हो, धरणीदेवी धराधर भगवानसे पुनः बोलीं ॥२५॥

धरण्युवाच

वेङ्कटाख्ये महाशैले श्रीनिवासो जगत्पतिः ॥ कदा ह्यायाति देवेशः श्रीभूमिसहितोऽमलः ॥२६। कथं कल्पान्तरस्थायी भविष्यति जनार्दनः ॥ एतद् ब्रूहि वराहात्मन् महत्कौतूहलं मम ॥२७॥

इति श्रीवराहपुराणे भूगोलोपाख्याने धरणीवराहसंवादे श्रीवेङ्कटाचलमाहात्म्ये उत्तरार्धे श्रीवराहमन्त्राराधनविध्यादिवर्णनं नाम द्वितीयोऽध्यायः ॥ २ ॥

धरणीदेवी बोलीं—वेङ्कटाचल पर्वतपर जगत्पति देवाधिदेव अमल श्रीनिवास भगवान् श्री तथा भूमिदेवीके साथ कब आते हैं ? और वही जनार्दन भगवान् कल्पान्तरस्थायी किस प्रकार हो जाते हैं ? हे वराहदेव ! आप मुझे यह बतला दें ॥२७॥

इति द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ॥३॥

ऋषि अगस्त्यकी विनयसे, श्रीवराह भगवान।
दृग्गोचर होइ नरनके, ईश रहे नहिं यान ॥१॥
*हुआ मित्रवर्मा नृपहिं, वियत राज सुत वीर ।*
धरणीसे पद्मावती, वसुदान अति धीर ॥२॥

अथ अगस्त्यप्रार्थनया भगवतः सर्वजनदृग्गोचरत्वम्

*श्रीवराह उवाच—*

हन्त ते कथयिष्यामि पुरावृत्तं वरानने ॥ शृणु पुण्यं महादेवि सभविष्यं सहोत्तरम् ॥ १ ॥

## अथ भगवान्‌की सर्व प्रत्यक्ष्यताका वर्णन

श्रीवराहदेव बोले—हे वरानने ! हे प्रिये !! मैं तुमको प्राचीन कालकी सभी बातें कहता हूं । हे देवि ! इस परम पवित्र पुण्य कथाको भूत एवं भावी वृत्तान्तके साथ सब कुछ सुनो ॥१॥

वैवस्वतेऽन्तरे देवि पूर्वं कृतयुगेऽन्तरे ॥ वायोस्तपो महद् दृष्ट्वा श्रीभूमिसहितोऽनघे ॥२॥ आगच्छच्छ्रीनिवासश्च स्वामिपुष्करिणीतटे ॥ दक्षिणेऽस्मिन्पुण्यतमे विमाने नन्दसंज्ञके ॥३॥ वसिष्यति च श्रीकान्तो वायोः प्रियकरो हरिः ॥ तदारभ्य हृषीकेशः सेनान्याऽऽराधितोऽनिशम् ॥४॥ आकल्पान्तमदृश्येऽस्मिन्विमानेऽसौ वसिष्यति ॥

पहले वैवस्वत कृतयुगमें वायुकी घोर तपस्या देखकर श्रीभूमिसहित श्रीनिवास भगवान् स्वामिपुष्करिणी तटपर चले आये और वायुके प्रसन्नार्थ इसी दक्षिणके पुण्यतम नन्द नामक विमानमें श्रीकान्त भगवान् निवास करने लगे । उसी समयसे कार्तिकेयद्वारा आराधित हो कल्पपर्यन्त इसी पर्वतीय विमानमें अदृश्य रूपसे निवास करने लगे ॥५॥

धरण्युवाच—

अदृश्यो भगवान्मर्त्यैः कथं दृश्यो भविष्यति ॥५॥ श्रीनिवासोऽपि देवेशो भवद्दक्षिणपार्श्वगः ॥ एतद्वद सुराधीश जनैराराध्यते कथम् ॥६॥

धरणीदेवी बोलीं—हे देव ! अदृश्यरूप भगवान् मनुष्योंको कैसे दृश्य होंगे ! हे सुराधीश आपके दक्षिण भागमें रहकर देवेश श्रीनिवास भी मनुष्योंसे कैसे आराधित होते हैं ॥६॥

*श्रीवराह उवाच—*

अगस्त्योऽस्मिन्समासाद्य पुरा देवं सनातनम् ॥ आराध्य द्वादशाब्दं तं प्रीणयित्वा पुनः पुनः ॥७॥ ययाचे तत्र सान्निध्यं भवान् दृश्यो भवत्विति ॥ एवमुक्तो हृषीकेशः श्रीभूमिसहितो धरे ॥८॥

श्रीपद्मावती देवीकी उत्पत्ति [पृष्ठ १६८]



पकदारवतो राजा धरणीसक्तलोचन ।
यज्ञार्थं शोधयामास भुजमारणितीरत ॥
काञ्चनेन हलेनैव कृष्यमाणे महीतले ।
बीजमुष्टिं विकिरता दृष्टा कन्या धरोद्गता ॥

श्रीभगवानुवाच—

अहं दृश्यो भविष्यामि त्वत्कृते सर्वदेहिनाम् ॥ एतद्विमानं देवर्षे न दृश्यं स्यात्कदाचन ॥९॥ आकल्पान्तं मुनीन्द्रास्मिन्दृश्योऽहं नात्र संशयः ॥ मुनिस्तद्वचनं श्रुत्वा प्रीतः प्रायात्स्वमाश्रमम् ॥१०॥

श्रीवराह देव बोले—हे पृथ्वी देवी ! पहले यहां अगस्त्य ऋषिने आकर सनातन भगवान्‌की बारह वर्षतक आराधना कर प्रसन्न करके भगवान्‌की सान्निध्य तथा प्रत्यक्ष हो जानेके लिये बारम्बार वर मांगा। ऐसा कहनेपर श्रीभूमिसहित हृषीकेश भगवान् बोले—"मैं तुम्हारे कारण सभी लोगोंके समीप दृश्य होऊंगा, किन्तु हे देवर्षि ! यह विमान कभी दृश्य न होगा। मैं अवश्य आकल्पान्त यहां मनुष्योंके दृश्य रहूंगा, इसमें सन्देह नहीं है। यह सुनकर ऋषि परम प्रसन्न हो अपने आश्रमको लौट आये" ॥१०॥

ततश्चतुर्भुजो देवः स दृश्योऽभून्नरादिभिः ॥ विमाने मुनिचिन्त्येऽस्मिन्नासिता च तथोत्तरम् ॥११॥ आराध्यमानः स्कन्देन वायुना सेवितः सदा ॥

चतुर्भुज भगवान् उसी समयसे स्कन्द तथा वायुसे सेवित होकर, केवल मुनियोंसे चिन्तनीय उस विमानमें सभी मनुष्योंके दृश्य होकर रहने लगे ॥१२॥

अथ मित्रवर्मणः आकाशराजाख्यसुतोत्पत्तिवर्णनम्

एवं गते महाकाले चतुर्युगसमन्विते ॥१२॥ अष्टाविंशे तु सञ्जाते द्वापरान्ते वसुन्धरे ॥ युद्धे च भारतेऽतीते तिष्ये सति युगे तथा ॥१३॥ विक्रमार्कादयो भूपाः शकाः शूद्रादयस्तथा ॥ गमिष्यन्ति स्वर्गलोकं मामज्ञात्वा वरानने ॥१४॥ ततः सोमकुलोद्भूतो मित्रवर्मा महारथः ॥ तुण्डीरमण्डले राजा नारायणपुरे वसन् ॥१५॥ भविष्यति वरारोहे महाभाग्योदयो महान् ॥

चार महायुगोंका महाकाल व्यतीत हो जानेपर हे वसुन्धरे ! द्वापरके अन्त तथा अट्ठाइस कलिके व्यतीत एवं महाभारतयुद्धके समाप्त हो जानेपर, विक्रमार्क आदि अनेक शक तथा शूद्रक राजा मुझे न जानकर ही स्वर्ग चले जायंगे। पीछे तुण्डीर-मण्डलके नारायणपुरमें वास करनेवाले सोमवंशमें मित्रवर्मा नामक महाभाग्यवान महारथी राजा होंगे ॥१६॥

तस्मिञ्छासति भूलोकं धर्मेण पृथिवीपतौ ॥१६। अकृष्टपच्या पृथिवी सर्वसस्यविभूषणा॥ निरीतिकोऽभवत्सर्वो जनो धर्मसमन्वितः ॥ १७ ॥ तस्य पत्नी समभवत्पाण्ड्यकन्या मनोरमा ॥ तस्य जज्ञे कुलोत्तंसो वियन्नामा सुतोऽस्य वै ॥ १८ ॥ तस्य पत्नी तु धरणी नाम्नासीच्छकवंशजा ॥ तस्मिन् राज्यं विनिक्षिप्य मित्रवर्मा नृपोत्तमः ॥ १९ ॥ ययौ तपोवनं पुण्यं वेङ्कटाद्रेः समीपतः ॥ २० ॥

हे वरारोहे ! उस धर्मात्मा राजाके धर्मसे भूलोकका शासन करते समय पृथ्वीमण्डल बिना जोते ही उपजनेवाला तथा सर्व सस्य-सम्पन्न हुआ था। उसकी सभी धार्मिक प्रजा ईति या व्याधिरहित रहती थी। पांड्यकन्या मनोरमा देवी उसकी पत्नी थी। उससे आकाश नामक पुत्रकी उत्पत्ति हुई। इस आकाश कुमारकी स्त्री शकवंशजा धरणीदेवी थी। नृपोत्तम राजा मित्रवर्मा इसी आकाशकुमारपर राज्यभार देकर परम पुण्य वेङ्कटाद्रिके तपोवनमें चले गये ॥२०॥

अथ धरणीतलात्पद्मावत्युत्पत्तिक्रमः

आकाशनामा तु महान् राजाऽभूत्सार्वभौमकः ॥ एकदारव्रतो राजा धरणीसक्तचेतनः ॥ २१ ॥ यज्ञार्थं शोधयामास भुवमारणितीरतः ॥ काञ्चनेन हलेनैव कृष्यमाणे धरातले ॥ २२ ॥ बीजमुष्टिं विकिरता दृष्टा कन्या धरोद्गता ॥ पद्मशय्यागता रम्या सर्वलक्षणलक्षिता ॥२३॥ तप्तजाम्बूनदमयी पुत्रिकेव विराजती ॥

अथ पृथ्वीपर पद्मावतीकी उत्पत्ति

केवल धरणीदेवीमें अनुरक्त तथा एकपत्नीव्रतवाले महाराज आकाश अब अखण्ड सार्वभौम राजा हो गये। उन्होंने आरणी नदीके किनारेकी पृथ्वीको यज्ञार्थ सोनेके हलसे जोतना आरम्भ किया। जोती हुई पृथ्वीमें मुट्ठीभर बीज बोते ही राजाको भूमिसे आविर्भूत, सर्व-लक्षण-सम्पन्न, तपाये हुए सोनेकी बनायी पुतलीकी तरह शोभित तथा कमलरूपशय्यापर सोयी हुई एक परम मनोहर कन्या दीख पड़ी ॥२४॥

तां दृष्ट्वा स महीपालो विस्मयोत्फुल्ललोचनः ॥२४। आदाय

तनया चेयं ममैवेति पुनः पुनः ॥ जहर्ष मन्त्रिभिश्चैनं प्राह वाग-
शरीरिणी ॥ २५ ॥ सत्यं तवैव तनया वर्धयस्व सुलोचनाम् ॥
ततः प्रीतमना राजा स्वपुरं प्रविवेश ह ॥ २६ ॥ आहूय धरणी-
देवीमिदमाह महीपतिः ॥ देवदत्तामिमां पश्य भूतलादुत्थितां
मम ॥२७॥ आवाभ्यां तदपुत्राभ्यां पुत्रीयं भाविता ध्रुवम् ॥ इत्यु-
क्त्वा प्रददौ देव्या हस्ते प्रीत्या वियन्नृपः ॥२८॥

उस लड़कीको आश्चर्यान्वित हो देख तथा लाकर "यह लड़की मेरी ही है"—ऐसा बारम्बार कहते हुए, मन्त्रियोंके साथ राजा आनन्दित हुए, तब आकाशवाणीने कहा कि सत्य ही यह आपहीकी पुत्री है; अतएव इस सुलोचनाको तुम पालो। तदनन्तर प्रसन्न मन होकर राजाने अपने महलमें प्रवेश किया और अपनी स्त्री धरणीदेवीको बुलाकर कहा कि देवताओंसे दी हुई पृथ्वीतलसे उत्पन्न मेरी इस कन्याको देखो। हम दोनों अपुत्रोंकी यही पुत्री होगी, ऐसा कह आकाश राजाने परम प्रीतिसे उसे देवीके हाथोंमें दे दिया ॥२८॥

अथ आकाशराजस्य धरणाख्यपत्न्यां वसुदानाख्यसुतोत्पत्तिः

तस्यां गृहं प्रविष्टायां धरणी गर्भमादधौ ॥ वियन्नृपश्च सुप्रीतो
वीक्ष्य स्निग्धां विलोचनाम् ॥ २९ ॥ उवाच फलिता सुभ्रूलता
सान्तानिक च मे ॥३०॥ अथ सा धरणी देवी काले कमललो-
चना ॥ सुप्रशस्ते च मुहूर्ते च स्वोच्चसंस्थेषु पञ्चसु ॥३१॥ ग्रहेषु
सुषुवे पुत्रं मेषस्थे च दिवाकरे ॥ देवदुन्दुभयो नेदुः पुष्पवृष्टिर्ग्र-
हेऽपतत् ॥३२॥ ववौ वायुः सुखस्पर्शस्तज्जन्मदिवसे तदा ॥ पुत्र-
सूतिप्रवक्तॄणां सुप्रीतः पुत्रजन्मनि ॥३३॥ सर्वस्वदानमकरोच्छ-
त्रचामरवर्जितम् ॥ कपिलाकोटिदानं च वृषभाणां शताधि-
कम् ॥३४॥ दिवसे द्वादशे पुण्यं जातकर्मादिकाः क्रियाः ॥ चकार
नामधेयं च वसुदान इति स्वयम् ॥३५॥

आकाश राजाकी धरणीनामक पत्नीसे वसुदान नामक पुत्रकी उत्पत्ति

उसके घरमें प्रवेश करते ही धरणीदेवीने गर्भ धारण किया। सुन्दर नेत्रवाली देवीको देखकर आकाश राजा परम प्रसन्न हो बोले कि आज मेरी सन्तान हेतु शोभनभ्रूवाली सुन्दर लता सफल हुई।

तब कमलके समान नेत्रवाली उस धरणीदेवीने अत्यन्त शुभ मुहूर्तमें पाँचों शुभ ग्रहोंके उच्च स्थानमें बैठनेपर तथा मेषकी संक्रान्तिमें पुत्ररत्न प्रसव किया। देवताओंको दुन्दुभियाँ बजीं तथा घरमें पुष्पोंकी वृष्टि हुई। उसके जन्मदिनमें सुखस्पर्श वायु बहने लगी। पुत्रजन्मके उपलक्ष्यमें पुत्रोत्पत्तिके बारेमें पूछनेवाले सभोंको प्रसन्न होकर स्वयं राजाने, छत्र तथा चमर (राजचिन्ह) को छोड़कर सर्वस्व दान कर दिया। करोड़ों कपिला गायों एवं सौसे अधिक सांढ़ बैलोंका दान किया और पवित्र बारहवें दिन जातकर्मादि क्रिया कर स्वयं राजाने वसुदान, ऐसा नामकरण भी किया॥३५॥

श्रीवराह उवाच—

आकाशतनयो देवि वसुदानो मनोरमः॥ ववृधे दिवसैर्बालः
शुक्लपक्ष इवोडुराट्॥३६॥ उपनीतो विनीतोऽसौ गुरुभिर्ब्रह्मपारगैः॥
पितुरस्त्राणि शस्त्राणि मन्त्रवत्सोऽप्याशिक्षत॥३७॥ चतुष्पादं
धनुर्वेदं साङ्गोपाङ्गमधीतवान्॥ पिता तेनातिबलिना दुराधर्षः प-
रैरभूत्॥३८॥ आकाश इव निष्पङ्को ग्रीष्मे भानुमता युतः॥
वैशाख इव मध्याह्ने दुःसहो दुर्निरीक्ष्यकः॥३८॥

इति श्रीवराहपुराणे भूगोलोपाख्याने धरणीवराहसम्वादे श्रीवेङ्कटाचलमाहात्म्ये वसतार्ये अगस्त्यप्रार्थनया भगवतः सर्वजनदृग्गोचरत्वादिवर्णनं नाम तृतीयोऽध्यायः॥३॥

श्रीवराह भगवान् बोले—हे देवि! आकाश राजाका परम मनोहर लड़का बालक वसुदान दिनोंदिन शुक्ल पक्षके चन्द्रमाके समान बढ़ने लगा। परम विनीत वह ब्रह्मवेत्ता गुरुओंसे उपनीत हुआ। पितासे अस्त्रों तथा शास्त्रोंको उसने मन्त्रपूर्वक सीख लिया। चार शाखाके धनुर्वेदको भी सांगोपांग पढ़ लिया। उस परम बलवान पुत्रके कारण पिता (आकाशराजा) शत्रुओंसे दुराधर्ष, तथा वैशाख मासके दोपहरमें सूर्यसे युक्त आकाशके समान निर्मल और दुर्निरीक्ष्य हो गये॥३९॥

इति तृतीयोऽध्यायः॥३॥

## चतुर्थोऽध्यायः॥४॥

वियत राज-कन्या जनम, नामकरण संस्कार।
पद्मावती पद्म बागमें, नारद मुनि संचार॥१॥

आकाशराजाका धरणीदेवीके पास पद्मावतीको देना [ पृष्ठ १६६ ]



देवदत्तामिमा पश्य भूतलादुत्थिता मम।
आवाभ्या तदपुत्रभ्या पुत्रीय भाविता ध्रुवम्।
इत्युक्त्वा प्रददौ देव्या हस्ते प्रीत्या वियन्नृप ॥

सामुद्रिक लक्षण कथन, विपिन गमन सखिसंग ।
पद्मावति सह मिलन तहं, प्रभु शिकारके ढंग ॥२॥

अथ उद्यानवासिन्याः पद्मावत्याः समीपे नारदागमनम्

*धरण्युवाच—*

उक्तं भगवता तस्य वियत्पुत्रस्य नाम च ॥ अयोनिजायास्त-
त्पुत्र्याः किं नाम च तदाऽकरोत् ॥१॥

उद्यानवासिनी पद्मावतीदेवीके निकट श्रीनारदजीका आगमन

धरणीदेवीने पूछा कि आकाश राजाके पुत्रका नाम तो आपसे ही कहा गया, पर बिना गर्भवासके उत्पन्न हुई उस पुत्रीका नाम क्या रक्खा ॥१॥

*श्रीसूत उवाच—*

इति पृष्टः पुनः प्राह श्रीवराहो जगत्पतिः ॥२॥

श्री सूतजी बोले—यह पूछनेपर जगत्पति श्रीवराह भगवान् पुनः बोले ॥२॥

*श्रीवराह उवाच—*

आकाशराजो मतिमांस्तां दृष्ट्वा कमलेशयाम् ॥३॥ पद्मिनीति
च नाम्ना वै चकार वसुधासुताम् ॥ तां तु यौवनसम्पन्नां सखी-
भिः परिवारिताम् ॥ ४ ॥ आरामे विहरन्तीं च शुककोकिलना-
दिते ॥ यदृच्छयाऽऽगतस्तत्र नारदो मुनिसत्तमः ॥५॥ वनलक्ष्मी-
*मिवालोक्य विस्मयादिदमब्रवीत्* ॥ ६ ॥

श्रीवराहजी बोले—उस कमलशायिनी कन्याको देखकर मतिमान आकाश राजाने उस पृथ्वी-पुत्रीका नाम 'पद्मिनी' रक्खा । उस यौवनसम्पन्ना, सखिगणोंसे घिरी हुई, शुक तथा कोयलकूजित बगीचेमें विहार करती हुई पद्मिनी के पास एकदिन अकस्मात् मुनिसत्तम नारदजी आ गये और वनलक्ष्मीके समान उसको देखकर आश्चर्यसे यह बोले ॥६॥

*नारद उवाच—*

काऽसि कस्य सुता भीरु हस्तं दर्शय मे तव ॥ इत्युक्ता सा
सुचार्वङ्गी स्वात्मानं मुनयेऽब्रवीत् ॥७॥ वियद्राजसुता ब्रह्मन्

लक्षणानि वदस्व मे ॥ इत्युक्तः स तदा प्राह नारदो मुनिसत्तमः॥ ८ ॥

नारदजी बोले—तुम कौन हो ? किसकी पुत्री हो ? हे भीरु ! अपना हाथ मुझको दिखाओ । ऐसा कहे जानेपर वह सुन्दर शरीरवाली, अपने विषयमें मुनिसे कही कि,—हे ब्राह्मण ! मैं आकाश राजाकी कन्या हूं, मेरे लक्षणोंको कहिये ॥८॥

अथ नारदोदीरितपद्मावतीशरीरलक्षणानि

*नारद उवाच—*

शृणु त्वं चारुवदने लक्षणानि वदामि ते ॥ पादौ प्रतिष्ठितौ सुभ्रु रक्तपद्मदलान्वितौ ॥९॥ पादाङ्गुल्यः समा रक्ता रक्ततुङ्गनखान्विताः ॥ गुल्फौ गूढौ समावेतौ जङ्घे चारोमशे शुभे ॥१०॥ जानुनी समसुस्निग्धे समावूरू क्रमादुरू ॥ नितम्बौ पृथुलौ पीनौ जघनं चिन्त्यमेव हि॥११॥ नाभिर्मण्डलवान्निम्नः पार्श्वौ ते मेचकावुभौ ॥ त्रिवलीललितं मध्यं रोमराजिविराजितम् ॥१२॥ स्तनौ पीनौ घनौ स्निग्धावुन्नतौ मग्नचूचुकौ ॥ करौ ते रक्तपद्माभौ पद्मरेखासमन्वितौ ॥ सुसूक्ष्मौ रक्तसत्पर्वनिरन्तरसमाङ्गुली ॥१३॥ शुकतुण्डसमाकारनखपङ्क्तिविराजितौ ॥ दीर्घौ च कोमलौ भद्रे भुजौ ते पुष्पदण्डवत् ॥१४॥ पृष्ठं ते वेदिवद्भाति विलग्नमृजुमध्यमम् ॥ कण्ठस्तु रक्तो दीर्घश्च स्कन्धौ चावनतौ शुभे ॥१५॥ मुखं प्रसन्नं सततमकलङ्कशशिप्रभम् ॥ कपोलौ कनकादर्शसदृशौ कुण्डलोज्ज्वलौ ॥१६॥ तिलपुष्पसमाकारा नासिका ते शुभानने ॥ अकलङ्काष्टमीचन्द्रसदृशोऽतिमनोहरः ॥१७॥ दृश्यतेऽयं ललाटस्ते नीलालकसुशोभितः ॥ मूर्धा ते समवृत्तश्च स्निग्धायतकचान्वितः ॥१८॥ स्मितसंशोभिदशनं बिम्बाधरसमन्वितम् ॥ मुखं ते विष्णुयोग्यं स्यादिति मे निश्च-

ता मतिः ॥१९॥ नाभिस्ते दक्षिणावर्त आवर्त इव गाङ्गजः ॥ त्वं हि क्षीराब्धिसम्भूता लक्ष्मीरिव हि दृश्यसे ॥२०॥

नारदजी बोले—हे चारुवदने ! तेरे लक्षण तुमसे कहता हूं, सुनो । हे सुन्दर भृकुटीशाली तुम्हारे दोनों पैर सुन्दर स्थिर तथा लाल कमलदलके समान हैं, पैरकी अंगुलियां एकरूप लाल-लाल ऊंचे-ऊंचे नखयुक्त हैं। दोनों गुल्फें समान तथा गूढ़ हैं। दोनों जांघें रोमहीन तथा सुन्दर हैं। दोनें घुटने समान तथा चिकने हैं, दोनों ऊरु सम एवं क्रमसे सुडौल हैं। नितम्ब ( चुतड़ ) मांसपूर्ण, फैले, मोटे, पुष्ट तथा दर्शनीय हैं। नाभी मंडलशाली तथा गहरी है। उदर अति सूक्ष्म है। तेरी दोनों बगलें सफेद हैं। मध्यभाग ( कमर, पेट ) सुन्दर, त्रिवलि रेखायुक्त तथा रोमश्रेणि सुशोभित हैं। दोनों स्तन पीन, बड़े-बड़े सघन, चिकने, उठे हुए, तथा उनकी चूंचियां धंसी हुई हैं। तेरे दोनों हाथ लाल कमलकी प्रभायुक्त, पद्मरेखायुक्त, पतले-पतले सुन्दर पोरयुक्त, अविरल समान अंगुलियांयुक्त तथा शुकके ठोरके समान आकारवाले नखपंक्तियुक्त सुशोभित हो रहे हैं। तेरी दोनों भुजाएं लम्बी, कोमल तथा फूलोंके डंठोंके समान हैं। तेरी पीठ वेदीकें समान सीधी तथा चपकी हुई सरल कमरवाली है। तेरा कंठ लाल, लम्बा तथा सुन्दर है। तेरे कन्धे नीचे नये हुए तथा सुन्दर हैं। मुख प्रसन्न एवं सदा निष्कलङ्क चन्द्रमाके समान प्रभावाला है। दोनों कपोल कुण्डलोंसे प्रकाशित और सुवर्णके शीशेके समान हैं। हे सुन्दर मुखवाली ! तेरी नासिका तिलके फूलके समान आकारवाली है, तेरा ललाटपट्ट निष्कलङ्क, अष्टमीके चन्द्रमाके समान, मनोहर एवं नीले अलकावलियोंसे सुशोभित दीखता है; तेरा मस्तक सम तथा गोल, चिकना, चौड़ा एवं केशपाशयुक्त है। मन्द मुसकानयुक्त सुन्दर दांतवाला, कुन्दरूके समान ओठसे युक्त तेरा मुख तो विष्णुके ही योग्य होगा, यही मेरी निश्चित बुद्धि है। तेरी दक्षिणावर्त्त नाभी गंगाजीके भंवरके समान है: तुम क्षीरसागरोत्पन्ना साक्षात् लक्ष्मीके समान दीखती हो ॥२०॥

अथ पद्मवात्याः स्वसखीभिः साकं पुष्पवाटीगमन

*श्रीवराह उवाच—*

इत्युक्त्वा पूजितस्ताभिर्नारदोऽन्तर्दधे तदा ॥ एतत् श्रुत्वाऽथ तत्सख्यस्तामूचुः पद्मिनीं सखीम् ॥ २१ ॥ वनं गच्छाम पुष्पार्थं वसन्तः समुपागतः ॥ कर्णिकाराश्च चूताश्च चम्पकाः पारिभद्रकाः ॥२२॥ पालाशाः पाटलाः कुन्दा रक्ताशोकाश्च पुष्पिताः ॥ पद्मिन्यः सिन्धुवाराश्च मालत्यो यूथिकालताः ॥२३॥ कल्हारकरवीराश्च सङ्घर्षादिव पुष्पिताः ॥ पुष्पावचयनं कुर्मो वनेऽस्मिन्सुमनोहरे ॥२४॥ इत्युक्त्वा ता वनं जग्मुराकाशतनयायुताः ॥

श्रीवराहजी बोले — यह बोलकर तथा उससे पूजित हो नारदजी अन्तर्धान हो गये। यह सुनकर उसकी सखियाँ उस पद्मिनी सखीसे बोलीं कि वसन्त आ गया है। हम सब फूलोंके लिये जंगल जाती हैं। कर्णिकार, आम, चम्पा, परिभद्रक, पलाश, पांडर, कुन्द, रक्ताशोक, पद्मिनी, सिनुआर, मालती यूथिकालता, कल्हार, करवीज आदि सभी फूल मानो स्पर्द्धासे फूल गये हैं। फूलोंके चुननेका कार्य हम सब इस मनोहर वनमें करेंगी, यह कहकर वे आकाश राजाकी कन्याके साथ वनमें चली गयीं ॥२५॥

पुष्पाण्याहरमाणास्तु विचरन्त्यस्ततस्ततः ॥२५॥ कश्चिद्गजेन्द्रं ददृशुः शुभ्रदन्तद्वयोज्ज्वलम् । गण्डभित्तितलोद्भूतमदधाराद्वयोज्ज्वलम् ॥२६॥ उन्नतं करिणीयूथैः समुपेतं रजोज्ज्वलम् ॥ फूत्कारिपुष्करप्रोद्यच्छीकरापूरिताननम् ॥२७॥ दृष्ट्वा चोद्विग्नहृदया वनस्पतिमुपाश्रिताः ॥

फूलोंको तोड़ती हुई, इधर-उधर घूमती हुई उन सबोंने दो श्वेत और उज्वल दाँतवाले, गंडस्थलसे उत्पन्न दो मदधारायुक्त, हथिनीयूथसे युक्त, ऊँचा, उजली धूलिसे भरा हुआ, सूँड़द्वारा छुटला फुचकारसे छूप तथा जलसे पूरित मुखवाला कोई गजेन्द्र देखा और देखकर उद्विग्न हृदय हो वे सभी वनस्पतिके निकट चली गयीं ॥२८॥

अथ मृगयार्थं पुष्पवाटीं प्रति श्रीनिवासागमनम्

एतस्मिन्नन्तरे चाशु ददृशुर्हयमुत्तमम् ॥ अकलङ्केन्दुधवलं जाम्बूनदपरिष्कृतम् ॥२८॥ स्फुरद्विद्युल्लतायुक्तं शरन्मेघमिवोन्नतम् ॥२९॥

शिकारके लिये श्रीनिवासभगवान्‌का फुलवारीमें आना

इसी समयके बीचमें उसने शीघ्र उत्तम निष्कलंक चन्द्रमाके समान उज्वल, स्वर्णसे अलंकृत तथा चञ्चल विद्युल्लतासे युक्त शरत्कालीन मेघके समान ऊँचे घोड़ेको देखा ॥२९॥

तस्मिंस्तु पुरुषं कृष्णं मदनाकारवर्चसम् ॥ पुण्डरीकदलाकारकर्णान्तायतलोचनम् ॥३०॥ सुसूक्ष्मक्षौमसंवीतनीलचूलिकयोज्ज्वलम् ॥ पद्मरागमणिद्योतिस्फुरत्कुण्डलमण्डितम् ॥३१॥ सुवर्णरत्नखचितशार्ङ्गदिव्यधनुर्धरम् ॥ अपरेण करेणैव वहन्तं काञ्चनं

शरम् ॥३२॥ पीतकक्ष्यासुसंवीतकटिदेशं सुमध्यमम् ॥ रत्नकङ्कणकेयूरकटिसूत्रविराजितम् ॥३३॥ विशालवक्षःसंशोभिदक्षिणावर्तसंयुतम् ॥ स्वर्णयज्ञोपवीतेन स्फुरत्स्कन्धं मनोहरम् ॥३४॥ ईहामृगं समुद्दिश्य महावेगादनुद्रुतम् ॥ तं दृष्ट्वा विस्मिता नार्यः सस्मितास्तस्थुरत्र वै ॥३५॥

कामदेवके समान सुन्दर, श्याम, कमलदलके आकारकी कानोंतक फैली हुई आँखवाले, सुन्दर, पतला पीताम्बर पहने, नीलोज्ज्वल कमरबन्दी लपेटे, पद्मरागमणिके चमकदार सुन्दर कुण्डलवाले, रत्न तथा सुवर्णसे जटित दिव्य धनुषको धारण किये, दूसरे हाथमें सोनेके बाण लिये, पीली कछनी कमरमें लपेटे, रत्नके कड़े, बिजायठ तथा करधनीसे शोभित, विशाल छातीपर चमकते हुए भँवरसे युक्त, सोनेके यज्ञोपवीतसे मनोहर स्कन्ध देशवाले तथा काले भेड़ियेका बड़ी तेजीसे पीछा करनेवाले पुरुषको उसपर देखकर स्त्रियां आश्चर्यित हो हँसती हुई वहीं ठहर गईं ॥३५॥

तं दृष्ट्वा हयमारूढं गजेन्द्रो नम्रमस्तककः ॥ तुण्डमुद्धृत्य गर्जन्वै विनिवृत्य ययौ वनम् ॥३६॥ तस्मिन्गते गजे तत्र हयारूढः समाययौ ॥ ईहामृगं विचिन्वानः पुष्पलावीसमीपतः ॥ ३७॥

घोड़ेपर चढ़े उनको देखकर गजेन्द्र माथा नवाया और गर्जता हुआ लौटकर वनमें चला गया। उस हाथीके चले जानेपर भेड़ियेको ढूंढ़ता-ढूंढ़ता वह घोड़सवार उन फूल तोड़नेवालियोंके निकट आ गया ॥३७॥

### अथ भगवतः कन्यकानां चान्योन्यसंवादः

ताः समेत्य स चोवाच तुरगोपरि संस्थितः ॥ अत्रागतो मृगः कश्चिदीहामृग इतीरितः ॥ ३८ ॥ दृष्टो वा भवतीभिः स ब्रूत मे कन्यका इति ॥३९॥

### भगवान् तथा कन्याओंसे परस्पर वार्तालाप

वे उनके निकट आकर घोड़ेपर बैठे ही बैठे बोले कि हे कन्याओ ! यहाँ क्या कोई भेड़िया आया था? आप लोगोंने उसे देखा हो तो मुझसे कहो ॥३९॥

श्रीवराह उवाच—

प्रत्यूचुस्तास्तु तं कन्या दृष्टोऽस्माभिर्न कश्चन ॥४०॥ किमर्थ-
मागतोऽस्माकं वनं वरधनुर्धरः ॥ अत्रावध्या मृगाः सर्वे वर्तमाना
निषादप ॥४१॥ आशु गच्छ वनादस्मादाकाशात्मजपालितात् ॥

श्रीवराहजी बोले—उसे उन कन्याओंने जवाब दिया कि हमलोगोंने कभी नहीं देखा है। उत्तम धनुषधारी हो आप हमलोगोंके वनमें किसलिये आये हैं ? हे निषादपति ! यहाँपर रहनेवाले सभी मृग अवध्य हैं। आकाश राजाके पुत्रसे रक्षित इस वनसे शीघ्र चले जाओ ॥४२॥

इति तासां वचः श्रुत्वा हयादवरुरोह सः ॥४२॥ कास्तु यूय-
मियं चापि कनकाम्बुजसन्निभा ॥ सुभगा चारुसर्वाङ्गी पीनो-
न्नतपयोधरा ॥४३॥ ब्रूत मेऽहं गमिष्यामि श्रुत्वा स्वस्यालयं गिरिम् ॥

उनका ऐसा वचन सुनकर वह घोड़ेसे उतर गया। आप सब कौन हैं ? और यह स्वर्णकमलके ऐसी, सर्वाङ्गमनोहर,बड़े-बड़े ऊंचे स्तनोंवाली सुन्दरी भी कौन हैं, यह मुझे कहो; यह सुनकर मैं अपने निवास स्थान पर्वतपर चला आऊंगा ॥४४॥

इति तस्य वचः श्रुत्वा धरण्यात्मजयेरिता ॥४४॥ सखी पद्मा-
वती प्राह निषादं पर्वतालयम् ॥ आकाशराजतनया वसुधातल-
सम्भवा ॥४५॥ अस्माकं नायिका शूर पद्मिनी नाम नामतः ॥
ब्रूहि त्वं सुभगाकार किन्नामा कस्य वा सुतः ॥४६॥ जातिः का
कुत्र ते वासः किमर्थं त्वमिहागतः ॥

ऐसे उनके वचनको सुनकर धरणीदेवीकी पुत्रीसे प्रेरित होकर पद्मावती नाम सखी पर्वत निवासी निषादसे बोली—हे वीर ! राजा आकाशकी पुत्री, पृथ्वी तलसे उत्पन्न तथा पद्मिनी नामसे प्रसिद्ध यह हमलोगोंकी नायिका है। हे सुन्दराकृतिवाले ! आप किस नामवाले तथा किसके पुत्र हैं ? आपकी जाति क्या है ? कहां आपका घर है ? आप यहाँ किस लिये आये हैं ॥४८॥

इति पृष्टः स ताः प्राह मन्दस्मितमुखाम्बुजः ॥४७॥ दिवाक-
रकुलं प्राहुरस्माकं तु पुराविदः ॥ यस्य नामान्यनन्तानि पाव-
नानि मनीषिणाम् ॥४८॥ वर्णतो नामतश्चापि कृष्णं प्राहुस्तप-

स्विनः ॥ ब्रह्मद्विषां सुरारीणां यस्य चक्रं भयावहम् ॥४९॥ यस्य
शङ्खध्वनिं श्रुत्वा मोहमीयुर्हि वैरिणः ॥ यस्यैव धनुपस्तुल्यं धनु-
र्नैवामरेष्वपि ॥५०॥ तं मां वीरपतिं प्राहुर्वेङ्कटाद्रिनिवासिनम् ॥
तस्मादद्रितटात्सोऽहं निषादैरनुगैर्वृतः ॥५१॥ मृगयार्थं हयारूढो
युष्माकं वनमागतः ॥ मयाप्यनुद्रुतः कश्चिन्मृगो वायुगतिर्य-
यौ ॥५२॥ तमदृष्ट्वा वनं पश्यन्दृष्टवान्सुभगामिमाम् ॥ कामा-
दिहागतोऽहं वो मया किं लभ्यते त्वियम् ॥५३॥

ऐसा पूछनेपर वह मन्द-मन्द हंसीयुक्त मुखकमलवाले उनसे बोले—मनीषी तथा तपस्वी सब पुराविद् गणोंने हमलोगोंका सूर्यवंश बताया है और जिसके नाम पवित्र तथा अनन्त हैं, जिसको रंग तथा नाम दोनोंसे तपस्वीगण कृष्ण कहते हैं, वेद ब्राह्मणोंके द्वेषियों तथा देवताओंके शत्रुओंके लिये जिसका चक्र महा भयंकर है, जिसके शंखकी ध्वनि सुनकर वैरीगण मोहित हुये हैं, जिसके धनुषके समान देवताओंका भी धनुष नहीं है, वही वेङ्कटाचल निवासी वीरोंका स्वामी मुझे कहा है। वही मैं उस पर्वततटसे निषाद अनुचरोंसे परिवृत होकर शिकारके लिये घोड़ेपर चढ़कर आप लोगोंके वनमें आया हूँ। मुझसे ही पीछा किया हुआ कोई मृग वायुवेगसे चला गया। उसको न देखकर वनको देखते-देखते इस सुन्दरीको देखा। मैं कामवश यहां आपलोगोंके पास आया हूँ। क्या यह (राजपुत्री) मुझसे पायी जा सकेगी ? ॥५३॥

इति कृष्णवचः श्रुत्वा क्रुद्धास्ताः पुनरब्रुवन्॥ आकाशराजो
दृष्ट्वा त्वां कृत्वा निगडबन्धनम् ॥ ४५ ॥ यावन्नयति तावत्त्वं
गच्छ शीघ्रं स्वमालयम् ॥ तर्जितस्ताभिरेवं स हयमारुह्य शीघ्र-
गम् ॥५५॥ युक्तः स्वानुचरैः सर्वैर्ययौ द्रुततरं गिरिम् ॥५७॥

इति श्रीवराहपुराणे भूगोलोपाख्याने धरणीवाराहसंवादे श्रीवेङ्कटाचलमाहात्म्ये उत्तरार्धे उद्यानवासिन्याः पद्मावत्याः समीपे नारदागमनं श्रीश्रीनिवासमृगयादिवर्णनं नाम चतुर्थोऽध्यायः ॥ ४॥

कृष्णके इस वचनको सुनकर सभी क्रोधित हो उससे पुनः बोलीं कि आकाश राजा तुमको देखकर कठिन बन्धनमें बांधकर जबतक नहीं ले जाता है उसके पहले ही तुम अपने घर शीघ्र चले जाओ। उनसे इस तरह डराया जाकर वह शीघ्रगामी घोड़ेपर चढ़कर अपने सभी अनुचरोंसे युक्त हो शीघ्रतर पर्वतपर चले गये ॥५६॥

इति चतुर्थोऽध्यायः ॥४॥

# पञ्चमोऽध्यायः ॥५॥



पद्मावतिके दरशसे, श्रीनिवासका मोह।
अशन समय कहनी कथा, वकुलमालिका छोह ॥१॥
रामचरित सम्बन्धका, कृत्य प्रथम न्यायोग।
प्रेषण वकुला तेहि गमन, निमित युगल संयोग ॥२॥

अथ पद्मावतीदर्शनेन श्रीनिवासस्य मोहप्राप्तिः

श्रीवराह उवाच—

सम्प्राप्य चालयं दिव्यमवतीर्य हयोत्तमात् ॥ विसृज्य सोऽनुगान्सर्वान्देवान्कैरातरूपकान् ॥ १ ॥ विश्रमध्वमिति प्रोच्य विवेश मणिमण्डपम् ॥

पद्मावतीको देखकर भगवान्की मोहप्राप्ति

श्रीवराहजी बोले—अपने दिव्यालयपर पहुंच, उसने उस उत्तम घोड़ेपरसे उतरकर, अपने सभी अनुगामी किरात रूपधारी देवताओंको विदा करके "आप सब आराम करें" ऐसा कह मणिमण्डपमें प्रवेश किया।१॥

आरुह्य मणिसोपानं पञ्चकक्ष्या अतीत्य च ॥ २ ॥ मुक्तागृहं समासाद्य तस्मिंल्लोलायिते शुभे ॥ नवरत्नमये मञ्चे स विवेशावशो हरिः ॥ ३ ॥ संस्मरन्पद्मगर्भाभां तामेवायतलोचनाम् ॥ तनुमध्यां पीनकुचां मन्दस्मितमुखाम्बुजाम् ॥ ४ ॥ क्षीराब्धितनयामेव मेने पद्मोद्भवां शुभाम् ॥ तस्यां गतमना देवः श्रीनिवासो मुमोह च ॥५॥

मणिमय सीढ़ियोंपर चढ़कर पांच कक्षा (आंगन) पार हो, मुक्तागृह पाकर उसमें झूलते हुए सुन्दर नवरत्नमय मञ्चमें भगवान्ने अवश होकर शयन किया। उसने उस पद्मगर्भके समान शोभावाली, दीर्घ आंखेंवाली, पतली

कमरवाली, बड़े-बड़े स्तनवाली, मन्द-मन्द हास्ययुक्त मुखवालीका स्मरण करते हुए कमलोत्पन्न तथा क्षीरसागरकी पुत्री श्रीलक्ष्मीदेवी ही समझा। उसीमें मन लग जानेसे श्रीनिवास भगवान् परम मोहित हो गये ॥५॥

अथ मुह्यमानं श्रीनिवासं प्रति वकुलमालिकोक्तिः

ततो मध्याह्नसमये कृत्वाऽन्नं दिव्यमुत्तमम् ॥ सूपदंशं सुगन्धं च देवार्हमतिशोभनम् ॥६॥ शुद्धान्नं पायसान्नं च गौडं मुद्गान्नमेव च ॥ कृत्वा पञ्चविधापूपान्पूरिकावटकानपि ॥७॥ देवं द्रष्टुं ययौ शीघ्रं सखी वकुलमालिका ॥ पद्मावतीपद्मपत्राचित्ररेखासमन्विता ॥८॥ निवेश्य द्वारि देवस्य ताः सर्वाः प्रमदोत्तमाः ॥ विवेश तत्समीपं सा स्वयं वकुलमालिका ॥९॥ गत्वा समीपं देवस्य ववन्दे भक्तिभावतः ॥ दृष्ट्वाऽथ देवं विवशं पर्यङ्के रत्नभूषिते ॥१०॥ पादसंवाहनं कृत्वा निमीलितविलोचनम् ॥ तं ध्यायन्तं च किंमपि व्याजहार शुचिस्मिता ॥११॥

मोहित श्रीनिवाससे वकुलमालिकाकी उक्ति

तब मध्याह्न कालमें अति उत्तम सुगन्ध, सुस्वादु, रसदार, देवताओंके योग्य, अत्यन्त सुन्दर एवं सुव्यंजन अन्न, शुद्धान्न, पायसान्न, गुडान्न तथा मुँगान्न एवं पाँचों तरहके अपूप, पूरियां, बड़े आदि तैयारकर सखी श्रीवकुलमालिका पद्मावती, पद्मपत्रा, चित्ररेखा आदि सभोंके साथ शीघ्र भगवान्‌को देखने गई। उन सभी उत्तम स्त्रियोंको भगवान्‌के द्वारपर रखकर पुनः स्वयं वकुलमालिका भगवान्‌के निकट पहुंची। भगवान्‌के निकट जाकर उसने भक्तिभावसे प्रणाम किया। पीछे भगवानको रत्नभूषित शय्यापर, आँखे बन्द किये, कुछ सोचते हुए तथा विवश (मोहित) देखकर चरणसेवापूर्वक स्वच्छ मन्दहाससे युक्त होकर बोली ॥११॥

उत्तिष्ठ देवदेवेश किं शेषे पुरुषोत्तम ॥ परमान्नं कृतं देव भोक्तुमागच्छ माधव ॥१२॥ किं वा त्वमार्तवच्छेषे सर्वलोकार्तिनाशन ॥ मृगयामटता देव किं दृष्टं भवता वने ॥१३॥ अवस्था ते विशालाक्ष कामुकस्येव दृश्यते ॥ का दृष्टा देवकन्या वा मानुषा वाऽ-

हिकन्यका ॥१४॥ ब्रूहि मे त्वमचिन्त्यात्मन्कन्यां तां चित्तहारणीम् ॥१५॥

हे देवदेवेश ! हे पुरुषोत्तम !! क्यों सोते हैं ? उठिये। हे देव ! परमान्न तैयार है, हे माधव ! भोजनार्थ आइए। हे सकल लोकोंके दुखको नाश करनेवाले ! आप दुखितोंके समान क्यों सोये हैं। शिकारके लिये घूमते समय आपने वनमें क्या देखा ? हे विशालाक्ष ! आपकी अवस्था कामार्त्तके समान दीखती है, देव कन्या, मनुकन्या या नागकन्या कौन देखी गई ? हे अचिन्त्य स्वरूप ! आप मुझसे उस चित्तहारिणी कन्याके बारेमें कहें ॥१५॥

*श्रीवराह उवाच—*

तस्यास्तद्वचनं श्रुत्वा निःश्वासमकरोद्विभुः ॥ निःश्वसन्तं पुनः प्राह प्रीता बकुलमालिका ॥ १६ ॥ एवं मनोहरा का सा तवापि पुरुषोत्तम ॥ तामवोचद्धृषीकेशो वक्ष्यामि श्रृणु तत्त्वतः ॥१७

श्रीवराहजी बोले—उसके उन वचनोंको सुनकर भगवान् जोरसे निश्वास लेने लगे और सांस लेते हुए भगवानसे पुनः प्रसन्न बकुलमालिकाने कहा कि हे पुरुषोत्तम ! आपके भी मनको हरण करनेवाली वह कौन है ? उससे हृषीकेश भगवान् बोले—मैं कहता हूं, सद्भावसे सुनो ॥१७॥

### अथ श्रीनिवासोक्तपद्मावतीपरिणयकारणानि

*श्रीभगवानुवाच—*

पुरा त्रेतायुगे पुण्ये रावणं हतवानहम् ॥ तदा वेदवती कन्या साहाय्यमकरोच्छ्रियः ॥१८॥ सीतारूपाभवल्लक्ष्मीर्जनकस्य महीतलात् ॥ गते मयि तु मारीचं हन्तुं पञ्चवटीवने ॥१९॥ ममानुजोऽपि मामेव सीतया चोदितोऽन्वियात् ॥ तदन्तरे राक्षसेन्द्रो हर्त्तुं सीतामुपाययौ ॥२०॥

### पद्मावतीके परिणयके कारण

श्रीभगवान् बोले—प्राचीन काल पुण्य त्रेतायुगमें मैंने रावणको मारा था। उस समय वेदवती कन्याने लक्ष्मीकी सहायता की थी। वही लक्ष्मी पृथ्वीतलसे उत्पन्न होकर जनकको सीतारूपसे प्राप्त हुई। पञ्चवटी वनमें

मारीचको मारनेके लिये मेरे चले जानेपर सीतासे प्रेरित हो मेरे भाई भी मेरे ही पीछे-पीछे आये। इसी बीच सीताको हरनेके लिये राक्षसेन्द्र आ पहुंचा ॥२०॥

अग्निहोत्रगतो वह्निस्तं ज्ञात्वा रावणोद्यमम् ॥ आदाय सीतां पाताले स्वाहायां सन्निवेश्य च॥२१॥ तेनैव रक्षसा स्पृष्टां पुरा वेदवतीं शुभाम् ॥ अग्नौ विसृष्टदेहां तां संहर्तुं रावणं पुनः ॥२२॥ सीताया रूपसदृशीं कृत्वा चैवोत्ससर्ज ह ॥ सा रावणहृता भूत्वा लङ्कायां च निवेशिता ॥२३॥ हते तु रावणे पश्चात्पुनरग्निं विवेश सा ॥

इसी बीचमें अग्निहोत्रको अग्निने रावणके इस प्रकारके उद्यमको समझ, सीताको पातालमें लाकर, स्वाहामें निवेश करवाकर, उसी राक्षस (रावण) से पहले ही छुयी गयी। अग्निमें प्रविष्ट सुन्दरी वेदवतीको सीताके समान रूप बना, रावणका संहार करनेके लिये वहीं छोड़ दिया। वही रावणसे हरी जाकर लंकामें रखी गई और रावणके मारे जानेपर पीछे फिर भी उसीने अग्निमें प्रवेश किया ॥२४॥

अग्निस्तु रक्षितां लक्ष्मीं स्वाहायां मम जानकीम् ॥२४॥ दत्त्वा हस्ते च मामाह सीतया सहितं शिखी ॥ इयं वेदवती देव सीतायाः प्रियकारिणी ॥२५॥ सीतार्थं राक्षसपुरे तेन बन्दीकृता स्थिता ॥ तस्मादेनां वरेणैव प्रीणय त्वं श्रिया सह ॥२६॥ इति वह्निवचः श्रुत्वा सीता मामवदच्छुभा ॥ मम प्रीतिकरी नित्यमियं वेदवती विभो ॥२७॥ तस्मात्परं भागवतीं देवैनां वरय प्रभो ॥२८॥

अग्निद्वारा स्वाहा (ज्वाला)में रक्षिता लक्ष्मी अथवा मेरी जानकीको मेरे हाथोंमें सौंपकर सीता सहित मुझसे अग्निदेवने कहा कि हे देव ! यह सीताका प्रिय करनेवाली वेदवती है। सीताके लिये राक्षसनगरीमें उस राक्षस रावणसे बन्दी बनाकर यही रक्खी गई थी। इसलिये लक्ष्मीके साथ आप इसको वरदानसे प्रसन्न करें। अग्निके इस वचनको सुनकर सुन्दरी सीताजीने मुझसे कहा कि हे विभो ! नित्य मेरी प्रसन्नता देनेवाली वेदवती यही है। इसलिये हे देव ! इस भाग्यवतीको भी वर लेवें ॥२८॥

*श्रीभगवानुवाच —*

तथा देवि करिष्यामि ह्यष्टाविंशे कलौ युगे ॥ तावदेषा ब्रह्मलोके वसत्वमरपूजिता ॥ २९ ॥ पश्चात्तु भूमितनया भविष्यति

वियत्सुता ॥ इति दत्तवरा पूर्वं मया लक्ष्म्या च सुन्दरी ॥३०॥
अद्य नारायणपुरे सम्भूता धरणीतलात् ॥ पद्मासमा पद्मनेत्री
पद्मा दत्तवरा सती ॥ ३१ ॥ सखीभिरनुरूपाभिर्वने पुष्पाणि
चिन्वती ॥ मृगयामटता तत्र मया दृष्टा मनोरमा ॥३२॥ तस्या
रूपं मया वक्तुं न शक्यं शतहायनैः ॥ लक्ष्म्येव च तथा मेऽद्य
सङ्गमो भविता यदि ॥३३॥ प्राणाः स्थिरा भविष्यन्ति सत्यमित्य-
वधारय ॥

श्रीभगवान् बोले—हे देवि ! अट्ठाइसवें कलियुगमें मैं ऐसा ही करूंगा, तबतक यह देवताओंसे पूजित होकर ब्रह्मलोकमें निवास करे। पीछे यही पृथ्वीपुत्री होकर आकाश राजाकी राजपुत्री होगी । लक्ष्मी तथा मैं दोनोंने इस सुन्दरीको पहले ही वरदान दिया था, आज वही नारायणपुरमें पृथ्वीतलसे उत्पन्न, कमलाके समान, कमलाक्षी, वर पायी हुई, अपने समान रूपवाली सखियोंके साथ वनमें फूलोंको चुनती हुई, मनोरमा तथा सती पद्मा शिकारके लिये घूमते समय मुझसे देखी गई। उसका रूप सैकड़ों वर्षोंमें भी मुझसे वर्णित नहीं हो सकता। लक्ष्मीहीकी तरह यदि आज उससे मेरा सङ्गम हो जाता तो, प्राण स्थिर हो जावें; तुम इसीको सत्य-सत्य जानो ॥३४॥

### अथ वियद्राजपुरं प्रति वकुलमालिकागमनम्

त्वं तत्र गत्वा तां कन्यां दृष्ट्वा वकुलमालिके ॥३४॥ जानीहि
रूपलावण्यादियं योग्येति चास्य वै ॥ अनवद्या विशालाक्षी पद्मे-
न्दीवरलोचना ॥३५॥ इत्युक्त्वा मोहमापन्नं तं प्राह वकुला पुनः ॥
इतो गच्छामि देवेश मनोज्ञा तव यत्र सा ॥३६॥ मार्गं वद रमा-
धीश गमिष्ये येन तां प्रति ॥

### आकाश राजाके पास वकुलमालिकाका जाना

हे वकुलमालिके ! तुम नारायणपुर जाकर उस कन्याको देख उसके रूपसौन्दर्यसे जानोगी कि इसके योग्य यही है। अनिन्द्य सुन्दरी, विशालनेत्रा, पद्म तथा इन्दीवरके समान आंखवाली इत्यादि कहकर मोहित हुए उनसे पुनः वकुलमालिका बोली कि हे देवेश ! मैं अभी आपकी आज्ञासे यहांसे जहां वह है, जाती हूं। हे रमाधीश ! रास्ता बतावें जिससे उसके पास जाऊंगी ॥३७॥

एवमुक्तो रमाधीशस्तां प्राह वकुलस्रजम् ॥३७॥ इतो गच्छ महाभागे श्रीनृसिंहगुहा यतः ॥ तन्मार्गेणावतीर्यास्माद् भूधरेन्द्रान्मनोरमात् ॥३८॥ अगस्त्याश्रममासाद्य दृष्ट्वा लिङ्गं तदर्चितम् ॥ अगस्त्येश इति ख्यातं सुवर्णमुखरीतटे ॥३९॥

तीरेणैव ततो गच्छ शुकब्रह्मऋषेर्वनम्॥ पश्यन्ती स्वर्णमुखरीं तत्र कल्लोलमालिनीम् ॥४०॥ तत्र पद्मसरो नाम पावनं पद्मसंयुतम् ॥ तत्र स्नात्वाऽथ तत्तीरे तपन्तं मुनिसत्तमम् ॥४१॥ छायाशुकं नमस्कृत्य कृष्णं च बलसंयुतम् ॥ आराध्यमानं मुनिना शुकेन सततं शुभे ॥४२॥ इन्द्रनीलमणिश्यामं पीतनिर्मलवाससम् ॥ तीर्थयात्रां गमिष्यन्तं बलभद्रं सिताकृतिम् ॥४३॥ उपासयन्तं मन्त्राणि मुक्तान्वितकरद्वयम् ॥ उद्यन्तं पादुकामुक्तं बलभद्रं प्रणम्य च ॥४४॥ आदाय स्वर्णकमलं सरसोऽस्माद्वरानने ॥ तीर्त्वा सुवर्णमुखरीं वनान्युपवनानि च ॥४५॥ अरणीतीरमासाद्य विश्रम्य च वनान्तरे ॥ नारायणपुरीं दृष्ट्वा विस्मयं च गमिष्यसि ॥४६॥

यह कहनेपर रमापति भगवान् उस वकुलमालिकासे बोले—हे महाभागे ! यहांसे, जहां श्रीनृसिंह गुहा है, वहां जाओ। वहांसे उसी रास्ते इस मनोरम पर्वतपरसे उतरकर अगस्त्यऋषिके आश्रमको जा, उन्हीं ( अगस्त्य ) से पूजित अगस्त्येश, ऐसा प्रसिद्ध, सुवर्णमुखरीके तटपर लिङ्गके दर्शन कर, तट-ही-तटसे महर्षि शुकदेवजीके वनमें तरङ्गयुक्त स्वर्णमुखरी नदीको देखते-देखते आगे जाना। वहांपर कमलयुक्त पद्मसर नामक पवित्र तालाव है। हे सुमुखि ! उसीमें स्नान कर, उसीके तीरपर तपस्या करते हुए मुनिसत्तम छायाशुकको नमस्कार कर, मुनिवर शुकदेवजीसे सदा आराधित, इन्द्रनीलमणिके समान श्याम, पवित्र पीताम्बर पहने, तथा वहीं श्रीकृष्णजी एवं तीर्थयात्रामें जाते हुए, गौरवर्ण, मन्त्रोंसे उपासना करते हुए, मुक्ताके समान दोनों करकमलवाले एवं ऊंचे-ऊंचे पादुकायुक्त श्रीबलभद्रजीको नमस्कार कर, उसी तालाबसे स्वर्णकमल लाकर, सुवर्णमुखरी तथा वन-उपवन पार हो, अरणीनदीके तीरपर पहुंच विश्रामपूर्वक दूसरे जंगलमें नारायणपुरीको देखकर आश्चर्यको प्राप्त हो जावोगी ॥४६॥

तस्याश्चोपवने वृक्षान्पुष्पाढ्यान्फलसंयुतान् ॥ पनसाम्रशिरीषांश्च कुन्दातिन्दुकपाटलान् ॥ ४७ ॥ पुन्नागनागवरुणरसालाङ्कोलचम्पकान् ॥ बकुलामलकान्सालांस्तालाहिन्तालपद्मकान् ॥४८॥ जम्बूनिम्बकदम्बैलापिप्पलीमधुकार्जुनान् ॥ प्रियंगुहिंगुखर्जूरमायूराशोकलोध्रकान् ॥४९॥ अश्वत्थोदुम्बरप्लक्षबदरीभूर्जकीचकान् ॥ चिञ्चाकिंशुकमन्दारशाल्मलीबीजपूरकान् ॥५०॥ पूगनारङ्गलिकुचनारिकेलवनाकुलान् ॥ मल्लिकामालतीकुन्दयूथिकाकेतकीयुतान् ॥५१॥ करवीराब्जसम्पन्नान् राजरम्भाविराजितान् ॥ मयूरकरिगरुडशुकसारससङ्कुलान् ॥५२॥ भृङ्गझङ्कारनिबिडानारामान्सुमनोहरान् ॥ पश्यन्ती परमं हर्षमवाप्य च नदीतटे ॥५३॥ गत्वा पुष्पोत्तरे मार्गे पुरीमिन्द्रपुरीसमाम् ॥ गङ्गयेवावृतां नित्यं सरिताराणिनामया ॥ ५४ ॥ आकाशराजनगरीं गत्वा तत्रोचितं कुरु ॥५५॥

उसके उपवनको फूल-फलसे युक्त, वृक्षों, पनसा, आम्र, शिरीष, कुन्द, तूंत, पांडर, पुन्नाग, वरुण, रसाल, धेर, चम्पा, वकुल, आंवला, साल, ताड़, हिंताड़, पद्म, जामुन, नीम, कदम्ब, लाची, पीपर, जेठी मधु, अर्जुन, प्रियंगु, हिंगु खजूर, मायूर, अशोक, लोध, अश्वत्थ (पीपर), गुल्लर, प्लक्ष, पवालकोहदा, चिचिड़ी, पलाश, मदार, सेमर धोमोरा, पुन्नग, नारंगी, लिची, नारियल, नुनिया, मल्लिका, मालती, कुन्द, यूथिका, केतकी, करवीर, कमल, राजरम्भा वा राजकेलासे युक्त, मोर, हाथी, गरुड़, सुग्गे तथा सारससे भरा, भौंरेके निविड़ झङ्कारसे युक्त, मनोहर-मनोहर बाग-बगीचोंको देखती हुई, नदी किनारोंपर आनन्दित होकर, फूलोंके उत्तरी रास्तेसे सदा गङ्गासे घिरी हुई इन्द्रपुरीके समान अरणी नामकी नदीसे घिरी हुई आकाशराजाकी नगरीमें जाकर वहां अपना यथोचित कार्य्य करो ॥५५॥

*श्रीवराह उवाच—*

इत्यादिश्य सुराधीशः सखीं तां वकुलाभिधाम् ॥ विसृज्य शयने शुभ्रे स शिश्ये श्रीसमन्वितः ॥५६।

श्रीवराहजी बोले—ऐसी आज्ञा देकर सुराधीश भगवान, उस वकुलमालिका सखीको विदा कर स्वयं श्रीलक्ष्मीजीके साथ, उस सुन्दर शैय्यापर सो गये।

प्रणम्य देवदेवेशं सखी वकुलमालिका ॥ गुञ्जामणिसमाकारं रक्ताश्वमधिरुह्य सा ॥५७॥ यथोक्तमार्गेण ययौ पश्यन्ती विविधान्मृगान् ॥ मत्तेभान्पर्वताकाराञ्छ्वेतदन्तविभूषितान् ॥५८॥ करिणीयूथसहिताञ्जलदादानतत्परान् ॥ सिंहाञ्छ्वेतवनप्रख्यान् सिंहीयूथैरनुद्रुतान् ॥५९॥ शार्दूलर्क्षांश्च खड्गांश्च शरभान्गवयान्मृगान् ॥ कृष्णसारांश्च गोमायूञ्छशांश्च प्रियकानपि ॥६०॥ सारसांश्च मयूरांश्च मार्जारान्वनगोचरान् ॥ वृकाञ्छुकान्सूकरांश्च सुवाचः पक्षिणस्तथा ॥६१॥ पश्यन्ती विविधाकारांस्तुष्यन्ती च मुहुर्मुहुः ॥ आससादारणीतीरं पश्चिमं पादपाकुलम् ॥६२॥

देव-देवेश भगवान्को प्रणामकर वकुलमालिका सखी गुञ्जामणिके समान आकारके लाल घोड़ेपर सवार होकर अनेकों हरिणों, मृगों, पर्वताकार मदमस्त उजले-उजले दाँतोंसे शोभित हथिनियोंके झुण्डके साथ मदकी धार देनेमें तत्पर हाथियों, सिंहनियोंके झुण्डके पीछे-पीछे दौड़ती हुई श्वेत-केसरयुक्त प्रसिद्ध सिंहों, शार्दूलों, चिड़ियों, शरभों, गवयों, कृष्णसारों, सियारों, सुन्दर खरहों, सारसों, मयूरों, जंगली-बिडालों, हुंड़ारों, सुग्गों, सूकरों, सुन्दर मीठी वचन बोलनेवाली पक्षियों आदि अनेकों प्रकारके दृश्योंको देखती हुई, बारम्बार सन्तुष्ट हो वृक्षोंसे भरे हुए आरणी नदीके पश्चिम तीरपर आ पहुंची ॥६२॥

अवतीर्यारुणादश्वादगस्त्येशसमीपतः ॥ दृष्ट्वागस्त्येश्वरं लिङ्गमगस्त्येन सुपूजितम् ॥६३॥ तत्र स्नात्वा च पीत्वा च विशश्राम नदीतटे ॥६४॥

अपने लाल घोड़ेसे उतरकर अगस्त्येशके निकट ही अगस्त्यऋषिसे पूजित अगस्त्येश्वर लिङ्गको देखकर, उसने नदीमें स्नान तथा जलपान कर नदीके किनारे विश्राम किया ॥६४॥

अथ दिव्योद्यानस्थाः पद्मावतीसखीः प्रति वकुलमालिकोक्तिः

तत्रागता राजगृहाद्योषितो देवसन्निधौ ॥ सखीं पद्मालया-

यस्ता दृष्ट्वा बकुलमालिका ॥६५॥ गत्वा समीपे तासां सा किंव-
दन्तीं स्म पृच्छति ॥६६॥

### दिव्य उद्यानस्थ पद्मावतीकी सखीसे बकुलमालिकाका कथन

राजगृहसे भगवान्‌के समीप आई हुई स्त्रियोंको पद्मालयाकी सखी बकुलमालिकाने देखकर उनके निकट जाकर उनसे हाल-चाल पूछा ॥६६॥

*बकुलमालिकोवाच—*

का यूयं योषितो ब्रूत विचित्राभरणस्रजः ॥ कुतः समागता ह्यत्र किं कार्यं वोऽमलाननाः ॥ ६७ ॥ तास्तु तस्या वचः श्रुत्वा स्मितपूर्वमथाब्रुवन् ॥ शृणुष्वावहिता देवि वयं वक्ष्याम तेऽधुना ॥ ६८ ॥

इति श्रीवराहपुराणे भूगोलोपाख्याने धरणीवराहसम्वादे वेङ्कटाचलमाहात्म्ये उत्तरार्धे पद्मावतीदर्शनेन श्रीनिवासस्य मोहप्रत्याद्विवर्णनं नाम पञ्चमोऽध्यायः ॥ ५ ॥

बकुलमालिका बोली—हे विचित्र-विचित्र आभरण तथा मालाओंसे युक्त स्त्रियो ! आप सब कौन हैं ? कहांसे यहां आई हैं ? हे निर्मलमुखवालियो ! आपको यहां क्या काम है ? उसके वचनको सुनकर हँसती हुई, वे सब बोलीं—हे देवि ! ध्यानसे सुनो, अभी हम सब कहती हैं ॥६८॥

इति पञ्चमोऽध्यायः ॥५॥

## षष्ठोऽध्यायः ॥६॥

पद्मावति विषयक कथा, सखि सन बकुला पाय ।
श्रवण वियत दैवज्ञ फल, जन्म सुताङ्क दिखाय ॥१॥
विप्र कथन मीठा वचन, हित पूजागस्त्येश ।
पद्मावति जननी सुनी, गृहागमन परमेश ॥२॥
माता सन कन्या कथन, लक्षण भगवत भक्त ।
सखि सह बकुला गमन तहं, मन्दिरसे बहि बक्त ॥३॥

अथ वकुलमालिकां प्रति सखीविनिवेदितपद्मावत्युदन्तः

*योषित ऊचुः—*

वयमाकाशराजस्य शुद्धान्तनिलयाः स्त्रियः॥ सख्यः पद्मालया-
या वै दुहितुर्वसुधापतेः ॥१॥ राजपुत्रीं पुरस्कृत्य गताः पूर्वं वना-
न्तरम् ॥ कुर्वत्यः पुष्पापचयं राजपुत्र्यर्थमाकुलाः ॥२॥ वृक्षमूले
समासीनास्तत्रापश्याम पूरुषम् ॥ इन्द्रनीलाशिलाश्याममिन्दिरा-
मन्दिरोरसम् ॥३॥ ईषत्स्मितमुखं चारुपीनदीर्घभुजद्वयम् ॥ मृष्ट-
पीताम्बरं हेमचापबाणासनोज्ज्वलम् ॥४॥ सुवर्णमुकुटं हारकेयू-
रादिविभूषितम् ॥

वकुलमालिकाके प्रति पद्मावती-सखियोंकी उक्ति

स्त्रियां बोलीं—हम सब चक्रवर्ती आकाश राजाकी अन्तःपुरवासिनी तथा उनकी पुत्री पद्मालया (पद्मावती) की सखी हैं। पहले राजपुत्रीको आगे कर, दूसरे वनमें हम लोग चली गयी थीं और वहां फूल तोड़ती हुई, राजपुत्रीके लिये व्याकुल तथा एक वृक्षकी जड़के तले बैठी हुई, हम लोगोंने इन्द्रनीलमणिके समान श्यामल, हृदयमें लक्ष्मीजीको रखनेवाले, मन्द-मन्द मुसकानयुक्त मुखवाले, सुन्दर, लम्बी तथा मोटी दो भुजावाले, शुद्ध पीताम्बर-धारी, चमकते हुए सोनेके धनुष-बाण एवं सोनेके मुकुट, हार, बिजायठ आदिसे विभूषित एक पुरुषको देखा ॥४॥

तं तु पद्मालया दृष्ट्वा सखी कमललोचनम् ॥ ५ ॥ द्रुतहेमनि-
भाकारा पश्य पश्येति साऽब्रवीत् ॥ पश्यन्तीनां तदाऽस्माकं गतो-
न्तर्धानमाशु सः ॥ ६ ॥ सा सखी मूर्च्छिताऽस्माभिर्नीता राजगृहं
ततः ॥७॥

उस कमलाक्ष पुरुषको देखकर पिघले हुए सोनेके समान शरीरवाली पद्मालयादेवीने "देखो ! देखो !!"—ऐसा कहा। वह हमलोगोंके देखते-ही-देखते, शीघ्र अन्तर्धान हो गये और पद्मालया सखी मूर्छित हो गयी तथा पीछे हमलोगोंसे मकानतक पहुंचायी गयी ॥७॥

अथ पद्मावतीमुद्दिश्य दैवज्ञं प्रति वियद्राजकृतप्रश्नादिः

दृष्ट्वाऽस्वस्थां नृपः पुत्रीमपृच्छद्दैवचिन्तकम् ॥ वद विप्रेन्द्र पुत्र्या मे ग्रहचारफलं मुने ॥८॥ बृहस्पतिसमो विप्रो विचार्यात्मनि खेचरान् ॥ अनुकूला ग्रहाः सर्वे तव पुत्र्या नृपोत्तम ॥ ९ ॥ किन्तु नित्यं ग्रहफलं किञ्चिद् भ्रान्तिकरं नृप ॥

ज्योतिषीसे पद्मावतीके बारेमें राजाद्वारा बातोंका पूछा जाना

पुत्रीको अस्वस्थ देखकर ज्योतिषीसे राजाने पूछा—हे विप्रेन्द्र मुनि ! मेरी पुत्रीके ग्रहगोचरादि फल बताइये। अपने मनमें ग्रहोंको विचारकर बृहस्पतिके समान वह विद्वान् ब्राह्मण बोला कि हे नृपोत्तम ! तुम्हारी पुत्रीके सभी ग्रह अनुकूल हैं, किन्तु हे राजन् ! नित्यके ग्रहफल कुछ-कुछ भ्रमोत्पादक हैं ॥१०॥

तमुवाच पुनर्धीमान्प्रश्नकालं विचार्य च ॥ १० ॥ छायां गुणित्वा लग्नं च फलानि च विचार्य च ॥ लग्ने लग्नाधिपश्चन्द्रः केन्द्रे चैव बृहस्पतिः ॥११॥ निद्राति दिनपक्षी तु प्रश्नपक्षी तु राज्यगः ॥ शृणु राजन्फलं तस्य स्वास्थ्यमेव भविष्यति ॥१२॥

उस बुद्धिमानने प्रश्नकालको विचार, छाया तथा लग्न सभीकी गणना कर, उसके फलको विचार कर कहा कि लग्नकालमें लग्नाधिपति चन्द्रमा तथा केन्द्रमें बृहस्पति, दिनके पक्षी निद्रामें तथा प्रश्नकालके पक्षी राजकारक हैं। हे राजन ! इसका फल आरोग्य ही होगा ॥१२॥

उत्तमः पुरुषः कश्चिदागतः कन्यकां प्रति ॥ तं दृष्ट्वा मूर्च्छिता पुत्री तेन योगं समेष्यति ॥१३॥ तेनैव प्रेषिता काचिदागमिष्यति कन्यका ॥ सा तु वक्ष्यति यद्वाक्यं तद्धितं ते भविष्यति ॥१४॥ तत्कुरुष्व महाराज सत्यं सत्यं वदाम्यहम् ॥ किं च सर्वार्थदं यत्तु सर्वव्याधिविनाशनम् ॥१५॥ वक्ष्यामि तत्कुरुष्वाद्य पुत्र्यास्तव सुखावहम् ॥ कारयागस्त्यलिङ्गस्य ब्राह्मणैरभिषेचनम् ॥१६॥ इत्युक्त्वाथ गृहं यातो राजानं दैवचिन्तकः ॥१७॥

कोई उत्तम पुरुष इस कन्याके पास आया था, उसीको देखकर यह राजपुत्री मूर्छित हो गई थी, और उसीका सहयोग प्राप्त करेगी। उसी पुरुषसे भेजी हुई कोई कन्या आवेगी और वह जो कुछ बात कहेगी, वह सब तुम्हें हितकारक होंगी। हे राजन्! मैं सत्य-सत्य कहता हूं, आप यही करें; जो सर्वार्थको देनेवाला तथा सर्व व्याधियोंका नाश करनेवाला है, मैं आपकी पुत्रीके लिये वही सुखोत्पादक बातें कहता हूं। आप आज ऐसा करें कि अगस्त्य लिङ्गको ब्राह्मणों द्वारा अभिषेकादि करवाइये। राजासे इतना कहकर वह दैवज्ञ ज्योतिषी घर चला गया ॥१७॥

### अथ दैवज्ञोक्त्याऽगस्त्यलिंङ्गार्चनाय विप्रादिप्रेषणम्

आकाशराजोऽपि तदा विप्रानाहूय वैदिकान् ॥ अभ्यर्च्याज्ञापयामास गत्वा देवालयं द्विजाः ॥१८॥ महाभिषेकं शम्भोश्च कुरुध्वं मन्त्रपूर्वकम् ॥ इत्यनुज्ञाप्य तानस्मानाहूयाभ्यवदच्छुभे ॥१०॥ महाभिषेकसम्भारान्सम्पादयत कन्यकाः ॥ इत्याज्ञप्ता नृपेणैवं वयं देवालयं गताः ॥२०॥ ब्रूहि त्वं सुभगेऽस्माकं त्वदागमनमञ्जसा ॥ कुतोऽसि कस्य वार्थेन क्व वा जिगमिषा हि ते ॥२१॥ दिव्याश्वमधिरुह्येमं देवलोकादिवागता ॥२२॥

### दैवज्ञके कथनानुसार अगस्त्यलिङ्गकी पूजाके लिये ब्राह्मणोंको भेजना

तब आकाश राजाने भी वैदिक ब्राह्मणोंको बुला, उनकी पूजाकर आज्ञा प्रदान किया कि हे ब्राह्मणो! आपलोग देवमन्दिरमें जाकर शंकरका महाभिषेक मन्त्रपूर्वक करें। उन सभोंको इतनी आज्ञा देकर पुनः उन्होंने हमलोगोंसे बुलाकर कहाः—"हे कन्याओं! महाभिषेकके सभी संभारोंका सम्पादन करो। राजासे यह आज्ञा पाकर हम सभी देवालय आई हैं। हे सुन्दरी! अब तुम अपने आगमनके बारेमें शीघ्र कहो। तुम कहांसे तथा किसके लिये आई हो? तुम्हारी कहां जानेकी इच्छा है? तुम इस दिव्य घोड़ेपर चढ़कर देवलोकसे आयी हुईके समान मालूम होती हो ॥२२॥

*श्रीवराह उवाच—*

इति ताभिस्तदा पृष्टा हृष्टा वकुलमालिका ॥ प्रोवाच वाचं मधुरां हर्षयन्तीव बालिकाः ॥२३॥

श्रीवराहजी बोले—इस प्रकार उनसे पूछे जानेपर वकुलमालिका प्रसन्न होकर उन बालाओंसे मधुर वचन बोली ॥२३॥

*वकुलमालिकोवाच—*

श्रीवेङ्कटाद्रेः प्राप्ताऽहं नाम्ना वकुलमालिका ॥ धरणीं द्रष्टुकामाऽहमारुह्येमं तुरङ्गमम् ॥२४॥ द्रष्टुं शक्या भवेद्देवि किमु तत्र नृपालये ॥ इति तस्या वचः श्रुत्वा ताः प्रोचुर्नृपकन्यकाः ॥२५॥ अस्माभिः सहिता त्वं वै द्रक्ष्यसे धरणीं शुभे ॥ इत्युक्त्वा सा ततस्ताभिरागता नृपमन्दिरम् ॥२६॥

वकुलमालिका बोली—वकुलमालिका नामवाली मैं श्रीवेङ्कटाद्रिसे धरणीदेवीको देखनेकी इच्छासे इस घोड़ेपर चढ़कर आयी हूँ। हे देवि ! क्या उस राजभवनमें वह देखी जा सकती है ? उसके इस वचनको सुनकर वे कन्याएँ बोलीं, कि हे सुभगे ! हमलोगोंके साथ-साथ तुम धरणीदेवीको देख सकोगी। उनके ऐसा कहनेपर वह उनके साथ राजमन्दिरमें आयी ॥२६॥

अथ धरणीकृतप्रश्नस्य पुलिन्दिनीप्रतिवचनम्

आगच्छन्तीषु तास्वेव धरणी तु पुलिन्दिनीम् ॥२७॥ आयान्तीं वीथिकायां सा सगुञ्जाशङ्खभूषिताम् ॥ शिशुं स्तनन्धयं पृष्ठे बद्ध्वा वस्त्राञ्चलेन वै ॥ २८ ॥ वदामि सत्यं शृणुत भूतं भव्यं भाविष्यकम् ॥ वदन्तीं वीथिवीथीषु तामाहूय शुचिस्मिता ॥२९॥ स्वर्णशूर्पं समादाय तस्मिन्मुक्ता निधाय च ॥ त्रिप्रस्थमात्रांस्त्रीन् राशीन्कृत्वा तस्यै निधाय च ॥ ३० ॥ वद सत्यं पुलिन्दे त्वमेष्यद्वा भूतमेव वा ॥ इत्येवं धरणी देवी पृच्छन्ती तां स्थिताऽभवत् ॥३१॥

धरणीके प्रश्नोंका पुलिन्दिनीसे उत्तर पाना

उन सबोंके इस प्रकार आते समय राजमहिषी धरणीदेवी गलीमें आती हुई, गुञ्जा शंख आदिसे भूषित, स्तनपान करनेवाले बच्चेको वस्त्रमें बाँधकर पीठपर रक्खे एवं भूत तथा भविष्यकी सब बातोंको सत्य-सत्य बताती

हूं'—ऐसा रास्ते-रास्तेमें कहती हुई पुलिन्दिनी ( शकुन कहनेवाली ) को बुलाकर, हंसती हुई, सोनेका सूप लाकर उसमें तीन-तीन सेरके मुक्ताके तीन ढेर रखकर, बोलीं कि हे पुलिन्दे ! भूत या भविष्य कोई भी तुम सत्य-सत्य कहो। ऐसा पूछती हुई धरणीदेवी वहां ठहर गईं ॥३१॥

पृष्टा साऽवदद्स्यास्तु मनसा यद्विचिन्तितम्॥ मध्यराशौ चिन्तितं ते वद कल्याणि मे ऋजु ॥३२॥ ओमित्याहाथ धरणी पुलिन्दां राजवल्लभा

इस प्रकार पूछी जानेपर वह (पुलिन्दिनी) जो कुछ धरणीदेवीने मनमें सोचा था उसे बोली। हे कल्याणि ! तुमने मध्यम राशिमें चिन्तन किया ? कहो, सत्य है ? राजवल्लभ धरणीदेवीने पुलिन्दासे "हां" कहा ॥३२॥

धरण्युवाच—

राशिरुक्तः फलं ब्रूहि धनराशिं ददामि ते ॥३३॥

धरणीदेवी बोलीं—राशि तो बता दी, अब फल बताओ; मैं तुमको धनकी राशि दे दूंगी ॥३३॥

पुलिन्दोवाच—

सत्यं वदामि ते सुभ्रु शिशोरन्नं प्रयच्छ मे॥ इत्युक्ता सा तु धरणी स्वर्णपात्रेऽन्नमाददे ॥३४॥ दत्त्वा तस्यै पुलिन्दिन्यै सत्यं ब्रूहीति साऽवदत् ॥

पुलिन्दा बोली—हे सुन्दर भृकुटिवाली ! मैं सत्य-सत्य बताऊंगी, मुझको लड़केके लिये ( पहिले ) कुछ अन्न दे दो। उसके ऐसा कहनेपर धरणीदेवी सोनेके पात्रमें अन्न ले आयीं और उसे पुलिन्दिनीको देकर बोलीं—( अब ) "सत्य सत्य कहो" ॥३५॥

सक्षीरमन्नमादाय दत्त्वा पुत्राय भामिनी ॥३५। सा सत्यमवदत्सुभ्रूर्दुहितुर्देहशोषणम् ॥ पुरुषादागतं भीरु तद्रूपदर्शनादियम् ॥३६॥ अङ्गतापं समापन्ना ह्यनङ्गशरपीडिता ॥ स तु देवादिदेवो वै वैकुण्ठादागतः स्वयम् ॥३७॥ श्रीवेङ्कटाद्रिशिखरे स्वामिपुष्करिणीतटे ॥ मायावी परमानन्दः श्रिया सह रमापतिः ॥३८॥ कामरूपी विहरते स्वभक्ताभीष्टदो हरिः ॥

दूधके साथ अन्न था, उसे पुत्रको देकर उस स्त्रीने सत्य-सत्य कहा। हे भीरु! तुम्हारी सुन्दरी पुत्रीके शरीरको सुखा देनेका कारण एक पुरुष द्वारा प्राप्त हुआ है। उस पुरुषके रूपको न देखनेसे यह पुत्री कामदेवके बाणोंसे पीड़ित तथा शरीरतापसे जल रही है। वह तो देवादिदेव, स्वयं वैकुण्ठसे आये हुए, श्रीवेङ्कटपर्वतके शिखरपर स्वामिपुष्करिणीके तीरपर रहनेवाले कामरूपी, महामायावी, परमानन्दपुरुष तथा अपने भक्तोंके अभीष्टको देनेवाले भगवान् श्रीलक्ष्मीजीके साथ कामरूपी होकर विहार करते हैं॥ ३९॥

स तुरङ्गं समारुह्य विहरन्काननान्तरे ॥३९॥ आगत्योपवनं राज्ञि तव कन्यां स दृष्टवान्॥ रमासभामिमां दृष्ट्वा स्वयं कामवशं गतः ॥४०॥ स्वसखीं ललितां देवः प्रेषयिष्यति तेऽन्तिकम्॥ रमेव तं समेत्यैषा गमिष्यति सुखं चिरम्॥४१॥ एतत्सत्यं मम वचस्तस्याद्येव नृपात्मजे ॥ पुत्रस्यान्नं प्रयच्छेति तूष्णीमास पुलिन्दिनी ॥ ४२ ॥

हे रानी! उन्होंने ही घोड़ेपर सवार हो, दूसरे-दूसरे जङ्गलोंमें विचरते हुए, आपके उपवनमें आकर आपकी पुत्रीको देखा। इसको साक्षात् रमादेवीके समान देखकर वह स्वयं कामवश हो गये। वह भगवान् अपनी सखी ललितादेवीको तुम्हारे पास भेजेंगे। यह पुत्री उनको पाकर रमादेवीहीके समान अनन्त कालतक सुखसे रमण करेगी। यह हमारी बात सत्य है। हे राजपुत्रि! मेरे लड़केके लिये कुछ अन्न दो, ऐसा कहकर वह पुलिन्दिनी चुप हो गयी॥४२॥

अन्नं दत्त्वा पुनर्भूमिस्तस्यै तां विससर्ज च। तस्यां विनिर्गतायां तु पुलिन्दिन्यामनिन्दिता ॥४३॥ उत्थाय चाङ्गणात्तस्माद्विवेशान्तः परं शुभम्॥ यत्र पद्मालया कन्या समास्ते स्वसखीवृता ॥४४॥ गत्वा पुत्रीसमीपस्थाः कन्याः कामतुरां सुताम्॥ पुत्रि किं ते करिष्यामि वस्तु किं वा प्रियं शुभे ॥ ४५ ॥ इति मात्राभिपृष्टा सा मन्द्रमाह मनस्विनी ॥४६॥

धरणीदेवीने उसको पुनः अन्न देकर विसर्जित किया। पुलिन्दाके चले जानेपर अनिन्दिताने उस आँगनसे उठकर सुन्दर अन्तःपुरमें प्रवेश किया; जहाँ अपनी सखियोंसे कन्या पद्मालया परिवृत थी। वहाँ जाकर अपनी कामातुरा पुत्री तथा उसके निकट रहनेवाली कन्याओंसे पूछा—हे पुत्रो! हे कन्याओं, तुम्हारे लिये

में क्या करूं ? हे शुभे ! कौन सा पदार्थ तुमको प्रिय है ? मातासे ऐसा पूछे जानेपर वह मनस्विनी पुत्री धीरे धीरे बोली ॥४६॥

अथ पद्मावतीनिवेदितभगवद्भागवतयोर्लक्षणानि

नेत्राभिरामं यल्लोके सतामपि मनःप्रियम् ॥ यं द्रष्टुकामा ब्रह्माद्या यत्तु सर्वगतं महत् ॥४७॥ तेजसामपि तेजस्वि देवानामपि दैवतम् ॥ भक्तैस्सद्भिरिह प्राप्यमभक्तैर्न कदाचन ॥४८॥ तस्मिन्नेव मनो मेऽम्ब वस्तुनीह प्रवर्तते ॥ तदेवान्विष्यतां मातर्भक्तानां सर्वकामदम् ॥४९॥

हे माता ! जो संसारमें आंखोंके प्यारे एवं सज्जनोंके भी प्रिय हैं; जिसको देखनेकी इच्छा ब्रह्मादिकोंको भी है; जो महान् एवं सर्वव्यापी हैं; जो तेजस्वियोंमें भी तेजस्वी, देवताओंके भी देवता और सच्चे भक्तोंको ही प्राप्य तथा अभक्तोंके कभी भी नहीं प्राप्य है उसी परम पुरुषमें मेरा मन लग गया है। हे माता ! उसी, भक्तोंके सब कामनाओंको पूर्ण करनेवालेको खोज दो ॥४९॥

*श्रीवराह उवाच—*

एतत् श्रुत्वाऽथ धरणी तामपृच्छत् पुनः सुताम् ॥ तद्भक्तलक्षणं ब्रूहि यैः प्राप्यं तत्सुलोचने ॥५०॥

श्रीवराह भगवान् बोले—यह सुनकर धरणीदेवीने उस पुत्रीसे पुनः पूछा। हे सुलोचने ! उन भक्तोंका लक्षण बताओ, जिनसे वे प्राप्य हैं ॥५०॥

*पद्मालयोवाच—*

भक्तानां लक्षणं मातः श्रृणु गुह्यं समाहिता ॥ शङ्खचक्राङ्किते नित्यं भुजयुग्मे वसुन्धरे ॥ ५१ ॥ ऊर्ध्वपुण्ड्रं सान्तरालं तेषामेव विशेषतः ॥ पुण्ड्राणि द्वादश पुनर्धारयन्ति तथापरे ॥५२॥ ललटोदरहृत्कण्ठे जठरे पार्श्वयोरपि ॥ भुजद्वन्द्वे सयुग्मे च पृष्ठे च गलपृष्ठके ॥ ५३ ॥ केशवादीनि नामानि द्वादशाङ्गेषु द्वादश ॥ वासुदेवेति तन्मूर्ध्नि धारयन्ति नमोऽस्त्विति ॥५४ ॥ तेषां तु नियमान्वक्ष्ये मातः श्रृणु मनोरमान् ॥

पद्मालया बोली—हे माता ! भक्तोंका गुह्य लक्षण ध्यानसे सुनो । हे माता ! हे वसुन्धरे ! उनकी शंखचक्रसे अङ्कित युगल भुजाओंपर विशेषतः अन्तरालके साथ-साथ ऊर्द्ध्वपुण्ड्र रहता है । पुनः दूसरे भक्तगण बारह पुण्ड्रको ललाट, पेट, हृदय, कण्ठ, उदर, दोनों पार्श्व (बगल), दोनों बाहुओं, पीठ तथा गलपृष्ठपर "केशव" आदि बारह नामोंको और शिरपर 'वासुदेव' ऐसे नामका उच्चारण करते हुए तथा 'नमोस्तु' कहते हुए धारण करते हैं । हे माता ! उनके मनोहर नियमोंको कहती हूं, सुनो ।

**वेदपारायणरताः कर्म कुर्वन्ति वैदिकम् ॥५५॥ सत्यं वदन्ति**
**ये देवि नासूयन्ति परान्कचित् ॥ परनिन्दां न कुर्वन्ति परस्वं न**
**हरन्ति ये ॥५६॥ न स्मरन्ति न पश्यन्ति न स्पृशन्ति कदाचन ॥**
**परदारान् सुरूपाङ्श्च ये च तान् विद्धि वैष्णवान् ॥५७॥ सर्वभूत-**
**दयावन्तः सर्वभूतहिते रताः ॥ सदा गायन्ति देवेशमेतान्भक्तान-**
**वेहि वै ॥५८॥ येन केन च सन्तुष्टाः स्वदारनिरताश्च ये ॥ वी-**
**तरागभयक्रोधास्तान्भक्तान् विद्धि वैष्णवान् ॥५९। एवंविधैर्गुणै-**
**र्युक्ताः पञ्चायुधधरा अपि ॥**

जो वेदोंके जपमें आसक्त रहकर, वैदिक कर्मोंको करते हैं, जो सत्य बोलते हैं, दूसरोंसे कभी असूया या घृणा तथा निन्दा नहीं करते, जो कभी दूसरोंके धनको नहीं लेते और जो दूसरोंकी सुन्दर स्त्रियोंके रूपको कभी भी नहीं देखते, न स्मरण करते, या न छूते हैं, उन्हीं भक्तोंको हे देवी ! वैष्णव समझो । जो सब जीवोंपर दया करनेवाले, सभी जीवोंकी भलाईमें लगे हुए तथा सदा भगवान्का यशगान करनेवाले हैं, उन्हींको भक्त जानो । जो जिस किसी प्रकार भी सन्तुष्ट, अपनी ही स्त्रीमें निरत, राग, द्वेष, क्रोध एवं भयसे रहित हों, जो पांच आयुधों (शंख, चक्र, गदा, खड्ग तथा धनुष) को धारण करनेवाले होकर भी इन-इन गुणोंसे युक्त हैं, उन्हें ही वैष्णव जानो ।

**पित्रा चाचार्यरूपेण शिष्टेनान्येन वा पुनः ॥६०॥ स्वगृह्योक्तविधाने-**
**न वह्निमादाय वै बुधः ॥ चक्राद्यायुधमन्त्रेण जुहुयात्षोडशा-**
**हुतीः ॥६१॥ मूलमन्त्रेण सूक्तेन पौरुषेण ततः परम् ॥ जातवेदः**
**सुमन्त्रेण पश्चादष्टोत्तरं शतम् ॥६२॥ हुत्वा महाव्याहृतिमिश्रका-**
**दींस्तत्र तापयेत् ॥ सद्यान्सुतप्तान् गुरुणा मन्त्रवद्धारयेत् बुधः ॥६३॥**
**भुजद्वये शङ्खचक्रे मूर्ध्नि शार्ङ्गशरौ तथा ॥ ललाटे तु गदा**

धार्यां हृदये खड्गमेव च ॥६४॥ एवं धार्याणि पञ्चैव विष्णुभक्तैर्मुमुक्षुभिः ॥ अथवा भुजयोश्चक्रशङ्खौ चैव सुलक्षणौ ॥ ३५ ॥ एवं लाञ्छनयुक्ता ये भक्तास्ते वैष्णवा स्मृताः ॥ तैरेव लभ्यं तद् ब्रह्म सदाचारसमन्वितैः ॥६६॥ तस्मिन्नेव मम प्रीतिस्तत्प्राप्तिं काङ्क्षते मनः ॥ मातर्विष्णुं विनान्येषु वाञ्छा काचिन्न जायते ॥६७॥ स्मरामि श्यामलं विष्णुं वदामि हरिमच्युतम् ॥ तेनैव मातर्जीवामि तद्योगे चिन्त्यतां विधिः ॥६८॥

पिता-रूप आचार्य्य अथवा दूसरे ही किसी शिष्ट गुरुजन द्वारा, विद्वान स्वगृह्यसूत्रकी विधिसे अग्निको लाकर, चक्रादि आयुधोंके मन्त्रोंसे सोलह-सोलह आहुति करे। मूल मन्त्रसे,पश्चात् पुरुष सूक्तसे, पुनः अग्निमन्त्रसे अष्टोत्तरशत वा एक सौआठ वार आहुति करे तथा महाव्याहृतियोंसे चक्रादिको करे। पीछे विद्वान उसे सहन करने लायक गरम कर गुरुसे मन्त्रको उच्चारण कराकर धारण करे। दोनों भुजाओंमें शंख तथा चक्र, मस्तकपर शार्ङ्गबाण, ललाटमें गदा और हृदयमें खड्गको धारण करे। मोक्षकी इच्छावाले वैष्णवसे इस प्रकार उक्त पाचोंही (चिन्ह) धारण किये जाते हैं अथवा भुजाओंमें सुलक्षण शंखचक्रके चिन्ह धारण करवाले। चिन्होंसे जो भक्त युक्त हों वही वैष्णव भक्त हैं। उन्हीं सदाचारयुक्त भक्तोंसे वह ब्रह्म प्राप्य है। उन्हीं (ब्रह्म) में मेरा प्रेम है, और मेरा मन उन्हींको पानेकी इच्छा करता है। हे माता! विष्णुके सिवाय और किसीमें भी मेरी इच्छा नहीं जाती। मैं श्यामल विष्णुको ही स्मरण करती हू और अच्युत, भगवान्‌का ही भजन करती हूं। हे माता! उन्हींसे मैं जीऊंगी, अतः उनसे मिलनेका उपाय करो ॥६८॥

*श्रीवराह उवाच—*

इत्युक्त्वा मातरं दीनां विररामाम्बुजानना ॥ तत् श्रुत्वा चिन्तयामास विष्णुः प्रीतः कथं भवेत् ॥६९॥

श्रीवराहजी बोले—इस प्रकार दुखिया मातासे कह कमलमुखी चुप हो गई। मा उसे सुनकर सोचने लगी कि विष्णुभगवान् किस प्रकार प्रसन्न हो सकते हैं ॥६६॥

अथ बकुलमालिकया सार्धं सखीनां धरणीसमीपे आगमनम्

एतस्मिन्नन्तरे कन्या अगस्त्येशं समर्च्य च ॥ आगता धरणीं द्रष्टुं सहैव बकुलस्रजा ॥७०॥ आगतान्ब्राह्मणांस्तत्र पूजयित्वा

सुभोजनैः ॥ दत्त्वाऽथ दक्षिणाः पूर्णा वस्त्रालङ्कारसंयुताः ॥ ७१ ॥ आशिषो वाचयित्वाऽथ वाञ्छितार्थस्य सिद्धये॥ विसृज्य ब्राह्मणान्सर्वानथापृच्छत्स्वयोषितः॥७२॥ पूजयित्वा ह्यगस्त्येशमागतास्ता मनस्विनीः ॥७३॥

इति श्रीवराहपुराणे भूगोलोपाख्याने धरणीवराहसंवादे श्रीवेङ्कटाचलमाहात्म्ये उत्तरार्धे बकुलमालिकां प्रति सखीभिर्निवेदितपद्मावत्युदन्तविष्णुभक्तलक्षणादिवर्णनं नाम षष्ठोऽध्यायः ॥ ६ ॥

### बकुलमालिकाके साथ सखियोंका धरणीके पास आना

इसी बीच वह कन्या अगस्त्येशकी पूजा समाप्त कर धरणीदेवीको देखनेके लिये बकुलमालिकाके साथ आ गयी। वहाँ आये हुए ब्राह्मणोंका सुन्दर-सुन्दर भोजनादिसे पूजनकर, वस्त्र, अलङ्कारादिके साथ-साथ पूरी-पूरी दक्षिणा दे, वांछित अभिलाषाकी सिद्धिका आशीर्वाद पाकर तथा सभी ब्राह्मणोंको विसर्जित ( विदा ) कर अगस्त्येश भगवान्‌की पूजा करने आयी हुयी अपनी मनस्विनी स्त्रियों से उसने पूछा ॥७३॥

इति षष्ठोऽध्यायः ॥६॥

## सप्तमोऽध्यायः ॥७॥

धरणीसे बकुला-कथन, श्रीनिवास संदेश।
वियत मन्त्रणा ब्याहका, गिरि तप शंख नरेश ॥१॥
गुरु मत परिणय लाभ हठि, प्रेषण शुक प्रभु पास।
मण्डप गृह साजन फिरन, शुक बकुला प्रभु वास ॥२॥
ब्याह व्यवस्था शुक कथन, निज माला शुक संग।
पद्मावति प्रेषण करन, अङ्गिकार धरि अङ्ग ॥३॥

अथ धरणीदेव्यै वकुलमालिकानिवेदितश्रीनिवासोदन्तः

धरण्युवाच—

कैषा ब्रूत वरा कन्या युष्माभिः सङ्गता कुतः । किमर्थमागता चेह पूज्यैषा प्रतिभाति मे ॥१॥

श्रीनिवासका कथन वकुलमालिका द्वारा श्रीधरणीदेवीसे कहा जाना

धरणीदेवी बोलीं—हे कन्याओं ! यह तुमलोगोंके साथ आयी हुई कौन है ? तथा कहांसे और किसलिये यहां आई है ? मुझको यह बहुत-ही पूज्या मालूम होती है ॥१॥

कन्यका ऊचुः—

एषा दिव्याङ्गना देवी त्वयि कार्यार्थमागता ॥ देवालये सङ्गतेयमस्माभिः शिवसन्निधौ ॥२॥ पृष्टाऽवदच्च भवतीं द्रष्टुमेवागतेति वै ॥ शक्या द्रष्टुं राजगृहे मया राज्ञी मुखेन वः ॥३॥ एवं पृष्टास्ततोऽब्रूम सहास्माभिश्च गम्यताम् ॥ वयं तु धरणीदास्यो गमिष्यामो नृपालयम् ॥४॥ इत्युक्ताऽस्माभिरायाता त्वत्समीपं वसुन्धरे ॥ भवत्या पृच्छ्यतामेषा किमित्यागमनं तव ॥५॥

कन्याएं बोलीं—यह दिव्याङ्गना देवी आपके ही पास कामसे आई हैं, देवालयमें श्रीशिवजीके निकट ही, इनका साथ हुआ। यह पूछनेपर बोलीं कि आपको ही देखने आई हूं, क्या मुझसे राजगृहमें प्रधान महिषी देखी जा सकती हैं ? ऐसा पूछनेपर हमलोगोंने कहा कि हमलोगोंके साथ चलिये। हमलोग धरणीदेवीहीकी दासियां हैं और राजगृहमें ही जायेंगी। हे वसुन्धरे ! ऐसा कहनेपर ये हमलोगोंके साथ-साथ आई। अब आपहीसे ये पूछी जायं कि यहां आपका आगमन किसलिये हुआ है ॥५॥

श्रीवराह उवाच—

इति तासां वचः श्रुत्वा तामपृच्छद्वसुन्धरा ॥६॥

श्रीवराह भगवान् बोले—उनकी इन बातोंको सुनकर धरणीदेवीने उससे पूछा ॥६॥

धरण्युवाच—

कुतस्त्वमागता देवी किं वा कार्यं मया तव ॥ ब्रूहि सत्यं करिष्यामि त्वदागमनकारणम् ॥७॥

धरणीदेवी बोलीं—हे देवि ! आप कहांसे आयी हैं ? आपको मुझसे कौन-सा काम है ? आप सत्य-सत्य कहें, मैं आपके आगमनके प्रयोजनको अवश्य करूंगी ॥७॥

बकुलमालिकोवाच—

वेङ्कटाद्रेः समायाता नाम्ना बकुलमालिका ॥८॥ स्वामी नारायणोऽस्माकमास्ते श्रीवेङ्कटाचले ॥ कदाचिद्धयमारुह्य हंसशुक्लं मनोजवम् ॥९॥ मृगयार्थं गतो राज्ञो वेङ्कटाद्रेः समीपतः ॥ वनानि विचरन्काले शोभने कुसुमाकरे ॥१०॥ पश्यन्मृगान्गजान् सिंहान् गवयाञ्छरभान् रुरून् ॥ शुकान्पारावतान्हंसान्पत्रिणोऽन्यान्वनान्तरे ॥११॥ गजराजं तत्र कश्चिद्यूथपं मदवर्षिणम् ॥ करेणुसहितं तुङ्गमन्वगच्छत्सुरोत्तमः ॥१२॥

बकुलमालिका बोली—वेङ्कटाद्रिसे आई हूं, नाम बकुलमालिका है। हमारे स्वामी नारायण भगवान् श्रीवेङ्कटाचलपर हैं। किसी समय हंसके समान उजले मनोवेगवाले घोड़ेपर चढ़कर शिकार खेलनेको वेङ्कटाद्रिके समीपसे जाते हुए उन सुरोत्तमने जंगलोंमें घूमते-घूमते सुन्दर फूलोंसे भरे जंगलोंमें मृगों, हाथियों, सिंहों, गवयों, शरभों, रुरुओं, सुग्गों, कबूतरों, हंसों तथा अन्यान्य अनेकों पक्षियोंको देखते हुए, वहीं किसी मद झरते यूथाधिपति गजराजके पीछे ऊपर सूंड उठाये हथिनियोंको साथ-साथ जाते देखा ॥१२॥

## अथ श्रीनिवासोक्त्या शङ्खनृपस्य स्वामितीर्थे तपःकरणम्

वनाद्वनान्तरं गत्वा नृपं शङ्खमुपागमत् ॥ तपस्यन्तं बृहच्छैले प्रतिष्ठाप्य जनार्दनम् ॥ १३ ॥ श्रीभूमिसहितं नित्यमर्चयन्तं च भक्तितः ॥ शङ्खनागबिलं नाम सरः पावनमुत्तमम् ॥१४॥ तत्सरस्तीरमासाद्य तुरङ्गादवरुह्य च ॥ राजवेषं समासाद्य तमपृच्छन्नरोत्तमम् ॥१५॥ क्रियते किं नृपश्रेष्ठ पादेऽस्मिञ्छेषभूभृतः ॥१६॥

## भगवान्‌के कहनेसे शंखराजाका तपस्या करना

एक वनसे दूसरे वनमें जाते समय, वे एक बड़े पर्वत शिलापर जनार्दन भगवान्‌को स्थापित कर तपस्या या प्रतिदिन श्री एवं भूदेवीसहित भगवान्‌की भक्तिसे पूजा करनेवाले राजाके पास आकर वहां जो शंखनाग

सरोवर है उसके तीरको पाकर, घोड़ेसे उतर कर, राजाका भेष धारण किये हुए उस नरोत्तमसे पूछा— "हे बिलनामक पवित्र एवं उत्तम नृपश्रेष्ठ ! इस शेषाचल पर्वतके अड़तले आप क्या करते हैं ॥१६॥"

शङ्ख उवाच—

अहं हैहयदेशीयः पुत्रः श्वेतस्य भूभृतः ॥ महाविष्णोः प्रीतये ऽत्र कृतवानखिलान्क्रतून् ॥१७॥ अदर्शनान्महाविष्णोर्निर्विण्णोऽहं नृपात्मज ॥ तदानीमवदद्दिव्या वाणी सर्वार्तिनाशिनी ॥१८॥ राजन्नात्र भविष्यामि प्रत्यक्षं ते वचः श्रृणु ॥ गच्छ नारायणाद्रिं त्वं तपः कुर्विति मां स्फुटम् ॥१९॥

शङ्ख बोले—मैं हैहय देशीय राजा श्वेतका पुत्र हूं। महा विष्णुको प्रसन्न करनेके लिये मैंने यहांपर सभी यज्ञोंको किया। हे नृपात्मज ! महा विष्णुके दर्शन नहीं मिलनेसे मैं दुःखित था। उसी समय सब दुःखोंका नाश करनेवाली दिव्य ( आकाश ) वाणीने मुझको स्पष्ट कहा कि हे राजन् ! मैं यहां नहीं प्रत्यक्ष होऊंगा। मेरी बात सुनो, तू नारायणाद्रिको जाओ और वहां ही तपस्या करो ॥१९॥

ततो देशमिमं त्यक्त्वा तपसाऽराधयाम्यहम् ॥ अत्र देवं नृपाचिन्त्यं प्रतिष्ठाप्य श्रियः पतिम् ॥२०॥ अगस्त्यानुग्रहान्नित्यमर्चयामि विधानतः ॥ इति तस्य वचः श्रुत्वा सोत्प्रासं प्राह तं विभुः ॥२१॥

तभीसे मैं उस देशको छोड़कर यहां तपस्या एवं आराधना करता हूं। हे नृप ! यहां उसी अचिन्त्य श्रीपति भगवान्की प्रतिस्थापना कर, अगस्त्यजीकी कृपासे मैं विधि-विधानसे पूजा करता हूं। उसकी इन बातोंको सुनकर भगवान् उपहासके साथ बोले ॥२१॥

गच्छ नारायणाद्रिं त्वमस्य पादे किमास्यते ॥ आरुह्यानेन मार्गेण पश्चिमे शिखरे स्थितम् ॥२२॥ प्रणम्य विष्वक्सेनं त्वं वामे न्यग्रोधमूलतः ॥ स्वामिपुष्करिणीं गत्वा स्नात्वा तीरेऽथ पश्चिमे ॥२३॥ अश्वत्थं तत्र वल्मीकं द्रक्ष्यसे नृपनन्दन ॥ तयोर्मध्यं समासाद्य तपः कुर्वित्यचोदयत् ॥ २४ ॥ कश्चित् श्वेतो वराहोऽस्मिन्वल्मीके चरति ध्रुवम् ॥ स तु पुण्यवतामेव सेवां यच्छति भूपते ॥ २५ ॥

तुम यहां क्यों ठहरे हो ? नारायणाद्रिको जाओ, इस रास्तेसे चढ़कर पश्चिमकी चोटीपर स्थित बाल विष्वक्सेनको प्रणामकर, पीपलकी जड़केतलेसे स्वामिपुष्करिणीमें जाकर, उसमें स्नान करके पीछे उसके पश्चिमी तीरपर पीपलका वृक्ष तथा उसके पास एक वल्मीक ( दीमक ) देखोगे। उनके बीचमें बैठकर तपस्या करो। इस वल्मीक (दीमक) में निश्चय ही कोई श्वेत वराह रहता है । हे राजन्! वह केवल पुण्यात्माओंकी ही सेवा प्राप्त करता है ॥२५॥

*श्रीवराह उवाच—*

इत्यादिश्य हयारूढो जगाम मृगयां विभुः ॥ चरन्वनाद्वनं सुभ्रूः समासाद्यारणीं नदीम् २६। अवरुह्य हयात्तत्र विचचार तटे शुभे ॥ वनान्तादागतो वायुः पद्मकल्हारशीतलः ॥ श्रमापनयनो मन्दं सिषेवे पुरुषोत्तमम् ॥२७॥ तरवः पुष्पवर्षाणि विकिरन्तः सिषेविरे ॥ एवं स विचरन्देवः पुष्पभारानतांस्तरून् ॥२८॥ विचिन्वन् गजराजं तं पुष्पलावीर्ददर्श ह ॥ कन्याः सुवेषा रुचिरा मेघेष्विव शतह्रदाः ॥२९॥ तासां मध्यगतां तन्वीं ददर्शातिमनोहराम् ॥ लक्ष्मीसमां हेमवर्णां तस्यां सक्तमना अभूत् ॥३०॥

श्रीवराहजी बोले—ऐसी आज्ञा देकर घोड़ेपर सवार हो भगवान् शिकारको चले गये और जंगल-जङ्गल घूमते-घूमते आरणी नदीको पा वहीं घोड़ेसे उतरकर सुन्दर तीरपर विचरण करने लगे, पुनः वनान्त देशके पद्मकल्हारसे शीतल वायु आकर थकावटको दूर करनेवाली मन्द-मन्द वायु तथा फूलोंकी वर्षा करते हुए वृक्षगण भगवान्‌की सेवा करने लगे। इस प्रकार फूलोंके भारसे नये हुए वृक्षोंके पास घूमते-घूमते उस गजराजको ढूंढ़ते-ढूंढ़ते फूलोंको तोड़नेवाले भगवानने मेघोंमें बिजलीके समान सुन्दर वेष तथा रूपवाली कन्याओं एवं उनके बीचमें आती हुई अति मनोहर, लक्ष्मीजीके समान और सोनेके रंगवाली एक सुन्दरीको देखा और उसीमें आसक्त हो गये ॥२३०॥

तां पृष्टुराह ताः कन्याः केयमित्येव पूरुषः ॥ उक्तस्ताभिरियं कन्या वियद्राज्ञो महाबल ॥३१॥ इदं श्रुत्वा वचस्तासां हयमारुह्य वेगवान् ॥ आजगामाशु भगवान्स्वालयं रुचिरं गिरिम् ॥

उसको ग्रहण करनेकी इच्छासे उस पुरुषने उनसे पूछा यह किसकी कन्या है ? उन्होंने कहा कि हे

महाबल ! यह आकाशराजकी राजकन्या हैं। उनके इस वचनको सुनकर परम वेगसे घोड़े पर सवार हो भगवान् पवित्र पर्वतपरके अपने सुन्दर देवालयमें शीघ्र चले आये ॥३२॥

तत्र स्वालयमासाद्य स्वामिपुष्करिणीतटे ॥ मामाहूयावदद्देवो हला बकुलमालिके ॥ ३३॥ वियद्राजपुरं गत्वा प्रविश्यान्तःपुरं सखि ॥ तत्पत्नीं धरणीं प्राप्य पृष्ट्वा कुशलमेव च ॥ ३४ ॥ याचस्व तनयां तस्या रुचिरां कमलालयाम् ॥ राज्ञोऽभिमतमाज्ञाय शीघ्रमागच्छ भामिनि ॥३५॥ इत्थं देवेन चाज्ञप्ता देवि त्वद्गृहमागता ॥ यथोचितं कुरुष्वेह राज्ञामन्त्रियुतेन च ॥३६॥ कन्यया च विचार्यैव प्रोच्यतामुत्तरं वचः ॥

वहां स्वामिपुष्करिणीके तटपर अपने आलयमें पहुंचकर श्रीभगवान्ने मुझको बुलाकर कहा—हे सखी बकुलमालिके ! आकाशराजाकी नगरीमें जा अन्तःपुरमें प्रवेश कर उस राजाकी प्रधान महिषी श्रीधरणीदेवीको पा, कुशलादि पूछकर, उनकी परम सुन्दरी पुत्री कमलालया पद्मावतीदेवीकी याचना करना और श्रीवियत्राजाकी रायको जानकर हे भामिनि ! तुम शीघ्र चली आओ । हे देवि ! भगवान्से ऐसी आज्ञा पाकर आपके गृहमें आई हूं। अब मन्त्रियोंसे युक्त राजा तथा अपनी कन्यासे राय लेकर यथोचित करो और मुझको उत्तर दो ॥३३७॥

अथ बकुलमालिकोक्त्या धरण्यादिकृतविवाहनिश्चयः

*श्रीवराह उवाच—*

अथ तस्या वचः श्रुत्वा प्रीता राज्ञी बभूव ह ॥ आहूयाकाशराज तमुपेत्य कमलालयाम् ॥३८॥ मन्त्रिमध्येऽवदद्देवी वचनं बकुलस्रजः ॥ श्रुत्वा प्रीतोऽवदद्राजा मन्त्रिण. सपुरोहितान् ॥३९॥

बकुलमालिकाके कथनानुसार धरणीदेवीका विवाह निश्चय करना

श्रीवराहजी बोले—श्रीधरणीदेवीने बकुलमालिकाकी बातोंको मन्त्रियोंके बीचहीमें राजासे कहा। सुनकर राजा प्रसन्न होकर अपने मन्त्रियों तथा पुरोहितोंसे कहने लगे ॥३९॥

*आकाशराज उवाच—*

कन्या स्वयोनिजा दिव्या सुभगा कमलालया ॥ अर्थिता देव-

देवेन वेङ्कटाद्रिनिवासिना ॥४०॥ पूर्णो मनोरथो मेऽद्य ब्रूत किं संमतं तु वः ॥ श्रुत्वा मन्त्रिगणाः सर्वे राज्ञो वचनमुत्तमम् ॥४१॥ प्रोचुः सुप्रीतमनसो वियद्राजं महीपतिम् ॥

आकाशराजाने कहा —अयोनिजा ( जो योनिसे न उत्पन्न होकर पृथ्वीसे उत्पन्न हुई हो ), परम दिव्या, सुन्दरी तथा कमलालया पुत्री पद्मावतीदेवी देवादिदेव श्रीवेङ्कटाद्रिनिवासी भगवानसे माँगी जा चुकी है। आज ही मेरा मनोरथ पूरा हुआ। अब आपलोग अपनी सम्मति कहें। राजाके इन उत्तम वचनोंको सुन सभी मन्त्रीगण परम प्रसन्न मन होकर महाराज आकाशराजासे बोले ॥४२॥

वयं कृतार्था राजेन्द्र कुलं सर्वोन्नतं भवेत् ॥४२॥ भवत्कन्येयमतुला श्रिया सह रमिष्यति ॥ दीयतां देवदेवाय शार्ङ्गिणे परमात्मने ॥४३॥ अयं वसन्तः श्रीमांश्च शुभं शीघ्रं विधीयताम् ॥४४॥ आहूय धिषणं लग्नं विवाहार्थं विधीयताम् ॥४५॥ तथास्त्वित्याह्वयामास सुरलोकाद् बृहस्पतिम् ॥ पप्रच्छ कन्यावरयोर्विवाहार्थं नरेश्वरः ॥४६॥

हे राजेन्द्र ! आज हमलोग सभी कृतार्थ हो गये। हमलोगोंका कुल सर्वोन्नत एवं सर्वश्रेष्ठ हो गया; क्योंकि आपकी यह अनुपमेया कन्या लक्ष्मीजीके साथ रमण करेगी। श्रीशार्ङ्गधनुर्धारी, परमात्मा देवाधिदेव भगवान्को आप इसे दे देवें। अभी शोभासंपन्न वसन्तकाल है, अभी ही इस शुभ कार्य्यका शीघ्र संपादन करें तथा श्रीबृहस्पतिजीको बुलाकर शीघ्र विवाहका लग्न निश्चय कर लें। तथास्तु, ( ऐसा ही हो ) कहकर राजाने स्वर्गलोकसे बृहस्पतिजीको बुलवाया और कन्या तथा वरके विवाहके लिये पूछा ॥४७॥

अथ बृहस्पत्युक्त्या विवाहलग्नस्थिरीकरणम् ।

राजोवाच—

कन्याया जन्मनक्षत्रं मृगशीर्षमिति स्मृतम् ॥ देवस्य श्रवणर्क्षन्तु तयोर्योगो विचार्यताम् ॥४७॥ श्रुत्वाऽब्रवीत्स धिषणस्तयोरुत्तरफल्गुनी ॥ समन्तात्सुखवृद्ध्यर्थं प्रोच्यते दैवचिन्तकैः ॥४८॥ तयोरुत्तरफल्गुन्यां विवाहः क्रियतामिति ॥ वैशाखमासे विधिवत्क्रियतामिति सोऽब्रवीत् ॥४९॥

### बृहस्पतिके कथनानुसार विवाहका लग्न निश्चित होना

राजाने कहा—कन्याका जन्म नक्षत्र मृगशिरा, ऐसा ज्ञात है और भगवान्‌का तो श्रवणानक्षत्र है। अब आप इन दोनोंके योग विचार करें। यह सुनकर श्रीबृहस्पतिजी बोले—उनका उत्तर फल्गुनी ही सभी तरहसे सुखवृद्धिके लिये उत्तम तथा दैवचिंतक ज्योतिषियोंने बताया है। अतः वैशाख महीनेके उत्तर फल्गुनीमें ही इनका विवाह विधिपूर्वक कर देवें ॥४६॥

*श्रीवराह उवाच—*

राजा तु धिषणं तत्र सम्पूज्याथ विसृज्य च ॥ देवस्य दूति-
कामाह गच्छ देवालयं शुभम् ॥५०॥ वैशाखे देवदेवाय कल्या-
णं वद सुव्रते ॥ वैवाहिकविधानं तु कृत्वा चागम्यतामिति ॥५१॥
ततो देव्याः प्रियकरं शुकं दूतं तया सह ॥ विसृज्य वायुं स्वसु-
तामिन्द्राद्यानयनेऽसृजत् ॥५२॥

श्रीवराहजी बोले—राजाने श्रीबृहस्पतिजीकी पूजाकरके विदाकर श्रीभगवान्‌की दूतीसे कहा कि हे शुभे! भगवान्‌के आलयको चली जाओ और हे सुव्रते! ऐसा कहो कि देवाधिदेव भगवान्‌का विवाह वैशाखमें होगा। अतः वैवाहिक सामग्रीकी तैयारी कर आ जायं। पीछे देवी पद्मावतीके परम प्रिय ब्रह्मर्षि शुकको उसके साथ भेजकर इन्द्रादिको लानेके लिये वायुके समान अपने पुत्रको भेजा ॥५२॥

### अथ विश्वकर्मादिकृतपुरालङ्कारादिक्रमः

आहूय विश्वकर्माणं पुरालङ्कारकर्माणि ॥ नियोजयामास सो-
ऽपि निर्ममे निमिषान्तरात् ॥५३॥ इन्द्रोऽसृजत्पुष्पवृष्टिं ननृतुश्चा-
प्सरोगणाः ॥ धनदो धनधान्याद्यैः पूरयामास वेश्म तत् ॥५४॥
यमस्तु रोगरहितांश्चकार मनुजान् भुवि ॥ वरुणो रत्नजालानि
मौक्तिकादीन्यपूरयत् ॥५५॥ एवं सम्पाद्य सर्वाणि ययुर्देवा वृषा-
चलम् ॥५६॥

### विश्वकर्मासे नगरीको सजवाना

पुनः विश्वकर्माको बुलाकर नगरको सजानेके काममें नियुक्त किया। उन्होंने भी (विश्वकर्मा) क्षणभरमें ही सब बना दिया। इन्द्रने फूलोंकी वर्षा वर्षायी। अप्सराओंने नृत्य किया। धन देनेवाले श्रीकुबेरने धन-धान्य

आदिसे उस नगर तथा मकानोंको पूर्ण कर दिया। पृथ्वीपरके मनुष्योंको यमराजने रोगरहित कर दिया तथा वरुणने मुक्ता आदि रत्नोंके जालोंसे उसे परिपूर्ण कर दिया। इस प्रकार सब कुछ सम्पादन कर सभी देवता वृषाचलपर गये ॥५६॥

अथ शुकेन सह वकुलायाः श्रीनिवाससमीपे गमनम्

*श्रीवराह उवाच—*

**ततः सा हयमारुह्य शुकेन सहिता ययौ ॥ श्रीवेङ्कटाद्रिमासाद्य देवालयसमीपतः ॥५७॥ अवरुह्य तुरङ्गात्सा सशुकाऽभ्यन्तरं ययौ ॥ दृष्ट्वा देवं रत्नपीठे श्रिया सह सुलोचनम् ॥५८॥ प्रणम्य ह्यवदत्प्रीता कृत्यं तत्र कृतं विभो ॥ माङ्गल्यवार्तां वक्तुं वै शुक एष समागतः ॥५९॥**

पद्मावतीके दूत शुकके साथ वकुलमालिकाका भगवान्‌के पास जाना

श्रीवराहभगवान् बोले—तब वकुलमालिका शुक महर्षिके साथ घोड़ेपर चढ़कर श्रीवेङ्कटाद्रितक पहुँच भगवदालयके निकट घोड़ेसे उतरकर उनके साथ भीतर गई। श्रीलक्ष्मीजीके साथ सुन्दर आँखवाले भगवान्‌को रत्नोंके पीढ़ेपर देख वह प्रणामकर बोली—हे विभो ! वहाँका काम कर लिया। माङ्गलिक वार्ता कहनेके लिये यह शुकजी आये हैं ॥५९॥

अथ श्रीनिवासस्य शुकावेदितपद्मावतीपरिणयवृत्तान्तः

**वदेति देवेनाज्ञप्तः शुको नत्वा तमब्रवीत् ॥ त्वां प्रत्याह सुता भूमेर्मामङ्गीकुरु माधव ॥ ६० ॥ वदामि तव नामानि स्मरामि त्वद्वपुस्सदा ॥ ध्रियन्ते तव चिह्नानि भुजाग्रे रमापते ॥६१॥ त्वद्भक्तानर्चयामीह पञ्चसंस्कारसंयुतान् ॥ त्वत्प्रीतये हि कर्माणि करोमि मधुसूदन ॥६२॥ एवं सदैवाचरन्त्याः पित्रोरनुमते मम ॥ कुरु प्रसादं देवेश मामङ्गीकुरु माधव ॥६३॥**

शुकजी कथितविवाहवृत्तान्त

भगवान्‌की "बोलो" ऐसी आज्ञा पाकर शुकजीने प्रणामकर उनसे कहा कि पृथ्वीसुता आपके प्रति बोली

है, कि "हे माधव ! मुझे स्वीकार करो। मैं आपहीका नाम सदा जपती हूं और आपकी सौम्यमूर्ति (शरीर)का ही सदा ध्यान वा स्मरण करती हूं। हे रमापति ! मैं आपके चिह्नोंको ही भुजादि शरीरमें धारण करती हूं। पञ्च संस्कारोंसे युक्त आपके भक्तोंको मैं सदा पूजती हूं। हे मधुसूदन ! मैं आपकी प्रीतिके लिये ही कार्मोको करती हूं। इस प्रकार सदा आचरण करती हुई मुझसे, मेरे पिताकी अनुमतिसे हे देवेश ! हे माधव !! मेरे ऊपर अनुग्रहकर मुझे स्वीकार करो ॥६३॥

## अथ पद्मावत्या शुकदत्तश्रीनिवासमालाधारणम्

*शुक उवाच—*

**इति विज्ञापयामास कमलस्था धरासुता ॥ शुकस्य वचनं श्रुत्वा सुप्रियं स्वात्मनो हरिः ॥६४॥**

*श्रीभगवानुवाच —*

**कर्तुं कल्याणमुद्वाहमागमिष्यामि चामरैः ॥ शुक गच्छ वदेवं तामित्थं देवोऽब्रवीदिति ॥६५॥**

## पद्मावतीसे भेजी हुई मालाको भगवान्का धारण करना

शुकजी बोले—यही कमलस्था पृथ्वीसुता पद्मावतीने निवेदन किया है। इस प्रकार शुकसे अपने प्रिय वचन सुनकर भगवान् बोले—हे शुक ! तुम जाओ और उससे कहो कि भगवान्ने ऐसा कहा है कि मांगलिक विवाह करनेको मैं देवताओंके साथ आऊंगा ॥६५॥

**शुकः श्रुत्वा देववाक्यमादाय वनमालिकाम् ॥ देवदत्तां ययौ शीघ्रं वियद्राजसुतां प्रति ॥६६॥ तुलसीमालिकां दत्त्वा मृगनाभिसुगन्धिनीम् ॥ प्रणम्य देवीमवदच्छुको देववचः शुभम् ॥६७॥ श्रुत्वा तन्मालिकां गृह्य भूमिजा शिरसा दधौ ॥ चक्रेऽलङ्कारमुचितं देवागमनकाङ्क्षिणी ॥६८॥**

भगवान्की बातें सुनकर शुकजी भगवान्की दी हुई तुलसीमाला लेकर शीघ्र आकाशराजाकी कन्याके पास गमन किये और कस्तूरीके सुगन्धवाली तुलसीमाला देवीको दे प्रणामकर भगवान्के शुभ वचनको कहे। यह सुनकर तथा उस मालाको लेकर भूमिसुताने उसे अपने शिरपर धर लिया और भगवान्के आगमनकी प्रतीक्षा करती हुई उस कन्याने उचित अलंकारोंको धारण किया ॥६८॥

वियद्राजोऽपि सानन्दमिन्दुमाहूय सादरम् ॥ अन्नं विधीयतां राजन्निविधं रससंयुतम् ॥ ६९ ॥ विष्णोर्नैवेद्ययोग्यं तत्परमान्नं विधीयताम् ॥ देवानां च ऋषीणां च नराणामपि संमतम् ॥७०॥ चतुर्विधं सुगन्धाढ्यममृतांशैः सुधाकर ॥ एवं कृत्वा संविधानं प्रतीक्ष्यागमनं विभोः ॥७१॥ सभायां मन्त्रिसहितः समास्ते प्रीतमानसः ॥ पुत्रीमलङ्कृतां कृत्वा धरणीसहितो नृपः ॥७२॥

इति श्रीवराहपुराणे भूगोलोपाख्याने धरणीवराहसंवादे श्रीवेङ्कटाचलमाहात्म्ये उत्तरार्धे धरणीदेव्या बकुलमालिकानिवेदित श्रीनिवासोदन्त-कमलालयाकल्याणविध्या-दिवृत्तान्तवर्णनं नाम सप्तमोऽध्यायः ॥ ७ ॥

आकाशराजाने भी आनन्दित होकर चन्द्रमाको सादर बुलाकर कहा—हे सुधाकर! विविध रसयुक्त अन्न बनाइये। विष्णुके नैवेद्ययोग्य, खीर देवताओं,ऋषियों तथा मनुष्योंके मनोनुकूल चारों प्रकारकी सुगन्धित अमृतांशोंसे युक्त, सब तरहका अन्न बनाइये। इस प्रकार सभी सामग्रियोंका आयोजन कर, भगवान्‌के आगमनकी प्रतीक्षामें मन्त्रियोंके साथ प्रसन्न मन हो पुत्रीको अलङ्कारोंसे सुशोभित कर धरणीदेवीके साथ आकाश राज सभामें बैठे॥७२॥

इति सप्तमोऽध्यायः ॥७॥

## अष्टमोऽध्यायः ॥८॥



रमा ईश आलाप अरु, धारण भूषण वर्ग।
शिव ब्रह्मामर संग प्रभु, परिणय हित उत्सर्ग ॥१॥
पद्मावति भ्राता गमन, अरु विवाहकी धूम।
वर-कन्या पूजा करन, अग्नि कुण्ड महं हूम ॥२॥
प्रभु प्रसन्न वरदान नृप, विदा अमर अज ईश।
इस अष्टम अध्यायमें, कहत तेहि नगि शीश ॥३॥

## अथ श्रीनिवासस्य लक्ष्म्यादिकृतपरिणयालङ्कारः

*श्रीवराह उवाच—*

ततो देवाधिदेवोऽपि लक्ष्मीमाहूय भामिनीम् ॥ किं कार्यं वद कल्याणि विवाहार्थं सुलोचने ॥१ ॥ आज्ञापयस्व स्वसखी रमे कार्यं कुरु प्रियम् ॥ श्रीस्तु कृष्णवचः श्रुत्वा सखीनामभ्यचोदयत् ॥ २ ॥

### श्रीनिवासभगवान्का परिणयालङ्कार

श्रीवराह भगवान् बोले—तब देवादिदेव श्रीभगवान्ने भी अपनी स्त्री लक्ष्मीको बुलाकर कहा कि हे कल्याणि ! हे प्रिये !! हे सुलोचने !!! विवाहके लिये क्या करना चाहिये कहो। हे रमे ! अपनी सखियोंको आज्ञा दो और अपने प्रिय कार्य्योंको करो। श्रीकृष्णभगवान्की बातोंको सुनकर लक्ष्मीजी अपनी सखियोंको आज्ञा दीं ॥२॥

श्रियाऽज्ञप्ता ततः प्रीतिः सुगन्धं तैलमाददौ ॥ श्रुतिः क्षौमं समादाय तस्थौ देवस्य सन्निधौ ॥३॥ भूषणानि समादाय स्मृतिरप्याययौ मुदा ॥ धृतिरादर्शमादत्त कान्तिर्मृगमदं ददौ ॥४॥ यक्षकर्दममादाय ह्रीः स्थिता पुरतो हरेः ॥ कीर्तिः कनकपट्टं च सरत्नं मुकुटं ददौ ॥५॥ छत्रं ददौ तदेन्द्राणी चामरं तु सरस्वती ॥ द्वितीयं चामरं गौरी व्यजने विजयाजये ॥६॥ आगतास्ताः समालोक्य श्रीरुत्थायाथ सत्वरा ॥ सुगन्धं तैलमादाय देवमभ्यज्य शीर्षतः ॥७॥ उद्वर्तितं गन्धचूर्णैर्देवाङ्गं परिमृज्य च ॥ आनीतान् करिभिस्तोयकलशान्काञ्चनाञ्छतम् ॥८॥ वियद्गङ्गादितीर्थेभ्यः कर्पूरादिसुवासितान् ॥ एकमेकं समादाय त्वभ्यषिञ्चद्रमा हरिम् ॥९॥ सन्धूप्य केशान् धूपेन तानाश्यामान्ववन्ध च ॥ सुगन्धेनानुलिप्याङ्गं स्वर्णवर्णेन तद्विभोः ॥१०॥ पीतकौशेयकं वद्ध्वा क-

व्यां काञ्चीसमन्वितम् ॥ मुकुटादिविभूषाभिर्भूषयामास चेन्दिरा ॥११॥ अङ्गुलीयकरत्नानि सर्वास्वेवाङ्गुलीषु च ॥ आदर्शं दर्शयामास धृतिर्देवस्य सन्निधौ ॥१२॥ दृष्ट्वाऽऽदर्शं देवदेवो ह्यूर्ध्वपुण्ड्रं स्वयं दधौ ॥

लक्ष्मीजीकी आज्ञा पाकर प्रीति नामक सखीने सुगन्धित तेल लाया। श्रुति कपड़े लाकर भगवान्के निकट खड़ी हो गई। अनेकों भूषणोंको ले स्मृति भी आनन्दित होकर आ गयी। धृतिने पैना लाया तथा कान्तिने कस्तूरी लाकर दिया और लज्जा यक्षकर्दम (कपूर, अगर, कस्तूरी कङ्कोलादि) लाकर सामने खड़ी हो गई। कीर्तिने सोनेके पट्ट (वस्त्र) तथा स्वच्छ मुकुट लाकर दिया। इन्द्राणीने छत्र दिया। सरस्वतीने चमर दिया। गौरीने दूसरा चमर दिया विजया एवं जयाने पंखे दिये। उन सबोंको आये हुये देखकर भगवती लक्ष्मीजीने शीघ्र उठकर सुगन्धित तेल लाकर शिरसे ही भगवान्के सारे शरीरमें लगाकर तथा सुगन्धित चूर्ण भगवान्के अंगोंमें लगाकर आकाशगंगादि तीर्थोंसे हाथियों द्वारा लाये हुए सैकड़ों कर्पूरादि सुवासित जलपूर्ण सुवर्ण कलशोंसे भगवान्को स्नान कराया और उन ईषन् श्याम केशोंको धूपसे धूपित (सुखा-सुखा) कर बांध दिया। भगवान्के अंगोंमे सोनेके रंगवाले गन्धद्रव्योंसे लेपकर, पीली कमरधनीयुक्त पीताम्बर कमरमें पहनाकर इन्दिराने मुकुट आदि विभूषणोंसे भूषित किया, सभी अंगुलियोंमें अंगुठियां पहना दिया। धृतिने भगवान्के निकट दर्पण दिखाया। भगवान्ने दर्पण देखकर ऊर्ध्वपुण्ड्र तिलकको स्वयहीधारण किया ॥१३॥

अथ ब्रह्मादिभिः साकं श्रीनिवासस्य वियद्राजपुरगमनम्

आरुह्य गरुडं पश्चात्स्वयं लक्ष्मीसमन्वितः ॥१३॥ ब्रह्मेशवज्रिवरुणयमयक्षेशसेवितः ॥ वसिष्ठाद्यैर्मुनीन्द्रैश्च सनकाद्यैश्च योगिभिः ॥१४॥ भक्तैर्भागवतैर्युक्तो नारायणपुरीं ययौ ॥ जगुर्गन्धर्वपतयो ननृतुश्चाप्सरोगणाः ॥१५॥ देवदुन्दुभयो नेदुस्तदा देवस्य सन्निधौ ॥ जपन्तः स्वस्तिसूक्तानि मुनयस्तं समन्वयुः ॥१६॥ देवो देवगणैर्युक्तो विष्वक्सेनादिपार्षदैः ॥ सखीभिस्स्यन्दनस्थाभिर्बकुलाद्याभिरन्वितः ॥ आकाशराजस्य पुरमाससाद स्वलङ्कृतम् ॥१७॥

ब्रह्मादिके साथ भगवान्का आकाशराजाकी नगरीमें जाना

पीछे श्रीलक्ष्मीजीके साथ गरुडपर सवार होकर ब्रह्माने, शंकर, इन्द्र, वरुण, यम, कुबेर आदिसे सेवित हो, वसिष्ठादि मुनियों, सनकादि योगीन्द्रों तथा भगवद्भक्तोंसे युक्त होकर नारायणपुरीको प्रस्थान किया। उस समय

भगवान्‌के सामने गन्धर्वपति गाने लगे, अप्सराएं नाचने लगीं; तथा देवदुन्दुभियाँ बजने लगीं। मुनिगण स्वस्तिकादि तथा सूक्तादि जपते हुए भगवान्‌के पीछे-पीछे गये। देवतागणों, विष्वक्सेनादि पार्षदों तथा रथपर बैठी हुई बकुलमालिकादि सखियोंसे समन्वित होकर श्रीभगवान् आकाशराजाकी सुन्दर अलंकृत नगरीमें पहुँचे ॥१७॥

अथ पद्मावतीपरिणयघट्टः

देवमागतमालोक्य कन्यामैरावतस्थिताम् ॥ पुरीं प्रदक्षिणीकृत्य गोपुरद्वारमागताम् ॥ १८ ॥ आलोक्याकाशराजोऽपि समानीय वधूवरौ ॥बन्धुभिः सहितस्तस्थौ देवमालोक्य केशवम् ॥१९॥

पद्मावतीका विवाहसंस्करण

भगवान् तथा ऐरावत हाथीपर पुरीकी प्रदक्षिणाकर आयी हुई गोपुर द्वारपर कन्याको देखकर आकाशराज वर-वधू दोनोंको लाकर बन्धुबान्धवोंके साथ भगवान् केशवको देखते ठहर गये ॥१९॥

विष्णुर्मालां स्वकण्ठस्थां हस्तेनादाय सस्मितः ॥ कमलायाः स्कन्धदेशे मुमोच सुमनश्चिताम् ॥ २० ॥ आदाय मल्लिकामालां साऽस्य कण्ठे समर्पयत् ॥ एवं त्रिवारं तौ कृत्वा वाहनादवरुह्य च ॥ २१ ॥ स्थित्वा पीठे क्षणं पश्चाद् गृहं विविशतुः शुभम् ॥ ब्रह्मादिदेवयूथैश्च सहितौ भूमिजाहरी ॥२२॥

तब भगवान्‌ने अपने कन्धे ( गले ) में पड़ी तथा उत्तम फूलोंकी बनी हुई मालाको अपने हाथोंसे निकालकर, हंसते हुए कमला श्रीपद्मावती देवीके गलेमें डाल दिया। कमलादेवीने भी अपनी मल्लिकामालाको उनके गलेमें समर्पित किया। इस प्रकार उन दोनोंने तीन बार माला धारण करके, वाहनोंसे उतरकर, थोड़ी देरतक पीढ़ेपर बैठकर पीछे ब्रह्मादि देवसमूहके साथ सुन्दर गृहमें प्रवेश किया ॥२२॥

माङ्गल्यसूत्रबन्धादि सांकुरार्पणमब्जजः॥ वैवाहिकं कारयित्वा लाजहोमान्तमेव च ॥ २३ ॥ ब्रह्मादेशं समाज्ञाय शायितौ कमला-हरी ॥ चतुर्थे दिवसे सर्वं समाप्य चतुर्मुखः ॥ २४ ॥ अनुज्ञाप्य वियद्राजमारोप्य गरुडे हरिम् ॥ देवीभ्यां सहितं देवं देवैर्गन्तुं प्रचक्रमे ॥ २५ ॥

माङ्गलिक सूत्रका बन्धनादि तथा लाजहोमपरयन्त माना, जवका अङ्कुर तथा वैवाहिक अन्यान्य क्रिया समाप्त कर एवं (तीन दिनका) व्रत पालनका नियम समझाकर ब्रह्माजीने कमला और भगवान्को सुलाया। चौथे दिन चतुर्मुखब्रह्माजीने सब कुछ समाप्त कर आकाशराजासे अनुज्ञा लेकर देवियोंके साथ भगवान्को गरुड़पर चढ़ाकर अन्य देवताओंके साथ आख्यानके लिये समारोह किया ॥२६॥

दिव्यदुन्दुभिनिर्घोषैः स प्राप्य वृषभाचलम् ॥ तुष्टवुर्देवदेवेशं ब्रह्माद्या देवतागणाः ॥ २६ ॥ शुकादयो मुनिगणास्तुष्टुवुः पुरुषोत्तमम् ॥ स्तूयमानोऽथ देवोऽपि विवेश मणिमण्डपम् ॥२७॥ रमाधरणिजाभ्यां च तत्र सिंहासनं ययौ ॥ २८ ॥

दिव्य नगारों एवं दुंदुभियोंके घोषों समेत भगवानके वृषभाचलपर पहुंचनेपर ब्रह्मादि देवता तथा शुक आदि मुनिगणोंने भगवान्की स्तुतिकी। स्तुति किये जाते हुए भगवान्ने मणिमण्डपमें प्रवेश किया और वहां श्रीलक्ष्मीजी और धरणीकन्या पद्मावतीके साथ सिंहासनपर बैठे ॥२८॥

अथ वधूवरयोर्वियद्राजवितीर्णप्राभृतादिकम्

आकाशराजोऽपि तदा महेन्द्रादिसुरैः सह ॥ पुत्रीविष्णवोः प्रियार्थं तु प्राभृतं कर्तुमुद्यतः ॥२९॥ सौवर्णेषु कटाहेषु तण्डुलाञ्छालिसम्भवान् ॥ मुद्गपात्राण्यनेकानि घृतकुम्भशतानि च ॥३०॥ पयोघटसहस्राणि दधिभाण्डान्यनेकशः ॥ दिव्यानि चूतकदलीनारिकेलफलानि च ॥३१॥ धात्रीफलानि कूष्माण्डराजरम्भाफलानि च ॥ पनसान्मातुलुङ्गांश्च शर्करापूरितान् घटान् ॥३२॥ सुवर्णमणिमुक्ताश्च क्षौमकोट्यंबराणि च ॥ दासीदाससहस्राणि कोटिशो गास्तथैव च ॥३३॥ हंसेन्दुशुक्लवर्णानां हयानामयुतं ददौ ॥ तुङ्गानां नित्यमत्तानां गजानामधिकं शतात् ॥३४॥ अन्तःपुरचरा नारीर्नृत्तगीतविशारदाः ॥ ददौ चतुःसहस्राणि श्रीनिवासाय विष्णवे ॥३५॥ दत्त्वा चैतानि सर्वाणि तस्थौ देवपुरो विभुः ॥

राजा वियत्का वर-वधूको दहेज देना

तब आकाशराजाने महेन्द्रादि देवताओंके साथ अपनी पुत्री तथा विष्णु भगवान्की प्रीति या प्रसन्नताके

लिये ( दहेज ) नजराना करने वा देनेको तैयार हो, सोनेके कडाहोंमें धानसे निकाले हुए चावलभार, अनेकों मूंगके (भरे) पात्र, सैकड़ा घीके घडे, हजारों दूधके घड़े, अनेको दहीके भाड, दिव्य आम, केला, नारियलके फल, धात्रीफल, भूराफल, राजरम्भाफन, पनस, मातुलुंगफल तथा शक्करसे भरे घड़े, सोना, मणि, मुक्ता, करोड़ों-करोडों रेशमीकी धोती-चादर-वस्त्र, हजारों दास दासियां, करोडों-करोड गौएं, हंस तथा चन्द्रमाके समान सफेद दस हजार घोडे, सैकडों बहुत अधिक ऊंचे-ऊंचे मदमत्त हाथियों तथा नृत्यगीत जाननेवाली स्त्रियोंके चार हजारके समूहको श्रीनिवास विष्णु भगवान्को प्रदान किया । इन सभी चीजोंको देकर राजा भगवान्के सामने खडे हो गये ॥३६॥

अथ श्रीनिवासकृपया वियद्राजस्य भक्तिप्राप्तिरूपवरप्राप्तिः

दृष्ट्वा देवोऽपि तत्सर्वं देवीभ्यां सहितो हरिः ॥३६ ॥ सुप्रीतः
प्राह राजानं श्वशुरं वेङ्कटेश्वरः ॥ वरं वृणीष्व हे राजन् गुरो मत्तो
यदीच्छसि ॥३७॥ इति श्रीशवचः श्रुत्वा वियद्राजोऽवदद्विभुम् ॥
त्वत्सेवैवेह देवैवं भूयादव्यभिचारिणी ॥३८॥ मनस्त्वत्पादकमले
त्वयि भक्तिर्ममास्तु वै ॥३९॥

देवियोंके साथ-साथ सब चीजोंको देखकर भगवान परम प्रसन्न होकर अपने श्वसुर श्रीआकाशराजासे बोले—हे राजन ! हे गुरु ! आप जो कुछ चाहें, वह वर मांग लें । लक्ष्मीपतिकी इन बातोंको सुनकर आकाशराजाने भगवान्से कहा कि आपकी इसी प्रकार धर्मसे सेवा हो और मेरा मन आपके चरणकमलोंमें सर्वदा लगा रहे तथा आपमें हमारी भक्ति होवे ॥३९॥

अथ विवाहार्थमागतानां ब्रह्मादीनां स्वावासगमनम्

श्रीभगवानुवाच —

त्वया यदुक्तं राजेन्द्र सर्वमेतद्भविष्यति ॥ इति दत्त्वा वरं
तस्मै संमान्यैव यथोचितम् ॥ ४० ॥ ब्रह्मेशादिसुरान्सर्वान् सम·
भ्यर्च्य यथोचितम् ॥ स्वलोकगमनायैवमनुमेने मुदा हरिः ॥

ब्रह्मादि बाराती गणोंको विदा करना

भगवान् बोले—हे राजेन्द्र ! जो कुछ तुमने कहा वह सब कुछ होगा । इस प्रकार उनको वरदान देकर उन्हें यथोचित सम्मानित कर तथा ब्रह्मादि सभी देवताओंका यथोचित सम्मान कर भगवान्ने प्रसन्न भावसे उनको स्वर्गादि लोकोंमें जानेकी आज्ञा दी ॥४१॥

गतेषु तेषु सर्वेषु श्रिया भूमिजया युतः ॥४१॥ विहरन्स यथापूर्वं स्वामिपुष्करिणीतटे ॥ आस्ते दिव्यालये देवोऽप्यर्च्यमानो गुहेन वै ॥४२

इति श्रीवराहपुराणे भूगोलोपाख्याने धरणीवराहसम्वादे श्रीवेङ्कटाचलमाहात्म्ये उत्तरार्धे ब्रह्मादिभिः साकं श्रीनिवासस्य वियद्राजपुरगमनकमलालयापरिणयादिवर्णनं नामाष्टमोऽध्यायः ॥ ८ ॥

उन सबोंके चले जानेके बादसे श्रीलक्ष्मीजी तथा भूमिकन्या पद्मावतीजीके साथ स्वामि पुष्करिणीके तटपर विहार करते हुए, श्रीकार्तिकेयजीसे पूजित भगवान् अपने उसी दिव्यालयमें पहलेके समान ही विराजमान हैं ॥४२॥

इति अष्टमोऽध्यायः ॥८॥

## नवमोऽध्यायः ॥९॥

सुत निषाद कथा कही, रङ्ग दास गिरि आय।
प्रभु मण्डप रचना विपिन, प्रभु सेवन हि दुराय ॥१॥
क्रीड़ा किन्नर देखकर, प्रभु कैंकर्य्य भुलाय।
निज स्वरूप पहचान पुनि, होना दुखित लजाय ॥२॥
दान सान्त्वना दोष तजि, ताहि अमल वरदान।
तोण्डमान मृगया गमन, शेषाचल सजि यान ॥३॥
पञ्च वर्ण शुककी कथा, वसु सह नृप पूजार्थ।
गमन पद्म सर शुक कथन, स्तुति सुर श्रीकमलार्थ ॥४॥
स्तुति प्रसन्न आशिर्वचन, विमल दान सर्वान्त।
इस नवमें अध्यायमें, लिखा सूत भगवन्त ॥५॥

अथ वसुनामकनिषादवृत्तान्तः

*धरण्युवाच—*

कलौ युगे भूमिधर केन त्वं द्रक्ष्यसे प्रियः ॥ विमानं केन ते देव कार्यतेऽस्मिन्महीधरे ॥ १ ॥ श्रीनिवासोऽपि केनैव द्रक्ष्यते सुभगाकृतिः ॥ एतद् ब्रूहि मम प्रीत्या श्रोतुं कौतूहलं विभो ॥ २ ॥

वसुनामक निषादवृत्तान्त

धरणीदेवी बोलीं—हे पृथ्वीधर वराह भगवन् ! हे प्रिय !! कलियुगमें कौन आपका दर्शन पायेगा ? इस पर्वतपर आपका विमान कौन बनायेगा, और सुन्दर आकृतिवाले भगवान् श्रीनिवास किससे देखे जायेंगे ? हे विभो ! यह सभी प्रसन्न होकर मुझसे कहिये। मुझे यह सब सुननेकी उत्कट इच्छा है ॥२॥

*श्रीवराह उवाच—*

वक्ष्यामि शृणु हे देवि भविष्यद्वदामि ते ॥ अस्मिन्महीधरे पुण्ये निषादो वसुनामकः ॥ ३॥ श्यामाकवनपालोऽभूद्भक्तिमान्पुरुषोत्तमे ॥ श्यामाकतण्डुलान्पक्त्वा मधुना परिषिच्य च ॥ ४ ॥ निवेद्य देवदेवाय श्रीभूमिसहिताय च ॥

श्रीवराहजी बोले—हे देवि ! जो कुछ भविष्यकी बातें मैं कहता हूं, वह तुम सुनो। इस पुण्यपर्वतपर वसु नामका निषाद श्यामाक वनका संरक्षण करता हुआ भगवान्की भक्ति करता था। वह शामाके चावलोंको पकाकर मधुसे भिंजाकर, श्रीलक्ष्मी तथा भूमि देवियोंके सहित देवादिदेव भगवान्को अर्पण करता था ॥५॥

एवं भक्तिमतस्तस्य भार्या चित्रवती शुभा ॥ ५ ॥ असूत तनयं बाला वीरनामानमुत्तमम् ॥ वसुः पुत्रेण सहितो भार्यया पतिभक्तया ॥६॥ कस्मिंश्चिद्दिवसे पुत्रं श्यामाकं पालयेति च ॥ विसृज्य पत्न्या सहितो मध्वन्वेषणतत्परः ॥ ७ ॥ गतो वनान्तरं शीघ्रं मधुच्छत्रदिदृक्षया ॥

इस प्रकार भक्ति करते समय उसकी सुन्दरी (स्त्री) चित्रवतीने वीर नामक उत्तम पुत्रको प्रसव किया। पुत्र एवं पतिभक्ता स्त्रीको पाकर वसु किसी दिन पुत्रको "श्यामा ( धान )की रक्षा करो" कहकर अपनी पत्नीके साथ मधु खोजनेको उद्यत हो, मधुके छातेको देखनेकी इच्छासे शीघ्र दूसरे जंगलमें चला गया ॥८॥

बालः श्यामाकपक्वानि गृहीत्वाग्नौ निधाय च ॥८॥ पिष्ट्वा निवेदयामास वृक्षमूले श्रियः पतेः ॥ नैवेद्यं भक्षयित्वैव वीरस्त्वास सुखेन वै ॥९॥

वीर बालक पके शामाको लाकर अग्निमें ( सिद्ध कर ) रखकर, पकाकर वृक्षमूलमें श्रीपति भगवान्‌से निवेदन किया और उस नैवेद्यको खाकर सुखसे बैठा ॥९॥

तदन्तरे वसुश्चापि मध्वादाय समागतः ॥ श्यामाकान्भक्षितान्दृष्ट्वा सन्तर्ज्य सुतमात्मनः ॥१०॥ खड्गमादाय तं हन्तुं त्वरया हस्तमुद्दधौ ॥११॥

उसी बीच वसु भी मधु लेकर आया; श्यामा ( धान ) को खाया हुआ देखकर अपने पुत्रको तर्जना ( डरा ) कर खड्ग लाकर शीघ्र उसको मार देनेके लिये हाथ उठाया ॥११॥

अथ सुतहननोद्युक्तं वसुं प्रति भगवदुक्तिः

तद्वृक्षस्थस्तदा विष्णुः खड्गं जग्राह पाणिना ॥ खड्गं गृहीतं केनेति पश्यन्वृक्षं ददर्श सः ॥१२॥ शङ्खचक्रगदापाणिं वृक्षगूढार्धविग्रहम् ॥ मुक्त्वा वसुश्च तं खड्गं प्रणम्योवाच केशवम् ॥१३॥ किमिदं देवदेवेश चेष्टितं क्रियते त्वया ॥१४॥

पुत्रवधोद्यत वसुसे भगवान्‌की उक्ति।

तब उसी वृक्षस्थ विष्णु भगवान्‌ने हाथसे उसके खड्गको पकड़ लिया। किसने खड्ग पकड़ लिया, यह देखते-देखते उसने वृक्षको देखा। बाद शंख-चक्र-गदायुक्त एवं अपने शरीरको वृक्षमें छिपाये हुए भगवान्‌को देखा और उस खड्गको छोड़ भगवान्‌को प्रणाम कर बोला कि हे देव देवेश! आप यह कैसी चेष्टा कर रहे हैं?

श्रीभगवानुवाच—

वसो शृणु वचो मे त्वं पुत्रस्ते भक्तिमान्मयि ॥ त्वत्तोऽपि मे

## अपने पिता द्वारा काटेजाते हुए किरात बालको श्रीनिवासजीका बचाना



श्यामाकान् भक्षितान्दृष्ट्वा संतर्ज्य सुतमात्मनः ।
खड्गमादाय तं हन्तुं त्वरया हस्तमुद्दधौ ।
तद्वृक्षस्थस्तदा विष्णुः खड्गं जग्राह पाणिना ॥ [ पृष्ठ २४४ ]

प्रियतमस्तस्मात्प्रत्यक्षमागतः ॥१५॥ तस्य सर्वत्र तिष्ठामि तव स्वामिसरस्तटे ॥ इति देववचः श्रुत्वा प्रीतिमानभवद्वसुः ॥१६॥

श्रीभगवान्‌जी बोले—हे वसु ! तुम मेरी बातोंको सुनो, तेरा पुत्र मुझमें भक्ति रखता है, वह मुझे तुमसे भी अधिक प्रिय है, इसीलिये मैं प्रत्यक्ष आ गया। उसके लिये मैं सर्वत्र और तेरे लिये तो स्वामिपुष्करिणी तटपर ही रहता हूं। भगवानकी इन बातोंको सुन वसु अत्यन्त प्रसन्न हुआ ॥१६॥

अथ रङ्गदासस्य श्रीनिवाससेवार्थं श्रीशेषाचलागमनम्

एतस्मिन्नेव काले तु पाण्ड्यदेशात्समागतः ॥ बाल्यात्प्रभृति शूद्रोऽपि विष्णुभक्तिसमन्वितः ॥१७॥ नारायणपुरीं प्राप्य श्रीवराहं प्रणम्य च ॥ तत्र श्रुत्वा श्रीनिवासं वेङ्कटाद्रिनिवासिनम् ॥१८॥ स्वयंभूदेवदेवेशसेवितं प्रययौ ततः ॥

भगवत्सेवार्थ रंगदासका शेषाचलपर आना

इसी समय पाण्ड्यदेशसे एक आदमी आया जो शूद्र होनेपर भी बाल्यकालसे ही विष्णुभक्तिसे युक्त था। वह नारायणपुरी पहुंच श्रीवराह भगवान्‌को प्रणाम कर वहीं श्रीवेङ्कटाद्रिनिवासी श्रीनिवास भगवान्‌को ब्रह्मा तथा देवेन्द्रसेवित सुनकर उधरसे चला गया।

सुवर्णमुखरीं प्राप्य स्नात्वा चोत्तीर्य तत्तटे ॥१९॥ कमलाख्ये सरसि च स्नात्वा पुण्यप्रदायिनि ॥ तत्तीरवासिनं देवं कृष्णं रामेण संयुतम् ॥२०॥ नमस्कृत्य ततः प्रायाद्वनं गजघटायुतम् ॥ शनैः सम्प्राप्य शेषाद्रिं निर्झरं सन्ददर्श ह ॥२१॥

सुवर्णमुखरीको पा, उसमें स्नान कर, उसे पार हो, उसके तटपरके कमला नामक पुण्यप्रदायक तालाबमें स्नान कर तथा उसीके तीरपर निवास करनेवाले बलरामके साथ कृष्ण भगवान्‌को प्रणाम कर, फिर हाथीसमूहोंसे युक्त वनमें चला गया एवं धीरे-धीरे शेषाद्रिपर पहुंचकर एक झरना देखा ॥२१॥

तत्समीपं समासाद्य कपिलापूजितं शिवम् ॥ तत्पुरश्चक्रतीर्थं तदगाधं पापनाशनम् ॥ २२ ॥ तत्र स्नात्वा ततोऽगच्छद्वेङ्कटाद्रिं

शनैः शनैः ॥ आराद्धुं गच्छता मार्गे युक्तो वैखानसेन च ॥२३॥
रङ्गदासस्त्वारुरोह बालो द्वादशवार्षिकः ॥ स्वामिपुष्करिणीं प्राप्य
स्नात्वा भक्तिसमन्वितः ॥ २४ ॥ वैखानसेन मुनिना गोपीनाथेन
पूजितम् ॥ वनमध्ये तरोर्मूले स्वामिपुष्करिणीतटे ॥२५॥ तिष्ठन्तं
पुण्डरीकाक्षं श्रीभूमिसहितं हरिम् ॥ आकाशस्थं सन्ददर्श पीत-
नीलाकृतिं शुभम् ॥ २६ ॥ पार्श्वस्थशङ्खचक्राभ्यां गदासिभ्यां
निषेवितम् ॥ पक्षौ विस्तीर्य चाकाशे देवमूर्ध्नि वितानवत् ॥२७॥
स्थितं च गरुडेशानं पश्चाच्छार्ङ्गं शरं तथा ॥ २८ ॥

उसके निकट श्रीकपिलजीसे पूजित शिवजीके पास पहुंचकर, उसके आगे अगाध तथा पापोंको नाश करनेवाले जो चक्रतीर्थ हैं, उनमें स्नान कर पीछे धीरे-धीरे श्रीवेङ्कटाद्रिपर चला गया और रास्तेमें उनकी पूजा करनेके लिये जाता हुआ वैखानसोंसे युक्त होकर बारह वर्षका बालक वह रंगदास उसपर चढ़ गया, फिर स्वामिपुष्करिणीको पाकर उसमें भक्तिके साथ स्नान कर, वैखानसमुनि गोपीनाथसे पूजित, वनके बीच वृक्षके तले, स्वामिपुष्करिणीके तीरपर श्री तथा भूमिदेवी सहित पुण्डरीकाक्ष, पीले, नीले, सुन्दर आकृतिवाले, आकाशस्थ तथा दोनों बगलोंमें स्थित शंख, चक्र, गदा तथा तलवारोंसे सेवित भगवान् हरि एवं आकाशमें भगवान्‌के माथेके ऊपर दोनों पंखोंको वितान ( तम्बू ) के समान फैलाकर ठहरे गरुड़जी, पीछेमें शार्ङ्ग धन्वा, तथा बाणको देखा ॥२८॥

### अथ श्रीनिवासार्थं रङ्गदासकृतदिव्योद्यानमण्डपनिर्माणादि

एवं दृष्ट्वा श्रीनिवासं विस्मितो रङ्गदासकः ॥ अस्य देवस्य
चारामं करिष्यामीत्यचिन्तयत् ॥२९॥ निश्चित्य मनसा सर्वं तरु-
मूलेऽवसत्सुधीः ॥ कृत्वा वैखानसाद्विष्णोर्नैवेद्यं च दिने दिने ॥३०॥
शनैश्छित्त्वा वनं घोरं वृक्षांश्चिच्छेद पार्श्वगान् ॥ आस्थानचिञ्चां
देवस्य रमायाश्चम्पकं तरुम् ॥३१॥ देवाज्ञतो वर्जयित्वा तावुभौ
देवसेवितौ ॥

### भगवान्‌के लिये रङ्गदासका दिव्य बगीचे इत्यादि बनवाना

श्रीनिवास भगवान्‌को इस प्रकार देखकर श्रीरंगदासने आश्चर्यित होकर "इन भगवान्‌का बगीचा मैं

बनाऊंगा" ऐसा विचार किया। मनमें इस निश्चय कर उस सुन्दर बुद्धिवालेने उसी वृक्षके तले वास किया। विष्णुभगवान्‌के लिये प्रतिदिन वैखानस द्वारा नैवेद्य करके उस घोर जङ्गलको काटकर बगलके बड़े २ गाछोंको, देवरोचित भगवान्‌के स्थानमें उत्पन्न हुई ईमली तथा श्रीलक्ष्मीजीके चम्पावृक्षको भगवद्दयासे छोड़कर, काट डाला ॥३२॥

देवस्य परितो भूमौ शिलाकुड्यं तदाऽकरोत् ॥३२॥ तत्कुड्यस्यै-
व परितः पुष्परामांश्चकार ह ॥ मल्लिकाकरवीराब्जकुन्दमन्दार-
मालतीः ॥३३॥ तुलसीचम्पकानां तु वनान्येवं चकार ह ॥ खनि-
त्वा तत्र कूपं तु वर्धयंस्तज्जलैर्वनम् ॥३४॥ आरामपुष्पाण्यादाय
स्वयं दामान्यथाकरोत् ॥ विचित्राणि तदा बद्ध्वा पूजकस्य करे
ददौ ॥३५॥

भगवन् स्थानके चारों ओरकी भूमिमें पत्थरकी दीवार बना दी और उस दीवारके चतुर्दिक फूलोंका बगीचा बनवाया। मल्लिका, करवीर, कमल, कुन्द, मन्दार, मालती, तुलसी तथा चम्पाका वन लगा दिया। वहींपर कुआं खोदकर उसके जलसे सबको सींचकर बढ़ाने लगा। बगीचेके फूलोंको लाकर उनकी माला स्वयं बनाता था। विचित्र तरहसे गूंथकर पुजारियोंके हाथोंमें दे देता था ॥३५॥

आदाय पूजकस्तानि स्कन्धे मूर्ध्नि बबन्ध च ॥ श्रीनिवासस्य
देवस्य श्रीभूमिसहितस्य च ॥३६॥ एवं देवस्य कैङ्कर्यं कुर्वं-
स्तस्थावुदारधीः ॥ तस्यैवं वर्तमानस्य समास्त्वासन्ततेर्गताः ॥३७॥

उससे लेकर पुजारी श्रीभूमि सहित श्रीनिवास भगवान्‌के कन्धे तथा मस्तकपर बांधते थे। इसी तरह भगवानका कैंकर्य (सेवा) करते-करते वह महा उदारचेता रहने लगा ॥३७॥

अथ रङ्गदासस्य गन्धर्वक्रीडादर्शनेन भगवत्कैङ्कर्यविस्मृतिः

कुर्वाणे पुष्पापचयं रंगदासे महात्मनि ॥३८॥ आरामे सरसि स्नातुं
गन्धर्वः कश्चिदाययौ ॥ गन्धर्वराजः कन्याभिस्तरुणीभिः समन्वि-
तः ॥३९॥ जलक्रीडां करोति स्म दिवि स्थाप्य विमानकम् ॥ सुरूपाभि
श्च सहितं क्रीडन्तं कमलाकरे ॥ ४०॥ पश्यन् श्रीरङ्गदासोऽयं व्य-

स्मरन्माल्यसञ्चयम् ॥ जितेन्द्रियोऽपि तत्क्रीडां पश्यन् रेतः ससर्ज ह ॥ ४१ ॥

## गन्धर्वक्रीड़ा देखकर रङ्गदासको भगवत् सेवाका विस्मरण होना

उसके इस प्रकार रहते ७० वर्ष बीत गये। महात्मा रंगदासके फूल चुनते समय उसी बगीचेके तालाबमें कोई गन्धर्व स्नान करने आया। गन्धर्वराज युवती कन्याओंसे युक्त होकर, आकाशहीमें विमानको ठहराकर जलक्रीड़ा करने लगे। उन सुन्दरी स्त्रियोंके साथ कमलसे परिपूर्ण तालावमें उनको क्रीड़ा करते देखकर श्रीरंगदास माला गूंथना भूल गये। जितेन्द्रिय होनेपर भी उन्होंने उस क्रीड़ाको देखते ही वीर्य्यको छोड़ा ॥४१॥

पश्यतस्तस्य सरसः समुत्तीर्य मनोहरः ॥ दिव्यवस्त्राणि चाच्छाद्य कान्ताभिः सह सस्मितम् ॥४२॥ अधिरुह्य विमानं तु ययौ स धनदालयम् ॥

उनके देखते-ही-देखते उस मनोहर तालाबसे निकलकर, दिव्य वस्त्रोंको पहन, स्त्रियोंके साथ हंसते-हंसते, अपने विमानपर चढ़कर वह गन्धर्व कुबेरके घर चला गया ॥४३॥

गते गन्धर्वराजे तु रङ्गदासो विमोहितः ॥४३॥ त्यक्त्वा च तानि माल्यानि स्नात्वा सरसि लज्जितः ॥ पुनराहृत्य पुष्पाणि शनैर्देवालयं ययौ ॥४४॥

गन्धर्वराजके चले जानेपर रंगदास मोहित हो गये और उन मालाओंको छोड़, स्नान कर, पुनः फूलोंको लाकर, लज्जित होकर धीरे-धीरे देवालयमें पहुंचे ॥४४॥

वैखानसस्तु तं दृष्ट्वा पूजाकालमतीत्य च ॥ आगतं किमिति प्राह सखेऽतिक्रम्य चागतः ॥४५॥ न बद्धा मालिकाश्चापि त्वयाऽऽरामे च किं कृतम् ॥४६॥

पूजाकाल बिताकर आया हुआ उसे देखकर वैखानसोंने कहा—हे सखे! यह क्या? समय बिताकर क्यों आये? माला भी गूंथा नहीं गया। बगीचेमें तुमने क्या किया? ॥४५॥

*श्रीवराह उवाच—*

**इत्थं पृष्टो रङ्गदासो नावदल्लज्जया ततः ॥ लज्जितं रङ्गदासं तं प्रोवाच मधुसूदनः ॥ ४७ ॥**

*श्रीवराहजी बोले —ऐसा पूछे जानेपर लज्जासे रंगदासने कुछ भी नहीं कहा। तब उस लज्जित रंगदाससे मधुसूदन बोले ॥४७॥*

अथ स्वरूपानुमन्धानेन लज्जितं रङ्गदासं प्रति श्रीनिवासवचनम्

*श्रीभगवानुवाच—*

**लज्जया किं रङ्गदास मया त्वं मोहितो ह्यसि ॥ न तावज्जितकामस्त्वं धीरो भव महामते ॥४७। गन्धर्वराजवद्राजा भविताऽसि महीतले ॥ तत्र भुक्त्वा महाभोगान्भक्तिमान्मयि सर्वदा ॥४९॥ प्राकारं च विमानं च कारयिष्यसि मे तदा ॥ तत्र मुक्तिं प्रदास्यामि प्रीत्या परमया युतः ॥५० ॥ अत्रैव कुरु सेवां त्वमाशरीरविमोक्षणात् ॥ मद्भक्तानां सकामानामेवं मुक्तिर्भविष्यति ॥५१॥ इत्युक्त्वा भगवान् विष्णुः पुनर्नोवाच किञ्चन ॥ श्रुत्वा तद्रङ्गदासोऽपि चकारारामसुत्तम् ॥५२॥**

श्रीभगवानजी बोले—हे रंगदास ! अब लज्जा मत करो। मुझसे ही तुम मोहित किये गये हो। हे महामते ! तुमने कामको नहीं जीता है। पृथ्वीतलपर गन्धर्वराजके समान तुम भी राजा होओगे। वहाँ मेरी भक्ति करते हुए महान् भोगोंको भोगकर मेरा आकार तथा विमान बनाओगे और वहीं मैं परम प्रसन्न होकर तुमको मुक्ति प्रदान करूंगा। तुम मरणपर्यन्त यहीं मेरी सेवा करो। मेरे सकाम भक्तोंको इसी प्रकार मुक्ति होती है। यह कहकर विष्णु भगवान् फिर और कुछ भी नहीं बोले ॥५२॥

अथ तोण्डमान्नामकनृपवृत्तान्तः

**साग्रं शताब्दं सेवित्वा गतः स्वर्गममन्दधीः ॥ जातः सोमकुले तुङ्गे तोण्डमानिति विश्रुतः ॥५३॥ सुवीरतनयो वीरो नन्दिनीगर्भसम्भवः ॥ स पञ्चवर्षादुद्भूतविष्णुभक्तिः स्वयं सुधीः ॥ साशी-**

ल्यशौर्यवीर्यादिगुणानामाकरो महान् ॥५४॥ पाण्ड्यस्य तनयां पद्मामुपयेमे मनोहराम् ॥ ततो राजा शतं कन्या नानादेश्याः स्वयम्वराः ॥५५॥ रेमे देवेन्द्रवद्भूमौ नारायणपुरे वसन् ॥

### तोण्डमान राजाकी कथा

उसे सुनकर रंगदासने भी बगीचेको उत्तम बना दिया। सवा सौ वर्ष सेवन कर तीव्र बुद्धिवाला रंगदास स्वर्ग चला गया। फिर उच्च शोमवंशमें उत्पन्न हो तोण्डमान नामसे प्रसिद्ध हुआ। सुवीर राजाकी नन्दिनी स्त्रीके गर्भसे उत्पन्न वह विचारवान स्वयं पांच वर्षसे ही विष्णुभक्त हो गया। सुशीलता, शूरता, वीरता आदि गुणोंका भारी खजाना उस राजाने पाण्डव राजाको मनोहर कन्या कमला देवीके साथ विवाह किया। पीछे वह राजा नाना देशोंसे सैकड़ों स्वयंवरा कन्याओंको लाकर नारायणपुरमें रहते हुए, इन्द्रके समान रमण करने लगा ॥५६॥

### अथ तोण्डमान्नृपस्य मृगयार्थं श्रीशेषाचलगमनम्

अनुज्ञां प्राप्य पितृतः पुत्रः पञ्चास्यविक्रमः ॥५६॥ उद्दिश्य मृगयां वीरो वेङ्कटाद्रेः समीपतः ॥५७॥ पादचारेण विचरन्परिवारैः समन्वितः ॥ मदधारां विमुञ्चन्तं ददर्श गजयूथपम् ॥५८॥

सिंहके समान पराक्रमवाले उस वीर पुत्र तोण्डमानने पितासे अनुमति लेकर श्रीवेङ्कटाद्रिके समीप ही शिकारके उद्देश्यसे परिवारोंसे समन्वित होकर पैदल जाते जाते मदकी धार बहाते हुए हाथियोंके झुण्डके नायक हाथीको देखा ॥५८॥

तं दृष्ट्वा विस्मितो भूत्वा ग्रहीतुं तमनुद्रुद्रुतः ॥ सुवर्णमुखरीं तीर्त्वा ब्रह्मर्षिं शुकमुत्तमम् ॥५९॥ नमस्कृत्याभ्यनुज्ञातस्ततोऽगच्छद्वनाद्वनम् ॥ ददर्श रेणुकां देवीं वल्मीकाकारसंस्थिताम् ॥६०॥ इष्टदामिष्टभक्तानां दिव्यारामनिवासिनीम् ॥ परिवारैः सदोपेतां पूजितां त्रिदशैरपि ॥६१॥ तोण्डमानपि तां नत्वा ततः पश्चान्मुखो ययौ ॥६२॥

उसको देखकर आश्चर्यान्वित होकर उसको पकड़नेके लिये पीछे-पीछे दौड़ते हुए सुवर्णमुखरीको पार कर, ब्रह्मर्षि परमोत्तम श्री शुकऋषिको नमस्कार कर तथा आज्ञा पाकर, तदनन्तर एक वनसे दूसरे वनको गया,

और वहां वल्मीकाकारमें बैठी हुई, उस दिव्य बगीचेमें निवास करनेवाली, भक्तोंको इष्ट फल देनेवाली, सदा परिवारोंसे घिरी तथा देवताओंसे भी पूजिता भगवती रेणुकादेवीको देखा तथा उनको नमस्कार करके पश्चिम मुख लौट गया ॥६२॥

अथ श्रीनिवाससमीपस्थपञ्चवर्णशुकवृत्तान्तः

पञ्चवर्णं शुकं दृष्ट्वा तं जिघृक्षुरनुद्रुतः ॥ स वदञ्छ्रीनिवासेति गिरिं शीघ्रतरं ययौ ॥६३॥ अनुद्रवन्स राजापि गिरिराजं समारुहत् ॥ दरीश्च विविधाः पश्यञ्छिखराणि समन्ततः ॥६४॥ शुकमन्वेषमाणोऽसौ श्यामाकवनमेयिवान् ॥

श्रीनिवासके निकटस्थ पञ्चवर्ण शुक था

वहां वह पंचरंगे सुग्गेको देखकर उसको पकड़नेकी इच्छासे पीछे-पीछे दौड़ा । वह ( सुग्गा ) 'श्रीनिवास-श्रीनिवास' बोलता-बोलता शीघ्र पर्वतपर चला गया । यह राजा भी पीछे-पीछे दौड़ता हुआ उसी पर्वतराजपर चढ़ गया । चतुर्दिक विविध गुफाओं, शिखरोंको देखता-देखता तथा सुग्गेको खोजता हुआ वह राजा शामाके वनमें आया ॥६५॥

तमदृष्ट्वा शुकवरं वनपालं ददर्श ह ॥६५॥ तं तु राजानमायान्तं प्रत्युद्गच्छन्स सत्वरः ॥ प्रणम्य विनयोपेतः कृताञ्जलिपुटः स्थितः ॥६६॥ तोण्डमानपि सम्पूज्य तं पप्रच्छ वनेचरम् ॥ पञ्चवर्णः शुकः कश्चिद् दृष्टश्चात्रागतस्त्वया ॥६७॥ श्रीनिवासेति च वदन् क गतोऽसौ वनेचर ॥६८॥

उस शुकश्रेष्ठको न देखकर वनके रक्षकको देखा । उसने भी राजाको आते देख मन्द लौटके विनययुक्त प्रणाम कर हाथ जोड़ खड़ा हो गया । राजा तोण्डमानने भी उस वनेचरका अभिनन्दन कर उससे पूछा कि कोई पंचरंग सुग्गा यहां आता हुआ तुमने देखा है ? हे वनेचर ! 'श्रीनिवास-श्रीनिवास' बोलते-बोलते वह किधर चला गया ॥६८॥

वनचर उवाच—

स पञ्चवर्णो राजेन्द्र श्रीनिवासप्रियः सदा ॥ पार्श्ववर्ती सदा तस्य श्रीभूमिभ्यां विवर्धितः ॥६९॥ स्वामिपुष्करिणीतीरे सदास्ते

देवसन्निधौ ॥ ग्रहीतुं स शुकः श्रीमान्न तु केनापि शक्यते ।७०॥ विहृत्य स्वेच्छया नित्यमस्मिन्गिरिवरे शुभे ॥ दिनान्ते देवमासाद्य तत्समीपे वसत्ययम् ॥७१॥ तमेवमाराधयितुं गमिष्यामि नृपात्मज ॥ विश्रम्यतां वृक्षमूले यावदागमनं मम ॥७२॥ पुत्रेणानेन सहितो विहर त्वं यथासुखम् ॥७३॥

उस वनेचरने कहा—हे राजेन्द्र ! श्रीनिवास भगवान्का परम प्रिय यह पंचवर्ण सुग्गा उनके पास रहनेवाली श्री तथा भूमिदेवियोंसे सदा पालित होकर सर्वदा स्वामिपुष्करिणीके तीरपर भगवान्के निकट रहता है । हे श्रीमान् ! उस सुग्गेको कोई भी नहीं पकड़ सकता है । सारे दिन यह इसी सुन्दर गिरिवरपर स्वेच्छासे विहार करता हुआ सन्ध्या समय भगवान्के निकट जाकर उनके पासहीमें रहता है । हे नृपात्मज ! मैं उन्हीं ( श्रीनिवास-भगवान् ) की पूजा करने जाता हूं । आप मेरे आ जानेतक इसी वृक्षतले विश्राम करें और मेरे इस पुत्रके साथ यथासुख विहार करें ॥७३॥

राजोवाच—

त्वया सहागमिष्यामि द्रष्टुं देवं जनार्दनम् ॥ त्वं मे दर्शय देवेशं वेङ्कटाद्रिनिवासिनम् ॥७४॥ तस्य राज्ञो वचः श्रुत्वा श्यामाकं मधुमिश्रितम् ॥ चूतपत्रपुटे क्षिप्त्वा राज्ञा सह ययौ हरिम् ॥७५॥

राजा बोले—श्रीभगवान् जनार्दनदेवको देखनेके लिये मैं भी तुम्हारे साथ ही जाऊंगा, तुम श्रीवेङ्कटनिवासी भगवान्को दिखला देना । उस राजाके वचनको सुनकर साँमाके चावलको मधुमें लपेट (मिलाकर) आमके पत्तेपर रखकर राजाके साथ भगवान्के पास गया ॥७५॥

अथ ताण्डमान्नृपस्य निषादेन सह श्रीनिवाससेवार्थं गमनम्

गत्वा सुदूरमध्वानं पश्यन्तौ तौ शिलातलम् ॥ मुहूर्तादेव संप्राप्तौ स्वामिपुष्करिणीं शुभाम् ॥ ७६ ॥ स्नात्वा तत्र विधानेन राज्ञा सह निषादपः ॥ दर्शयामास देवेशं राज्ञस्तस्य महात्मनः ॥ ७७ ॥

राजाका निषादके साथ भगवत्सेवार्थ जाना

वे दोनों शिलातल देखते-देखते बहुत दूर रास्ता जाकर क्षणभरमें सुन्दर स्वामिपुष्करिणीपर पहुंच

गये, वहाँ राजाके साथ-साथ निषादराजने विधिपूर्वक स्नान कर उस महात्मा राजाको भगवान्के दर्शन कराये ॥७७॥

स्वामिपुष्करिणीतीरे स्थितं श्रीवृक्षमूलके ॥ अतसीपुष्पसङ्काशमम्बुजायतलोचनम् ॥ ७८ ॥ चतुर्भुजमुदाराङ्गमीषत्स्मितमुखाम्बुजम् ॥ दिव्यपीताम्बरधरं किरीटकटकोज्ज्वलम् ॥७९॥ पार्श्वस्थाभ्यां सुरूपाभ्यां श्रीभूमिभ्यां समन्वितम् ॥ परितः शङ्खचक्रासिगदाशार्ङ्गपुसेवितम् ॥८०॥ अन्यैर्दिव्यायुधैश्चापि दिव्यमाल्यैर्निषेवितम् ॥ स्कन्देनाराध्यमानं तं त्रिसन्ध्यं पुरुषोत्तमम् ॥८१॥ वल्मीकगूढपादाब्जमाजानुपुरुषोत्तमम् ॥ ततो दृष्ट्वा मुदा देवं प्रणेमतुरुभौ तदा ॥८२॥

उस स्वामिपुष्करिणीके तीरपर बेलके वृक्षके नीचे स्थित, अलसीके फूलके समान, कमलदलके समान बड़ी-बड़ी आंखवाले, चार भुजायुक्त, उदार शरीरवाले, मन्द-मन्द हंसते हुए मुखकमलवाले, दिव्य पीताम्बरधारी, किरीट तथा कटकसे प्रकाशित, पार्श्वस्थ श्री तथा भूमि देवी जैसी सुन्दर देवियोंसे समन्वित, चतुर्दिक शंख चक्र, गदा, खड्ग, धनुषादिसे सेवित, अन्यान्य दिव्य आयुधों, हथियारों एवं दिव्य मालाओंसे सुशोभित, स्वामिकार्तिकेयजीसे त्रिसन्ध्य ( तीनों समय ) पूजित, वल्मीकमें छिपे, चरणकमलयुक्त तथा आजानुबाहु, पुरुषोत्तम श्रीनिवास भगवान्को देखकर प्रसन्नतासे उन दोनोंने उनको प्रणाम किया ॥८२॥

राजा तु प्राञ्जलिर्भूत्वा विस्मयोत्फुल्ललोचनः ॥ आनन्दलहरीं प्राप्य न प्राज्ञायत किञ्चन ॥ ८३ ॥

आश्चर्यपूर्ण नेत्रोंके साथ, राजा आनन्दलहरीका अनुभव करते हुए किंकर्तव्यविमूढ़ हो तथा हाथ जोड़कर चुपचाप अज्ञ ऐसा खड़े रहे।

निषादोऽपि निवेद्यैव श्यामाकं मधुमिश्रितम् ॥ राज्ञे तदर्धं दत्त्वैव शिष्टार्धं भुक्तवान्स्वयम् ॥८४। पीत्वा पुष्करिणीतोयं तेन राज्ञा समन्वितः ॥ स पुनः श्यामाकवने पुण्यां पर्णकुटीं ययौ ॥८५॥ उषित्वा चैकरात्रं तु प्रातरुत्थाय भूमिपः ॥ स्वसैन्येन समायुक्तो निवृत्तः स्वपुरं ययौ ॥

निषादने भी मधु मिले हुए शामाके चावलका नैवेद्य चढ़ाकर, उसका आधा राजाको दे बाकी आधा अपने खा लिया। पुनः स्वामिपुष्करिणीका जल पीकर राजाके साथ अपनी पुण्य पर्णकुटीमें चला गया। एक रात सोकर प्रातःकाल उठ, अपनी सेनासे युक्त होकर राजा लौटकर अपने नगरको चला गया ॥८६॥

अथ तोण्डमान्नृपं प्रति रेणुकोक्तिः

पुनर्देवीवनं गत्वा हयादवततार ह ॥ चैत्रशुद्धनवम्यां तु पूजयामास रेणुकाम् ॥८७॥ हविष्यं परमान्नं च सोपस्करमनेकशः ॥ पशूपहारसहितं धूपदीपसमन्वितम् ॥८८॥ सुराघटीशतं दत्त्वा जातीकेसरवासितम् ॥ एवं सम्पूजिता देवी प्रीता राज्ञे वरं ददौ ॥८९॥

तोण्डमान राजासे रेणुकाकी उक्ति

पुनः देवीवनमें जाकर घोड़ेसे उतरा और चैत्र शुक्ल नवमीको रेणुका भगवतीकी पूजा की। खीर, परमान्न अनेकों प्रकारकी सामग्रियां, पशुओंके उपहार धूप तथा दीपके साथ-साथ जातीफूल एवं केसरसे सुवासित सौ घड़े सुरा ( मद्य ) द्वारा इस प्रकारसे पूजित हो देवीरेणुकाने प्रसन्न होकर राजाको वर दिया ॥८९॥

आविष्टः पुरुषः कश्चिदवदन्नृपसत्तमम् ॥ शृणु राजन्भविष्यं ते राज्यं नियतकण्टकम् ॥ ९० ॥ राजंस्तवैव नाम्नाऽत्र राजधानी भविष्यति ॥ मत्समीपे महाराज चिरं राज्यं करिष्यसि ॥९१॥ देवदेवप्रसादश्च भविष्यति तवानघ ॥ इति दत्त्वा वरं तस्मा आविष्टः प्रकृतिं ययौ ॥९२ ॥

कोई पुरुष आविष्ट होकर उस राजश्रेष्ठ राजासे बोला—हे राजन् ! सुनो, तुम्हारा राज्य भविष्यमें अकंटक रहेगा। हे राजन्! तुम्हारे ही नामसे यह राजधानी होगी। हे महाराज ! तुम मेरे निकट ही चिरकालतक राज्य करोगे। हे निष्पाप ! तुमपर देवादिदेव भगवान्की कृपा भी होगी। इस प्रकार उसको वरदान देकर वह आविष्ट पुरुष पुनः चैतन्य हो गया ॥९२॥

शुकवर्णितपद्मसरोवरमाहात्म्यम्

ततो लब्धवरो राजा ययौ शुकमुनिं पुनः ॥ ९३ ॥ अभिवाद्य

मुनिं तेन पूजितो मुदितोऽभवत् ॥ माहात्म्यं सरसो ब्रूहि कमलाख्यस्य मे मुने ॥ ९४ ॥

ऐसा वर पाकर राजा पुनः शुकमुनिके पास गये । मुनिजी उनसे पूजित होकर जब प्रसन्न हुए तब उन्होंने पूछा—हे मुनिजी ! कमला नामक सरोवरका माहात्म्य मुझसे कहिये ॥९४॥

*श्रीशुक उवाच—*

पुरा दुर्वाससः शापादवतीर्णा सुरालयात् ॥ पद्मा पद्माक्षदयिता विष्णुना सहिता नृप ॥ ९५ ॥ सरः काञ्चनपद्माढ्यमिदं प्राप्य महेश्वरी ॥ तपश्चकार वर्षाणां दिव्यानामयुतं रमा ॥९६॥

श्री शुकमुनि बोले—प्राचीन कालमें दुर्वासा ऋषिके शापसे सुरलोकके अपने दिव्यधामसे उतरकर विष्णुभगवान्‌के साथ कमलाक्ष भगवान्‌की पत्नी श्रीरमादेवीने उस सुवर्णकमलपूर्ण तालावपर पहुंचकर दश सहस्र दिव्य वर्षोंतक तपस्या की ॥९६॥

ततो देवा विचिन्वन्तः श्रियं विष्णुसमन्विताम् ॥ पुरन्दरेण संयुक्ता राजन्नस्मिन्सरोवरे ॥९७॥ स्थितां सुवर्णकमले पुण्डरीकाक्षसंयुताम् ॥ दृष्ट्वा प्रीतिसमायुक्ताः प्रणम्यांबुजधारिणीम् ॥९८॥ कृताञ्जलिपुटाः सेन्द्रास्तुष्टुवुर्लोकमातरम् ॥९९॥

हे राजन् ! पीछे देवतागण इन्द्रके साथ, विष्णु भगवानसहित श्रीलक्ष्मीजीको खोजते-खोजते इसी तालावमें स्वर्णकमलपर कमलाक्ष भगवान्‌के साथ बैठी देखकर प्रसन्न हुए तथा उस कमलधारिणीको प्रणाम कर इन्द्रादि सब देवताओंने अञ्जलिबद्ध हो लोकमाताकी स्तुति की ॥९९॥

अथ देवादिकृतश्रीलक्ष्मीस्तुतिः

*देवा ऊचुः—*

नमः श्रियै लोकधात्र्यै ब्रह्ममात्रे नमो नमः ॥ नमस्ते पद्मनेत्रायै पद्ममुख्यै नमो नमः ॥९९॥ प्रसन्नमुखपद्मायै पद्मकान्त्यै नमो नमः ॥ नमो बिल्ववनस्थायै विष्णुपत्न्यै नमो नमः ॥१००॥ विचित्रक्षौमधारिण्यै पृथुश्रोण्यै नमो नमः ॥ पक्वबिल्वफलापीन-

तुङ्गस्तन्यै नमो नमः ॥१०१॥ सुरक्तपद्मपत्राभकरपादतले शुभे ॥
सुरत्नाङ्गदकेयूरकाञ्चीनूपुरशोभिते ॥ यक्षकर्दमसंलिप्तसर्वाङ्गे
कटकोज्वज्ले ॥१०२॥ माङ्गल्याभरणैश्चित्रैर्मुक्ताहारैर्विभूषिते ॥
ताटङ्कैरवतंसैश्च शोभमानमुखाम्बुजे ॥१०३॥ पद्महस्ते नमस्तुभ्यं
प्रसीद हरिवल्लभे ॥ ऋग्यजुःसामरूपायै विद्यायै ते नमो
नमः ॥१०४॥ प्रसीदास्मान्कृपादृष्टिपातैरालोकयाब्धिजे ॥ ये दृ-
ष्टास्ते त्वया ब्रह्मरुद्रेन्द्रत्वं समाप्नुयुः ॥१०५॥

देवादिकृत लक्ष्मीस्तुति

देवतागण बोले—श्रीलक्ष्मीजीको नस्कार है। लोकोंकी धात्री तथा ब्रह्माजीकी माताको नमस्कार है। कमललोचना, कमलमुखी, प्रसन्नकमलवदना तथा कमलशोभासम्पन्न देवीको नमस्कार है। बेलके वनमें निवास करनेवाली, विष्णुभगवान्‌की पत्नीको नमस्कार है। विचित्रवस्त्रधारिणी, स्थूलनितम्बवाली देवीको नमस्कार है। पके बेल फलके समान बड़े-बड़े तथा ऊँचे स्तनवालीको प्रणाम है। हे सुरक्त कमलपुष्पदलके समान लाल-लाल हाथ तथा पैरोंके तलुवेवाली, हे सुरत्नजटित वलय, केयूर, करधनी, नूपुर आदिसे सुशोभित, सुगन्धित चन्दनसे लिप्त अङ्गवाली, हे कंकणसे चमकनेवाली, हे मांगल्य आभरणोंसे युक्त, मुक्ताहारसे विभूषिते, हे टीका, कर्णफूल आदि भूषणोंसे शोभित मुखकमलवाली, कमलधारिणी ! तुम्हें नमस्कार है। हे भगवान्‌की वल्लभे ! आप प्रसन्न होवें। हे ऋग्यजुःसामरूपवाली तथा विद्यास्वरूपे ! आपको नमस्कार है। हे समुद्रकन्ये ! हम सबोंपर प्रसन्न हों तथा कृपादृष्टिसे हमलोगोंको देखें। आपसे जो देखे गये उन्होंने ब्रह्मत्व, शिवत्व एवं इन्द्रत्वको प्राप्त किया ॥१०५॥

*श्रीशुक उवाच—*

इति स्तुता तदा देवैर्विष्णुवक्षःस्थलालया ॥ विष्णुना सह
संदृश्या रमा प्रीताऽवदत्सुरान् ॥१०६॥

श्रीशुकजी बोले—इस प्रकार स्तुति करनेपर विष्णु भगवान्‌के हृदयमें वास करनेवाली रमादेवी विष्णुके साथ प्रत्यक्ष एवं प्रसन्न होकर देवताओंसे बोलीं ॥१०६॥

अथ इन्द्रादीन् प्रति स्तुतिप्रसन्नलक्ष्मीवचनम्

*श्रीरुवाच—*

सुरारीन्सहसा हत्वा स्वपदानि गमिष्यथ ॥ ये स्थानहीनाः

स्वस्थानाद्भ्रंशिता ये नरा भुवि ॥ १०७ ॥ ते मामनेन स्तोत्रेण स्तुत्वा स्थानमवाप्नुयुः ॥ अखण्डैर्बिल्वपत्रैर्मामर्चयन्ति नरा भुवि॥ १०८ ॥ स्तोत्रेणानेन ये देवा नरा युष्मत्कृतेन वै ॥ धर्मार्थकाममोक्षाणामाकरास्ते भवन्ति वै ॥ १०९ ॥ इदं पद्मसरो देवा ये केचन नरा भुवि ॥ प्राप्य स्नानं करिष्यन्ति मां स्तुत्वा विष्णुवल्लभाम् ॥११० ॥ तेऽपि श्रियं दीर्घमायुर्विद्यां पुत्रान्सुवर्चसः ॥ लब्ध्वा भोगाञ्श्च भुक्त्वाऽन्ते नरा मोक्षमवाप्नुयुः ॥ १११ ॥ इति दत्त्वा वरं देवी देवेन सह विष्णुना ॥ आरुह्य गरुडेशानं वैकुण्ठस्थानमाययौ ॥११२॥

इति श्रीवराहपुराणे भूगोलोपाख्याने धरणीवराहसम्वादे श्रीवेङ्कटाचलमाहात्म्ये उत्तरार्धे वसुनामकनिषादवृत्तान्तपद्मसरोमाहात्म्यादिवर्णनं नाम नवमोऽध्यायः ॥ ९ ॥

### इनकी स्तुतिसे प्रसन्न लक्ष्मीजीका वचन

लक्ष्मीजी बोलीं—देवताओंके शत्रुओंको सहसा मारकर आपलोग अपने-अपने स्थान या लोकोंमें जायं और जो मनुष्य संसारमें स्थानहीन अथवा स्थानभ्रष्ट हो गये हैं, वे मेरे इसी स्तोत्रसे स्तुति कर उस-उस स्थानको प्राप्त करेंगे। पृथ्वीपर जो मनुष्य अखण्ड बिल्वपत्रसे मेरी पूजा करते हैं, तथा जो कोई देवता या मनुष्य आपलोगोंके किये हुए इस स्तोत्रसे पूजा करते हैं, वे धर्म, अर्थ, काम एवं मोक्ष सभीकी खान अवश्य होते हैं। हे देवतागण ! इस पद्मसरमें जो कोई मनुष्य आकर मुझ विष्णुवल्लभाकी स्तुति कर स्नान करेगा, वह भी धन, दीर्घायु तथा विद्यासे युक्त तेजस्वी पुत्रोंको पा, अनेक भोगोंको भोगकर अन्तमें मोक्षको प्राप्त करेगा। श्रीविष्णु भगवान्‌के साथ-साथ श्रीलक्ष्मीदेवी इस वरदानको दे, गरुड़पर सवार हो वैकुण्ठमें आ गयीं ॥११२॥

इति नवमोऽध्यायः ॥९॥

## दशमोऽध्यायः ॥१०॥



राज-लाभ नृप तोण्डको, वल्मिकस्थ सुवराह ।
वसुका प्रभु-दर्शन कथन, प्रभु आज्ञा नरनाह ॥१॥

वसु वच अरु निज स्वप्नमें, दर्शन चिल गिरि राह।
तोण्डमान नृप गिरि गमन, अभिसिच क्षीरबहार ॥२॥
परकोठी निरमान नृप, वीरद्विज आख्यान।
महिमा अस्थि तड़ागका, द्विज रमणी जी दान ॥३॥
भक्ती भीम कुम्हारकी, प्रभु करुणा नृपमुक्ति।
वेङ्कटेश माहात्म्यका, पठन श्रवण फल उक्ति ॥४॥

## अथ तोण्डमान्नृपस्य स्वपितुः सकाशाद्राज्यप्राप्तिः

श्रीशुक उवाच—

इदं पद्मसरो नाम सर्वपापप्रणाशनम् ॥ कीर्तनात्स्मरणात्स्नाना-
त् नृणां लक्ष्मीप्रदं भुवि ॥१॥ कृत्वा स्नानं त्वमप्यस्मिन् व्रज स्वपितु-
रन्तिकम् ॥

## तोण्डमान राजाका अपने पितासे राज्य पाना

श्रीशुकजी बोले—यह पद्मसर नामक तालाब सब पापोंको नाश करनेवाला है और संसारमें कीर्तन, स्मरण एवं स्नान करनेसे मनुष्योंको लक्ष्मी देनेवाला है। तुम भी इसमें स्नान कर अपने पिताके पास जाओ ॥२॥

श्रीवराह उवाच—

एतत् शुकवचः श्रुत्वा स्नात्वा पद्मसरोवरे ॥२॥ तं नत्वा हय-
मारुह्य तोण्डमान्स्वपुरं ययौ ॥ तं पिता युवराजानं कृत्वा त्रीन्व-
त्सरानथ ॥ ३ ॥ रञ्जकत्वं च सामर्थ्यं शौर्यं वीर्यं सुशीलताम् ॥
भक्तिं विप्रेषु पुत्रस्य वीक्ष्य राजा स्वमन्त्रिभिः ॥४॥ स्वपदे स्था-
पयामास स्वभिषिच्य विधानतः ॥ अनुनीय सुतं पत्न्या सार्धं
राजा वनं ययौ ॥५॥ तोण्डमानपि साम्राज्यं लब्ध्वा राज्यं चकार ह ॥

श्रीवराहजी बोले—श्रीशुकजीके इस वचनको सुनकर उस पद्मसरोवरमें स्नान कर, उनको प्रणाम कर घोड़ेपर सवार हो तोण्डमान राजा अपने नगरको चला गया। अनन्तर उसको उसके पिताने तीन वर्षोतक

युवराज रखकर, पीछे उस पुत्रमें प्रजारक्षण करनेकी सामर्थ्य, शासनशक्ति, प्रभाव, पराक्रम, बल, सुशीलता तथा ब्राह्मणोंमें भक्ति देखकर, विधिपूर्वक मन्त्रिगणोंके साथ अभिषेक कर अपने पदपर स्थापित किया और उसको समझा-बुझाकर स्त्रीके साथ वह राजा वनमें चला गया, तोण्डमान भी साम्राज्यको पाकर राज्य करने लगा ॥६॥

अथ वसोर्वल्मीके श्रीवराहसन्दर्शनम्

निषादस्य वने देवो वाराहं रूपमास्थितः ॥६॥ श्यामाकपक्वं भक्षित्वा रात्रौ रात्रौ चचार ह ॥ पदानि स वराहस्य चान्वियेष दिवा दिवा ॥७॥ अदृष्ट्वा तं वराहं स रात्रौ जाग्रद्धनुर्धरः ॥ स्थितोऽपश्यच्चरन्तं तं चन्द्रकोटिसमप्रभम् ॥८॥ वराहं सुभगाकारं श्यामाकवनमध्यतः ॥ दृष्ट्वा तं धनुरादाय सिंहनादं चकार ह ॥९॥ वराहस्तद्ध्वनिं श्रुत्वा वनान्निष्क्रम्य सत्वरम् ॥ ययौ तं चाप्यनुययौ वराहं स निषादपः ॥१०॥ रात्रिशेषमनुद्रुत्य वने चन्द्रसमप्रभम् ॥ वल्मीकं प्रविशन्तं च ददर्श स निषादपः ॥११॥ गच्छन्तं पूर्णिमाचन्द्रमस्तं गिरिवरं यथा ॥

वसुको वल्मीकमें श्रीवराहका दर्शन होना

निषादके वनमें भगवान् वराहरूप धारण कर, पके हुए शामाको खाते हुए, रात-रातभर विचरते रहते थे। वह निषाद वराहके पैरोंका चिह्न रोज खोजता रहा, परन्तु उस वराहको न देखकर धनुष धारण कर रातको जागते हुए रहकर, करोड़ों चन्द्रमाकी प्रभाके समान तथा सुन्दराकार वराहको श्यामाके वनमें चरते हुए देखा। उसको देखकर धनुष लेकर सिंहनाद किया। उस शब्दको सुनकर वराह बहुत शीघ्र उस वनसे निकलकर चला। निषादराज भी उसके पीछे-पीछे दौड़ा। रातभर पीछे-पीछे दौड़ते-दौड़ते शेषमें जंगलमें ही किसी वल्मीक (दिआंड़) में उस चन्द्रमाकी प्रभावालेको पूर्णिमाके चाँदके गिरिवरमें अस्त होते जैसा प्रवेश करते देखा ॥१२॥

विस्मितोऽखानयत्कोपाद्वल्मीकं स निषादपः ॥१२॥ धरावराहो ददृशे मूर्छितोऽयं पपात ह ॥

उस विस्मित निषादराजने क्रोधित होकर उस वल्मीकको उखाड़ डाला। वहाँ भूवराहजी देख पड़े। वह तो मूर्छित होकर गिर पड़ा ॥१३॥

पितरं मूर्च्छितं दृष्ट्वा तत्पुत्रो भक्तिमांस्तदा ।.१३। वराह-
देवं तुष्टाव येन प्रीतोऽभवद्धरिः ॥ आविश्य पितरं तस्य प्रोवाच
मधुसूदनः ॥१४॥

पिताको मूर्छित देखकर उसके भक्तिमान् पुत्रने वराह भगवान्की स्तुति की, जिससे भगवान् प्रसन्न हो गये, और उसके पितामें आविष्ट होकर श्रीमधुसूदन भगवान् बोले ॥१४॥

*श्रीभगवानुवाच—*

अहं वराहदेवेशो नित्यमस्मिन्वसाम्यहम् ॥ राज्ञे त्वमुक्त्वा
मामत्र प्रतिष्ठाप्यैव पूजय ॥ १५ ॥

श्रीभगवान्जी बोले—मैं वराह देव हूं, और नित्य इसीमें निवास करता हूं। तुम राजासे कहकर मुझे यहीं स्थापित करा मेरी पूजा करो ॥१५॥

वल्मीकं कृष्णगोक्षीरैः क्षालयित्वा तदुत्थिते ॥ शिलातले च
वाराहमुद्धृत्य धरणीस्थितम् ॥ १६ ॥ कारयित्वा प्रतिष्ठाप्य विप्रै-
र्वैखानसैश्च माम् ॥ पूजयेद्विविधैर्भोगैस्तोण्डमान् राजसत्तमः ॥१७॥
इत्युक्त्वा तं जहौ देवः स च स्वस्थो बभूव ह ॥

काली गायके दूधसे इस वल्मीकको धो-धोकर उससे उठी हुई (गड़े) शिलामें (गुप्त) वराह भगवान् (मूर्ति) को उखाड़कर, वैखानस ब्राह्मणोंसे मेरी स्थापना कराकर राजसत्तम तोण्डमान मेरी पूजा नाना प्रकारकी सामग्रियोंसे करे। यह बोलकर भगवान्ने उसको छोड़ दिया (उतर गये), तब वह स्वस्थ (चैतन्य) हो गया ॥१८॥

सुखासीनं तु पितरं नमस्कृत्य निषादजः ॥१८॥ न्यवेदयद्देवव-
चः पित्रे सर्वं यथातथम् ॥ स श्रुत्वा विस्मितो भूत्वा कृत्स्नं पुत्र-
वचः शुभम् ॥१९॥ राज्ञे वक्तुं ययौ शीघ्रं निषादः स्वानुगैः सह ॥

निषादपुत्र अपने पिताको सुखपूर्वक बैठा देख नमस्कार कर भगवान्के सब वचनोंको यथातथ्य निवेदन किया। अपने पुत्रके सभी शुभ वचनोंको सुन वह निषाद विस्मित हो अपने अनुचरोंके साथ यह सब कुछ राजासे कहनेको शीघ्र प्रस्थान किया ॥२०॥

अथ तोण्डमान्नृपाय वसुनिवेदितवराहोदन्तः

वसुर्निषादाधिपती राजद्वारमुपागमत् ॥२०॥ निषादाधिपमा-

ज्ञाय द्वारपालैर्नृपोत्तमः ॥ आहूय तं निषादेशं सभायां मन्त्रिभिः
सह ॥२१॥ सत्कृत्य तं वसुं राजा सपुत्रं सपरिच्छदम् ॥ पप्रच्छ
प्रीतिमान् राजा वसुं तं वनगोचरम् ॥२२॥ किमागमनकृत्यं ते
वद त्वं वनगोचर ॥

### तोण्डमान राजासे वसुका वराहकथा कहना

अनन्तर निषादराज राजाके द्वारपर पहुंचा। राजश्रेष्ठ तोण्डमानने अपने द्वारपालोंसे उस निषादराजका आगमन जानकर उसे सभामें बुलाकर, मन्त्रियोंके साथ-साथ पुत्र तथा परिवार समेत वसुका सत्कार कर, प्रसन्न हो उस वनेचर वसुसे पूछा—हे वनेचर! तुम्हारे आगमनका क्या प्रयोजन है ॥२३॥

*वसुरुवाच—*

राजन्मम वनेदृष्टमाश्चर्यं शृणु भूपते ॥२३॥ कश्चिच्छ्वेतवरा-
हस्तु श्यामाकमचरन्निशि ॥ तं वराहं धनुष्पाणिरन्वधावमहं
नृप ॥२४॥ अनुद्रुतो वायुवेगो गत्वा वल्मीकमाविशत् ॥ स्वामि-
पुष्करिणीतीरे पश्यतो मम भूपते ॥२५॥ वल्मीकमथ तं क्रोधा-
न्मूर्च्छितो न्यपतं भुवि ॥

वसुने जवाब दिया—हे राजन्! मेरे वनमें देखे गये आश्चर्य्य पूर्ण दृश्यको सुनिये। कोई श्वेत वराह रातको श्यामा धान (सावां) चरता था। मैंने धनुष हाथमें धारण कर उस वराहका पीछा किया, अनन्तर वह वायुवेगसे दौड़कर मेरे देखते-देखते स्वामिपुष्करिणीके तीरपर वल्मीकमें घुस गया, क्रोधसे उस वल्मीकको तोड़ा तो मूर्छित होकर मैं पृथ्वीपर गिर पड़ा ॥२६॥

मत्पुत्रोऽयं समागत्य मां दृष्ट्वा मूर्च्छितं भुवि ॥२६॥ शुचिर्भूत्वा
देवदेवं तुष्टाव मधुसूदनम् ॥ ततो मयि समाविश्य वराहोऽभ्यवद-
त्सुतम् ॥२७॥ राज्ञे निवेदय क्षिप्रं मच्चरितं निषादप ॥

मेरे इस लड़केने वहां आकर, मुझे पृथ्वीपर मूर्छित पड़ा हुआ देखकर, पवित्र हो देवदेव मधुसूदन भगवानकी स्तुति की। तत्पश्चात् वराहजी मुझमें आविष्ट होकर मेरे लड़केसे बोले कि हे निषादपति! तुम मेरे चरितको शीघ्र राजासे कहो ॥२८॥

कृष्णगोक्षीरसेकेन वल्मीके क्षालयेत् नृपः ॥२८॥ दृश्येत च
शिला काचिद्वल्मीकस्था शुशोभना ॥ वामाङ्कस्थां भुवं मां च

वराहवदनं स्थितम् ॥ २९ ॥ कारयित्वा शिल्पिनाऽथ प्रतिष्ठाप्य मुनीश्वरैः ॥ वैखानसैर्मुनिवरैरर्चयेत्तोण्डमानपि ॥३०॥

काली गौके दूधसे इस वल्मीकको वह राजा धोवे, तब वल्मीकस्थ कोई अति सुन्दर शिला देख पड़ेगी और मेरी बायीं गोदीमें बैठी हुई पृथ्वीदेवीके साथ हमारी मूर्ति शिल्पीसे बनवा मुनीश्वरोंसे प्रतिष्ठित कराकर वैखानसों तथा मुनिश्रेष्ठोंके साथ तोण्डमान राजा भी पूजन करे ॥३०॥

अथ गत्वा श्रीनिवासं वल्मीकावृतपद्द्वयम् ॥ कपिलाकृष्णगोक्षीरसेचनैः क्षालयेच्छनैः ॥ ३१ ॥ आपादपीठपर्यन्तं क्षालयित्वा दिने दिने ॥ कुर्यात्प्राकारमुभयोरुत्तरे दक्षिणे तथा ॥३२॥ इत्युक्त्वा चैव माऽमुञ्चद्देवः स्वस्थोऽभवन्नृप ॥ इदं ते वक्तुमायातो देवदेवचिकीर्षितम् ॥३३॥

पीछे श्रीनिवासके पास जाकर वल्मीकसे छिपे दोनों पैरोंको कपिला तथा काली गौके दूधसे धीरे-धीरे धोवे एवं श्रीचरणोंसे लेकर सिंहासनपर्यन्त नित्य धोकर उस स्थानके दक्षिण और उत्तर दोनों ओर चहारदीवारी बनवावे। हे राजन्! इतना कहकर वराहने मुझको छोड़ा, तब मैं स्वस्थ हुआ। देवदेव भगवान्‌की जो इच्छा थी उसे मैं आपसे कहने आया हूं ॥३३॥

अथ नृपस्य निषादवाक्यस्वप्नाभ्यां बिलमार्गेण शेषाचलगमनम्

*श्रीवराह उवाच—*

तोण्डमानपि तत् श्रुत्वा सुप्रीतो विस्मितोऽभवत् ॥ ततः कार्यं विनिश्चित्य मन्त्रिभिः पुष्करादिभिः ॥३४ ॥ वेङ्कटाद्रिं जिगमिषुर्गोपानाहूय सर्वशः ॥ कृष्णाश्च कपिला गावो याः काश्चित्सन्ति मामिकाः ॥३५॥ ताः सवत्सा आनयध्वं वेङ्कटाद्रिसमीपतः ॥ इत्याज्ञप्य नृपो गोपाञ्छ्वो यात्रेति च मन्त्रिणः ॥३६॥ विसृज्य प्रकृतीः सर्वा विवेशान्तः पुरं वशी ॥ उक्त्वा कथां तां पत्नीभ्यः सुष्वाप निशि पार्थिवः ॥३७॥

निषादवाक्य तथा स्वप्नसे राजाका बिलमार्गद्वारा शेषाचलगमन

श्रीवराहजी बोले—राजा तोण्डमान भी इसको सुनकर परम आश्चर्यान्वित और प्रसन्न हुआ। तत्पश्चात्, पुष्करादि मन्त्रियोंके साथ कार्य्यका निश्चय कर, वेङ्कटाचल जानेकी इच्छासे चारों ओरसे अपने

गोपालकोंको बुलाकर "मेरी जितनी काली तथा कपिला गायें होवें, उन सबोंको बछोंके साथ श्रीवेङ्कटाचलके समीप ले आओ"—ऐसी आज्ञा दे, मन्त्रियोंसे भी "कल यात्रा होगी" ऐसा कहकर, सारी सभा विदा कर उस जितेन्द्रिय राजाने अन्तःपुरमें प्रवेश किया। उस कथाको पत्नियोंसे कहकर राजा रात्रिको सो रहे ॥३७॥

तं स्वप्ने श्रीनिवासोऽपि बिलमार्गं ह्यदर्शयत् ॥ स्वपुरादाबिलं मार्गे पल्लवानसृजद्धरिः ॥ ३८ ॥ एवं स्वप्नं नृपो दृष्ट्वा प्रातरुत्थाय सत्वरः ॥ आहूय मन्त्रिणः सर्वान् प्रकृतीर्ब्राह्मणानपि ॥३९॥ स्वप्नं तथाविधं चोक्त्वाऽपश्यद् द्वारेऽथ पल्लवम् ॥

तब उनको स्वप्नमें श्रीनिवास भगवानने बिलमार्ग दिखाया और भगवान्ने उस नगरसे बिलपर्यन्त सारे मार्गमें पल्लव लगा दिये। इस प्रकारका स्वप्न देख राजाने प्रातःकालहीमें उठकर सभी मन्त्रियों, ब्राह्मणों तथा सारी प्रजाको बुलाकर उस स्वप्नको कहकर द्वारपर उक्त पल्लवोंको देखा ॥४०॥

शुक्के मुहूर्ते प्रययौ हयमारुह्य तोण्डमान् ॥४०॥ पश्यञ्च प- ल्लवान्गाश्च शनैः प्रीतो ययौ बिलम् ॥ दृष्ट्वा विस्मयमापन्नो निर्ममे तत्र पत्तनम् ॥४१॥

तब राजा तोण्डमान सुमुहूर्तमें घोड़ेपर सवार हो पल्लवों तथा गौओंको देखते हुए धीरे-धीरे बिलमें चले गये। वहां उसे देखकर परम आश्चर्यान्वित हुए और वहींपर एक नगर बनवाया ॥४१॥

अथ भगवदुक्त्या तोण्डमान्नृपकृतक्षीराभिषेकवप्रनिर्माणादिकम्

बिलमन्तःपुरे कृत्वा प्राकारं चाप्यकारयत् ॥ वसंस्तत्र नृपे- न्द्रोऽसौ निर्जित्य पृथिवीमिमाम् ॥४२॥ यथोक्तं देवदेवेन क्षीर- प्रक्षालनादिकम् ॥ कृत्वा प्राकारनिर्माणं कर्तुमुद्योगमाययौ ॥४३॥

भगवान्की आज्ञासे तोण्डमान राजासे किया गया क्षीराभिषेक तथा खाईनिर्माण

बिलके भीतर पुरी बनाकर वहीं प्राचीर भी बनवा दिया और इस समस्त पृथ्वीको जीतकर उसीमें निवास करता हुआ, यह राजा देवदेवके कथनानुसार दूधसे प्रक्षालनादि कर प्राकारका निर्माण-कार्य करनेका उद्योग करने लगा ॥४३॥

तदानीं देवदेवेन स्वयमाज्ञापितो नृपः ॥ तिन्त्रिणीं चम्पकं चोभौ पालयैतौ नगोत्तमौ ॥४४॥ मम चास्थानिकी चिञ्चा लक्ष्म्याः स्थानं च चम्पकः ॥ नमस्कार्यौ नृपैस्तौ हि ऋषिदेवनरैः स-

दा ॥४५॥ संस्थाप्यैतौ नृपश्रेष्ठ छेदयान्यान्नगोत्तमान् ॥ प्राकारमात्रं
कुरु मे द्वारगोपुरसंयुतम् ॥४६॥ विमानं तु भवद्वंश्यो नाम्ना
नारायणो नृपः ॥ कारयिष्यति मद्भक्तः स्वर्णेनालङ्करिष्यति ॥४७॥
एवमुक्त्वा तोण्डमानं विरराम श्रियः पतिः ॥४८

तब राजाको स्वयं भगवानने आज्ञा दी कि इमली तथा चम्पक नामके दोनों वृक्षश्रेष्ठोंका पालन करो ( न काटो )। इमली मेरा स्थान तथा चम्पक लक्ष्मीजीका स्थान है। ये सदा ऋषि, देवता, मनुष्य तथा राजाओंसे वन्दनीय हैं। अतएव हे नृपश्रेष्ठ ! इन दोनोंको छोड़कर अन्यान्य वृक्षोंको काट डालो एवं द्वार तथा गोपुरसे युक्त केवल प्राकारमात्र ही मेरे लिये बनाओ। विमानको तो तुम्हारा वंशज मेरा भक्त नारायण नामक राजा बनवायेगा तथा सोनेसे अलंकृत करवायेगा। तोण्डमान राजासे ऐसा कहकर श्रीपति भगवान् चुप हो गये ॥४८॥

*श्रीवराह उवाच—*

एवं देववचः श्रुत्वा कृत्वा प्राकारमेव च ॥ पूजयामास मुनि-
भिर्वैखानसकुलोद्भवैः ॥४९॥ नित्यं बिलेन चागत्य देवं नत्वा नृपो-
त्तमः ॥ राज्यं चकार धर्मेण भुञ्जानो भोगमुत्तमम् ॥५०॥

श्रीवराहजी बोले—भगवान्‌के इस प्रकारके वचनको सुन, वह नृपोत्तम प्राकार आदि बनाकर, वैखानस-कुलोत्पन्न मुनियोंके साथ रोज बिलद्वारा आकर, भगवान्‌को नमस्कार तथा उनकी पूजा कर, अनेकों उत्तम-उत्तम भोगोंको भोगते हुए धर्मपूर्वक राज्य करने लगा ॥५०॥

*अथ गङ्गास्नानार्थमागतवीरशर्माख्यविप्रचरित्रम्*

एतस्मिन्नेव काले तु दाक्षिणात्यो द्विजोत्तमः ॥५१॥ गङ्गास्ना-
नाय गच्छन्वै सदारः प्रययौ पुरात् ॥ मार्गेऽथ गर्भिणी जाता ब्राह्म-
णी ब्राह्मणः स च ॥५२॥ तां तु गर्भवतीं दृष्ट्वा स्वात्मानुगमनेऽक्ष
माम् ॥ राजानं द्रष्टुकामोऽसौ राजद्वारमुपागमत् ॥५३॥ द्वाःस्थेन
ज्ञापितो राजा तमाहूय द्विजोत्तमम् ॥ पूजयित्वा तु विधिवत्पप्रच्छ
कुशलं द्विजम् ॥५४॥

वीरशर्मा नामक ब्राह्मणकी कथा

इसी समय कोई दाक्षिणात्य द्विजोत्तम गंगास्नान करनेको अपनी स्त्रीके साथ नगरसे निकला। वह ब्राह्मणी रास्तेमें ही गर्भिणी हो गयी। तब वह ब्राह्मण उसको गर्भिणी तथा अपने साथ जानेमें असमर्थ देखकर

राजाको देखनेकी इच्छासे राज-द्वारपर आया। द्वारस्थ द्वारपालसे जानकर राजाने उस द्विजोत्तमको बुला, विधि-पूर्वक पूजन कर कुशलप्रश्न पूछा ॥५४॥

*राजोवाच —*

किमागमनकृत्यं ते किं करिष्याम्यहं द्विज ॥

राजा बोले—हे ब्राह्मण। आपके आगमनका क्या कारण है? तथा मैं आपके लिये क्या कर सकता हूं ॥५५॥

*ब्राह्मण उवाच—*

वासिष्ठो वीरशर्माऽहं सामवेदी नृपोत्तम ॥५५॥ सदारो निर्गतो राजन्गङ्गास्नानार्थ सादरः॥ मार्गे च गर्भिणी चेयं कौशिकी पुण्यशालिनी ॥ ५६ ॥ नाम्ना लक्ष्मीरिति ख्याता सुशीला च पतिव्रता ॥ संस्थाप्यैनां तव गृहे व्रतं निर्वर्तयाम्यहम् ॥५७। तस्माद्राजन्प्रयच्छास्यै यथेष्टं भक्तवेतने ॥ तावच्च रक्ष्यतां लक्ष्मीर्यावदागमनं मम ॥५८॥

ब्राह्मणने उत्तर दिया—हे नृपोत्तम ! मैं वशिष्ठगोत्री, सामवेदी वीरशर्मा नामक ब्राह्मण हूं। हे राजन् ! सादर गङ्गास्नानके लिये मैं अपनी स्त्रीके साथ निकला, किन्तु रास्तेमें यह पुण्यशालिनी, कौशिकी, लक्ष्मी ऐसा नामसे प्रसिद्ध, परम सुशीला तथा पतिव्रता मेरी स्त्री गर्भिणी हो गयी। इसको आपके घरमें रखकर मैं अपना व्रत समाप्त करता हू। इसलिये हे राजन्! इसको यथेष्ट भोजन तथा वेतन दिया करें तथा इस लक्ष्मीकी तबतक रक्षा करें जबतक कि मैं लौटकर आता हूं ॥५८॥

*श्रीवराह उवाच—*

राजा तस्य वचः श्रुत्वा तण्डुलानि धनान्यपि ॥ दत्त्वा षण्मासपर्यन्तं गृहमन्तःपुरे ददौ ॥ ५९ ॥ तां न्यस्य ब्राह्मणः प्रीतो गङ्गास्नानाय निर्ययौ ॥ गत्वा भागीरथीं गङ्गां प्रयागे क्षेत्र उत्तमे ॥६०॥ स्नात्वा काशीं ततो गत्वा तत्रोषित्वा दिनत्रयम् ॥ गयां प्राप्य पितृश्राद्धमकरोद् ब्राह्मणोत्तमः ॥६१॥ गत्वाऽयोध्यामपि पुरीं प्रययौ वदरीवनम् ॥ सालग्रामं ततो गत्वा स्वदेशं प्रति निर्ययौ ॥ ६२ ॥

श्रीवराहजी बोले—राजाने उसके वचनको सुनकर ६ मासपर्यन्त चावल वगैरह (अन्न) तथा धनादि (द्रव्य) देकर रहनेके लिये अन्तःपुरमें ही घर भी दिया। उसको स्थायी रूपसे रखकर वह ब्राह्मण प्रसन्न हो गङ्गास्नानार्थ चला गया। उस ब्राह्मणोत्तमने सब क्षेत्रोंमें उत्तम श्रीप्रयागमें भागीरथी (गङ्गा) के पास जाकर वहां स्नान कर, वहांसे काशी पहुंच, वहां तीन दिन निवास कर, पीछे गयाजी जा पितृश्राद्धादि क्रिया और अयोध्यापुरी भी जाकर वद्रिकारण्यमें भी गया। पुनः वहांसे शालग्राम जाकर अपने देशके लिये निकल पड़ा ॥६२॥

संवत्सरद्वयेऽतीते चैत्रे मासि शुभे दिने ॥ निवृत्तोऽसौ द्विज-
श्रेष्ठः शनैरागत्य माधवि ॥६३॥ एकादश्यां शुक्लपक्षे पुना राजान-
माययौ ॥

हे माधवि! वह ब्राह्मणश्रेष्ठ दो वर्ष व्यतीत हो जानेपर व लौटकर चैत महीनेमें शुक्लपक्ष एकादशीके शुभ दिनको धीरे-धीरे राजाके पास आया। ॥६४॥

राजा तु विस्मृत्य तदा ब्राह्मणीं नास्मरन्नृपः ॥ ६४ ॥ ब्राह्मणी
मानिनी गेहे मृता शुष्का वभूव ह ॥

राजा तो भूलकर उस ब्राह्मणीका ख्याल न कर सके। वह मानिनी ब्राह्मणी उसी घरमें मरकर सूख गयी॥६५॥

वीरशर्मा ततो विप्रो गङ्गातोयकरण्डके ॥६५। विमुच्य वन्धनं
स्वेकं गाङ्गं तु करकं शुभम् ॥ प्रदाय राज्ञे पप्रच्छ पत्नी कुशलि-
नीति मे ॥६६॥ स्मृत्वाऽथ राजा विप्रं तं स्थीयतामिति चाब्रवीत् ॥

तब ब्राह्मण वीर शर्माने गंगाजलकी कांवरि (टोकरी) से वन्धनको खोलकर एक पवित्र गंगाजलकी शीशी राजाको देकर इतना ही पूछा—"मेरी पत्नी सकुशल है कि नहीं?" अब राजाने वह सब स्मरण कर उस ब्राह्मणसे कहा कि "आप बैठिये" ॥६७॥

अतःपुरं ततो गत्वा तामपश्यन्मृतां गृहे ॥६७॥ अनुक्त्वा ब्रह्म-
णे तस्मै प्रविश्य विलमुत्तमम् ॥ श्रीनृसिंहं नमस्कृत्य पुनः प्राप्य
विलोत्तमम ॥॥६८। श्रीनिवासं ययौ द्रष्टुं श्रीभूमिसहितं परम् ॥
तं दृष्ट्वा सहसायान्तं जुगूहाते धरारमे ॥ ६९ ॥ प्रणमन्तमवोचत्तं
किमकाले नृपागतः ॥ नृपोऽवदत्प्रणम्येशं भीतोऽथ ब्राह्मणीं
मृताम् ॥ ७० ॥

अन्तःपुरमें जाकर राजाने उसे घरमें मरी हुई देखा। तब ब्राह्मणसे बिना कहे ही उस उत्तम बिलमें प्रवेश कर, वहां श्रीनृसिंहको नमस्कार कर, पुनः उस उत्तम बिलको पाकर श्रीभूमि देवियोंके साथ श्रीनिवास भगवान्को देखने गया। उसको सहसा आया हुआ देखकर भू तथा श्रीदेवी छिप गयीं। प्रणाम करते समय उससे भगवान् बोले, "हे नृप! असमयमें क्यों आये ?" भगवान्को प्रणाम कर तथा भयभीत होकर राजा बोले—ब्राह्मणी मर गयी है॥७०॥

अथ अस्थिसरोवरमाहात्म्यम्

तत् श्रुत्वा देवदेवोऽपि मा भी राजन् द्विजोत्तमात् ॥ आन्दोलिकां तामारोप्य स्त्रीभिः स्वाभिः समन्विताम् ॥७१॥ मदालयात्पूर्वभागे द्वादश्यां स्नापय प्रभो ॥ अस्थिनाम्नि सरस्यस्मिन्नपमृत्युनिवारणे ॥७२॥ प्राप्तजीवा समं स्त्रीभिर्ब्राह्मणेन च योक्ष्यते ॥ शीघ्रं याहि नृपश्रेष्ठ यथोक्तं वचनं कुरु ॥७३॥

अथ अस्थिसरोवरमाहात्म्य

उसे सुनकर देवादिदेव उस राजासे बोले—हे राजन्! उस श्रेष्ठ ब्राह्मणसे न डरो। उसकी स्त्रीको डोलीपर चढ़ाकर अपनी स्त्रियोंके साथ मेरे आलयके पूर्व भागमें अपमृत्युको निवारण करनेवाले इस अस्थि नामक तालाबमें द्वादशीके दिन स्नान करा दो; पुनः जीवित हो जानेपर सभी स्त्रियोंके साथ उसे उस ब्राह्मणसे मिला देना। हे नृपश्रेष्ठ! मेरे उक्त वचनको यथारीति पालन करो॥७३॥

इति देववचः श्रुत्वा प्रययौ स्वपुरं नृपः ॥ आन्दोलिकासु रम्यासु स्त्रिय आरोप्य तामपि ॥७४॥ ब्राह्मणं च पुरस्कृत्य द्रष्टुं देवं ययौ नृपः ॥ अस्थिकूटसरः प्राप्य स्नापयामास ताः स्त्रियः ॥७५॥

भगवान्के इस वचनको सुनकर राजा अपने नगरमें गया और अपनी स्त्रियों तथा उस स्त्रीको भी रम्य डोलीपर चढ़ाकर, उस ब्राह्मणको आगे कर भगवानको देखनेके लिये चला गया एवं अस्थिकूट सरोवरपर पहुंचकर उन स्त्रियोंको स्नान कराया॥७५॥

त्वगस्थिरूपा सा चापि ताभिः क्षिप्ता सरोवरे ॥ प्राप्तजीवा यथापूर्वं सुव्यञ्जितशरीरजा ॥७६॥ उत्थिता सरसः स्नात्वा राज्ञी-

भिः सह मङ्गला ॥ प्राप्ता च ब्राह्मणं प्रीता भर्तारं पुनरा-
गतम् ॥७७॥

उन स्त्रियों द्वारा उसी सरोवरमें डाली हुई अस्थिचर्म्मावशेषरूपा उस ब्राह्मणीने भी अपना जीवन पुनः प्राप्त कर रानियोंके साथ स्नान करके यथापूर्व सुन्दर शरीरवाली हो, तालाबसे निकल, लौटकर आये हुए अपने ब्राह्मण स्वामीको पुनः प्रसन्न हो पाया ॥७७॥

राजा हरिं पूजयित्वा ब्राह्मणाय धनं ददौ ॥ सहस्रनिष्कप-
र्यन्तं वस्त्राणि विविधानि च ॥७८॥ स्वदेशगमनायैव सादरं वि-
ससर्ज ह ॥

राजाने भगवान्‌की पूजा कर ब्राह्मणको हजार निष्कपर्यन्त धन तथा अनेकों कपड़े दान दिये । तथा अपने देश लौट जानेके लिये आदरसे विदा कर दिया ॥७८॥

विप्रः श्रुत्वा स्त्रियो वृत्तं प्रभावं वेङ्कटेशितुः ॥७९॥ आशीः
प्रयुज्य राज्ञेऽथ स्वदेशं प्रययौ द्विजः ॥

ब्राह्मणने श्रीवेङ्कटेश भगवान्‌का प्रभाव तथा अपनी स्त्रीका चरित्र सुन, राजाको आशीर्वाद दे पीछे अपने देशको प्रस्थान किया ॥८०॥

विप्रे गते श्रीनिवासो राजानं पुनरब्रवीत् ॥८०॥ दिने दिने च
मध्याह्ने नैवेद्यानन्तरं नृप ॥ आगत्य मामर्चयित्वा यथेष्टं स्वर्ण-
पङ्कजैः ॥८१॥ गत्वा पुरीं स्वधर्मेण राज्यं कुरु नराधिप ॥ यद्यदिष्टं
तव नृप भविष्यति न संशयः ॥८२॥ नागन्तव्यमकाले तु त्वया
नृप कदाचन ॥ एवं कालार्चनं कृत्वा गत्वा त्वं स्वपुरे वस ॥८३॥

ब्राह्मणके चले जानेपर राजासे भगवान् पुनः बोले—हे राजन् ! प्रति दिन मध्याह्न कालमें नैवेद्यके बाद आकर सोनेके कमलोंसे यथेष्ट पूजन कर, अपनी नगरीमें जा धर्मसे राज्य करो । हे राजन् ! तुम्हारे जो अभीष्ट होंगे वह सभी अवश्य पूर्ण होंगे । इसमें कुछ संशय नहीं है । हे राजन् ! अकाल अर्थात् बिना समयके कभी न आया करो और इसी प्रकार समयानुकूल पूजा कर अपनी पुरीमें जाकर निवास करो ॥८३॥

तथा करिष्ये देवेश मध्याह्ने चार्चयाम्यहम् ॥ इति देवाज्ञया

नित्यमर्चयन्स्वर्णपंकजैः ॥८४॥ तदूर्ध्वं तुलसीपुष्पं जात्वपश्यत्स मृन्मयम् ॥८५॥ विस्मितो देवदेवेशमपृच्छन्नृपसत्तमः ॥

राजा बोले—हे देवेश ! मैं वैसा ही मध्याह्न कालमें ही पूजन करूंगा। ऐसा कहकर भगवान्‌के आज्ञानुसार, उसी तरह स्वर्णकमलोंसे नित्य पूजा करता हुआ उसने एक दिन मिट्टी लगे हुए तुलसीके फूलोंको देखा और उससे आश्चर्यित हो राजसत्तमने देवादिदेवसे पूछा ॥८६॥

अथ कुर्वग्रामस्थकुलालवंशजभीमाख्यभक्तोदन्तः

*राजोवाच—*

केनार्च्यसे मृन्मयैश्च कमलैस्तुलसीसमैः ॥८६। राज्ञा पृष्टो देवदेवः स्मृत्वा राजानमब्रवीत् ॥ कश्चित्कुलालो मद्भक्तः कुर्वग्रामे वसत्यसौ ॥८७। स्वगृहेऽर्चयते राजंस्तदङ्गीक्रियते मया ॥ इति देववचः श्रुत्वा तं द्रष्टुं प्रययौ नृपः ॥८८॥

कुर्व ग्रामके कुलालवंशी भीम नामक भक्तकी कथा

राजाने पूछा—किससे तुलसी सहित मिट्टीके कमलोंसे आपकी पूजा की जाती है ? राजाके पूछनेपर भगवान्‌ने स्मरण कर राजासे कहा कि मेरा कोई भक्त कुम्हार कुर्व गांवमे बसता है। हे राजन् ! वह अपने घरमें ही पूजा करता है और उसको हम स्वीकार करते हैं। भगवान्‌का यह वचन सुन राजा उसको देखनेके लिये गये ॥८८॥

गत्वा कुर्वपुरं तस्य कुलालस्य गृहं ययौ ॥ राजानमागतं दृष्ट्वा प्रणम्यैवाग्रतः स्थितः ॥८९॥ स्थितं तं भीमनामानं पप्रच्छ नृपसत्तमः ॥

कुर्वपुरमें जाकर उस कुम्हारके घर गये। राजाको आते देख उनको प्रणाम कर वह कुम्हार सामने खड़ा हो गया। उस भीम नामक कुम्हारको खड़ा देखकर राजाने पूछा ॥८९॥

*तोण्डमानुवाच—*

भीम पूजयसे देवं कथं वद कुलोत्तम ॥९०॥

राजा तोण्डमान बोले—हे कुलोत्तम भीम ! तुम देवादिदेवकी किस तरह पूजा करते हो, कहो ॥९०॥

पृष्टः प्राह कुलालोऽपि जातु जाने न चार्चनम् ॥ कोनोक्तं नृपतिश्रेष्ठ कुलालोऽर्चयतीति हि ॥९१॥

श्रीवराहजी बोले—इस प्रकार पूछे जानेपर कुम्हारने कहा कि मैं तो पूजा आदि कुछ नहीं जानता। हे नृपश्रेष्ठ ! ऐसा किसने कहा कि कुम्हार पूजा करता है ॥९१॥

तोण्डमानुवाच—

देवेन श्रीनिवासेन ममोक्तं हि त्वदर्चनम् ॥ स तु श्रुत्वा नृपवचः स्मृत्वा देववरं पुरा ॥९२॥

राजा तोण्डमान बोले—श्रीनिवास भगवान्ने ही हमसे तुम्हारी पूजाके विषयमें कहा ॥९२॥

भीम उवाच—

यदा प्रकाशिता पूजा यदा राजा समागतः ॥ तोण्डमांस्तेन संवादस्तदा मोक्षं गमिष्यसि ॥९३॥ इति पूर्वं वरं देवो दत्तवान्वेङ्कटेश्वरः ॥९४॥

राजाके वचनको सुनकर पहलेका दिया हुआ भगवान्का वरदान स्मरण कर भीमने कहा—"जब तुम्हारी पूजा प्रकाशित हो जायगी तथा जब राजा तोण्डमान आ जायंगे और जब उनसे तुम्हारा संभाषण होगा तभी तुम मुक्ति पावोगे"—ऐसा प्राचीन समयमें श्रीवेङ्कटेश्वर भगवान्ने वर दिया था ॥९४॥

इत्युक्त्वाऽथ कुलालोऽपि पत्न्या सार्धं तथैव च ॥ विमानमागतं दृष्ट्वा देवं दृष्ट्वा जनार्दनम् ॥ ९५ ॥ प्रणमन्प्रजहौ प्राणान्सदारो भक्तसत्तमः ॥ पश्यतो राजराजस्य विमानमधिरुह्य च ॥९६॥ दिव्यरूपधरो देव्या सार्धं विष्णुपदं ययौ ॥

अब अपनी पत्नीके साथ उस भक्तश्रेष्ठ कुम्हारने आये हुए विमान तथा जनार्दन भगवानको देखकर उनको प्रणाम करते हुए प्राणोंको त्याग दिया । राजराजेश्वर तोण्डमानके देखते-ही-देखते विमानपर चढ़कर स्त्रीके साथ-साथ दिव्य रूप धारण कर वह विष्णुपद या विष्णुलोकको चला गया ॥९७॥

दृष्ट्वा राजाऽद्भुतं तत्र स्वपुरं प्राप्य हर्षितः ॥९७॥ स्वपुत्रं श्रीनिवासाख्यमभिषिच्य विधानतः ॥ परिपालय धर्मेण मानवांश्च वसुन्धराम् ॥९८॥ इत्याज्ञाप्य सुतं धीमांस्ततापं परमं तपः ॥ तप्य

तस्तस्य देवोऽपि प्रत्यक्षमभवद्धरिः ॥९९॥ आरुह्य गरुडं देवो रमाभूमीसमन्वितः ॥१००॥

बुद्धिमान राजा वहां उस अद्भुत दृश्यको देख परमानन्दित हो अपने नगरमें जाकर श्रीनिवास भगवान्‌का विधानपूर्वक अभिषेक करके अपने पुत्रको "धर्मसे प्रजा, मनुष्य तथा पृथ्वीका पालन करो" ऐसी आज्ञा देकर परम तपस्या करने लगे। उनके तपस्या करते समय हरि भगवान् भी प्रत्यक्ष हुए ॥९९॥

अथ श्रीनिवासकृपया तोण्डमान्नृपस्य सारूप्यप्राप्तिः

*श्रीभगवानुवाच—*

किं करोमि नृपश्रेष्ठ तपसा तोषितस्तव ॥ इत्युक्तो देवदेवेन तोण्डमानपि राजराट् ॥ १०१ ॥ प्रीतिमान्प्राञ्जलिर्भूत्वा सगद्गद-मुवाच ह ॥ त्वल्लोके वस्तुमिच्छामि जरामरणवर्जिते ॥१०२॥ इद-मेव वरं देहि माधवैतन्ममेप्सितम् ॥१०३॥

श्रीनिवासकी कृपासे तोण्डमानको मोक्षलाभ

रमादेवी तथा भूमिदेवीके साथ-साथ गरुड़पर सवार होकर श्रीभगवान् बोले—हे नृपश्रेष्ठ ! तुम्हारी तपस्यासे मैं सन्तुष्ट हुआ, अब तेरे लिये क्या करूं ? भगवान्‌के ऐसा कहनेपर राजाओंके राजा तोण्डमान परम हर्षित हो, अञ्जलि बांधकर, गद्गद होकर यह वचन बोले कि हे माधव ! मैं बुढ़ापा तथा मृत्युसे रहित हो आपके लोकमें निवास करना चाहता हूं, मेरी यही इच्छा है, अतः आप मुझे यही वर दें ॥१०३॥

*श्रीवराह उवाच—*

इत्युक्त्वा निपपातोर्व्यां साष्टाङ्गं देवसन्निधौ ॥ तदा कलेवरं मुक्त्वा विमानं त्वारुरोह च ॥१०४॥ गन्धर्वैः स्तूयमानोऽसौ सारू-प्यं प्राप्य शार्ङ्गिणः ॥ यच्छोकमोहरहितं जरामरणवर्जितम् ॥१०५॥ पुनरावृत्तिरहितं तद्विष्णोः पदमाययौ ॥१०६॥

श्रीवराहजी बोले—राजा तोण्डमानने इतना कहकर भगवान्‌के निकट पृथ्वीपर गिरकर साष्टाङ्ग प्रणाम किया। तत्पश्चात् शरीर त्याग कर विमानपर चढ़ गये। और गन्धर्वोंसे स्तूयमान होते हुए, भगवान्‌का जो शोक, मोह, बुढ़ापा एवं मरण सभीसे वर्जित सारूप्य उसे पाकर पुनः आवागमनसे रहित हो उसी विष्णु-लोकमें आ गये ॥१०६॥

अथ तन्माहात्म्यश्रवणपठनफलश्रुतिः

एतद्भविष्यं देवेशि मयोक्तं वरवर्णिनि ॥ यः श्रावयेद्यः शृणुयाद्विष्णुलोकं स गच्छति ॥१०७॥

माहात्म्यश्रवणका फल

हे वरवर्णिनि ! हे देवि ! मेरे द्वारा तुमसे कही हुई इस भविष्यकथाको जो सुनाता या सुनता है, वह श्रीविष्णुलोकको जाता है ॥१०७॥

सूत उवाच—

इत्युक्तां देवदेवेन सभविष्यां सहोत्तराम् ॥ शृणुयाद्यः पठेद्भक्त्या कथां पुण्यां पुरातनीम् ॥१०८॥ स तु भुक्त्वाखिलान्कामानन्ते विष्णुपदं व्रजेत् ॥१०९॥

इति श्रीवराहपुराणे भूगोलोपाख्याने धरणीवराहसंवादे उत्तरार्धे
श्रीवेङ्कटाचलमाहात्म्ये भविष्यद्वर्णने तोण्डमान्चक्रवर्तिचरितवर्णनं नाम दशमोऽध्यायः ॥ ३० ॥

—*—*—

श्रीसूतजी बोले—देवादिदेवसे कही हुई, इस प्रकारकी उत्तरसहित, पवित्र तथा प्राचीन भविष्यकथाको भक्तिसे जो सुनेगा एवं जो पढ़ेगा, वह अखिल कामनाओंको भोगकर अन्तमें विष्णुभगवान्के लोकमें जायगा ॥१०९॥

इति वराहपुराणान्तर्गत वेङ्कटाचलमाहात्म्य
पूर्वभागोत्तरार्द्धात्मिकं संपूर्णम् ॥

—०—०—

कल्याणाद्भुतगात्राय कामितार्थ प्रदायिने ॥
श्रीमद्वेंकट नाथाय श्रीनिवासाय मङ्गलम् ॥



॥ श्री श्रीनिवासपरब्रह्मणे नमः ॥

श्रीभविष्योत्तरपुराणान्तर्गत-

# श्रीवेङ्कटाचलमाहात्म्यम्

श्रियः कान्ताय कल्याणनिधये निधयेऽर्थिनाम् ॥
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ॥१॥
श्रीवेङ्कटाचलाधीशं श्रियाध्यासितवक्षसम् ॥
श्रित-चेतनमन्दारं श्रीनिवासमहं भजे ॥२॥

## प्रथमोऽध्यायः ॥१॥

जनक शोक निवृत्ति हित, शतानन्द अनुरोध ।
वेङ्कट वैभव तेहि कथन, गिरि चारो युग बोध ॥१॥
वृषभाचल सतकालमें, अञ्जनाद्रि रघुकाल ।
द्वापरमें शेषाद्रि भा, वेङ्कटाद्रि कलिकाल ॥२॥
नामकरण कारण विविध, अद्भुत कथा समेत ।
वर्णित इस अध्यायमें, पढ़ देखो करि चेत ॥३॥

## अथ जनकनृपानुभूतशोकातिरेकप्रकारः

*शौनक उवाच—*

सूत सूत महाभाग सर्वशास्त्रविशारद ॥ त्वत्तोऽहं श्रोतुमिच्छामि माहात्म्यं पुण्यवर्धनम् ॥१॥ कथितं रङ्गमाहात्म्यं त्वया हस्तिगिरीशितुः ॥ जगन्नाथस्य वै विष्णोर्माहात्म्यमतुलं मुने ॥२॥ इदानीं श्रोतुमिच्छामि माहात्म्यं वेङ्कटेशितुः ॥३॥

शौनकने पूछा—हे महाभाग ! सकल शास्त्रोंमें चतुर सूत ! आपसे मैं पुण्यवर्धक माहात्म्य सुनना चाहता हूं । आपने श्रीरङ्गजीका माहात्म्य और श्रीहस्ति गिरिके जगन्नाथ श्रीविष्णुका भी अद्भुत माहात्म्य कहा । हे मुनि ! अब मैं श्रीवेङ्कटेशजीका माहात्म्य सुनना चाहता हूं ॥३॥

*श्रीसूत उवाच—*

साधु पृष्टं त्वया ब्रह्मंश्चरितं वेङ्कटेशितुः ॥ यथा श्रुतं मया पूर्वं व्यासादमिततेजसः ॥४॥ तत्तथाहं समाचक्षे सावधानमनाः शृणु ॥

श्रीसूतजीने कहा—हे ब्रह्मन् ! आपने श्रीवेङ्कटेशजीका चरित अच्छा पूछा । मैंने अमित तेजस्वी व्यासजीसे जैसा सुना है वैसा ही कहूंगा, सावधान होकर श्रवण करो ॥५॥

पुरा तु जनको नाम राजा परमधार्मिकः ॥५॥ सत्यवाक्सर्वशास्त्रेषु कोविदः कोपवर्जितः ॥ वासुदेवप्रसादस्य मुख्यपात्रमभून्नृपः ॥६॥ निर्ममो नित्यतृप्तश्च निरहंकृतिरात्मधृक् ॥

प्राचीन समयमें परम धार्मिक जनक नामका, सत्यभाषी, सभी शास्त्रोंमें निपुण, क्रोधरहित, भगवत्कृपाका पूर्ण पात्र, क्षत्रिय जातिका* ममतारहित, अहंकारशून्य एवं आत्मज्ञानी एक राजा था ॥७॥

तस्य भ्राताऽभवत्पूर्वं कुशकेतुरिति स्मृतः ॥७॥ कुशध्वजस्य तनयास्त्रयस्त्रैलोक्यसुन्दराः ॥ दुहितॄणां त्रयं तस्य कुशकेतोर्महात्मनः ॥८॥ जनकस्याभवत्पुत्री जानकी नाम सा रमा ॥ भ्राता च कारयामास राज्यं जनकभूपतिः ॥९॥ स भ्रातुराज्ञया राज्यं चकारार्येषु भक्तिमान् ॥

---

* इसमें राजा और नृप दो पद होनेसे राजा पद मीमांसाका आरेष्टयधिकरण न्यायसे क्षत्रियपर है ।

इनके कुशकेतु नामक एक बड़े भाई थे। कुशध्वज (कुशकेतु)को त्रिलोकमें सुन्दर तीन पुत्र तथा तीन कन्याएं थीं *। जनक राजाकी, साक्षात् लक्ष्मीका अवतार जानकी नामकी एक कन्या थीं। जनकके भाईने राज्यका शासन जनकसे कराया। जनक भी भ्राताकी आज्ञाके अनुसार पूज्य पुरुषोंके ऊपर मर्य्यादाका स्थापन कर राज्यशासन करते थे ॥१०॥

कदाचिज्जनको राजा मनसीत्थमचिन्तयत् ॥ १० ॥ सुखमेव सदा मे स्याद् दुखं मा भूत्कदाचन ॥ दुःखं न वीक्षे नेत्राभ्यां सुखं वीक्षे सदाऽऽत्मनः ॥११॥ असाधुसंमतं वाक्यं श्रुत्वेत्थमुदितं हरिः ॥ दुःखं प्रदर्शयामास राज्यमत्तस्य भूपतेः ॥१२॥

एक समय राजा जनकने मनमें यह सोचा कि मुझे सदा सुख ही हो, दुःख कभी न हो। मैं दुःख कभी आंखोंसे न देखूं, सदा मुझे सुख ही दीखे। श्रीहरिने इस भद्र पुरुषोंके—सज्जनोंके असम्मत वाक्यको सुनकर राज्यमदसे मत्त उस राजाको दुःख ही दिखाया ॥१२॥

कदाचिद्दैवयोगेन कुशकेतुरगान्मृतिम् ॥ हतेऽनुजे च तद्भार्या तेन साकं ममार च ॥१३॥ राज्यं पुत्रांस्ततस्त्यक्त्वा स्वगात्पतिसलोकताम् ॥

दैवयोगसे किसी दिन जनकके भाई कुशकेतु मर गये। उनके मर जानेपर उनकी स्त्री भी उन्हींके साथ, राज्य और पुत्रोंको छोड़कर मर गयी तथा पतिके लोकको गयी ॥१४॥

तौ दम्पती नृपो दृष्ट्वा त्यक्तपुत्रौ सुखोचितौ ॥१४॥ विललाप महाराजो भ्रातरं भ्रातृवत्सलः ॥ हा भद्रे बालकांस्त्यक्त्वा वृद्धं मां जानकीं तथा ॥ १५ ॥ क गच्छसि वरारोहे पतिमालिङ्गय मङ्गले ॥ अशीतिवर्षसाहस्रं सम्प्राप्तं मम भामिनि ॥१६॥ एतावत्कालपर्यन्तं न दृष्टो दुःखसञ्चयः ॥ अद्य दृष्टो वरारोहे त्वद्वियोगेन केवलम् ॥ १७ ॥ इति सञ्चिन्त्य मनसि वारंवारं महीपतिः ॥ चकार प्रेतकार्याणि पुत्राणां चैव शैशवात् ॥१८॥

राजा जनक सुखके अधिकारी उन दम्पतिको मरे देखकर अपने भाईके प्रेममें परवश होकर विलाप करने

---

* वाल्मीकीय रामायण एवं वामन पुराणान्तर्गत श्रीवेङ्कटाचल माहात्म्यके अनुसार कुशकेतुके दो ही कन्याएं थीं और उर्मिला जनकजीकी कन्या थी।

लगे कि "हे कल्याणी ! तुम इन बालकों, मुझ वृद्ध और जानकीको भी छोड़कर पतिको आलिङ्गन कर कहा जा रही हो ? मेरी अवस्था अस्सी हजार वर्षकी हो गयी। आजतक मैंने कभी दुःख-जाल नहीं देखा। आज केवल तेरे वियोगसे यह महा दुःख मैंने देखा है"; और बार-बार ऐसा चिन्तन कर उनके बच्चोंकी अवस्था छोटी होनेके कारण उन मृतकोंका उन्होंने प्रेतसंस्कार किया ॥१८॥

मातृहीनांस्ततो बालानालिङ्ग्याङ्के निधाय च ॥ भोः पुत्रा बालभावे तु मातृहीनाश्च कर्शिताः ॥१९॥ कथं पश्यामि नेत्राभ्यां मातृहीनांश्च बालकान् ॥ इति चिन्तापरः सोऽभूत्त्यक्तराज्योऽतिदुःखितः ॥ २० ॥ त्यक्तान्नस्त्यक्तभोगश्च त्यक्तनिद्रोऽतिकर्शितः ॥ तस्य दुःखोपशान्त्यर्थं शतानन्दः पुरोहितः ॥ २१ ॥ संप्राप्तो दैवयोगेन वामदेवानुजो मुनिः ॥

पुनः उन मातृहीन बालकोंको गोदमें उठा छातीसे लगाकर उन्होंने कहा—"हे पुत्रो ! बाल अवस्थामें ही मातासे शून्य तुम बच्चोंको अपनी आँखोंसे कैसे देखूं ?" ऐसा सोचते हुए राजा जनकने दुःखी हो राज्य, अन्न, भोगविलास एवं निद्राको भी त्याग दिया और बहुत दुर्बल हो गये। दैवयोगसे वामदेवके छोटे भाई पुरोहित शतानन्द राजाकी दुःखनिवृत्तिके लिये वहां आ पहुंचे।

प्राप्तं पुरोहितं दृष्ट्वा राजा पूजामकल्पयत् ॥२२॥ स पूजितो मुनिवरो निविष्टो मृगचर्मणि ॥ ततः कालोचितां वार्तां कथयामास गौतमिम् ॥२३॥

राजाने पुरोहितको देखकर उनकी पूजा की। अनन्तर मुनिवर शतानन्द मृगचर्मपर बैठ गये और राजाने गौतमवंशीय पुरोहितसे समयोचित बात कही ॥२३॥

अथ शतानन्दं प्रति जनककृतस्वशोकनिवृत्त्युपायप्रार्थना

*जनक उवाच—*

शतानन्द महाप्राज्ञ का गतिः स्यादितो मम ॥ वृद्धत्वादात्मनश्चैव पुत्राणां चैव शैशवात् ॥२४॥ कन्यकारत्नबाहुल्याद्धतधन्वो महामुने ॥ बहवः शत्रवः सन्ति रावणेन्द्रजिदादयः ॥२५॥ तेभ्यो युद्धं कथं दास्येऽप्यसहायोऽतिजीर्णवान् ॥ दिवा नक्तं समायाति

रावणः केन हेतुना ॥ २६ ॥ न जाने मुनिवर्याहं प्रज्ञाचक्षुर्न विद्यते ॥ निमित्तमेकं कथितं द्वितीयं प्रवदामि ते ॥२७॥

जनकने कहा—हे महाबुद्धिमान शतानन्द ! अब आगे मेरी क्या गति होगी ? मैं वृद्ध हूं, पुत्र छोटे-छोटे हैं, कन्याओंकी वृद्धि है, भाई मर गये हैं, रावण, इन्द्रजीत आदि बहुतसे मेरे शत्रु हैं। मैं उन शत्रुओंसे युद्ध कैसे करूँगा ? मेरा कोई सहायक नहीं है, मैं शिथिल हूं। आजकल रावण दिनरात क्यों आया करता है ? मैं इस बातका निश्चय नहीं कर सकता, क्योंकि बुद्धिरूपी नेत्र मेरे नहीं हैं। यह तो एक दृष्टान्त ही मैंने कहा और दूसरा भी कहता हूं, उसे सुनिये ॥२७॥

सीतायाश्च सुरूपायाः सुरूपः पुरुषः कथम् ॥ लभ्यते वद विप्रेन्द्र तृतीयं प्रवदामि ते ॥२८॥ दीर्घायुषश्च मे पुत्राः पुत्र्यश्चापि सभर्तृकाः ॥ एकदेशाधिपस्यैव स्नुषास्ताश्च भवन्तु मे ॥२९॥ जामातरश्च चत्वार एकराजसुतास्तथा ॥ वर्धितं चैव मे राज्यं स्वयमेव पुरा हितम् ॥३०॥ केनोपायेन वै भूयात्तदेतत्कारणं वद ॥३१॥

इस सुरूपवती सीताको सुरूप पुरुष कैसे मिलेगा ? तीसरी बात यह कहता हूं कि मेरे पुत्र दीर्घ आयुष्मान्, पुत्रियां सौभाग्यवती और एक ही देशके राजाकी पुत्रवधू होवें और मेरे चारों जामाता ( दामाद ) एक ही राजाके पुत्र हों। और मेरा यह राज्य किस उपायसे स्वयं ही समृद्धशाली हो सो कहिये ॥३१॥

अथ जनकाय शतानन्दोक्तः श्रीवेङ्कटाचलप्रभावः

*शतानन्द उवाच—*

अस्ति कश्चिद्विशेषोऽस्मिन्भूलोके भूमिपालक ॥ दुहितुस्तव कल्याणसुखदं शत्रुनाशनम् ॥३२॥ वैकुण्ठगिरिमाहात्म्यं सभविष्यं सहोत्तरम् ॥ कलौ तत्कीर्तनं पुण्यं सर्वदुःखहरं शिवम् ॥३३॥ धनकामस्य धनदं पुत्रकामस्य पुत्रदम् ॥ रोगार्तस्य च रोगघ्नं ज्ञानिनां ज्ञानसाधनम् ॥ ३४ ॥ तत् श्रुत्वा सर्वलोकेशो ब्रह्मा ब्रह्मपदं गतः ॥ नीलकण्ठस्तु तत् श्रुत्वा निर्विषः सुखमाप्तवान् ॥३५॥ वज्री नाकपदं प्राप्तो यत्कथाश्रवणादरात् ॥ पदान्यापुर्लोकपाला

यत्कथाश्रवणेन वै ॥३६॥ किमुक्तेन विशेषेण तदनन्तफलं शृणु।
इत्युक्तो मुनिना तेन जनको वाक्यमब्रवीत् ॥३७

शतानन्दने कहा—हे राजन्! पृथ्वीपर एक विशेषता है। श्रीवैकुण्ठ पर्वतका भविष्य और उत्तर सहित माहात्म्य तुम्हारी कन्याओंके लिये कल्याण और सुखदायक तथा शत्रुनाशक है। कलियुगमें इस माहात्म्यका कीर्तन पवित्र करनेवाला, सब दुःखोंको मिटानेवाला और मङ्गल करनेवाला है। यह धनेच्छुके लिये धनदाता, पुत्रेच्छुके लिये पुत्रदाता, रोगियोंका रोगविनाशक और ज्ञानियोंके लिये ज्ञानका साधक है, जिसको सुनकर सब लोगोंके स्वामी ब्रह्माने ब्रह्मपद, शङ्करने निर्विघ्न होकर सुख, इन्द्रने स्वर्गलोक तथा सभी लोकपालोंने अपने-अपने पदको पाया है। अधिक कहना क्या है, इसका फल अनन्त है, तुम भी इसको श्रवण करो। मुनिके इतना कहनेपर जनकने कहा॥३७॥

जनक उवाच—

वद वैकुण्ठमाहात्म्यं कलौ तच्चरितं कथम् ॥३८॥

जनक बोले—महात्मन! श्रीवैकुण्ठका माहात्म्य कहिये। कलियुगमें इसका चरित्र कैसा है॥३८॥

शतानन्द उवाच—

कृते वृषाद्रिं वक्ष्यन्ति त्रेतायामञ्जनाचलम् ॥ द्वापरे शेषशैलेति
कलौ श्रीवेङ्कटाचलम् ॥ ३९ ॥ नामानि युगभेदेन शैलस्यास्य
भवन्ति हि ॥ ४० ॥

शतानन्दने कहा - सत्ययुगमें वृषभाचल, त्रेतामें अञ्जनाचल, द्वापरमें शेषाचल और कलियुगमें श्रीवेङ्कटाचल इस प्रकार युगभेदसे पर्वतके विभिन्न नाम हैं॥४०॥

जनक उवाच—

चतुर्युगे त्वया प्रोक्तं नाम यथाद्रिर्मुने ॥ तस्य तस्य च वै
हेतुं विस्तराद्वद मे गुरो ॥ ४१ ॥ कृते वृषाचल इति कथं नाम
भविष्यति ॥ ४२ ॥

जनकने कहा—हे मुने! आपने चारों युगोंमें पर्वतके जो-जो नाम कहे हैं, उन नामोंके कारण विस्तार-पूर्वक कहिये। सत्ययुगमें वृषभाचल नाम कैसे पड़ा॥४२

## अथ वृषभाचलनामनिष्पत्तिः

*शतानन्द उवाच—*

पुरा तु वृषभो नाम राक्षसो रूक्षकर्मकृत् ॥ आक्रम्य शेषशैलं च तापसानप्यबाधत ॥४३॥ तेन सङ्क्लिष्टतपसस्तदर्थं शरणं गताः॥ श्रीनिवासं हृषीकेशं भक्तानामभयङ्करम् ॥ ४४ ॥ तुष्टुवुर्हृष्टमनसः स्रष्टारं सर्वचेतसाम् ॥ प्रादुर्बभूव भगवान्मुनीनां पुरतो हरिः ॥४५॥ व्यज्ञापयन्मुनिश्रेष्ठा असकृत्कृतसंस्तवाः ॥४६॥

शतानन्दने कहा—एक समयमें रूक्ष कर्मोंको करनेवाला वृषभ नामक राक्षस शेषाचलपर आक्रमण कर तपस्वियोंको सताने लगा। उसके द्वारा तपश्चर्यामें विघ्न किये जानेपर मुनिजनोंने भक्तोंके अभयकारी श्रीनिवास हृषिकेशके शरणमें जाकर प्राणिमात्रके स्रष्टा हरिकी स्तुति की और भगवान उन मुनियोंके सम्मुख प्रकट हुए। मुनिवरोंने बारम्बार स्तुति कर उनकी प्रार्थना की ॥४६॥

*मुनय ऊचुः—*

भगवन्नरविन्दाक्ष वृषभो नाम राक्षसः॥ सम्बाधते सदा क्रूर स्तपोभङ्गकरः खलः ॥४७॥ तस्माद्रक्ष क्षरातीत भयाद्राक्षसकल्पितात् ॥ बाढमित्युक्तवान्कृष्णो दुष्टमभ्यद्रवद्रुषा ॥४८॥

मुनिगण बोले—हे कमलनयन भगवन्! तपस्यामें विघ्न करके वृषभ नामक राक्षस हमें बार-बार सताता है। हे क्षरातीत (नाशरहित) अर्थात् अक्षर परमात्मन्! आप इस दुष्ट राक्षसके भयसे हमारी रक्षा कीजिये। श्रीकृष्णने "तथास्तु" कहकर क्रोधके साथ उस दुष्टपर धावा किया ॥४८॥

स राक्षसो महावीर्यस्तीर्थे तुम्बुरुसंज्ञके ॥ स्नात्वा त्रिषवणं पुण्यां शालग्रामशिलां नृप ॥४९॥ नारसिंहात्मिकां दिव्यां सकरालामधोमुखाम् ॥ नित्यमाराधयेयाहमिति निश्चित्य पूजयन् ॥५०॥ पूजान्ते स्वशिरःपुष्पं खड्गेनाहृत्य भूपते ॥ समर्पयामास ततस्तच्छिरः पुनरागतम् ॥५१॥ एवं पञ्चसहस्राणि वर्षाणि विगतानि च ॥ तस्मिन्कालेऽरविन्दाक्षः प्रत्यक्षः समजायत ॥५२॥ शिला-

न्तर्यामी भगवाञ्छ्रीनिवासः सतां गतिः ॥ तमालोक्य हृषीकेशं वृषभो दण्डवद्भुवि ॥५३॥ पपात राजशार्दूल स विसंज्ञामुपेयिवा-न् ॥ मुहूर्तान्ते समुत्थाय प्रत्यभाषत केशवम् ॥५४॥

उस महापराक्रमी राक्षसने तुम्बुरुतीर्थमें त्रिकाल स्नान करके करालमुखी, अधोमुखी, नृसिंहरूपिणी शालग्राम शिलाकी नित्य आराधना करें—ऐसा निश्चय कर आराधना करते हुए पूजाके अन्तमें पुष्पके स्थानमें अपना मस्तक-रूप पुष्प तलवारसे काटकर भगवान्‌को चढ़ा दिया। तुरन्त ही उसको दूसरा मस्तक हो गया। इसी तरह भगवदाराधना करते-करते पांच हजार वर्ष बीत गये। तब कमलनयन, श्रीशालग्राम शिलाके अन्दर वास करनेवाले तथा सत्पुरुषोंको गति श्रीनिवास भगवान् वहांपर स्वयं प्रत्यक्ष हुए। उनको देखकर राजश्रेष्ठ वृषभराज दण्डाकार पृथ्वीपर गिर बेसुध हो गया, और दो घड़ीके पश्चात् उठ खड़ा होकर भगवान्‌से कहने लगा ॥५४॥

वृषभ उवाच—

केशवानन्त गोविन्द श्रीनिवास सुरोत्तम ॥ न च मोक्षं न च स्वर्गं पारमेष्ठ्यपदं हरे ॥ ५५ ॥ न याचे जगतां नाथ युद्धभिक्षां च देहि मे ॥ दशावतारविभवे श्रुतस्ते विक्रमो हरे ॥५६॥ अद्य तं सत्यमाधत्स्व विक्रमं पुरुषोत्तम ॥ देवस्तद्भारतीं श्रुत्वा किञ्चिद्धास्यमुखो हरिः ॥५७॥ उवाच वचनं तं ह राक्षसं युद्धदुर्मदम् ॥ श्रुत्वा तदुक्तवान्कृष्णस्तथास्त्वित्यरिमर्दनः ॥५८॥

वृषभासुर बोला—हे केशव, अनन्त, गोविन्द, श्रीनिवास, देवश्रेष्ठ, जगन्नाथ! न मोक्ष मांगता हूं न स्वर्ग, और न ब्रह्मपद ही, किन्तु मैं युद्धकी भिक्षा मांगता हूं, वही मुझे दीजिये। हे हरे! मैंने दश अवतारोंकी विभूतिमें आपके पराक्रमको सुना है। हे पुरुषोत्तम! उस पराक्रमको आज आप सत्य कीजिये। राक्षसकी इस बातको सुनकर श्रीहरि कुछ हंसे। युद्धके लिये मदान्ध उस राक्षसते शत्रुमर्दन भगवान्‌ने "तथास्तु" कहा ॥५८॥

तयोर्युद्धमभूत्तत्र वृषभश्रीनिवासयोः ॥ यत्कृतं श्रीनिवासेन तत्कृतं वृषभेण च ॥५९॥ तदद्भुतमभूत्तत्र देवानां पश्यतामपि ॥ तद्युद्धकौशलं दृष्ट्वा भगवान्पर्यपूजयत् ॥६०॥

वृषभासुर और श्रीनिवास भगवान्‌का युद्ध ठन गया। श्रीनिवास भगवान्‌ने जो-जो काम किये, वृषभासुरने भी वही काम किये। देखनेवाले देवताओंको भी यह युद्ध परम आश्चर्यपूर्ण मालूम हुई। भगवान्‌ने भी उसका युद्ध कौशल देखकर उसकी सराहना की ॥६०॥

भो राक्षसकुलोत्पन्न पश्य मे पौरुषं बलम् ॥ इत्युक्त्वा दर्शयामास गरुडं विकृताकृतिम् ॥६१॥ तत्रस्थं वासुदेवं च विश्वरूपिणमव्ययम् ॥ सहस्रभुजसंयुक्तं सहस्रायुधभूषितम् ॥६२॥

'हे राक्षसकुलमें उत्पन्न वृषभ ! मेरे अलौकिक बलको देखो'—ऐसा कहकर गरुड़के भयंकर स्वरूप और उसके ऊपर सहस्रबाहु, सहस्रायुधयुक्त तथा विनाशरहित सर्वात्मा वासुदेवको भी दिखलाया ॥६२॥

तन्मायां राक्षसो दृष्ट्वा स्वयं च गरुडं हरिम् ॥ दर्शयन्व्यजयामास स्वमायां सुरमोहिनीम् ॥६३॥

उस वृषभ राक्षसने भी स्वयं मायाके वैसे ही गरुड़ तथा उसके ऊपर परमात्मा नारायण वासुदेवको दिखलाकर देवताओंको मोहनेवाली अपनी माया प्रकट की ॥६३॥

नक्तञ्चरस्य चारितमातिक्रान्तुं क्षमोऽप्ययम् ॥ प्रशंसन्राक्षसं वीरं साधु साध्वित्यभाषत ॥६४॥ रे रे राक्षसवर्याद्य चक्रेण शतनेमिना ॥ हरिष्ये ते शिरः कायाद्यथा पक्वफलं द्रुमात् ॥६५॥ इत्युक्तो देवराजेन वृषभो दण्डवद्भुवि ॥ प्रणिपत्याह विश्वेशमस्तुवद्राक्षसेश्वरः ॥६६॥

उस राक्षसकी मायाको अतिक्रम करनेकी शक्ति रखते हुए भी भगवान्ने उसकी प्रशंसा करते हुए "बहुत अच्छा ! बहुत अच्छा !" कहा। फिर कहा—अरे राक्षस ! अरे राक्षसश्रेष्ठ ! आज अब मैं सौ धारवाले इस चक्रसे तेरे शरीरके मस्तकको वृक्षसे पके हुए फलके समान अलग करूंगा। देवराज भगवान्की यह बात सुनकर वृषभासुर पृथ्वीपर दण्डाकार गिर गया और उन्हें प्रणाम कर उनकी स्तुति करने लगा ॥६६॥

*वृषभ उवाच—*

चक्रपाणे नमस्तुभ्यं चक्रस्य चरितं श्रुतम् ॥ यच्चक्रेण प्रतप्तस्तु मुक्तिमेति न संशयः ॥६७॥ यच्चक्रेण पुरा राजा कीर्तिमान्कीर्तिमाप्तवान् ॥ त्वच्चक्रेण हतो राजन्गच्छामि तव मन्दिरम् ॥६८॥ एवमुक्त्वा हरेः पादौ पस्पर्श वृषभासुरः ॥ वरं ययाचे वृषभः शैलो मदभिधोऽस्त्विति ॥६९॥

वृषभने कहा—हे चक्रपाणि ! आपको नमस्कार है। मैंने चक्रका चरित सुन रखा है, जिस चक्रसे

तपाया हुआ मनुष्य (तप्त चक्र लेनेवाला) अवश्य ही मोक्ष पा जाता है, राजा कीर्तिमान्‌ने जिस चक्रको पाकर उससे अतुल कीर्ति लाभ की। मैं आपके उस चक्रसे मारे जानेपर आपके मन्दिर (श्रीवैकुण्ठ) में जाऊंगा। वृषभासुरने इतना कहकर भगवान्‌का चरण स्पर्श किया और यह वर मांगा कि यह पर्वत मेरे ही नामसे प्रसिद्ध हो ॥६९॥

**समालिङ्गय भवेदेवमित्युक्त्वा हरिणाथ सः ॥ विसृष्टचक्रसं-च्छिन्नस्त्यक्तवान्स्वकलेवरम् ॥७०॥ तस्माद् वृषभशैलोऽयं कृते ख्यातिमुपेयिवान् ॥७१॥**

भगवान्‌ने वृषभासुरको छातीसे लगाकर प्रेमपूर्वक कहा—"ऐसा ही होगा।" फिर भगवान् द्वारा प्रेरित चक्रसे कटे हुए वृषभासुरने अपना शरीर त्याग किया। इस कारण सत्ययुगमे यह पर्वत "वृषभाचल" नामसे विख्यात हुआ ॥७१॥

### अथ त्रेतायुगेऽञ्जनाचलनामनिष्पत्तिः

*जनक उवाच—*

**कथमञ्जनशैलेति त्रेतायां नाम मे वद ॥७२॥**

### अथ त्रेतायुगमें अञ्जनाचल नामकी संसिद्धि

जनकने पूछा—त्रेतायुगमें पर्वतका नाम अञ्जनाचल क्यों हुआ, सो कहिये ॥७२॥

*शतानन्द उवाच—*

**पुरा केसरिणः पत्नी ह्यञ्जना कञ्जलोचना ॥ अनपत्यत्वदुःखेन मतङ्गमुनिमागमत् ॥७३॥ आनम्य मुनिशार्दूलमनपत्यातिकर्शिता ॥ उवाच वचनं नेत्रनीरसिक्तकलेवरा ॥७४॥**

शतानन्दने कहा—एक समय केशरीकी स्त्री कमलनयनी अञ्जना पुत्रहीनताके दुःखसे व्याकुल होकर मतङ्ग मुनिके पास आयी। वह मुनिवरको नमस्कार करके सन्तानहीनताके दुःखसे दुःखी तथा स्वेदसे तर होकर यह कहने लगी ॥७४॥

*अञ्जनोवाच—*

**अहो तापसशार्दूलापुत्राया मम का गतिः ॥ एवमुक्तोऽञ्जनादेव्या मतङ्गो वाक्यमब्रवीत् ॥७५॥**

अञ्जनाने कहा—हे तपस्विश्रेष्ठ ! मैं पुत्रहीना हूं, मेरी गति क्या होगी ? अञ्जनादेवीके इस वचनको सुनकर मतङ्ग ऋषिने कहा ॥७५॥

*मतङ्ग उवाच—*

पम्पायाः पूर्वदिग्भागे पञ्चाशद्योजनान्तरे ॥ नरसिंहाश्रमो देवि वर्तते वसुधातले ॥७६॥ तस्य दक्षिणदिग्भागे नारायणगिरेस्तटे ॥ उत्तरे स्वामितीर्थस्य वर्तते क्रोशमात्रके ॥७७॥ वियद्गङ्गेति विख्याता तत्र गच्छ यथासुखम् ॥ तत्र स्नात्वाऽथ कल्याणि ! द्वादशाब्दं तपश्चर ॥७८॥ तेन पुण्येन ते पुत्रो भविष्यति गुणाधिकः ॥

मतङ्गने कहा—पृथ्वीपर पम्पासरोवरसे पचास योजन पूर्व नरसिंह आश्रम है, उसकी दक्षिण दिशामें नारायणाचलके किनारे स्वामितीर्थके उत्तर कोसभरपर आकाशगङ्गा नामक एक विख्यात तीर्थ है। हे कल्याणि ! तुम सुखपूर्वक वहां जाओ, उसमें स्नान करो और बारह वर्षतक तपस्या करो। इस पुण्यसे तुमको गुणवान पुत्र होगा ॥७६॥

मतङ्गेनैवमुक्ता सा नारायणगिरिं ययौ ॥७९॥ कृत्वा स्वामिसरःस्नानमश्वत्थस्य प्रदक्षिणम् ॥ वराहरूपिणं नत्वा पीत्वा तत्सलिलं शुभम् ॥८०॥ आकाशगङ्गामासाद्य तपः कर्तुं प्रचक्रमे ॥ मुनींश्चामन्त्र्य भर्तारं व्रतार्थं भक्ष्यवर्जिता ॥ ८१ ॥ उपवासरता बाला बाह्यभोगविवर्जिता ॥ ८१ ॥ काष्ठवत्पर्यवस्थाप्य शरीरं स्वात्मनः शुचिः ॥८२॥

मतङ्ग मुनिकी इस वाणीको सुनकर अञ्जनादेवी नारायण पर्वतपर गईं। वहां उन्होंने स्वामि-सरोवरमें स्नान, अश्वत्थकी प्रदक्षिणा, वराहभगवान्‌को नमस्कार तथा सरोवरका पवित्र जलपान करके आकाशगङ्गामें जाकर, पति तथा मुनिवरोंकी आज्ञा पा, उपवासमें अनुरक्त और बाह्य भोगोंसे वर्जित होकर, अपने पवित्र शरीरको काष्ठके समान कड़ा करके तपस्या करनी आरम्भ की ॥८२॥

पूर्णे संवत्सरे जाते वायुदेवो महाबलः ॥ फलमाहृत्य भक्ष्यार्थं प्रत्यहं ह्यददान्मरुत् ॥ ८३ ॥ अथैकस्मिन्दिने वायुः फले वीर्यमपूरयत् ॥ वीर्यगर्भं फलं तस्याः प्राक्षिपत्करसम्पुटे ॥७४॥ फलं सा

मन्यमाना हि क्षुधार्ता तदभक्षयत् ॥ ततो गर्भः समुदभूदञ्जना-
याश्च भूमिप ॥८५ ॥

इस प्रकार एक वर्ष समाप्त होनेपर महाबल वायुदेव उनको प्रतिदिन आहारके लिये फल लाकर देने लगे। एक दिन वायुने उनको देनेके फलमें अपना वीर्य भर दिया और वह वीर्य-गर्भफल उनकी अञ्जलिमें दे दिया। वह भूखी तो थीं ही, उसको फल ही समझकर खा गईं। हे राजन्! तब अञ्जनाके गर्भधारण हो गया ॥८५॥

मुनीनामभवद्धर्षो वायुगर्भसमुद्भवः ॥ अथ सा दशमासान्ते
सुषुवे पुत्रमुत्तमम् ॥ ८६ ॥ हनूमन्तमिमं प्राहुर्मुनयो वीतक-
ल्मषाः ॥

वायुदेवसे गर्भोत्पत्ति जानकर मुनिजनोंको परम हर्ष हुआ। दस महीने पूरे होनेपर अञ्जनाने उत्तम पुत्र उत्पन्न किया। निष्पाप मुनिवरोंने उस पुत्रका नाम हनूमान रक्खा ॥८७॥

अञ्जना व्रतमास्थाय पुत्रं प्राप गिरीश्वरे ॥ ८७ ॥ तस्मादञ्जन-
शैलोऽयं लोके विख्यातकीर्तिमान् ॥८८॥

इस पर्वतश्रेष्ठपर अञ्जनाने व्रतधारण कर पुत्र पाया, इसलिये यह पर्वत अञ्जनाद्रि—नामसे प्रसिद्ध हुआ ॥८८॥

अथ द्वापरयुगे शेषाचलनामनिष्पत्तिः

जनक उवाच—

सन्तोषो ह्यभवन्मह्यं श्रुत्वा तन्नामकारणम् ॥ द्वापरे शेषशैलेति
कथं ख्यातिर्भविष्यति ॥ ८९ ॥

अथ द्वापरयुगमें शेषाचल नामकी संसिद्धि

जनकने कहा—इस नामकी संसिद्धिका कारण सुनकर मेरा मन बहुत ही प्रसन्न हुआ। अब आप यह कहिये कि द्वापरमें इस पर्वतका नाम शेषाचल क्यों हुआ ॥८९॥

शतानन्द उवाच—

पुरा वैकुण्ठनगरे द्वारि शेषं समादिशत् ॥ जानन्भगवतो भावं
सोऽतिष्ठद्द्वाविकर्मणि ॥९०॥ चिकीर्षिते मारुतेन द्वारि जाग्रत्कुत-

## वायु और आदिशेषका वाक् युद्ध [ पृष्ठ २८६ ]



तयोर्विवादो ह्यभवच्छेषवाय्वोर्महात्मनोः ।
लक्ष्म्यावबोधितः श्रीमानुत्तस्थौ गरुडध्वजः ॥
किमर्थं क्रोशसे शेष कः पुमानागतः परः ।

हली ॥ देवाधिदेवो भगवान्रेमे च रमया सह ॥९१॥ तस्मिन्काले महाराज मारुतस्तु कदाचन ॥ अकस्मात्कारणात्प्राप्तो भगवन्तं जनार्दनम् ॥९२॥ द्वारे तं रोधयामास रुक्मदण्डेन सर्पराट् ॥ किमर्थं रुध्यते मूर्ख कार्यस्य महती त्वरा ॥९३॥ इत्युक्ते वायुना शेष उवाच वचनं पुनः ॥९४॥

शतानन्दने कहा—एक समय वैकुण्ठ नगरमें श्रीभगवान्‌ने शेषजीको दरवाजेपर बैठनेकी आज्ञा दी। तदनुसार शेषजीने वायु द्वारा किये जानेवाले भविष्यकर्ममें भगवान्‌के अभिप्रायको समझकर जागते हुए कौतूहलसे द्वारपर पहरा देना प्रारम्भ किया। उधर देवाधिदेव श्रीविष्णु भी श्रीलक्ष्मीके साथ विहार कर रहे थे। उसी समय अकस्मात् वायुदेव वहाँ भगवान्‌के पास (जानेके लिये) आये। नागराजने सोनेकी छड़ीसे वायुको द्वारपर रोक दिया। "अरे मूर्ख! मुझे क्यों रोकता है? मुझे कार्य करनेकी बड़ी शीघ्रता है।"—ऐसा वायुदेवसे कहे जानेपर शेषने उत्तर दिया ॥९४॥

शेष उवाच—

अहमाज्ञाधरो विष्णोर्मा त्वमन्तःपुरं गमः ॥ इति तस्य वचः श्रुत्वा जगत्प्राणोऽब्रवीदिदम् ॥९५॥

शेषने कहा—मैं विष्णुकी आज्ञा मानकर बैठा हूँ, तुम भीतर मत जाओ। शेषके इस वचनको सुनकर जगत्प्राण वायुने कहा ॥९५॥

वायुरुवाच—

जयस्तु विजयश्चैव संप्राप्तौ मुनिभिः पुरा ॥ अहङ्कारेण तौ जातौ कुम्भकर्णदशाननौ ॥९६॥ विस्मृता किं त्वया मूर्ख द्वारपत्ये नियोजितौ ॥ तद्वाक्यान्ते च राजेन्द्र प्रजज्वाल विषोल्बणः ॥९७॥ गर्हयन्वचनैस्तीक्ष्णैर्जगत्प्राणमहीश्वरः ॥९८॥

वायु बोले—पहले जय-विजय पार्षद अपने अहङ्कारके कारण सनकादि मुनियोंसे शाप पाकर रावण तथा कुम्भकर्ण नामक राक्षस हुए थे। अरे मूर्ख! क्या तू उस बातको भूल गया? वे भी तेरे ही नाईं द्वारपालके कामपर नियुक्त हुए थे। इस वाक्यको सुनते ही विषसे भरे हुए नागराज जगत्प्राण वायुदेवको कड़ी-कड़ी बातोंसे अपमानित करते हुए जल उठे ॥९८॥

*शेष उवाच—*

किं गरिष्ठं वचः प्रोक्तं जीवनेच्छा न विद्यते ॥ कालेनानुगतो लोको नैव जानाति मोहितः ॥ ९९ ॥ त्वं तादृङ् नरवद्दण्ड्यो वृथा मोहात्प्रभाषसे ॥ बले ज्ञाने विरागे च विष्णुभक्तो न मत्समः ॥१००॥ सदा मेऽन्तःपुरे वासः पुत्रादप्यधिको हरेः ॥ लोकानां च हितार्थाय हितार्थं जगदीशतुः ॥१०१॥ स्थापितोऽस्मि द्वारपत्ये लक्ष्म्या नारायणेन च ॥

शेषने कहा — क्यों घमण्डकी बातें करता है ! क्या जीनेकी आशा नहीं है ? जिसका काल आ जाता है वह मोहित होकर कुछ भी नहीं जानता । तू मोहवश व्यर्थ बोलता है । इसलिये तू भी वैसे ही मनुष्यकी तरह दण्ड देनेके योग्य है । सुनो, बल, ज्ञान और वैराग्यमें मेरे बराबर विष्णुभक्त कोई भी नहीं है । मेरा निवास सदा अन्तःपुरमें है । मैं श्रीहरिको पुत्रसे भी अधिक प्यारा हूं । लोक और भगवान्‌के हितके लिये द्वारपालके कामपर स्वयं लक्ष्मी और नारायणसे रखा गया हूं ॥१०२॥

*वायुरुवाच—*

विडालोऽन्तःस्थितो वापि बहिष्ठेभसमो न हि ॥ शयानं रत्नपर्यङ्के राजानमपि सेवते ॥१०३॥ कश्चिद् दूतो नियुक्तस्तु पर्यङ्काधिष्ठितः स्वयम् ॥ किमाधिक्यं तस्य शेष पुत्रे का न्यूनता वद ॥१०४॥ तयोर्विवादो ह्यभवच्छेषवाय्वोर्महात्मनोः ॥ लक्ष्म्यावबोधितः श्रीमानुत्तस्थौ गरुडध्वजः ॥१०५॥ किमर्थं क्रोशसे शेष कः पुमानागतः परः ॥ इत्युक्तो देवदेवेन फणिराजोऽभ्यभाषत ॥ १०६ ॥

वायुने कहा—सुनो, बिल्ली घरके भीतर रहनेसे भी बाहर रहनेवाले हाथीके बराबर नहीं होती। एक सेवक रत्नके पलङ्गपर सोनेवाले राजाकी प्रेरणासे स्वयं पलंगपर बैठकर सेवा करता है। भला शेष ! बतलाओ तो, उस सेवकमें और पुत्रमें क्या आधिक्य या न्यूनता है । इस प्रकार शेष और वायु इन दोनों महात्माओंमें विवाद होने लगा, और (उधर) लक्ष्मीजीसे जगाये जानेपर गरुड़ध्वज भगवान् उठे। "शेष ! क्यों, हल्ला मचा रहे हो ? कौन दूसरा मनुष्य आया है ?"—ऐसा भगवान्‌से पूछे जानेपर शेषजीने कहा ॥१०६॥

शेष उवाच—

मलयाचलवासस्तु वायुरत्यन्तगर्वितः ॥ अकालेऽन्तःपुरं शीघ्रं प्रवेष्टुं च समुद्यतः ॥१०७॥ अवाच्यवचनं प्रोक्तमनेनात्यन्तमानिना ॥ इत्याहूतः फणीन्द्रेण भावज्ञेन तथा हरिः ॥१०८॥ संज्ञापयन्निजं भावमिङ्गितैर्द्वारमाययौ ॥

शेषने कहा—मलयाचलनिवासी वायु बड़ा घमण्डी हो गया है। असमयमें ही आपके अन्तःपुरमें घुसने लगा। इतना ही नहीं, इस महा अभिमानीने बहुतसे अवाच्य वचन भी कहे हैं। भगवान्के अभिप्रायके ज्ञाता शेषजीने यह कह भगवान्को बुलाया। अपने अभिप्रायको इङ्गितद्वारा प्रकट करते हुये भगवान् वहाँ आये ॥१०८॥

एतस्मिन्नेव काले तु साष्टाङ्गं प्रणिपत्य तम् ॥१०९॥ वायुस्तुष्टाव पुरुषं पुराणं वेदगोचरम् ॥ वायुमालोक्य वचनं वारिजाक्षोऽब्रवीत्स तम् ॥११०॥

उस समय वायुने वेदवेद्य पुराणपुरुष प्रत्यक्ष नारायणको साष्टांग नमस्कार कर स्तुति की। कमलनयन हरिने वायुको देखकर कहा ॥११०॥

श्रीभगवानुवाच—

किमर्थं कलहः पुत्र शेषेणात्यन्तमानिना ॥ इत्थं हरेर्वागमृतं पीत्वा कर्णपुटद्वयात् ॥१११॥ तूष्णीं बभूव नृपते वायुरत्यन्तभक्तिमान् ॥११२॥

श्रीभगवान्ने कहा—हे पुत्र! इस महाभिमानी शेषके साथ कलह क्यों कर रहे हो? इस प्रकार हरिकी वाणीरूपी अमृतको दोनों कानोंसे पीकर अति भक्तिमान् वायु चुप हो गये ॥११२॥

शेष उवाच—

अहं समर्थो भगवन्बले ज्ञाने तव प्रिये ॥ मत्समो नास्ति भूलोके नाके वा ब्रह्मसद्मनि ॥११३॥ सरीसृपवचः श्रुत्वा प्रहसन्फणिनं हरिः ॥ साधु साध्विति सम्भाव्य चोवाच फणिनां पतिम् ॥११४॥

शेषने कहा—मैं बल और ज्ञानमें आपके प्रियजनोंमें श्रेष्ठ हूं। मेरे समान भूलोक, स्वर्ग एवं ब्रह्मलोकमें

दूसरा नहीं है। श्रीहरिने शेषके इस वचनको सुनकर मुस्कुराते हुए उनसे "साधु—साधु !!" ऐसा सम्मानपूर्वक प्रशंसा करते हुए कहा ॥११४॥

*श्रीभगवानुवाच—*

न वाङ्मात्रेण पौरुष्यं क्रिया केवलमुत्तरम् ॥ बलाबले परीक्षन्तां देवाश्चेन्द्रपुरोगमाः ॥११५॥ अत्रैवोत्तरदिग्भागे पर्वतं मेरुनन्दनम् ॥ स्वकायरज्जुना बद्ध्वा बलं ते यावदस्ति हि ॥११६॥ तावतैव बलेन त्वं संयुक्तः सुस्थिरात्मना ॥ तिष्ठ भद्र महाभाग विषफूत्कारशुम्भितः ॥११७॥

श्रीभगवानने कहा —केवल वाणीहीसे पौरुष निश्चित नहीं होता, किन्तु क्रिया ही इसका उत्तर है। तुम दोनोंके बलाबलको इन्द्रादि देवता परीक्षा कर देखें। यहांपर उत्तर दिशाकी ओर सुमेरु पर्वतका पुत्र एक पर्वत है। हे भद्र ! तुम्हारे अंगमें जितनी शक्ति हो, उतनी शक्तिसे अपने शरीर-रूपी रस्सी द्वारा उस पर्वतको लपेटकर, अपने विषको फूंकते हुए, स्थिरतापूर्वक निश्चल बने रहो ॥११७॥

हृषीकेशवचः श्रुत्वा हृष्टपुष्टाङ्गविग्रहः ॥ स्वकायरज्जुना बध्नानान्दाद्रिमहीश्वरः ॥ ११८ ॥ स्थिरो बभूव चामन्त्र्य वायुं वेगवतां वरम् ॥

श्रीविष्णुके इस वचनको सुनकर शेषजीने अपने अंगोंको हृष्ट-पुष्ट करके उस आनन्द पर्वतको अपने शरीर-रूपी रस्सीसे बांध लिया; तथा वे वेगवानोंमें श्रेष्ट वायुको युद्धके लिये बुलाकर स्थिर हो गये ॥११६॥

तमालोक्याग्निदायितः पर्वतं तमुपागतः ॥११६॥ आज्ञया वासुदेवस्य देवानां पश्यतां सताम् ॥ स्वस्मिन्भगवतः प्रीतिं मत्वातिशयितां मरुत् ॥१२०॥ मदोद्धतो महावेगं चक्रे पर्वतचालने ॥ न चकम्पे गिरिः किञ्चिदपि शेषेण वेष्टितः ॥१२२॥ ततोऽपि सुमहावेगं चक्रे वायुः प्रकोपनः ॥१२३॥

भगवान् विष्णुकी आज्ञासे सब देवताओंके देखते-देखते अग्निके सखा वायुने समीप आकर उनको देखा तथा अपने ऊपर भगवान्‌की अधिक प्रीति जानकर मदोन्मत्त हो, उस पर्वतको उखाड़नेके लिये बहुत जोर लगाया। किन्तु शेषजीके द्वारा लपेटा हुआ वह पर्वत थोड़ा भी नहीं हिला, तब वायुने क्रुद्ध होकर पहलेसे भी अधिक जोर लगाया ॥१२२॥

## वायु का क्रीड़ाचलको उठाना [ पृष्ठ २८६ ]



ततः प्रकुर्वतो वेग मारुतस्य महात्मन.।
महावेगस्य सपर्कात् पर्वतो भोगिसंयुत.॥
योजनान्यतिरयाणि दक्षिणाभिमुखो ययौ।

संस्पर्धमानयोरित्थं शेषवाय्वोर्महात्मनोः ॥१२२॥ हाहाकारो जगत्यासीद्धरोत्तरिते तदा ॥ ततो ब्रह्मादिभिर्देवैर्याचितोऽपि यदा मरुत् ॥१२३॥ प्रपदे न शमं किञ्चित्तदाऽसौ फणिनां पतिः ॥ जानन्भगवतश्चापि भावं देवांश्च तोषयन् ॥ १२४ ॥ कचित्फणान्तरं किञ्चित् श्लथयामास वै विभुः ॥

इस प्रकार शेष और वायु दोनों महात्माओंकी पारस्परिक स्पर्धाके कारण संसारमें उथल-पुथल होनेसे हा-हाकार मच गया। फिर ब्रह्मादि देवताओंके द्वारा प्रार्थना किये जानेपर भी जब वायु शान्त न हुए, तब नागराजने भगवान्‌के भावोंको जानकर देवताओंको सन्तुष्ट करते हुए अपने हजार फणोंमेंसे किसी एक फणको थोड़ा-सा ढीला कर दिया ॥१२५॥

ततः प्रकुर्वतो वेगं मारुतस्य महात्मनः ॥१२५॥ कनिष्ठाङ्गुलिमात्रं तु प्रदेशे श्लथबन्धने ॥ महावेगस्य सम्पर्कात्पर्वतो भोगिसंयुतः ॥१२६॥ योजनान्यतिलक्षाणि दक्षिणाभिमुखो ययौ ॥

अनन्तर महात्मा वायुके वेगसे कनिष्ठिका ( छोटी ) अंगुलीहीके वल बराबर बन्धन ढीला हो गया और ओर करते हुए महावेग भगवान् वायुके सम्पर्क-मात्रहीसे वह पर्वत शेष सहित वहांसे लाखों योजन दूर दक्षिणकी ओर उड़ गया ॥१२७॥

मेरुस्तुष्टाव नृपते बलदेवं महाबलम् ॥१२७॥ त्रायतां त्रायतां स्वामिन्पुत्रं बालं भवान्मम ॥ एवमुक्तो मेरुणाऽयं तत्पुत्रं पर्यपालयत् ॥१२८॥ स्वर्णमुख्या महानद्याः प्रतीरे च तथोत्तरे ॥ स्थापयामास राजेन्द्र गिरिराजं सपन्नगम् ॥१२९॥

मेरुने पुत्रके लिये बलदेव ( वायु ) की स्तुति की, कि हे स्वामिन्! मेरे बालक पुत्रकी रक्षा कीजिये! रक्षा कीजिये! यह सुनकर वायुने उस मेरुपुत्र पर्वतकी रक्षा की। उन्होंने शेष सहित उस पर्वतको उत्तरकी ओर सुवर्णमुखी नदीके पश्चिम किनारे रख दिया ॥१२९॥

ततो वायुं सुरगणा बोधयामासुरादरात् ॥ अयं शेषांशजो वायो शैलः शैलात्मजेश्वरः ॥१३०॥ हरेः सञ्चोदनेनैव जातः

स्वावासहेतवे ॥ व्याजेनैव त्वया नीतस्तेन स्वर्णमुखीतटम् ॥१३१॥ त्वत्संवादच्छलेनैष स्वस्थानात्खानितोऽहिना ॥ मायावी भगवा-न्नित्थं केवलं त्वां व्यमोहयत् ॥१३२॥ तदद्य फणिराजं त्वमन्तरङ्गं हरेरिमम् ॥ प्रसादयापराद्धोऽसि वृथा तस्मिन्महात्मनि ॥१३३॥

फिर देवताओंने प्रेमके साथ वायुको समझाया कि हे वायु ! यह शैलात्मजेश्वर पर्वत शेषके अंशसे उत्पन्न है, भगवान्के आवासके लिये उनकी प्रेरणासे प्रकट हुआ है। इस विवादके छलसे भगवान्ने तुम्हारे द्वारा इसको यहां इस नदीके तीरपर ला रक्खा है। तुम्हारे संवादके मिससे शेषने इसे उखाड़ा तथा मायावी विष्णुने इस प्रकार तुमको मोहित किया। इसलिये अब तुमको उचित है कि श्रीविष्णुके अन्तरंग (भीतरी मित्र) शेषजीकी प्रार्थना कर उन्हें प्रसन्न करो। उस महात्माके ऊपर कोप कर तुमने व्यर्थ ही अपराध किया है ॥१३३॥

इति सम्बोधितो देवैर्हितकाङ्क्षिभिरादरात् ॥ शेषं गतमदः प-श्चात्तुष्टाव मरुतां पतिः ॥१३४॥ क्षमस्व मम दौरात्म्यमज्ञानेना-गतं विभो ॥ त्वयीह भगवान्साक्षादागमिष्यति वै हरिः ॥१३५॥ मयाऽपचरितं मौर्ख्यान्महाभागे वृथा त्वयि ॥ इत्थं प्रसादयामास फणिराजं तदा मरुत् ॥१३६॥ निर्वैरत्वात्प्रसादं स चकार मरुति स्वयम् ॥

देवताओंके इस तरह समझानेपर वायुका मद नष्ट हो गया तथा वह शेषजीकी स्तुति करने लगे कि हे प्रभु ! अज्ञानवश की हुई मेरी दुष्टताको आप क्षमा कीजिये। यहां आपके ही ऊपर श्रीहरि स्वयं वास करेंगे। मैंने मूर्खतासे वृथा ही आप महात्माके साथ अपराध किया है। वायुने इस प्रकार उस समय शेषजीको प्रसन्न कर लिया और क्रोध नहीं होनेसे शेषजीने वायुपर स्वयं कृपा की ॥१३७॥

इत्थं शेषांशजं शैलं शेषेण परिवेष्टितम् ॥१३७॥ स्वावासहेतो-र्हरिणा वाहितं वायुना छलात् ॥ राजञ्छेषनिमित्तेन शेषाचलमिमं विदुः ॥१३८॥

हे राजन् ! इस प्रकार (वायु और शेषमें परस्पर स्पर्धा होनेके कारण) अपने निवासके लिये श्रीहरिने वायुसे मंगवाकर शेषसे लपटे हुए इस पर्वतको यहां स्थापित कराया। इसमें शेषजीके निमित्त होनेके कारण इस पर्वतका नाम शेषाचल हुआ ॥१३८॥

अथ कलियुगे श्रीवेङ्कटाचलनामनिष्पत्तिप्रकारः

*जनक उवाच—*

कलौ वेङ्कटशैलेनि कथं नाम महामुने ॥१३९॥

अथ कलियुगमें श्रीवेङ्कटाचल नामकी संसिद्धि

जनकने पूछा—हे महामुनि ! कलियुगमें इस पर्वतका नाम श्रीवेङ्कटाचल क्यों हुआ ॥१३९॥

*शतानन्द उवाच—*

पुरा पुरन्दरो नाम सोमयाजी दृढव्रतः ॥ कालहस्त्याख्यनगरे सत्यवाग्ब्राह्मणोऽभवत् ॥१४०॥ अपुत्रस्यापि विप्रस्य नाभूद् दुःखं सुताप्तये ॥ दैवेन पूर्वपुण्येन वृद्धस्यास्य सुतोऽभवत् ॥१४१॥ चकार नाम्ना स सुतं माधवं विप्रसंसदि ॥ पित्रोपनीतो बालस्तु ववृधे चन्द्रवन्नृप ॥१४२॥ वेदवेदाङ्गतत्त्वज्ञः सर्वविद्याविशारदः ॥

शतानन्दने कहा—पहले कालहस्तिक्षेत्रमें सोमयज्ञ करनेवाला, दृढप्रतिज्ञ, सत्यभाषी, पुरन्दर नामक एक ब्राह्मण था। पुत्रहीन होनेपर भी वह पुत्र पानेके लिये दुःखी नहीं था। दैववश पूर्वपुण्यसे इस ब्राह्मणको वृद्धावस्थामें पुत्र हुआ। ब्राह्मणोंकी सभामें उस पुत्रका नाम उसने माधव रक्खा। पिताके द्वारा समयपर उपवीत-संस्कार पाकर, वेद और वेदाङ्गोंके तत्त्वका ज्ञाता, सकल विद्याओंमें दक्ष वह बालक चन्द्रमाके समान बढ़ने लगा ॥१४३॥

ततः कालान्तरे पुत्रं सदारं तं चकार ह ॥१४३॥ स चन्द्रलेखया रेमे बहुकालञ्च माधवः ॥ पञ्चयज्ञपरो नित्यं पञ्चाननसमद्युतिः ॥१४४॥ त्रिःसप्तवर्षो रेजे स द्वितीय इव भास्करः ॥

फिर कुछ समय बीतनेपर उस ब्राह्मणने पुत्रका विवाह कर दिया। वह माधव अपनी स्त्री चन्द्रलेखाके साथ बहुत कालतक विहार करता रहा। वह सदा पञ्चयज्ञ करनेवाला, सिंहके समान तेजस्वी, कान्तिमान् एवं इक्कीस वर्षकी अवस्थावाला दूसरे सूर्यके ऐसा तेजस्वी था ॥१४५॥

सा कन्या पाण्ड्यदेशीया पाण्ड्यानां च तथा प्रिया ॥१४५॥ पत्यौ सुप्ते स्वयं शिश्ये पत्यौ भुक्ते त्वभुङ्क्त च ॥

पाण्ड्य देशके लोगोंकी प्यारी, पाण्ड्यराजकी कन्या, वह चन्द्रलेखा पतिके सो जानेपर सोती और पतिके भोजन करनेपर भोजन करती थी ॥१४६॥

कदाचिद् द्विजपुत्रस्तु दिवा सङ्गमतत्परः ॥१४६॥ राजपुत्रीं समासाद्य राजन्कामातुरोऽब्रवीत् ॥ ममेच्छा वर्तते भद्रे सङ्गमे तव भामिनि ॥१४७॥ पतिवाक्यमुपाकर्ण्य पतिं प्राह प्रजापते ॥१४८॥

हे राजन ! किसी दिन अकस्मात् उस ब्राह्मणकुमारने कामातुर हो दिनमें ही सम्भोगकी इच्छासे राजकन्याके पास जाकर कहा कि हे भद्रे ! हे भामिनि ! मेरी इच्छा तेरे साथ संग करनेकी है । पतिके वचनको सुनकर उसने कहा ॥१४८॥

चन्द्रलेखोवाच—

शरीरमस्थिमांसाद्यैः पूरितं पुरुषर्षभ ॥ शरीरेण शरीरस्य संगमः साध्वसम्मतः ॥ १४९ ॥ तत्रापि दिवसक्रीडामयुक्तां मुनयो विदुः ॥ निकेतने पिता माता चाग्निहोत्रश्च देवराट् ॥ १५० ॥ प्रभाकरप्रभां पश्य त्यज कामं द्विजात्मज ॥ वधूवचनमाकर्ण्य माधवो वाक्यमब्रवीत् ॥१५१॥

चन्द्रलेखाने कहा—हे पुरुषश्रेष्ठ ! यह शरीर हड्डी, मांस इत्यादिसे भरा हुआ है। शरीरके साथ शरीरका संग सज्जन पुरुषों द्वारा सम्मत नहीं है । उसमें भी दिनके सम्भोगको मुनिवरोंने अयोग्य कहा है । घरमें पिता हैं, माता हैं, अग्निहोत्र तथा इन्द्र हैं । सूर्यदेवकी ज्योतिको देखिये और कामका त्याग कीजिये । स्त्रीके इस वचनको सुनकर माधवने यह बात कही ॥१५१॥

माधव उवाच—

भव भामिनि सौख्यं मे पूरयाद्य मनोरथम् ॥ तव स्यात्पुत्रसौभाग्यं परं पतिसलोकता ॥ १५२ ॥ भर्तुर्वचनमाकर्ण्य भर्तारं वाक्यमब्रवीत् ॥१५३॥

माधव बोला—हे भामिनि ! तुम मेरे सुखका कारण होओ तथा मेरे मनोरथको पूरा करो । तुमको पुत्र होनेका सौभाग्य और पीछे पतिके लोककी प्राप्ति होगी । पतिके वचनको सुनकर स्त्रीने पतिसे कहा ॥१५३॥

चन्द्रलेखोवाच—

गच्छामि जलहेतोस्तु गच्छ त्वं पुरतो मम ॥ तदा जगाम

राजेन्द्र कुशार्थं स स्वभावतः ॥१५४॥ सा जगामाथ पानीयपात्र-
मादाय भामिनी ॥ तामन्वगान्माधवोऽपि वटकूटमभिद्रुतः॥१५५॥
तत्रान्तरे विप्रपुत्रो ददर्शान्यां स्त्रियं पुनः ॥ वनान्तरे वसन्ते
च वसन्तीं द्रुममूलगाम् ॥१५६॥ धवलाम्बरसम्बद्धां कटिमेखल-
यान्विताम् ॥ सुनासां सुभगां सुभ्रूं नीलालकविराजिताम् ॥१५७॥
मुमोह विप्रस्तां दृष्ट्वा सुवर्णां सुपयोधराम् ॥ स्निग्धकञ्चुकसम्बद्धां
कोकिलस्वररञ्जिताम् ॥ १५८ ॥ अञ्जनालिप्तनयनामन्त्यजां नाम
कुन्तलाम् ॥ पादेन विलिखन्तीं गां जानुस्थितशिरोरुहाम् ॥१५९॥
दृष्ट्वा खिन्नमना भूत्वा चिन्तयन्ब्रह्मनिर्मितम् ॥ स भार्यां प्रत्युवा-
चेदं गच्छ प्राणप्रिये गृहम् ॥ इच्छा मे पूर्णतां प्राप्ता त्वद्भक्त्या
परितुष्यतः ॥ १६० ॥

चन्द्रलेखाने कहा—मैं पानीके लिये ( कहकर ) जाऊंगी, आप मेरे आगे चलिये। हे राजेन्द्र ! तब वह स्वाभाविक रीतिसे कुश लेनेको चला। वह स्त्री भी जलके पात्रको लेकर चली। माधव भी उस स्त्रीके पीछे-पीछे वटके वृक्षकी छायामें शीघ्रतासे दौड़ा। इतनेहीमें उस ब्राह्मणकुमारने वनान्तरमें वसन्तऋतुमें पेड़के नीचे बैठी हुई, स्वेत वस्त्र पहने, कमरमें मेखला ( करधनी ) से युक्त, सुन्दर नासिका एवं भौंवाली, सुहागिनि एवं काले केशासे शोभित एक दूसरी स्त्रीको देखा। वह ब्राह्मण उस सुन्दर वर्णवाली, कंचुकी ( चोली ) से कसे हुए सुन्दर स्तनवाली, कोयल-सी मीठी-स्वरवाली तथा आँखोंमें अञ्जन लगायी हुई कुन्तला नामकी एक अन्त्यज ( चाण्डाल ) की स्त्रीको देखकर मोहित हो गया। पैरसे पृथ्वीको खोदती हुई, घुटनोंतक पहुंचे हुए केशवाली उस स्त्रीको देखकर उसने ब्रह्माकी कृतिके बारेमें दुःखित मनसे सोचते-सोचते अपनी स्त्रीसे यह कहा—हे प्राण-प्रिये ! तेरी भक्तिसे सन्तुष्ट होकर मेरी इच्छा पूरी हो गयी, तुम घरको जाओ ॥१६०॥

चन्द्रलेखोवाच—

युक्तमुक्तं त्वया भद्र गच्छामि भवनं स्वकम् ॥

चान्द्रलेखाने कहा—हे भद्र ! आपने योग्य ही कहा, मैं अपने घरको जाती हूं॥१६१॥

भर्तुराज्ञामुपानीय चन्द्रलेखा गृहं गता ॥१६१॥ यावद्गच्छति
सा भार्या तावत्तत्र स्थितोऽभवत् ॥ गतायां स्वप्रियायां तु तां

बालां परिचिन्तयन् ॥ १६२ ॥ शनैर्जगाम राजेन्द्र स्मरेण हृतचेतनः ॥

पतिकी आज्ञा पाकर चन्द्रलेखा घर चली गयी। ज्योंही उसकी पत्नी गयी, त्योंही वह ब्राह्मण वहीं ठहर गया। अपनी स्त्रीके चले जानेपर उस युवती (कुन्तला) की चिन्ता करता हुआ कामदेवके द्वारा चुराये हुए मनवाला वह ब्राह्मण धीरे-धीरे उसके पास गया ॥१६३॥

समीपस्थं मुनिं प्रेक्ष्य सा राजन्पृथुलोचना ॥१६३॥ स्वरभेदं प्रकुर्वन्ती वाक्यमूचेऽथ माधवम् ॥१६४॥

हे राजन्! उस बड़ी-बड़ी आँखोंवालीने अपने पासमें ठहरे हुए मुनिको देखकर, चिल्लाकर माधवसे यह बात कही ॥१६४॥

कुन्तलोवाच—

माऽऽयाहि मुनिशार्दूल मत्समीपं महामते ॥ स च तद्वचनं श्रुत्वा सहसा वाक्यमब्रवीत् ॥१६५॥

कुन्तलाने कहा—हे मुनियोंमें श्रेष्ठ! मेरे पास मत आइये। किन्तु वह ब्राह्मण इस बातको सुनकर कहने लगा ॥१६५॥

माधव उवाच—

का त्वं कल्याणि! भद्रं ते जननी जनिता च कः ॥ आवासस्तव भद्रं ते कस्मिन्राष्ट्रे वरानने ॥१६६॥ सा चेत्थमुक्ता मुनिना जातिमाह मनस्विनी ॥१६७॥

माधवने कहा—हे कल्याणि! तुम कौन हो? तुम्हारे माता-पिता कौन हैं तथा किस राज्यमें तुम्हारा निवास है? मुनिके द्वारा ऐसे पूछे जानेपर कुन्तलाने अपनी जाति बतलायी ॥१६७॥

कुन्तलोवाच—

किं मां पृच्छसि पापिष्ठां व्यभिचारकुलोद्भवाम् ॥ अन्त्यजान्त्यजयोर्जातां सुरामांसाशिनीं खलाम् ॥१६८॥ मध्यदेशे निवासो मे किं त्वं पृच्छसि भूसुर ॥ वेदवेदान्तवेदिस्त्वं न मां द्रष्टुमिहार्हसि ॥१६९॥ मां स्प्रष्टुं क्रीडितुं वापि कथमिच्छसि मूढधीः ॥ एवमादि प्रजल्पन्तीं माधवस्तामथाब्रवीत् ॥१७०॥

कुन्तलाने कहा—मुझ पापिनी, व्यभिचारी वंशमें पैदा हुई चण्डालिनी और चाण्डालसे उत्पन्न, मद्य-मांस भक्षण करनेवाली तथा दुष्टाके बारेमें क्या पूछते हो ? मेरा निवास मध्यदेशमें है; मुझसे क्या पूछते हो ? वेदवेदान्तको जाननेवाले तुम्हारे देखनेके योग्य मैं नहीं हूं। मूढ़ बुद्धिवाले तुम मुझे स्पर्श करने तथा मेरे साथ क्रीड़ा करनेकी क्यों इच्छा रखते हो ? इस प्रकार बकती हुई कुन्तलासे माधवने कहा ॥१७०॥

माधव उवाच—

वृथा नारायणाज्जातो ब्रह्मा लोकपितामहः ॥ अन्धमेनं महाराजन्मन्यते मे मतिः सदा ॥१७१॥ वृथा यज्जनयामास वनितां वनहेतवे ॥ तथापि मम बुद्धिस्तु त्वय्येव रमते सदा ॥१७२॥ यतस्त्वय्येव निरतं मनो मे कृतवानजः ॥ अतो मनो मे सम्पूर्य जीवयाद्य शुचिस्मिते ॥१७३॥

माधवने कहा—लोकपितामह ब्रह्माने नारायणसे व्यर्थ ही जन्म लिया। मेरी समझमें यह ब्रह्मा अन्धा है; क्योंकि उसने तुझ जैसी सुन्दरीको वनमें रहनेके लिये व्यर्थ ही बनाया। तथापि मेरी बुद्धि सर्वदा तुझमें ही अनुरक्त है। हे पवित्र हास्यवाली ! मेरे मनको ब्रह्माने तुझमें लगा दिया, अतएव तुम मेरे मनोरथको पूरा कर मुझे मरनेसे बचाओ ॥१७३॥

कुन्तलोवाच—

कुलाटनं प्रकुर्वाणाः कुलमाशतमाकुलम् ॥ दहन्तीति वदन्ति स्म कुलजा वरमानिनः ॥१७४॥

कुन्तलाने कहा—श्रेष्ठ कुलाभिमानियोंने कहा है कि कुलकी मर्यादाको उल्लंघन करनेवाले लोग सैकड़ों आकुल-कुलपर्य्यन्त जला डालते हैं ॥१७४॥

माधव उवाच—

लवणोदकजातानि रत्नानि विविधानि च ॥ अङ्गीकुर्वन्ति देवाश्च तेजःप्राधान्यकारणात् ॥१७५॥ तस्मादहं सुरूपत्वात्त्वयि भोगं करोमि च ॥ नरकं वा मृतो यास्ये पितृभिः सह सुस्मिते ॥१७६॥

माधवने कहा—लवण-समुद्रमें उत्पन्न नाना प्रकारके रत्नोंको तेजस्वी होनेके कारण ही देवगण स्वीकार करते हैं। हे सुन्दर हास्यवाली ! इसलिये तेरे सौन्दर्य्यके कारण ही मैं तुझसे भोग करूंगा, चाहे मरनेपर मैं अपने पितरोंके साथ नरकहीमें जाऊं ॥१७६॥

इत्येवमुक्ता द्विजबालकेन रुरोद कन्या तरुणारुणाभा ॥
दिवौकसो विप्रवरो विमोच्यो दोषादमुष्मादसतीप्रसङ्गात् ॥१७७॥
दिग्देवता याश्च गणाधिपा ये भान्विन्दुपूर्वाश्च नवग्रहा ये ॥ शृ-
ण्वन्तु वाक्यं मम ते वृथाऽयं विप्रो मृतिं यास्यति पापसङ्गा-
त् ॥१७८॥ विललाप महाराज ब्राह्मणार्थं सुमध्यमा ॥

ब्राह्मण बालकसे इस प्रकार कहे जानेपर वह बालसूर्यके समान लाल रंगवाली कन्या रो-रोकर कहने लगी—हे देवताओ ! व्यभिचारिणी स्त्रीके इस प्रसंगदोषसे यह ब्राह्मणश्रेष्ठ बचानेके योग्य है। जो दिक्पाल, गणेश, रवि, सोमादि नवग्रह हैं, वे मेरे वाक्यको सुनें। यह ब्राह्मण पापिनीके संगसे व्यर्थ ही मृत्युको प्राप्त हो जायगा। हे महाराज ! वह सुन्दर कटिवाली ब्राह्मणके वास्ते विलाप करने लगी ॥१७६॥

मा स्पृशाद्य महीदेव पापिनीं व्यभिचारिणीम् ॥१७९॥ कः
स्पृशेदग्निमार्तः सन्सर्पं व्याघ्रं गजं द्विज ॥ परपत्न्यो हि तत्तुल्याः
किमु चण्डालकन्यका ॥१८०॥ उत्तमं पदमास्थाय नीचा इच्छन्त्य
धोगतिम् ॥ ज्ञानिनो न तथा विप्रास्तव बुद्धिस्तु कीदृशी ॥१८१॥

हे ब्राह्मण ! मुझ पापिनी व्यभिचारिणीको मत छूओ। हे द्विज ! दुःखी होनेपर भी सर्प, व्याघ्र और गजको कौन छूता है; परस्त्री भी उन्हींके तुल्य है, फिर चाण्डालकन्याकी तो बात ही क्या। नीच मनुष्य उत्तम पदपर रहकर भी अधोगतिकी इच्छा करते हैं, ज्ञानी ब्राह्मण वैसा नहीं चाहते, तुम्हारी बुद्धि भी वैसी ही है ॥१८१॥

जाती द्वे निर्मिते पूर्वं विष्णुना द्विजसत्तम ॥ स्त्रीत्वं पुंस्त्वं यथा
तद्वच्चातुर्वर्ण्यं च भूसुर ॥१८२॥ ब्राह्मणस्य ब्रह्मयोन्यां रन्तुमिच्छा
प्रशस्यते ॥ तथान्येषां च वर्णानां स्वस्वजातौ प्रशस्यते ॥१८३॥
विपरीतमिमं मन्ये धर्मत्यागं द्विजन्मनाम् ॥

हे ब्राह्मण ! पूर्वमें जिस प्रकार ब्रह्मासे स्त्री और पुरुष दो जातियां ही बनाई गई, उसी प्रकार चारो वर्ण भी बनाये गये। ब्राह्मणोंकी ब्राह्मणयोनिमें रमण करनेकी इच्छा ही प्रशंसनीय है; इसी प्रकार दूसरे-दूसरे वर्णोंकी भी अपनी-अपनी जातिमें ही यह अच्छी होती है। द्विजातियोंमें इसके विपरीत होना धर्मत्याग ही मैं समझती हूं ॥१८४॥

शरीरं तव विप्रेन्द्र वेदपूतं विशेषतः ॥१८४॥ ऋतुकाले च यन्मातुस्तव पित्रा समागमे ॥ रेतः सृष्टं वेदपूतं गर्भाधानमिदं विदुः ॥१८५॥ सीमन्तं कल्पयामासुर्मन्त्रैर्वेदमयैर्द्विज ॥ दशमे मासि सम्प्राप्ते प्रासूत जननी तव ॥१८६॥ तदा पित्रा जातकर्म कृतं नाम च मन्त्रवत् ॥ अन्नप्राशनचौलादि ब्रह्मवाचनपूर्वकम् ॥१८७॥

हे ब्राह्मणश्रेष्ठ ! तुम्हारा शरीर विशेष रूपसे वेदोच्चारसे पवित्र है। क्योंकि ऋतु कालमें समागमके समयमें तुम्हारे माता-पिताद्वारा जो वेदसे पवित्र वीर्यदान किया गया है, इसीको गर्भाधान कहते हैं। वेद-मन्त्रसे सीमन्त-संस्कार व्यवस्थित किया है। दसवां मास समाप्त होनेपर जब तुम्हारी माताने तुमको उत्पन्न किया, तब तुम्हारे पितासे जातकर्म, नामकरण, अन्नप्राशन एवं चोलादि संस्कार वेद-पाठपूर्वक किये गये ॥१८७॥

अग्निसाक्षिविधानेन प्राप्तदारः कृतो भवान् ॥ अधीतवेदशास्त्रः सन्नाहिताग्निव्रते स्थितः॥१८८॥ एतादृशस्य देहस्य मया सङ्गः कथं भवेत् ॥ कर्णौ हरिकथां श्रुत्वा पावितौ नासिका तव ॥१८९॥ हर्यर्पितसुगन्धेन पाविता जठरं तव ॥ वासुदेवार्पितान्नेन पवित्रं पुरुषर्षभ ॥१९०॥ कृष्णार्चनप्रसङ्गेन करौ पावनतां गतौ ॥ हरिनामकलापेन जिह्वा ते पावनात्मिका ॥१९१॥ पुण्यक्षेत्रानुचारेण पादौ ते पावनीकृतौ ॥ एतादृशेन देहेन कथं सङ्गं प्रशंससि ॥१९२॥

अग्निसाक्षिविधिसे तुमने विवाह भी किया है और आहिताग्निव्रतमें रहकर तुमने वेद और शास्त्रोंका अध्ययन किया है। इस प्रकारके शरीरके साथ मेरा संग किस प्रकार हो सकता है? तुम्हारे दोनों कर्ण हरिकथा सुनकर पवित्र हुए हैं। हरिको अर्पित किये हुए गंधसे तुम्हारी नासिका पवित्र हो गयी है; हे पुरुषश्रेष्ठ! वासुदेवको निवेदित अन्नसे तुम्हारे उदर, श्रीकृष्ण भगवानकी पूजा करनेसे तुम्हारे दोनों हाथ, हरिनामकीर्तनसे तुम्हारी जिह्वा एवं पवित्र भूमि (तीर्थों) में जानेसे तुम्हारे चरण पवित्र हो गये हैं। इस प्रकारके शरीरके साथ संग करनेको तुम किस प्रकार प्रशंसनीय समझते हो ॥१९२॥

ममापि शृणु माहात्म्यं देहस्यामितदोषिणः ॥ अवाच्यवचनैः क्रूरैर्जिह्वा मे दह्यते सदा ॥१९३॥ सुरामांसाशनेनैव जठरे गुल्म-

मागतम् ॥ व्यभिचारकथालापात्कर्णौ मे शिथिलीकृतौ ॥१९४॥
पादौ जारगृहं गत्वा पाषाणसदृशौ मम ॥ गोवधान्मे करौ क्रूरौ
यमदण्डसमप्रभौ ॥१९५॥ एतादृशस्य देहस्य त्वया सङ्गः कथं
भवेत् ॥ उत्तमो नीचतां प्राप्य कथं स्वर्गं गमिष्यति ॥१९६॥
परस्त्रीसङ्गदोषेण बहवो नरकान् गताः ॥ तस्मादुत्तिष्ठ भद्रं ते तव
दासी भवामि भोः ॥१९७॥ वनितावचनं श्रुत्वा वाक्यमूचे
द्विजात्मजः ॥१९८॥

अब अनेकों दोषवाले मेरे शरीरकी भी बड़ाई सुन लो। मेरी जिह्वा नहीं कहने योग्य कर्कश बातोंसे सदा-लब्वी रहती है; मदिरा और मांसके भोजनसे मेरे उदरमें गुल्म आ गया है, व्यभिचारकी बातोंको सुननेसे मेरे कर्ण थक गये हैं; जार (उपपति) के घर जानेसे मेरे पैर पत्थरके समान हो गये हैं तथा यमराजके दण्डके समान कठोर मेरे दोनों हाथ गोवध करनेसे कठिन हो गये हैं। मेरे इस प्रकारके शरीरसे तुम्हारा संग क्योंकर होगा? उत्तम पुरुष नीचताको प्राप्त होकर किस प्रकार स्वर्ग जा सकता है? पराई स्त्रीके साथ प्रसंग करनेके दोषसे बहुत लोग नरकको चले गये हैं। इसलिये मैं प्रार्थना करती हूं कि हे द्विज! उठो, तुम सुखी होगे! मैं तुम्हारी दासी रहूंगी। स्त्रीके इस वचनको सुनकर वह ब्राह्मणपुत्र बोला॥१९८॥

त्वदीयसङ्गो बहुकालपुण्यप्रभावजो मुक्तिकरः शुभावहः ॥
दैवेन योगेन हरेः प्रसादात्पुण्येन लब्धः पुरुषार्थहेतुः ॥१९९॥
तस्माद्भजस्वानुगतोऽस्मि भामिनि त्यजाद्य लज्जां कुरु मे मनो-
गतम् ॥ २०० ॥ गच्छन्त्यद्य मम प्राणास्त्वद्वियोगेन केवलम् ॥
तस्माज्जीवय भद्रं ते मरणाभिमुखं च माम् ॥२०१॥

माधवने कहा—बहुत कालके पुण्यके प्रभावसे उत्पन्न, मुक्तिको देनेवाला, शुभकारी तथा पुरुषार्थोंके निमित्त तुम्हारा प्रसंग भाग्यके संयोग एवं श्रीहरिके प्रसाद-रूपी पुण्यसे प्राप्त हुआ है। हे भामिनि! इसलिये अब लज्जा छोड़कर मेरे साथ संग करो, मैं तुम्हारा दास हूं, मेरे मनोरथको पूरा करो। आज मेरे प्राण केवल तुम्हारे ही वियोगसे जा रहे हैं; इसलिये मुझ मरते हुए को जिला दो; तुम्हारा कल्याण होगा॥२०१॥

एवमुक्ता द्विजेन्द्रेण पृथुश्रोणी समुत्थिता ॥ पलायनायाशु
मतिं चक्रे चण्डालकन्यका ॥ २०२ ॥ धावमानामनुद्रुत्य माधव-

स्तामुपास्पृशत् ॥ रौरवं जनकस्यापि जनन्याः कुलयोर्ध्रुवम् ॥२०३॥ स्यादिति क्रोशमानां तां माधवो मन्मथाहतः ॥ बलात्कारेण सङ्गृह्य बुभुजे भोगमुत्तमम् ॥२०४॥ भोगात्यये द्विजं बाला वाक्य-मूचे मनस्विनी ॥२०५॥

ब्राह्मणश्रेष्ठ द्वारा इस प्रकार कहे जानेपर वह विशाल श्रोणीवाली चाण्डालकी लड़की उठी और शीघ्र भागनेका विचार करने लगी। माधवने उस भागती हुई को दौड़कर छू लिया। माता तथा पिता दोनों कुलोंमें अवश्य नरक होगा इस प्रकार कहती हुई उस स्त्रीको कामदेवसे मारे गये माधवने बलपूर्वक पकड़कर उत्तम भोग भोगा। वह मनस्विनी स्त्री सम्भोगके पश्चात् उस ब्राह्मणसे बोली ॥२०५॥

*कुन्तलोवाच—*

अद्यप्रभृति भो विप्र पतिस्त्वं मम भूसुर ॥ त्यज यज्ञोपवीतं त्वं मुण्डयित्वा शिरस्तथा ॥ २०६ ॥ अब्राह्मण्यमुपागम्य भुङ्क्ष्व गोमांसमुत्तमम् ॥ पिब मद्योदकं शीघ्रं चण्डालत्वमुपाश्रितः ॥२०७॥

कुन्तलाने कहा—हे विप्र! आजसे तू मेरा पति हुआ। हे ब्राह्मण! यज्ञोपवीतको छोड़ दो और चाण्डालत्वको प्राप्त हो, अपने शिरको मुड़ाकर, ब्राह्मणत्वको छोड़ शीघ्र ही उत्तम गोमांसका भक्षण एवं मद्यपान करो ॥२०७॥

तद्वाक्यमाकर्ण्य तदा तयोक्तं सर्वमाचरन् ॥ चण्डालाचरिता-चारं जगाम विधिचोदितः ॥ २०८ ॥ विप्रस्तया समेतस्तु कृष्णवेणीनदीतटम् ॥ द्वादशाब्दं वसन्विप्रस्तत्सङ्गमविमो-हितः ॥२०९॥

प्रारब्धसे प्रेरित वह विप्र तब उसकी वार्ताको सुनकर उसीके कथनानुसार सब कुछ करता हुआ चाण्डालके द्वारा किये जानेवाले कार्मोको करने लगा। उसके संगसे मोहित होकर वह ब्राह्मण उसके साथ कृष्णवेणी नदीके तटपर बारह वर्षतक रहा ॥२०९॥

अनित्यत्वाच्छरीराणां कालपाशेन यन्त्रिता ॥ जगाम मरणं राजन् कुन्तला नीलकुन्तला ॥२१०॥ तया विरहितः श्रीमान्माधवो दुःखकातरः ॥ अचरद्भुवनं सर्वमुन्मादेनोद्भ्रमन्निव ॥२११॥

हे राजन् ! वह काले केशवाली कुन्तला शरीरके नाशवान् होनेके कारण कालपाशसे बन्धी हुई मृत्युको प्राप्त हुई। उसके दुःखसे दुःखी वह माधव पागलोंके समान सर्वत्र पृथ्वीपर घूमने लगा ॥२११॥

अकस्माद्दैवयोगेन राजानश्चोत्तरास्तदा ॥ यात्रार्थं समुपाजग्मुर्वराहस्य च पर्वतम् ॥२१२॥ मार्गमध्ये ददर्शासौ माधवस्तान्महीपतीन् ॥ गच्छन्नेव च तैः सार्धं तदुच्छिष्टान्नभोजनः ॥२१३॥ प्राप सर्पगिरिं राजन् दैवयोगेन कर्मणा ॥

अकस्मात् दैवयोगसे उत्तर देशके निवासी राजागण तीर्थयात्रा प्रसंगसे वराह पर्वतके पास पहुंचे। उस माधवने उन राजाओंको मार्गमें देखा और हे राजन् ! दैवयोग एवं पुण्यसे उनके साथ चलता तथा उनके जूठे अन्नोंको खाता हुआ सर्पगिरिपर पहुंचा ॥२१४॥

ते राजानस्तत्र गत्वा तीर्थे कापिलसंज्ञिके ॥२१४॥ स्नात्वा भक्तिभरोपेता वपनं चक्रुरादरात् ॥ माधवः स्वयमप्येत्य वापयामास वै शिरः ॥२१५॥

वे राजालोग कपिल नामक तीर्थमें आकर भक्तिपूर्वक स्नान तथा आदरपूर्वक मुण्डन कराये। माधवने भी स्वयं आकर अपने शिरका मुण्डन करवाया ॥२१५॥

पार्वणानि प्रकुर्वन्तस्तत्र राजन् क्षितीश्वराः ॥ पिण्डानि च सुसंहृष्टाः श्राद्धीयानि ददुस्तदा ॥२१६॥ माधवोऽपि शुभे तीर्थे स्नात्वा तद्वच्च पार्वणम् ॥ कुर्वन्पिण्डान्मृदा कृत्वा पितृभ्यः श्रद्धया ददौ ॥२१७॥ दैवात्तत्कर्मणैवासौ तदाभूद्गतकल्मषः ॥ तस्माद्यो मानवो भक्त्या कुर्यात्तीर्थावगाहनम् ॥२१८॥ पितृश्राद्धं पिण्डदानं मुक्तिस्तस्य न संशयः ॥

हे राजन् ! उन राजालोगोंने वहां पार्वणश्राद्ध करते हुए आनन्दपूर्वक श्राद्धके योग्य पिण्डदान किया। माधवने भी उस शुभ तीर्थमें स्नान कर उसी प्रकार पार्वणश्राद्ध करता हुआ मृत्तिकाके पिण्ड बनाकर दैवयोगसे पितरोंको श्रद्धापूर्वक दिया और उसी कर्मसे वह तब पापमुक्त हो गया; इसलिये जो मनुष्य भक्तिपूर्वक तीर्थमें स्नान, पितृश्राद्ध एवं पिण्डदान करेगा, उसकी मुक्ति अवश्य हो जायगी ॥२१९॥

मृत्पिण्डं कृतवान्विप्रः पुण्यक्षेत्रे पुरातने ॥२१९॥ किं वर्णया-

भृगुजीसे भगवान्‌की सविनय प्रार्थना [ पृष्ठ ३०६ ]



ताड्यमानो हरिस्साक्षात् उत्थाय विनयान्वितः ।
पपात भगवान् भक्त्या ऋषिपादसरोरुहे ॥

मः पुरुषोत्तमस्य क्षेत्रस्य तीर्थस्य च पुण्यशक्तिम् ॥ मृत्पिण्डदानात्पितरश्च तस्य मुक्तिं प्रपन्ना मुरवैरिशासनात् ॥२२०॥

उस ब्राह्मणने उस प्राचीन पुण्यभूमिमें केवल मृत्तिकाका ही पिण्ड-दान किया था; इस पुरुषोत्तमके तीर्थक्षेत्रका माहात्म्य किस प्रकार वर्णन किया जा सकता है जबकि मृतिकाके पिण्डदानसे ही उसके पितर श्रीमुरारिकी आज्ञासे मुक्ति पा गये ॥२२०॥

प्रभाते विमले जाते राजानो राजसत्तम ॥ समारोहन् गिरिश्रेष्ठं सपुत्राश्च सबान्धवाः ॥ २२१ ॥ तेषामनुपदं राजन् प्राप शेषगिरिं च सः ॥ विश्राम्यन्तः सर्व एव तस्थुस्तत्र च तत्र च ॥२२२॥ सोऽपि तस्थौ महाराज माधवो गिरिमस्तके ॥

हे नृपश्रेष्ठ ! प्रातःकाल सुप्रकाश होनेपर वे राजालोग अपने पुत्रों तथा बान्धवोंके साथ उस श्रेष्ठ पर्वतपर चढ़ने लगे। हे राजन् ! वह ( माधव ) भी उनके पीछे-पीछे शेषपर्वतपर पहुंच गया। वे सभी जहां-जहां विश्राम करनेके लिये ठहरे, हे महाराज ! वह माधव भी उस-उस पर्वतके शिखरपर ठहरा ॥२२२॥

भूधरस्पर्शमात्रेण तदघं पर्यकम्पत ॥२२३॥ माधवस्याभवत्कष्टं यथा वै मक्षिकाशिनः ॥ वमन्तमेनं स्वं पापं समावृण्वन्समन्ततः॥२२४॥ तदङ्गजातः कोऽप्यग्निरद्रिमाहात्म्यतस्तदा॥ प्रजज्वाल दहन् पापं सुरामांसाशनोद्भवम् ॥२२५ ॥ तस्य दुर्गन्धधूमेन वासिताः सर्वदेवताः॥ तद्भावं वेदितुं देवा ब्रह्मरुद्रपुरोगमाः ॥२२६॥ विमानानि विचित्राणि भासयन्तः समागताः ॥ खमार्गे संस्थिताः सर्वे दृष्ट्वा तच्चरितं नृप ॥ २२७॥ ववर्षुः पुष्पवर्षाणि माधवस्योत्तमाङ्गके ॥

पर्वतके स्पर्श-मात्रसे ही उस ब्राह्मणके पाप कांपने लगे। मक्खिका भक्षण करनेवाले व्यक्तिके समान माधवको कष्ट होने लगा। अपने पापोंको वमन करता हुआ उसे देख सबोंने चारों ओरसे घेर लिया। पर्वतके माहात्म्यसे उसके शरीरसे उत्पन्न कोई अग्नि मद्य-मांस-भक्षणसे उत्पन्न उसके पापोंको भस्म करती हुई जलने लगी। उसके दुर्गन्धियुक्त धूमसे सब देवता भर गये। इस अवस्थाको जाननेके लिये ब्रह्मा, रुद्र इत्यादि देवतागण विचित्र-विचित्र विमानोंका प्रकाश करते हुए आ गये। हे राजन् ! आकाशमें ठहरे हुए सब लोग उसके चरित्रको देखकर माधवके मस्तकपर पुष्प-वृष्टि करने लगे ॥२२८॥

दृष्ट्वा पितामहः श्रीमान्विमानादवरुह्य सः ॥२२८ माधवं गत-
पाप्मानं यथा हरिरजामिलम् ॥ कृपयोद्धृतवानेनं कृपालुर्द्विज-
पुङ्गवम् ॥२२६॥ इति सञ्चिन्तयंस्तत्र निकटं प्राप सादरम् ॥
जिघ्रंश्च तच्छिरः श्रीमान् ब्रह्मा वाणीमथाब्रवीत् ॥२३०॥

यह देखकर श्रीमान ब्रह्मा विमानसे उतरकर, दयालु श्रीहरिने अजामिलके समान कृपा करके इस ब्राह्मणश्रेष्ठका उद्धार किया—ऐसा सोचते हुए, निष्पाप माधवके पास पहुंचे और आदरपूर्वक उसके मस्तकको सूंघते हुए, यह बात बोले ॥२३०॥

भो भो माधव विप्रेन्द्र गतपापोऽसि केवलम् ॥ स्वामितीर्थस्य
निकटं गत्वा स्नात्वा च तज्जले ॥२३१॥ वराहवदनं नत्वा त्यज देहं
महीसुर ॥ महीपालोऽथ भूत्वात्र कुरु राज्यमकण्टकम् ॥२३२॥
पाण्डवानां च दौहित्रकुले जातोऽसि कीर्तिमान् ॥ सुधर्मस्य सुतो
भूत्वाऽऽकाशनामाथ दक्षिणे ॥२३३॥ नारायणपुरे वीर तोण्ड-
देशाधिपो भव॥ तव पुत्री जगन्माता जामाता च जगत्पतिः ॥२३४॥
भविष्यति महाराज पश्चाद्वैकुण्ठमाप्नुहि ॥

हे ब्राह्मणश्रेष्ठ माधव ! केवल स्वामितीर्थके पास जाकर उसके जलमें स्नान करनेसे ही तुम निष्पाप हो चुके । अब वराह भगवान्को नमस्कार करके, अपने शरीरको छोड़ दो; पश्चात राजा होकर अकंटक राज्य करो । तुम पाण्डवोंके दौहित्र कुलमें कीर्तिमान होकर उत्पन्न हुए थे । ( जन्मान्तरमें ) अब सुधर्मका पुत्र आकाश नामक राजा होकर दक्षिणके नारायणपुरमें तोण्डदेशका स्वामी हो । जगन्माता तुम्हारी पुत्री एवं जगत्पति तुम्हारे जामाता ( दामाद ) होंगे । तत्पश्चात् वैकुण्ठको प्राप्त होवोगे ॥२३५॥

इति तस्य वरं दत्त्वा चतुरश्चतुराननः ॥२३५॥ तदा नाम च-
काराद्रेर्वेङ्कटाचल इत्यपि ॥ सर्वपापानि वें प्राहुः कटस्तद्दाह उच्य-
ते ॥२३६॥ तस्माद्वेङ्कटशैलोऽयं लोके विख्यातकीर्तिमान् ॥

चतुर ब्रह्माने इस प्रकार उसको वर देकर उस समयसे पर्वतका नाम "वेङ्कटाचल" रक्खा । सब पापोंको "वें" और उसके जलानेको "कट" कहते हैं; इसलिये संसारमें यह पर्वत "वेङ्कटाचल" नामसे प्रसिद्ध तथा कीर्तिमान हुआ ॥२३७॥

प्रभातकाले राजेन्द्र यः कीर्तयति भूधरम् ॥२३७। तस्य पुण्यफलं वक्ष्ये शृणु राजन् यथास्थितम् ॥ फलं भवेद् ध्रुवं गङ्गासेतुयात्रासहस्रजम् ॥२३८॥ इतिहासमिदं प्रोक्तं गोतमेनोदितं हि मे ॥ पुण्यं परमकल्याणं श्रवणाद्भद्रदायकम् ॥२३९॥

इति श्रीभविष्योत्तरपुराणे श्रीवेङ्कटाचलमाहात्म्ये भगवत्क्रीडाद्रेर्युगभेदेन वृषभादिनामभेदवर्णनं नाम प्रथमोऽध्यायः ॥१॥

हे राजेन्द्र ! प्रातःकालमें जो इस पर्वतका नाम लेता है, मैं उसके निर्दिष्ट पुण्यफलको कहता हूं, उसे सुनो। उसको अवश्य ही गङ्गा एवं सेतुके हजारों यात्राका फल होता है। पवित्र एवं परम कल्याणको देनेवाला तथा सुननेसे भलाई करनेवाला यह कहा हुआ इतिहास मुझको गोतमसे मिला था ॥२३९॥

इति प्रथमोऽध्यायः ॥१॥

# द्वितीयोऽध्यायः ॥२॥



आना निज वैकुण्ठसे, वेङ्कटाद्रि करि थान।
सत्यलोक भृगुमुनि गमन, सात्विक सुर पहिचान ॥१॥
भृगुपतिसे भगवानका, नम्र विनय विनिवेश।
सात्विक सुर पद देइ प्रभु, भृगुपद धरि उरदेश ॥२॥
प्रभु तजि लक्ष्मीपुर गमन, खोजन प्रभु प्रस्थान।
वेङ्कटाद्रि पर . आगमन, वर्णित प्रभु गुणगान ॥३॥

अथ भगवतः श्रीवैकुण्ठाद्वेङ्कटाचलागमनम्

*जनक उवाच—*

मरुत्प्राहाहिराजं तं भगवानागमिष्यति ॥ इति त्वयोदितं पूर्वं

तन्मामाचक्ष्व विस्तरात् ॥१॥ कथं नारायणः प्राप्तः केन वा कारणेन भोः ॥ तत्रागत्य कृतं किं तु तन्ममाचक्ष्व विस्तरात् ॥२॥ कथं वैकुण्ठलोकं तु त्यक्तवान् पुरुषोत्तमः ॥ चरितं तस्य माहात्म्यं तीर्थानां पर्वतस्य च ॥३॥ वराहरूपिणो विष्णोर्माहात्म्यं वद विस्तरात् ॥ आकाशनाम्नश्चरितं राज्ञस्तस्य महात्मनः ॥४॥ यस्य पुत्री रमा देवी जामाता च जगत्पतिः ॥ देवानां च ऋषीणां च देवस्त्रीणां समागमम् ॥५॥

### श्रीभगवान्का वैकुण्ठसे श्रीवेङ्कटाचलपर आना

जनकने कहा—वायुदेवने श्रीशेषजीसे कहा था कि श्रीभगवान् आवेंगे। इस प्रकार पहले जो आपने कहा वह मुझे विस्तार पूर्वक सुनाइये। श्रीनारायण भगवान् किस कारणसे और किस प्रकार आये एवं वहाँ आकर क्या किया, वह मुझसे विस्तारपूर्वक कहिये। पुरुषोत्तम भगवानने किस प्रकार श्रीवैकुण्ठको छोड़ दिया? उस विष्णुके चरित्र तथा माहात्म्य और तीर्थों एवं पर्वतोंके माहात्म्यको, उस आकाश नामक राजाके चरित्रको जिनकी पुत्री श्रीलक्ष्मीदेवी एवं पुत्र संसारके स्वामी हुए, एवं यह सब देवताओं, ऋषियों, देवताओंकी स्त्रियोंके समागमको विस्तारसे कहिये। ॥५॥

### अथ सात्त्विकदेवतापरीक्षार्थं भृगोः सत्यलोकादिगमनम्

*शतानन्द उवाच—*

पुरा तु ऋषयः सर्वे काश्यपाद्या मुनीश्वराः ॥ सम्मुखं जाह्नवीतीरे सन्तोपं चक्रिरे द्विजाः ॥ ६ ॥ तस्मिन् काले मुनिश्रेष्ठो नारदो मुनिसत्तमः ॥ उवाच वचनं विप्रान् किमर्थोऽयं क्रतूत्तमः ॥७॥ को वा भुङ्क्ते यज्ञफलं को वा ध्येयः सुरोत्तमः ॥ कृतयज्ञफलं कस्य चार्प्यते मुनिसत्तमाः ॥८॥

### सात्त्विक देवताकी परीक्षाके लिये भृगुमुनिका सत्यलोकादिमें जाना

शतानन्दने कहा—प्राचीन समयमें कश्यपादि ऋषि, मुनीश्वर और ब्राह्मण ये सब श्रीगङ्गाके तीरपर संतोपसे यज्ञ कर रहे थे, उस समय मुनियोंमे श्रेष्ठ नारदजी यह बात ब्राह्मणोंसे बोले—यह उत्तम यज्ञ किस लिये

भृगुजीका भगवान्‌की छातीपर लात मारना [पृष्ठ ३०६]



तत्र शय्यागृहे रम्ये शयमञ्चकशायिनम्।
लक्ष्म्या समेतं देवेशं ददर्श स भृगुस्तदा।
तताडोरसि गोविन्दं भृगुः पादतलेन तम्॥

है ? यज्ञ फलको कौन भोगता है ? कौन श्रेष्ठ देवता आराधना करनेके योग्य है ? किये हुए यज्ञके फल किसको अर्पण किये जाते हैं ॥८॥

इति नारदवाक्यं तु श्रुत्वा ते मुनिपुङ्गवाः ॥ संशयार्थं समापन्नाः कथमत्र विचार्यताम् ॥ ९ ॥ सम्मिलित्वा तदा सर्वे भृगुं ब्रह्मविदां वरम् ॥ तमूचुर्भक्तिनम्राङ्गाः कृताञ्जलिपुटाः स्थिताः ॥१०॥ गच्छ शीघ्रं महाबुद्धे परीक्षार्थं सुरोत्तमान् ॥

नारदके इस वचनको सुनकर इस विषयमें कैसा निर्णय करना चाहिये—ऐसे सन्देहको प्राप्त हुये वे ऋषिश्रेष्ठ सब मिलकर ब्रह्मज्ञानियोंमें श्रेष्ठ भृगुमुनिसे भक्तिपूर्वक नम्र शरीर हो, हाथ जोड़कर खड़े होकर बोले कि हे महा बुद्धिवाले ! उत्तम देवताओंकी परीक्षाके लिये आप जाइये ॥११॥

इति तेषां वचः श्रुत्वा ययौ कञ्जजमन्दिरम् ॥११॥ तत्र दृष्ट्वाष्टबाहुं तं सक्षाद् ब्रह्माणमग्रजम् ॥ चतुर्मुखमुदाराङ्गं सरस्वत्या सुसेवितम् ॥१२॥ चतुरास्यसमुद्भूतवेदघोषविराजितम् ॥ दिक्पालकगणैः सार्धं किरीटमुकुटोज्ज्वलम् ॥१३॥ स्तुवन्तं जगदीशानं नारायणमनामयम् ॥ प्रणमद्भक्तिभावेन मददीप्तिविराजितम् ॥१४॥ पातयामास कायं स्वं पुरतः कञ्जजन्मनः ॥

उनके इस प्रकारके वचनको सुनकर भृगुमुनि ब्रह्माके मन्दिरमें गये । वहांपर उस आठ बाहुवाले, अग्रजन्मा, चार मुखवाले, उदार अंगवाले, सरस्वतीसे सेवित, चारों मुखोंसे उत्पन्न वेदके शब्दसे सुशोभित, दिग्पालगणोंके साथ, किरीट और मुकुटसे प्रकाशित, निर्विकार नारायण भगवानकी स्तुति करते हुए तथा अहङ्कारके चिह्नसे प्रकाशित ब्रह्माको देखकर उनको साष्टांग नमस्कार किया ॥१४॥

पतितं स भृगुं दृष्ट्वा नोवाच वचनं विधिः ॥१५॥ तं मत्वा किञ्चिदज्ञानादपूज्यं मुनिपुङ्गवः ॥ अलब्ध्वा स्वात्मनः कार्यं कैलासं स ऋषिर्ययौ ॥१६॥

ब्रह्मा पड़े हुए भृगुजीको देखकर कुछ भी नहीं बोले । वह मुनिश्रेष्ठ उन ब्रह्माको ( उनके ) अज्ञानके कारण अपूज्य जानकर अपने कार्यको सफल न समझकर कैलाशको गये ॥१६॥

कैलासगिरिमासाद्य तत्राद्राक्षीत् त्रिलोचनम् ॥ कामुकं पार्वती-

देव्या क्रीडन्तं निजमन्दिरे ॥१७॥ तस्मिन् काले तमायातं नाजा-
नात्कामुको हरः ॥ आगतं सा मुनिं दृष्ट्वा पार्वती लज्जयाऽवद-
त् ॥१८॥ त्यज शीघ्रं महाबाहो ह्यागतो मुनिपुङ्गवः ॥

कैलाशपर्वतपर पहुँचकर वहां उन्होंने तीन नेत्रवाले, कामी एवं अपने मन्दिरमें पार्वतीदेवीके साथ विहार करते हुए शिवजीको देखा। उस समय कामी महादेवने आते हुए मुनिको नहीं जाना। पार्वतीजी आये हुए मुनिको देखकर लज्जासे बोलीं, हे महाबाहु! मुनियोंमें श्रेष्ठ भृगुजी आये हुए हैं, (मुझको) शीघ्र छोड़ दीजिये ॥१६॥

इति तस्या वचः श्रुत्वा क्रोधात्ताम्रविलोचनः ॥१९॥ तं हन्तु-
मद्रवच्छीघ्रमृषिः शापान्निराकरोत् ॥ शशाप स ऋषिः शम्भुं लोके
त्वं नैव पूज्यसे ॥२०॥ त्वं शेफ पूजनेनैव लोके ख्यातिं गमिष्यसि ॥

पार्वतीके इस प्रकारके वाक्यको सुनकर शिवजी लाल-लाल आँखें बनाकर क्रोधसे उस मुनिको मारनेके लिये शीघ्र उद्यत हो गये। मुनिने शापसे (उनको) निराकरण किया और दूसरा शाप दिया कि तू संसारमें पूजा नहीं जायगा; लिंगपूजनसे ही तुम्हारी प्रसिद्धि होगी ॥२१॥

इत्युक्त्वा स ऋषिश्चागाद्वैकुण्ठं हरिमन्दिरम् ॥२१॥ प्राकार-
गोपुरद्वारनवतोरणभूषितम् ॥ चतुर्दिक्षु चतुर्द्वारपालकैरुपशोभि-
तम् ॥२२॥ तत्र शय्यागृहे रम्ये शेषमञ्चकशायिनम् ॥ लक्ष्म्या
समेतं देवेशं ददर्श स भृगुस्तदा ॥ २३ ॥ तताडोरसि गोविन्दं
भृगुः पादतलेन तम् ॥ ताड्यमानो हरिः साक्षादुत्थाय विनया-
न्वितः ॥२४। पपात भगवान्भक्त्या ऋषिपादसरोरुहे ॥ आलिलि-
ङ्गेऽथ भक्त्यैव चोवाच ऋषिपुङ्गवम् ॥२५॥

ऐसा कहकर वह ऋषि प्राकार (घेरा), गोपुर (फाटक) द्वार एवं नये तोरण (वन्दनवार) से एवं चारों दिशामें चार द्वारपालोंसे सुशोभित श्रीहरिके मन्दिर वैकुण्ठमें गये। वहांपर भृगुऋषिने मनोहर शय्यागृहमें लक्ष्मीके साथ शेषशय्यापर शयन करनेवाले, देवताओंके स्वामी गोविन्दभगवान् विष्णुको देखा और उनको पैरसे हृदयमें मारा। मारे जानेपर भी साक्षात् हरिभगवानने उठकर मुनिके चरणकमलोंमें विनय एवं भक्तिसे नमस्कार किया; और भक्तिपूर्वक उनका आलिङ्गन करके कहे ॥२५॥

## अथ भृगुं प्रति श्रीवैकुण्ठनाथोक्तविनीतवचनम्

*श्रीभगवानुवाच—*

किमर्थं त्वमृषिश्रेष्ठ मच्छरीरं कठोरकम् ॥ अताडयो जरायु-
क्तमभेद्यं देवदानवैः ॥२६॥ वज्रादष्टगुणां विद्धि मच्छरीरे कठोर-
ताम् ॥ किमर्थं ताडितं विप्र कोमलाङ्घ्रितलेन तत् ॥२७॥ पादौ
ते कोमलौ दिव्यौ मच्छरीरसमागमात् ॥ कियद् दुःखं समापन्नौ
न जानामि द्विजोत्तम ॥ २८॥ इत्युक्त्वा द्विजपादौ तौ प्रक्षाल्यो-
ष्णोदकेन वै ॥ दधार शिरसा भक्त्या विप्रपादोदकं शुभम् ॥२९॥
जगृहे सकुटुम्बश्च सर्वलोकं विडम्बयन् ॥ विबुधा दर्शनेनैव पुन-
न्ति च जगत्त्रयम् ॥ ३० ॥ इत्युक्तो देवदेवेन ऋषिश्चागाद्धरा-
तलम् ॥

### भृगुको कहे हुए भगवानके नम्र वचन

श्रीभगवान्ने कहा—हे ऋषिश्रेष्ठ! आपने किसलिये मेरे जरायुक्त होनेपर भी कठोर, देवता और मनुष्योंसे अभेद्य शरीरपर प्रहार किया? हे विप्र! मेरे शरीरको वज्रसे आठ गुना कठोर समझिये, इस शरीरको आपने अपने कोमल तलवासे किस लिये मारा? हे द्विजोंमें श्रेष्ठ! आपके कोमल और दिव्य चरण मेरे शरीरके साथ लगनेसे कितने दुःख पाये, मैं नहीं जानता। भगवान् श्रीनिवास ऐसा कहकर ब्राह्मणके उन चरणोंको उष्णजलसे धोकर सम्पूर्ण लोकका अनुकरण करते हुए तथा "महर्षिगण दर्शन मात्रसे ही तीनों लोकको पवित्र कर देते हैं"—ऐसा कहते हुए सकुटुम्ब भक्तिपूर्वक मङ्गल विप्रचरणोदक शिरपर धारण किये। तत्पश्चात् ऋषि भूलोक चले गये ॥३०॥

## अथ भगवतो भृगुकृतसात्त्विकदेवतात्वसमर्थनम्

ऋषीणामग्रजातीनां सभायां स ऋषिस्तदा ॥ बोधयामास
तान्सर्वान्हरिः सर्वोत्तमः स्वयम् ॥ ३१ ॥ हरिः सर्वोत्तमः साक्षाद्र-
मा देवी तदन्तरा ॥ तदधो विधिवाण्यौ च तदधः शर्वपूर्वकाः ॥३२॥
एवं तरतमाज्ज्ञेयाः सुरदैत्यनरेषु च ॥ इत्येवं बोधिता विप्रा भृगु-

णा तत्त्ववेदिना ॥ ३३ ॥ हरिं निश्चित्य सर्वेशं चक्रुस्तस्मै मखा-
र्पणम् ॥३४॥

भृगुकृत श्रीभगवान्‌के सात्विक देवता होनेका समर्थन

देवताओंके भी देव श्रीलक्ष्मीपतिसे इस प्रकार कहे जानेपर भृगुमुनि पृथ्वीतलपर आये और उन्होंने उन ब्राह्मणों तथा ऋषियोंकी सभामें उन सबोंको यह बताया कि देवता, दानव और मनुष्योंमें श्रीहरि ही स्वयं सबसे उत्तम हैं। साक्षात् भगवान सबसे उत्तम,तत्पश्चात् लक्ष्मीदेवी, उनके नीचे ब्रह्मा और सरस्वती एवं उनके नीचे शिव इत्यादि इस प्रकारसे उच्च-नीच समझे जाते हैं। इस प्रकार उन्होंने उन सब तत्त्वके जाननेवाले ऋषिसे समझाये जानेपर श्रीहरिको ही सर्वश्रेष्ठ निश्चय कर उन्हींको यज्ञ अर्पण कर दिया ॥३४॥

अथ भृगुपादाहतिकुपितायाः लक्ष्म्याः करवीरपुरे गमनम्

ततस्तु भगवान्देव एकान्ते निजमन्दिरे ॥ सार्धं च रमयाऽति-
ष्ठत्तदोवाच रमा हरिम् ॥ ३५ ॥

भृगुके लात मारनेसे कुपित होकर श्रीलक्ष्मीजीका करवीरपुरमें जाना

जब अपने एकान्त मन्दिरमें लक्ष्मीजीके साथ श्रीभगवान् बैठे थे, तब लक्ष्मीजीने श्रीहरिसे कहा ॥३५॥

*श्रीरमोवाच*—

गच्छामि देवदेवेश त्यक्त्वा त्वां जगदीश्वर ॥ ताडितोऽसि
जगन्नाथ ऋषिणा त्वं जगन्मयः ॥३६॥ मदालिङ्गस्थले देव पादे-
नैव जगत्पते ॥ करवीरपुरं दिव्यं गच्छामि गरुडध्वज ॥३७॥ इति
प्रेम्णा च कलहं कृत्वा तु हरिणा सह ॥ रमा जगाम तत्क्षेत्रं
करवीरपुराह्वयम् ॥ ३८ ॥

श्रीलक्ष्मीजीने कहा—हे देवदेवेश जगदीश्वर! आपको छोड़कर मैं जाती हूं। क्योंकि हे जगन्नाथ! हे जगत्पति! हे देव! जगन्मय आप मेरे आलिङ्गनके स्थानपर ऋषिके द्वारा चरणसे प्रहार किये गये हैं; इसलिये हे गरुड़ध्वज! मैं दिव्य करवीरपुरको जाऊंगी। इस तरह प्रणयपूर्वक भगवानसे झगड़कर लक्ष्मीजी उस करवीरपुर नामक क्षेत्रमें गईं ॥३८॥

## कोपसे लक्ष्मीजीका कोल्हापुर जाना [ पृष्ठ ३०८ ]



गच्छामि देवदेवेश ! त्यक्त्वा त्वा जगदीश्वर ।
ताडितोऽसि जगन्नाथ । ऋषिणा त्व जगन्मय ।
मदालिङ्गस्थले देव पादेनैव जगत्पते ॥

अथ लक्ष्म्यन्वेषणार्थं श्रीवेङ्कटाचलं प्रति भगवदागमनम्

यदा गता महालक्ष्मीस्तदा नारायणो हरिः ॥ अष्टाविंशतिमे प्राप्ते द्वापरान्ते कलौ युगे ॥३९॥ यस्मिन्देशे यदा प्रेमकलहोऽस्याः प्रशाम्यति ॥४०॥ कर्मणा येन च यथा तत्तथा च करोमि तत् ॥ इति सङ्कल्प्य गोविन्दो लीलामानुषविग्रहः ॥४१॥ मायावी परमानन्दं त्यक्त्वा वैकुण्ठमुत्तमम् ॥

लक्ष्मीजीको ढूंढ़नेके लिये भगवान् विष्णुका श्रीवेङ्कटाचलपर आना

महा लक्ष्मीके चले जाने तथा द्वापरके अन्त होनेपर अट्ठाइसवां कलियुगमें लीला करनेके लिये मनुष्य शरीर धारण करनेवाले नारायण मायावी गोविन्द भगवान् यह सोचकर कि जिस देशमे, जब, जिस कामसे और जिस प्रकारसे [redacted] लक्ष्मीका प्रेम-कलह शान्त होगा, मैं वही और उसी प्रकार करूंगा, परम उत्तम वैकुण्ठको छोड़कर प्रस्थान किये ॥ ४१॥

गङ्गाया दक्षिणे देशे योजनानां शतत्रये ४२। सुवर्णमुखरी नाम नदीनां प्रवरा नदी ॥ शुकस्य वरदा पुण्या ह्यगस्त्यमुनिपूजिता ॥४३॥ तस्या एवोत्तरे तीरे क्रोशार्धद्वयमात्रके ॥ श्रीवेङ्कटगिरिर्नाम वर्तते पुण्यकाननः ॥४४॥ सुवर्णगिरिपुत्रस्तु सर्वतीर्थसमन्वितः ॥ साक्षाच्छेषावतारोऽसौ सर्वधातुविराजितः ॥४५॥ वैकुण्ठसदृशो दिव्यो नारायणसमाश्रयः ॥ शेषमारुतसम्वादादागतः पुण्यकाननः ॥४६॥ योजनत्रयविस्तीर्णस्त्रिंशद्योजनमायतः ॥

सब नदियोंमें श्रेष्ठ, शुकदेवको वरदान देनेवाली एवं अगस्त्यमुनिसे पूजित, आनन्दको देनेवाली गङ्गाके दक्षिण ओर तीन सौ योजनपर सुवर्णमुखी नामक एक नदी है। उसके उत्तर ओर अढ़ाई कोसपर पुण्य काननसे युक्त, सुवर्ण पर्वतका पुत्र, सब तीर्थोंसे युक्त, साक्षात शेषका अवतार, सब धातुओंसे शोभित, वैकुण्ठके समान, दिव्य, श्रीनारायणका आवास, शेष और वायुके विवादसे लाया हुआ एवं तीन योजन चौड़ा और तीस योजन लम्बा श्रीवेङ्कटाचल नामक पर्वत है ॥४७॥

वदनं वेङ्कटगिरिर्नृसिंहाद्रिश्च मध्यमः ॥४७॥ श्रीशैलः पुच्छ-

भागस्थः सर्वक्षेत्रमयो गिरिः ॥ सर्ववृक्षसमाकीर्णः सर्वधातुविभू-
षितः ॥४८॥ कुन्दमन्दारपनसप्लक्षोदुम्बरकिंशुकैः ॥ पिचुमन्दैः
पारिजातैस्तिंत्रिणीजम्बुमण्डलैः ॥४९॥ सरलैश्च महावृक्षैः कृ-
ष्णागुरुभिराश्रितः ॥ तालहिंतालपुन्नागैर्देवदारुभिराश्रितः ॥५०॥
हंसकारण्डवाकीर्णो बककोकशुकैर्युतः ॥ कपोतैः क्षीरहंसाद्यैर्मृ-
गषण्डैश्च भूषितः ॥५१॥ सिंहशार्दूलशरभक्रोडमातङ्गवानरैः ॥
जम्बूकैश्चैव भल्लूकैः कस्तूरीमृगमाहिषैः ॥५२॥ उरगैर्व्यालख-
ड्गैश्च गोमायुभिरपि श्रितः ॥ मल्लिकामालतीजातिनन्द्यावर्तैः
विराजितः ॥५३॥ चम्पकाशोकपुन्नागकेतकैः स्वर्णकेतकैः ॥ एवं
मनोहरः श्रीमान्पर्वतः पुण्यकाननः ॥५४॥

जिसका मुख श्रीवेङ्कटाचल, मध्यभाग नृसिंह पर्वत और श्रीपर्वत पुच्छ भाग है; जो सब तीर्थों एवं सब वृक्षोंसे भरा हुआ, सब धातुओं, कुन्द, मन्दार, पनस (कटहल), प्लक्ष, उदुम्बर, किंशुक (पलाश), पिचुमन्द, कपित्थ (कैंथ), पारिजात, तिंतिड़ी (इमली), जम्बूके मण्डल, बड़े-बड़े कृष्ण अगर, ताल, हिन्ताल, पुन्नाग, देवदारु आदि वृक्षोंसे शोभित, हंस और कारण्डसे भरा हुआ, बक, काक और शुकसे युक्त, कपोत, क्षीर हंसादि एवं मृग, सिंह, शार्दूल, शरभ, सुकर, हस्ती, बन्दर, जम्बुक, (शृगाल) भालू, कस्तूरीमृग, महिष, सर्प, खड्ग (गैंडा) तथा गोमायुसे बसा हुआ, मल्लिका, मालती, जाती, नन्द्यावर्त, चम्पक, अशोक, पुन्नाग, केतकी, स्वर्ण केतकी इत्यादि पुष्पोंसे शोभित, ऐसा मनोहर तथा पवित्र वनवाला है ॥५४॥

तरवो देवतगणा मृगाश्च ऋषिपुङ्गवाः ॥ पितरः पक्षिणः
सर्वे पाषाणा यक्षकिन्नराः ॥५५॥ एवं प्रभावोऽस्य गिरीन्द्रजन्म-
नः श्रीवेङ्कटाद्रेस्तु हरेस्तथैव ॥ जानन्ति न ब्रह्मशिवेन्द्रपूर्वका
अत्यल्पवीर्या मनुजास्तु किं पुनः ॥५६॥

इति श्रीभविष्योत्तरपुराणे श्रीवेङ्कटाचलमाहात्म्ये भगवतः श्रीवैकुण्ठाद्वेङ्कटाचलागमनवर्णनं
नाम द्वितीयोऽध्यायः ॥ २ ॥

जिसके वृक्षही देवतागण, मृग ही मुनिवर्ग, पक्षी ही पितर, पाषाण ही यक्ष तथा किन्नर हैं । इस प्रकारके

इस पर्वतपुत्र श्रीवेङ्कटाचल एवं श्रीहरिको, ब्रह्मा, शिव, इन्द्र इत्यादि भी नहीं जानते हैं। बहुत कम शक्ति या प्रभाववाले मनुष्योंकी फिर बात ही क्या है ॥५६॥

इति द्वितीयोऽध्यायः ॥२॥

## तृतीयोऽध्यायः ॥३॥

महिमा स्वामी तीर्थकी, प्रभु वल्मीक प्रवेश।
गाय रूप होइ देव सब, बसे गगन नृप देश ॥१॥
गोपालक को भीत कर, पान करन गोदुग्ध।
गोप मरन नृप आगमन, ईश शाप नृप मुग्ध ॥२॥

अथ स्वामिपुष्करिणीमाहात्म्यम्

शतानन्द उवाच—

तस्योपरि वरा दिव्या स्वामिपुष्करिणी शुभा ॥ मत्स्यकच्छप-सम्बाधा जलकुक्कुटभूषिता ॥१॥ शिंशुमारगणाकीर्णा मण्डूकस्व-रहुङ्कृता ॥ तीरजैर्वृक्षसंघैश्च तुङ्गैराचुम्बिताम्बरा ॥२ ॥गङ्गा-दिसर्वतीर्थानां जन्मभूमिर्विराजते ॥

श्रीस्वामिपुष्करिणीका माहात्म्य

शतानन्दने कहा—उस श्रीवेङ्कटाचल पर्वतपर श्रेष्ठ, दिव्य, शुभ, मत्स्य तथा कच्छपसे भरा हुआ, जलकुक्कुटसे शोभित, शिंशुमारों (ग्राहों) से भरा हुआ, मेढकके शब्दसे पूर्ण, तीरपर लगे हुए आकाशतक ऊंचे वृक्षोंसे शोभित एवं गङ्गादि सब तीर्थोंकी जन्मभूमि श्रीस्वामिपुष्करिणी विराजमान है ॥३॥

तस्यां ये स्नान्ति मनुजास्ते धन्याः पुण्यवर्धनाः ॥४॥ धनुर्मासे सिते पक्षे द्वादश्यामरुणोदये ॥ कांक्षन्ति विबुधश्रेष्ठा

मज्जनं तज्जले शुभे ॥४॥ कांक्षन्ति मनुजाः स्नानमिति भोः किं वदामि ते ॥ येऽत्र श्राद्धादिकर्माणि पितॄणां कुर्वते द्विजाः ॥५॥ तेषां च पितरस्तुष्टा नृत्यन्ति हरिमन्दिरे ॥ जन्मना किमनेनेह व्यर्थेन भवतामहो ॥ ६ ॥ स्नानदानेन तत्तीर्थे मनुजा भाग्यशालिनः ॥

उसमें जो मनुष्य स्नान करते हैं, वे पुण्यवृद्धि करनेवाले तथा धन्य हैं। धनु ( पौष ) मासके शुक्लपक्षके द्वादशीमें अरुणोदयके समय श्रेष्ठ देवतागण भी उसके शुभ जलमें स्नान करना चाहते हैं; मनुष्यलोग इसमें स्नान करना चाहते हैं ऐसा मैं तुमसे क्या कहूं ? जो द्विजाति यहांपर पितरोंका श्राद्धादि कर्म करते हैं, उनके पितर सन्तुष्ट होकर वैकुण्ठमें नाचते हैं। अजी ! यहांपर आपके इस व्यर्थ जन्मसे क्या होगा ? उस तीर्थमें स्नान और दान करनेसे ही मनुष्य भाग्यवान् होते हैं ॥७॥

शङ्खो नाम नृपः कश्चित्स्नानमात्रेण राज्यगः ॥ ७ ॥ पुरा नारायणो नाम ब्राह्मणोऽङ्गिरसः सुतः ॥ स्वामिपुष्करिणीतीर्थे महिम्ना स्नानजेन हि ॥ ८ ॥ वरं लब्ध्वा हरिं दृष्ट्वा जगाम हरिमन्दिरम् ॥ रामोऽपि तत्र स्नानेन हृतां सीतामगात्पुरा ॥९॥ एवं तीर्थवरा तत्र स्वामिपुष्करिणी शुभा ॥ तस्याः पश्चिमदिग्भागे वराहवदनो हरिः ॥१०॥ धरामालिङ्गय वल्मीक आस्ते पिप्पलराजिते ॥ त्रिकोटितीर्थराजानां जन्मस्थानं स भूधरः ॥११॥

शङ्ख नामका कोई राजा केवल स्नानमात्रसे ही राज्य पाया। प्राचीन समयमें अङ्गिराके पुत्र नारायण-नामक एक ब्राह्मण श्रीस्वामिपुष्करिणी तीर्थमें स्नानके माहात्म्यसे ही हरिके दर्शन कर वरदान पा वैकुण्ठ गये। पहले श्रीरामने भी वहांपर स्नान करनेसे खोयी हुई सीताको पाया था। इस प्रकार वहांपर सब तीर्थोंमें श्रेष्ठ श्रीस्वामिपुष्करिणी है। उसके पश्चिम दिशामें श्रीवराह भगवान् पीपल वृक्षके नीचे पृथ्वीको आलिङ्गन करते हुए, वल्मीकमें विराजमान हैं। यह पर्वत तीन करोड़ तीर्थोंका जन्मस्थान है ॥११॥

एवं गिरिवरं प्राप्य भगवान्वेङ्कटाचलम् ॥ वैकुण्ठादधिकं मत्वा विचचार ततस्ततः ॥१२॥ न प्राप किञ्चिद्वासस्थानं गूहनार्थं रमापतिः ॥

गायोंका सूंघनेके रूपमें भगवान्को ढूंढना [ पृष्ठ ३१४ ]




ततो धेनुसहस्रेण साकं श्रीवेङ्कटाचले ।
सा गौर्जगाम नित्यं तु रमानाथं विचिन्वती ॥

इस पर्वतश्रेष्ठ श्रीवेङ्कटाचलको प्राप्त कर, श्रीभगवान् इसको वैकुण्ठसे भी अधिक मानकर वहांपर घूमने लगे, पर उन्होंने छिपनेके लिये कोई स्थान नहीं पाया ॥१२॥

अथ श्रीनिवासस्य स्वामितीर्थपश्चिमतीरस्थवल्मीकप्रवेशप्रकारः

इत्थं विचार्यमाणे तु स्वामिपुष्करिणीतटे ॥१३॥ दक्षिणे विमलं दिव्यं वल्मीकं दृष्टवान्मुदा ॥ तिन्त्रिणीवृक्षमूलस्थं भगवाञ्जगदीश्वरः ॥१४॥ मत्वेदं परमं स्थानं तत्र लीनोऽभवद्धरिः ॥ एवं देवे स्थिते तत्र विगतं वत्सरायुतम् ॥१५॥

श्रीनिवास भगवान्का स्वामितीर्थके पश्चिम भागस्थित वल्मीकमें प्रवेश करना

यही विचार करते हुए भगवान जगदीश्वरने स्वामिपुष्करिणीके तटपर दक्षिणमें तिंतिणी (इमली)के मूलमें दिव्य और स्वच्छ वल्मीकको आनन्दसे देखा। इसको उत्तम स्थान मानकर भगवान् उसमें लीन हो गये। वहांपर भगवान्को ठहरे हुए दश हजार वर्ष बीत गये ॥१५॥

अतीते द्वापरे चैव स्वष्टाविंशतिमे कलौ ॥ अतीते वत्सरे कश्चिच्चोलराजो नृपोत्तमः ॥१६॥ अवतारं समापन्नो नागकन्योदरे तथा ॥

द्वापरके बीत जानेपर अट्ठाइसवें कलियुगमें एक संवत्सर बीतनेपर किसी राजाओंमें श्रेष्ठ चोल देशके स्वामीने एक नागकन्याके उदरसे अवतार लिया ॥१६॥

तस्मिन्छासति भूखण्डं बहुपुण्यफलप्रदम् ॥१७॥ बहुक्षीरप्रदा गावः पुत्रा वै पितृवत्सलाः ॥ काले ववर्ष पर्जन्यः सस्या वै बहुधान्यदाः ॥१८॥ नार्यः पतिव्रताः सर्वाः पुरुषाश्च सतीव्रताः ॥ इत्थं शासति राजेऽस्मिञ्जना आनन्दतत्पराः ॥१९॥

उसके शासनकालमें पृथ्वी बहुत पुण्यके फलको देनेवाली, गायें बहुत दूध देनेवाली तथा पुत्र पिताके भक्त हुए। मेघ समयपर वर्षा करने लगे। कृषि बहुत धान्य देनेवाली, सब स्त्रियां पतिव्रता एवं सब पुरुष एकपत्नीव्रतवाले हुए। इस प्रकार इस राजाके शासनकालमें मनुष्य आनन्दमें मग्न थे ॥१९॥

अथाकाशनृपगृहे ब्रह्मादीनां धेन्वादिरूपेण स्थितिः

तस्मिन्काले विधिः साक्षाद्धेनुरूपं समाश्रितः ॥ ब्रह्मधेनोः

पालिकाऽभूद्गोपाली कमलालया ॥२०॥ साक्षाद्रुद्रो वत्सरूपी ताभ्यां चेयं समागता ॥ पश्यन्ती पतिमार्गन्तु चोलराजं समभ्यगा-त् ॥२१॥ चोलराजगृहं प्राप्य सा मौल्येन सवत्सकाम् ॥ विक्रीय गां महालक्ष्मीर्जगाम निजधाम च ॥२२॥

आकाशराजाके घरपर ब्रह्मादिकोंका गौ इत्यादिके रूपमें ठहरना

उस समय साक्षात् ब्रह्माने गौका रूप धारण किया। लक्ष्मीजी ब्रह्मा-रूपी गौका पालन करनेवाली ग्वालिनि हुई। साक्षात् शिवजीने वत्सका रूप धारण किया। इस प्रकार स्वामीके मार्गको देखती हुई वह ग्वालिनि उन दोनों गौ और बछड़ेके साथ चोलराजके पास आयी और वह महालक्ष्मी चोलराजके घर पहुंचकर बछड़ाके साथ गौको बेंचकर मूल्य लेकर अपने स्थानको गयीं ॥२२॥

गृहीत्वा तां महीपालो मुदमाप प्रियान्वितः ॥ बहुक्षीरप्रदां तां स पुत्रार्थमकरोत्तदा ॥२३॥ ततो धेनुसहस्रेण साकं श्रीवेङ्कटाचले ॥ सा गौर्जगाम नित्यं तु रमानाथं विचिन्वती ॥२४॥ तत्र तत्र समाजिघ्रन्भूधरेन्द्रे वृषाकपिम् ॥ विचिनोति स्म सर्वत्र धेनुरूपी विधिस्तदा ॥२५॥

वह राजा वत्सको लेकर अपनी प्रियासहित बहुत आनन्दित हुए। तब उन्होंने उस बहुत दूध देनेवाली गायको पुत्रके लिये रख दिया। हजार गौओंके साथ वह गौ लक्ष्मीपति भगवान्को ढूंढ़ती हुई प्रति-दिन श्रीवेङ्कटाचलको जाती थी और वहां उस श्रेष्ठ पर्वतके स्थान-स्थानपर सर्वत्र ही वह धेनु-रूपी ब्रह्मा सूंघते हुए भगवान् वृषाकपिको ढूंढ़ने लगे ॥२५॥

ततः कालेन महता स्वामिपुष्करिणीतटे ॥ वल्मीकस्थं हरिं ज्ञात्वा तुतोष मनसा विधिः ॥ २६ ॥ समसिञ्चच्च वल्मीकं समन्तात्क्षीरधारया ॥ तदा प्रभृति नित्यं तु राजधेनुगणैः सह ॥२७॥ तत्र गत्वा च भक्त्यैव वल्मीके क्षीरसेचनम् ॥ जगन्नाथस्य संप्रीत्यै धेनुरूपी पितामहः ॥ २८ ॥ चकारानुदिनं गेहे नैव क्षीरं ददौ तदा ॥

पश्चात् बहुत समय बीत जानेपर वह ब्रह्मा स्वामिपुष्करिणीके तीरपर वल्मीकमें ठहरे हुए हरिको जानकर मनमें आनन्दित हुए, एवं चारों ओरसे दुग्धधारके द्वारा उनको भिगोने लगे। तबसे प्रतिदिन धेनु-रूपी ब्रह्मा राजाके गौओंके साथ वहां जाकर भगवानकी प्रसन्नताके लिये भक्तिपूर्वक वल्मीकमें दुग्ध छोड़ देते थे और तबसे घरपर दूध नहीं देते थे ॥२८॥

चिरमेवं गते काले चोलराजसखी स्वयम् ॥२९॥ धेनुपालं समाहूय वचनं चेदमब्रवीत् ॥ गवां पालक दुर्बुद्धे पयोऽस्याः किं करोषि रे ॥३०॥ किं त्वं भुङ्क्षेऽथ वा वत्सो भुङ्क्ते तद्वद मे द्रुतम् ॥

इस प्रकार बहुत समय बीत जानेपर एक दिन स्वयं चोलराजमहिषीने ग्वालेको बुलाकर यह बात कही कि हे दुर्बुद्धि गौओंके पालन करनेवाले! तू इस गौके दुग्धको क्या करता है? क्या तू भक्षण करता है वा बछड़ा ही पी जाता है, यह मुझसे शीघ्र कहो ॥३१॥

इति तस्या वचः श्रुत्वा गोपालो भयविह्वलः ॥३१॥ उवाच वचनं मन्दं राजभार्यां सगद्गदम् ॥ न जानेऽहं च तत्कर्म न मया पीयते पयः ॥३२॥ स्वयं पिबति वा धेनुर्वत्सो वेति न विद्महे ॥ सत्यं वचनमेतद्धि विचारं कुरु भामिनि ॥३३॥

उनके इस प्रकारके वचनको सुनकर भयसे घबड़ाये हुए ग्वालेने भर्रायी हुई आवाजमें राजमहिषी (रानी) से कहा कि मैं इस कामको नहीं जानता। मैं दूध भी नहीं पीता, स्वयं गौ ही दूधको पीती है वा बछड़ा पी जाता है, यह भी मैं नहीं जानता। हे भामिनि! यह बात सत्य है, इसका आप विचार कीजिये ॥३३॥

इति गोपवचः श्रुत्वा सा सती विह्वलेक्षणा ॥ ताडयामास तं गोपं रज्जुभिश्चर्मनिर्मितैः ॥३४॥ ततः परदिने प्राप्ते ताडितो राज-भार्यया ॥ कण्ठाङ्घ्रिबद्धरज्जुं तां त्यक्त्वा तत्पृष्ठतो ययौ ॥३५॥

इस प्रकार ग्वालेके वचनको सुनकर उस सतीने क्रोधसे नेत्र तरेरकर उस ग्वालेको चर्मकी रस्सी (चाबुक) से मारा। तब रानीसे पीटा गया वह ग्वाला दूसरे दिन उस गौके कण्ठमें रस्सी बांधकर उसको छोड़ उसके पीछे-पीछे गया ॥३५॥

अथ गोक्षीरपायिनं श्रीनिवासं प्रति गोपालकृतताडनम्

धेनुः प्राप्याथ वल्मीकं दिव्यं तद्धरिमन्दिरम् ॥ अभ्यषिञ्च-

रपयोभिश्च स्वपयोधरसम्भवैः ॥३६॥ तां दृष्ट्वा धेनुपः कोपात्कुठारं हस्तमात्रकम् ॥ उद्धृत्य तरसा तस्या वधोद्योगं समाचरत् ॥

गायके दुग्धको पीनेवाले भगवान्‌को ग्वालेका पीटना

तब उस गायने उस दिव्य श्रीभगवान्‌के मन्दिर वल्मीकके पास पहुंचकर अपने स्तनसे उत्पन्न दुग्धसे उनको भिगो दिया। उसको देखकर शीघ्र ही वह ग्वाला क्रोधसे एक हाथमें कुल्हाड़ी उठाकर उसको मारनेके लिये तैयार हुआ ॥३७॥

तदा वल्मीकगः स्वामी वात्सल्यं दर्शयन् हरिः ॥ स्वभक्तहननं लोके स्वास्मीयं सहते तु यः ॥३८॥ स एव नरकं भुङ्क्ते यावदाचन्द्रतारकम् ॥ मदर्थे च कुठारेण हनिष्यति च गां खलः ॥३९॥ इति मत्वा रमाकान्तः श्रीनिवासो निरामयः॥ तुलसीदलमात्रेण मामकेनैव यः पुमान् ॥ ४० ॥ पूजयेद्भक्तिभावेन तं रक्षामीति मत्पणः ॥ इयं तु भक्त्या मां नित्यं सिञ्चति क्षीरधारया ॥४१॥ इत्थं विचार्य गोविन्दस्तत्प्रहारं निगृह्य च ॥ स्वयं जग्राह तं घातं मौलौ स्वे च जगत्पतिः ॥ ४२ ॥

तब उस वल्मीकमें ठहरे हुए लक्ष्मीपति, निर्गुण, श्रीनिवास हरिने वात्सल्य दिखलाते हुए, यह ध्यान कर कि जो कोई अपने लिये अपने भक्तोंका पीटा जाना सहन कर लेते हैं, वे जबतक चन्द्रमा और तारे रहते हैं, तबतक नरक भोगते हैं। मेरे कारण यह दुष्ट इस गौको कुल्हाड़ीसे मारेगा, एवं ऐसा निश्चय कर कि जो पुरुष केवल एक तुलसीके पत्रसे भक्तिपूर्वक मेरा पूजन करता है, मैं उसकी रक्षा करता हूं यह मेरी प्रतिज्ञा है; यह तो प्रतिदिन दुग्धधारसे मेरा अभिषेक करती है, इसलिये उसके प्रहारको रोककर अपने मस्तकपर ले लिया ॥४२॥

कुठारेणातितीक्ष्णेन ताडिते वेङ्कटेश्वरे ॥ शिरःस्फोटं समापन्ने कुठारेण तदोत्थिता ॥४३॥ सप्ततालप्रमाणेन रक्तवृद्धिरभूत्तदा ॥ स तं कोलाहलं दृष्ट्वा गोपालो मरणं ययौ ॥४४॥ हते गोपे तदा सा गौरवरुह्य गिरेस्तटात् ॥ राजानं समनुप्राप्य वत्सहीनेव दुःखिता ॥४५॥ लुण्ठनं परिचक्रेऽथ राजाग्रे राजमन्दिरे ॥४६॥

उस तेज कुल्हाड़ीसे भगवान् वेङ्कटेश्वरके मारे जाने और मस्तक फूट जानेपर उसमेंसे सात ताल प्रमाण ऊँचा रक्त बहने लगा। वह ग्वाला इस कोलाहलको देखकर मृत्युको प्राप्त हुआ। ग्वालेके मर जानेपर वह गौ पर्वत किनारेसे उतरकर राजाके पास आ बिना बछड़ेके जैसा दुःखी होकर राजाके आगे लोटने लगी ॥४६॥

अथ मृतगोपविलोकनार्थं श्रीवेङ्कटाचलं प्रति नृपागमनम्

तां दृष्ट्वा विह्वलां गां स लुठन्तीं चारमब्रवीत् ॥ किमर्थं लुठतीयं गौस्त्यक्ता गोसन्ततिः कुतः ॥४७। गवा सार्धं गच्छ चार मेलयैनां गवां गणे ॥ इति राज्ञा समाज्ञप्तश्चारस्तत्पृष्ठतो ययौ ॥४८॥

मरे हुए गोपालको देखनेके लिये श्रीवेङ्कटाचलपर राजाका आना

राजाने उस विह्वल गौको लोटती हुई देखकर चरवाहेसे कहा कि यह गौ किसलिये लोटती है ? इसने और गौओंको यहां छोड़ा ? हे चरवाह ! गौके साथ तुम जाओ और इसको गौओंमें मिला दो। राजासे ऐसी आज्ञा पाकर वह चरवाह उस गौके पीछे-पीछे गया ॥४८॥

आरुह्य वेङ्कटगिरिं वल्मीकाग्रमुपाश्रितः ॥ पतितं धेनुपं दृष्ट्वा वल्मीकाग्रात्समुत्थिताम् ॥४९॥ रक्तवृष्टिं घोरतरां सप्ततालप्रमाणिकाम् ॥ संवीक्ष्य नृपचारोऽथ जगाम नृपमन्दिरम् ॥५०॥ चारस्तमानम्य नरेन्द्रसन्निधौ गोपालकृत्यं सकलं जगाद ॥ गोपालघातेन कृतं सरक्तं वल्मीकरन्ध्रं तमुवाच दीनः ॥५१॥

श्रीवेङ्कटाचलपर चढ़कर वल्मीकके पास पहुंच उस मरे हुए ग्वाले तथा वल्मीकके ऊपरसे उठती हुई सात ताल प्रमाण ऊंची भयानक रुधिरधाराको भी देखकर वह राजाके घर आया और दीन होकर राजाको प्रणाम कर उस ग्वालेकी सब घटनाको कहा कि ग्वालेकी चोटके कारण उस वल्मीकसे रक्तस्राव हो रहा है ॥५१॥

रक्तवृष्टिं ततः श्रुत्वा राजा विस्मितमानसः ॥ आरुह्य नरयानं च शीघ्रमागाद् वृषाचलम् ॥५२॥ वल्मीकस्यान्तिके स्थित्वा स इदं वाक्यमब्रवीत् ॥ किमिदं भो महत्कष्टं केन पापेन वै कृतम् ॥५३॥

धेनुपालस्य मरणं वल्मीकं रक्तपूरितम् ॥ गवा वृत्तान्तकथनं कि-
मिदं वेङ्कटाचले ।.५४॥

रक्तकी धाराको सुनकर वह राजा आश्चर्ययुक्त मनसे मनुष्योंकी सवारीपर चढ़कर शीघ्र ही वृषाचलको आये और वल्मीकके पास ठहरकर यह बात बोले——अजी ! यह दुःख क्या है और किस पापीके द्वारा किया गया है ? इस वेङ्कटाचलपर ग्वालेका मरना, वल्मीकका रक्तसे भर जाना और गौका वृत्तान्त कहना यह सब क्या बात है ॥५४॥

अथ नृपं प्रति वल्मीकनिर्गत श्रीनिवासशापः

इति राजवचोऽश्रौषीद्वल्मीकस्थो जगत्पतिः ॥ ५५ ॥ उद्भिद्य
वल्मीकमनन्तवीर्यवाननन्तशैलेन्द्रतलं समाश्रितः ॥ श्रीस्वामि-
तीर्थस्य च दक्षिणे तटे वल्मीकगः श्रीभगवानुवाच ॥ ५६॥ सग-
द्गदोत्कण्ठसमाकुलाननः सरक्तबाष्पोदकपूर्णलोचनः ॥ चोलं
नृपेन्द्रं वहु निष्ठुरं गिरा स शङ्खचक्रप्रतिमां समाश्रितः ॥५७॥

राजाको वल्मीकसे निकला हुआ शाप

राजाके इस वाक्यको वल्मीकमें ठहरे हुए भगवान्ने सुना । अनन्तर बलवाले,शेषाचलके निम्न भागपर स्थित श्रीभगवान्ने श्रीस्वामितीर्थके दक्षिण तटपर वल्मीकको फोड़ उससे उत्पन्न हो, गद्गद कण्ठ, व्याकुल मुख-मंडल, आँसूसे भरे हुए लाल नेत्र एवं शंख-चक्रके साथ मूर्ति धारण कर चोलराजको बहुत ही कठिन बात कही ॥५७॥

*श्रीभगवानुवाच—*

पापिष्ठोऽसि दुराचार राज्यगर्वमदोन्नत ॥ अनाथं भक्तहीनं
मां दरिद्रं वनचारिणम् ॥५८॥ पितृमातृविहीनं च भार्याबन्धुविव-
र्जितम् ॥ सुभ्रातृहीनं कुटिलः कुठारेणासिधारिणा ॥५९॥ अता-
डयन्नृपश्रेष्ठ तद् दुःखमतुलं ह्यभूत् ॥ धेनुपालायुधाघाताज्जातं
दुःखं महाद्भुतम् ॥६०॥ शिरो भिन्नं धेनुपेन दयाहीनेन दुर्मते ॥

**यजमानो गृहे यस्तु न विचारपरो भवेत् ॥६१॥ स्त्रीपुत्राद्यैः कृतं कर्म तस्यानिष्टकरं विदुः ॥ इत्युक्त्वा भगवान्देवः शशाप नृपपुङ्गवम् ॥६२॥ पिशाचो भव दुर्बुद्धे मद्दुःखाधानकर्मणा ॥**

श्रीभगवान्ने कहा—अरे दुष्ट ! राज्यमदसे उद्धत ! तुम पापी हो। अनाथ, भक्तिहीन, दरिद्र, वनवासी, पितामातासे हीन, स्त्री और भाईसे वर्जित एवं उत्तम भाईसे हीन मुझको, हे राजाओंमें श्रेष्ठ ! इस दुष्टने तलवारके समान धारवाले कुठारसे मारा है, जिससे मुझको अत्यन्त दुःख हुआ है। ग्वालेके अस्त्रप्रहारसे मुझको अत्यन्त अद्भुत दुःख हुआ है। हे दुर्बुद्धि ! निर्दयी ग्वालेने मेरा शिर फोड़ दिया है। जो यजमान घरपर विचार करनेवाला नहीं होता है उसके स्त्री-पुत्र इत्यादिकोंसे किये हुए काम उसका अनिष्ट करनेवाले होते हैं। ऐसा कहकर भगवान् विष्णुने उस श्रेष्ठ राजाको शाप दिया कि हे दुर्बुद्धि ! मेरे दुःखको उत्पन्न करनेवाले कामसे तुम पिशाच हो जाओ।

**इत्थं शप्तो नृपश्रेष्ठः पतितः शापमूर्च्छितः ॥६३॥ मुहूर्तान्ते समुत्थाय प्रोवाच जगदीश्वरम् ॥६४॥**

इति श्रीभविष्योत्तरपुराणे श्रीवेङ्कटाचलमाहात्म्ये स्वामितीर्थपश्चिमतीरस्थवल्मीकाच्छ्री निवासाविर्भाववर्णनं नाम तृतीयोऽध्यायः ॥३॥

वह राजा इस प्रकार शापसे शापित एवं शोकसे मूर्च्छित होकर गिर पड़ा और दो घड़ीके बाद उठकर भगवानसे बोला ॥६४॥

इति तृतीयोऽध्यायः ॥३॥

## चतुर्थोऽध्यायः ॥४॥



श्राप हेतु नृप प्रश्नपर, प्रभु उत्तर निर्देश।
प्रश्नुवण पूर निदान हित, गुरु औषध विनिवेश ॥१॥
समता मथुरा आदिसे, वेंकटाद्रि यहि ठाम।
इम चतुर्थ अध्यायमें, वर्णन विविध तमाम ॥२॥

## अथ नृपं प्रति श्रीनिवासकृतशापहेतूपन्यासः

*राजोवाच—*

किमर्थमशपो देव माऽपराधविवर्जितम् ॥ अविचार्य जगन्नाथ किं मयाऽऽचरितं तव ॥१॥ न जानेऽहं किञ्चिदपि दुःखदं ते रमापते ॥ हा कष्टमतुलं प्राप्तं कथमत्र जगत्पते ॥ इति तेन स विज्ञप्तः श्रीनिवासोऽतिदुःखितः ॥ उवाच मन्दं वचनं राजानं शापमूर्च्छितम् ॥३॥

### श्रीनिवासका राजाको श्राप देनेका कारण

राजाने कहा—हे देव ! आपने मुझ निरपराधको बिना विचारे किसलिये श्राप दिया ? हे जगन्नाथ ! मैंने आपको दुःख देनेवाला कौन-सा काम किया, मैं कुछ भी नहीं जानता । हे रमापति ! हे जगत्पति ! हाय ! यह अतुल कष्ट यहांपर कैसे प्राप्त हुआ ? उससे इस प्रकार कहे जानेपर श्रीनिवास भगवान्‌ने बहुत दुःखी होकर उस शापसे मूर्छित राजासे धीरे-धीरे यह बात कही ॥३॥

*श्रीनिवास उवाच—*

पापिष्ठोऽहं दुराचारोऽस्म्यविचारी नृपोत्तम ॥ अज्ञानेनातिदुःखेन वृथा शापो मयार्पितः ॥४॥ तथापि मां विदुर्देवा भगवन्तं सनातनम् ॥ यतोऽतो मद्वचः सत्यं मद्भक्ता मामुपासते ॥ ५ ॥ मच्छापो ह्यनृतो न स्यादिति वेदविदो विदुः ॥ भक्तवात्सल्यदोषेण दुःखितोऽहं भवामि च ॥६॥ यावत्कलियुगं तिष्ठेत्तावद् दुःखी भवान्नृप ॥ उभौ दुःखं समापन्नौ सत्यसङ्कल्पदोषतः ॥ भविष्यति नृपश्रेष्ठ आकाश इति मानवान् ॥ सोऽपि मे दास्यते कन्यां नाम्ना पद्मावतीं शुभाम् ॥८॥ कन्यादानस्य काले च ददासि वरक्षिणाम् ॥ किरीटं शतभारं च रत्नवज्रसमाकुलम् ॥९॥ शुक्रवारे तु सायाह्ने किरीटं धारयाम्यहम् ॥ किरीटधारणे स्यातां नेत्रे

श्रीनिवासजीका आकाशराजाको शाप देना। [ पृष्ठ ३१६ ]



धेनुपालस्य मरणं वल्मीकं रक्तपूरितम्। गवा वृत्तान्तकथनं किमिदं वेङ्कटाचले।
इति राजवचः श्रुत्वा वल्मीकस्थो जगत्पतिः। नृपेन्द्रं निष्ठुरं प्रोचे राज्यगर्वमदोन्मदम्॥
... ... ... ... ... पिशाचो भव दुर्बुद्धे मद्गुर्वाघातनिर्मणा।

मे जलपूरिते ॥१०॥ घटिकाषट्कमात्रं ते सुखं तव भविष्यति ॥ इति कालावधिं कृत्वा राज्ञः स्वस्य च माधवः ॥११॥ सुखस्य कालं संसूच्य स्वावतारप्रयोजनम् ॥ स्वावतारस्य चरितं कलौ कन्यापरिग्रहम् ॥१२॥

श्रीनिवासने कहा—हे राजाओंमें श्रेष्ठ ! मैं पापी, दुराचारी एवं अविचारी हूं, दुःख एवं अज्ञानसे मुझसे तुमको व्यर्थ ही शाप दिया गया। तिसपर भी, चूंकि देवतागण मुझको सनातन भगवान् जानते हैं; अतएव मेरा वचन सत्य है। मेरे भक्तगण मेरी उपासना ही करते हैं। वेदके जाननेवाले यह जानते हैं कि मेरा शाप झूठा नहीं होता। भक्तवत्सलताके दोषसे मैं दुःखी हूं और होऊंगा। जबतक कलियुग है तबतक तू दुःखी होओ ! सत्य संकल्पके दोषसे हम दोनों दुःखी हुए हैं। आकाश नामका एक श्रेष्ठ राजा होगा, वह मुझको अपनी पद्मावती नामकी सुन्दरी कन्या देगा; एवं कन्यादानके समयमें रत्न और वज्रसे जड़ा हुआ सौ भारका किरीट तिलकमें देगा। शुक्रवारके सन्ध्या समयमें मैं उस किरीटको धारण करूंगा। किरीट धारण करनेसे छः घड़ी मात्रतक मेरी आंखें जलसे भर जायेंगी, तब तुमको सुख होगा। इस प्रकार भगवान्ने अपने और राजाके समयकी अवधि ठीक कर, सुखके समयको बताकर, अपने अवतारका प्रयोजन तथा चरित एवं कलियुगमें कन्याके ग्रहण करनेके बारेमें कहा ॥१२॥

अथ भगवत्क्षतापनोदनाय गुरुकृतचिकित्साप्रकारः

इति सम्भाष्य राजानं तत्रास्ते भगवान् हरिः ॥ क्षतशान्त्यर्थमाकांक्षन्वैद्यशास्त्रविशारदम् ॥१३॥ गुरुं सुरपतीनां च सस्मार जगदीश्वरः ॥ आगतं च गुरुं दृष्ट्वा स्वौषधं वद मे द्रुतम् ॥१४॥ इति तेन समाज्ञप्तो जीवो जीववतां वरः ॥ क्षीरमौदुम्बरं देव तथा कार्पासमर्कजम् ॥१५॥ मेलयित्वा रमाकान्त तत्क्षतोपरि धार्यताम् ॥ इत्येवं गुरुणाऽऽज्ञप्तस्तच्चकार यथोदितम् ॥१६॥

भगवान्के व्रणके लिये बृहस्पति द्वारा की हुई चिकित्सा

राजासे इस प्रकार वार्तालाप कर जगदीश भगवान् अपने घावके आराम होनेके लिये वैद्यकशास्त्रके विद्वान्की प्रतीक्षा करते हुए वहीं रहे और इन्द्रके गुरुका स्मरण किया। आये हुए गुरु ( बृहस्पति ) को देखकर उन्होंने कहा कि आप मुझे शीघ्र औषध बताइये। इस प्रकार भगवान्की आज्ञा पाकर सब

जीवोंमें श्रेष्ठ बृहस्पतिने कहा—हे देव ! हे रमाकान्त ! गूलरके दूधमें अकवन (आक) की रुई मिलाकर इस व्रणके ऊपर रखिये। बृहस्पतिसे ऐसा कहे जानेपर हरिने उनके कथनानुसार ही किया ॥१६॥

## अथ श्रीवेङ्कटाचलस्यायोध्यामथुरादितौल्यवर्णनम्

एवं कुर्वन् रमानाथस्तत्र लीनोऽभवद्धरिः ॥ कौसल्या कीट-
कग्रहं तिन्तिडी दशाद्रिग्रथः ॥१७॥ गिरिरूपोऽनुजः साक्षादयोध्या-
भूदधित्यका ॥ इत्थं रामावतारेण समां क्रीडामकल्पयत् ॥१८॥

## वेंकटाचलका अयोध्या और मथुराकी तुलनाका वर्णन

इस प्रकार कार्य करते हुए श्रीलक्ष्मीपति वहांपर छिपे रहते थे और उन्होंने वल्मीकको कौसल्या, तिंतिड़ीको रथ, पर्वतको साक्षात् अनुज श्रीलक्ष्मणजी एवं उस अधित्यका (ऊंची भूमि) को अयोध्या मानकर इस प्रकार रामावतारके समान अपनी क्रीड़ाकी कल्पना की ॥१८॥

वल्मीकं देवकी साक्षाद्वसुदेवोऽथ तिन्तिडी ॥ बलभद्रः शेष-
शैलो मथुराऽभूदधित्यका ॥१९॥ स्वामिपुष्करिणी तत्र यमुना च
व्यराजत ॥ यादवाश्च मृगाः सर्वे खगा वै गोपिकादयः ॥२०॥
एवं श्रीकृष्णरूपेण क्रीडितो वेङ्कटाचले ॥२१॥

वल्मीकको साक्षात् देवकी, तिंतिड़ीको वसुदेव, शेषाचलको बलभद्र, अधित्यकाको मथुरा, वहांपर स्वामिपुष्करिणीको यमुना, मृगगणोंको यादव एवं पक्षियोंको गोपी मानकर इस प्रकार श्रीवेङ्कटाचलपर कृष्णरूपसे भगवान्ने क्रीड़ा की ॥२१॥

एवं वेदमयः साक्षाद्गिरीन्द्रः पन्नगाचलः ॥ छन्नवल्मीकदेहाढ्यो
वैकुण्ठादधिको ह्यभूत् ॥२२॥ सुवर्णमुखरी नाम नदी सा विरजा
नदी ॥ वैकुण्ठो वेङ्कटगिरिर्वासुदेवो रमापतिः॥२३॥ मुक्ता अजाः
पक्षिगणा मुक्ता रुद्रामृतोत्तमाः॥ सनत्कुमारप्रमुखा वानराद्या
द्विजोत्तमाः ॥ २४ ॥

इस प्रकार पर्वतोंमें श्रेष्ठ, वल्मीकमें छिपे हुए देहवाले साक्षात् परमात्मासे शोभित एवं वेदमय श्रीशेषाचल

वैकुण्ठसे भी बढ़कर हुआ। यहां सुवर्णमुखरी नामकी नदी विरजा, वेङ्कटाचल वैकुण्ठ, मेषादि एवं पक्षी मोती, सब मर्त्य रुद्र तुल्य एवं वानर इत्यादि तो सनत्कुमार प्रभृति द्विजोत्तम हैं ॥२४॥

मानुषं जन्म चास्थाय यः पुमान्वेङ्कटाचलम् ॥ नन्तुमिच्छति धर्मिष्ठस्तेन सर्वमनुष्ठितम् ॥२५॥ प्रीतो भवेद्रमानाथः सर्वदेवनमस्कृतः ॥२६॥ श्रीवेङ्कटाद्रेर्महिमानमुत्तमं जानन्ति न ब्रह्मशिवेन्द्रपूर्वकाः ॥ किमल्पवीर्या मनुजास्तमोगता जानन्ति विष्णोः स्थलमद्भुतं हि तत् ॥२७॥

इति श्रीभविष्योत्तरपुराणे श्रीवेङ्कटाचलमाहात्म्ये नृपं प्रति श्रीनिवासकृतशापहेतूपन्यासादिवर्णनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

मनुष्य-जन्म पाकर जो धर्मात्मा पुरुष श्रीवेङ्कटाचलको जानेकी इच्छा करता है उसने सब कुछ कर लिया; उससे सब देवताओंसे नमस्कृत श्रीलक्ष्मीपति प्रसन्न हो जाते हैं। श्रीवेङ्कटाचलके उत्तम माहात्म्यको ब्रह्मा, शिव, इन्द्र इत्यादि भी नहीं जानते; उस विष्णुके अद्भुत स्थानको अल्प शक्तिवाले एवं तमोगुणसे युक्त मनुष्य क्या जानेंगे ॥२७॥

इति चतुर्थोऽध्यायः ॥४॥

## पञ्चमोऽध्यायः ॥५॥

श्री वराह आदेशसे, श्री निवास भगवान।
शेषाचल गिरिवर गमन, दासी वकुलाख्यान ॥१॥
पद्मावतिके व्याहका, उपोद्घातका लेख।
पठन मात्र अघनाश है, करो परीक्षा देख ॥२॥

अथ पद्मावतीपरिणयोपोद्घातः

ऋषय ऊचुः—

सूत सूत महाभाग सर्वशास्त्रविशारद ॥ श्रुतं श्रीवेङ्कटेशस्य

माहात्म्यं पापनाशनम् ॥१॥ अवतारप्रभावश्च चोलराजनिबन्धनम् ॥ वैकुण्ठाच्चैवागमनं चरितं लौकिकं परम् ॥२॥ कृपालोऽसि दयासारः शिष्यप्रीतिपरायणः ॥ तत्कल्याणविधिं ब्रूहि को वाऽऽकाशनृपोत्तमः ॥ ३ ॥

पद्मावतीके विवाहकी भूमिका

ऋषियोंने कहा—हे सूत ! हे महाभाग ! हे सब शास्त्रोंके जाननेवाले ! श्रीवेङ्कटेशका पापनाश करनेवाला माहात्म्य, अवतारका प्रभाव, चोलराजके लिये वैकुण्ठसे आना एवं उत्तम लौकिक चरित्र हमलोग सुन चुके। हे कृपालु ! आप दयाके सागर और शिष्योंपर प्रेम करनेवाले हैं, अतएव उनके विवाहविधानको कहिये ॥३॥

कथं पुत्र्यभवत्पूर्वं कथं जामातृतां गतः ॥ योगिनां मनसा चिन्त्यः श्रीनिवासः सतां गतिः ॥ ४ ॥ तत्वेन ब्रूहि भगवन् साङ्गं वैवाहिकं शुभम् ॥ यः पुमान् वेङ्कटेशस्य महिमक्षीरसागरे ॥५॥ स्नानाचारपरो नित्यं स धन्यः पुण्यवर्धनः ॥६॥

वह नृपश्रेष्ठ आकाश कौन थे ? उनकी पुत्री किस प्रकार उत्पन्न हुई थी ? सज्जनोंके आश्रय, योगियोंके ध्येय श्रीनिवास पूर्वमें किस प्रकार जामाता ( दामाद ) हुए ? हे भगवन् ! सब अङ्गोंके साथ विवाहका पूर्ण यथार्थ वर्णन कीजिये । जो पुरुष श्रीवेङ्कटेशके माहात्म्य-रूप क्षीरसागरमें नित्य स्नान करता है, वह पुण्यको बढ़ानेवाला तथा धन्य होता है ॥६॥

एवं मुनीनां वचनं निशम्य सूतो नितान्तं निजशिष्यसङ्घान् ॥ उवाच भक्त्या ह्यतिनम्रदेहः साध्वित्यसौ तान् कृपयाऽभिनन्दन् ॥ ७ ॥

इस प्रकार मुनियोंके वचनको सुनकर अत्यन्त नम्रशरीर होकर श्रीसूतजी अपने उस शिष्यसमूहका अभिनन्दन करते हुए "यह अच्छा है"—ऐसा भक्ति एवं कृपापूर्वक कहने लगे ॥७॥

*श्रीसूत उवाच—*

शृण्वन्तु मुनयः सर्वे भक्तिभावेन संयुताः ॥ पन्नगाचलनाथस्य कन्यासङ्ग्रहणं शुभम् ॥८॥

सूतजीने कहा—हे मुनिगण ! श्रीशेषाचलके स्वामीका शुभ कन्यापरिग्रहण करना भक्तिपूर्वक सुनिये ॥८॥

कदाचिद्वेङ्कटेशस्तु स्वौषधार्थं स्वयं हरिः ॥ गमनाभिमुखो भूत्वा निर्जगामारुणोदये ॥ ९ ॥ तस्मिन्काले वराहस्तु मृगयायां ससूकरः ॥ श्यामाकहारिणं जित्वा दैत्यं वृषभनायकम् ॥ १० ॥ समागच्छत्तदा देवो वेङ्कटेशं ददर्श सः ॥ गर्जन्तः कोऽसि कोऽसीति सूकरास्तत्र चाययुः ॥११॥ तान्दृष्ट्वा जगदीशस्तु तत्र लीनोऽभवद्धरिः ॥ लीनं तं वेङ्कटे दृष्ट्वा वराहवदनो हरिः ॥१२॥ वैकुण्ठादागतं मत्वा वेङ्कटेशं श्रियः पतिम् ॥ उवाच वचनं देवं धैर्यमालम्ब्य बुद्धिमान् ॥१३॥

एक दिन श्रीवेङ्कटेश भगवान् अपना औषध लानेके लिये स्वयं ही अरुणोदयके समय बाहर निकले। उसी समय मृगयामें सूकरोंके साथ वाराह भगवान् श्यामा ( सावां ) के चुरानेवाले वृषभासुर दैत्यको जीतकर आते थे। तब उन्होंने श्रीवेङ्कटेश भगवानको देखा। तू कौन है ? तू कौन है, ऐसा गर्जन करते हुए सब सूकर वहांपर आ गये। उनको देखकर श्रीजगदीश भगवान् अन्तर्धान हो गये। उनको वेङ्कटाचलमें तिरोहित होते देखकर बुद्धिमान् वाराह भगवान्ने लक्ष्मीके पति वेङ्कटेशको वैकुण्ठसे आया हुआ जान, धैर्य धारण कर उनसे कहा ॥१३॥

सोऽपि श्वेतवराहं तं जानन् वल्मीकतस्तदा ॥ निरीक्षमाणः सोत्कण्ठं निर्गत्योत्तरमभ्यधात् ॥१४॥ ततोऽन्योन्यविलोकोत्थबाष्पसन्दिग्धलोचनौ ॥ क्रोडनारायणौ साक्षाद्रूपद्वन्द्वाविराजितौ ॥१५॥ ऊचतुर्भाषणं चोभौ कृतलोकविडम्बनौ ॥ तयोस्तदद्भुतं कर्म दृष्ट्वा ब्रह्मपुरोगमाः ॥१६॥

श्रीवेङ्कटेशने भी उत्कण्ठापूर्वक देखते हुए उनको श्वेत वाराह जान, वल्मीकसे निकलकर उत्तर दिया। तब एक दूसरेके देखनेसे उत्पन्न अश्रुसे भरे हुए नेत्रवाले, अलग-अलग रूपोंसे शोभित एवं संसारको मोहित करनेवाले दोनों भगवान् और वाराह लोकका अनुकरण करते हुए परस्पर बोले ॥१६॥

ववृषुः पुष्पवर्षाणि क्रोडनारायणोपरि ॥ यथायुगं यथादेशं यथाकालं यथावयः ॥१७॥ तथाऽवतारमाकांक्षन्रमते प्राकृतो य-

था ॥१८॥ एवं वदन्तः सुरपुङ्गवास्ते विचित्रमायां जगदीशचेष्टाम् ॥
स्तुवन्त ऊचुस्तमनन्तवीर्यमनन्तशैलं च रमापतिं च ॥१६॥
इत्यन्योन्यं भाषमाणौ साक्षान्नारायणावुभौ ॥ सकौतुकं च सं-
वीक्ष्य स्तुत्वा स्वं स्वं पदं ततः ॥२०॥

उनके इस अद्भुत कर्मको देखकर ब्रह्मादि देवता वाराह और भगवानपर (उनके ऊपर) पुष्पवृष्टि करने लगे। "युग, देश, अवस्था एवं समयके अनुसार प्राकृत मनुष्योंके समान भगवान् लक्ष्मीकी अभिलाषा रखते हुए रमण करते हैं"—ऐसा कहते एवं जगदीशकी प्यारी मायाकी स्तुति करते हुए ये देवतागण शेषाचल एवं रमापतिको अनन्त शक्तिशाली बोलने लगे और परस्पर बोलते हुए साक्षात् नारायणस्वरूप दोनोंको कौतूहलके साथ देख, इस प्रकार स्तुति करके अपने-अपने स्थानको गये ॥२०॥

अथ श्रीवराहानुज्ञया श्रीनिवासस्य शेषाचलप्राप्तिः

गते देवगणे तत्र वराहो हरिमब्रवीत् ॥२१॥

वाराह भगवान्‌की आज्ञासे श्रीनिवासका शेषाचलपर आना

देवताओंके चले जानेपर श्रीवाराहने हरिसे कहा ॥२१॥

*श्रीवराह उवाच*

त्यक्त्वा वैकुण्ठलोकं तु किमर्थं त्वमिहागतः ॥ तद्वदस्व महा-
भाग जगदानन्दकारण ॥२२॥ इति तेन समाज्ञप्तो न्यगदत्कोल-
रूपिणा ॥२३॥

श्रीवाराह बोले—हे संसारको आनन्द देनेवाले! वैकुण्ठ लोकको छोड़कर आप यहाँ क्यों आये? हे महाभाग! आप कहिये। श्रीवाराह-रूपी भगवान् द्वारा इस प्रकार कहे जानेपर श्रीनिवासने कहा ॥२३॥

*श्री श्रीनिवास उवाच—*

भृगोरङ्घ्रिप्रपाताच्च रमा कोल्हापुरं गता ॥ तेन दुःखेन सन्त-
सस्त्यक्त्वा वैकुण्ठमुत्तमम् ॥२४॥ आगतोऽस्मि धराकान्त वल्मीके
तव दक्षिणे ॥ निवसन्तं च मां देव धेनुपालो ह्यताडयत् ॥२५॥
कुठारेणासिधारेण तत्क्षतं मां प्रबाधते ॥ औषधार्थं वराहात्मन्

गच्छामीह निरन्तरम् ॥ २६॥ दैवेन दृष्टवानस्मि त्वामद्येह धरा-
धरम् ॥ अत्रैव निवसामीति संकल्पो मम वर्तते ॥२७॥ स्थलं देह्य-
वनीकान्त यावत्कलियुगं भवेत् ॥

भृगुके लात मारनेसे लक्ष्मीजा कोल्हापुर चली गयीं, उसी दुःखसे दुःखी हो, उत्तम वैकुण्ठको छोड़कर हे धराकान्त ! मैं आया हूं। हे देव ! आपके दक्षिण वल्मीकमें रहते हुए मुझको ग्वालेने तलवारके समान धारवाले कुठारसे मारा, वही मार मुझको दुःख दे रहा है। हे वाराह ! औषधके लिये मैं निरन्तर जाया करता हूँ। दैवयोगसे आज मैंने आप धराधरको देखा है। मैं यहींपर रहूंगा, यह मेरा संकल्प है। हे पृथ्वीकान्त ! जबतक कलियुग रहता है, तबतक मुझको स्थान दीजिये ॥२८॥

इति तेन स विज्ञप्तो वराहवदनो हरिः ॥२८॥ उवाच वचनं
देवः स्थलं मौल्येन गृह्यताम् ॥

इस प्रकार कहे जानेपर वाराह भगवान्ने कहा—हे देव ! मूल्य देकर आप स्थान लीजिये ॥२८॥

इति वाक्यं ततः श्रुत्वा प्रोवाच मधुरं वचः ॥२९॥ प्रथमं दर्शनं
च स्यान् नैवेद्यं क्षीरसेचनम् ॥ इदमेव परं द्रव्यं ददामि करुणानि-
धे ॥३०॥ दास्यामि यत्ते भूकान्त तदङ्गीकुरु माधव ॥ वरं द्रव्य-
मिदं तात कृपां कुरु कृपानिधे ॥३१॥

इस प्रकारका वाक्य सुनकर हरि मधुर वचन बोले—हे करुणानिधि ! प्रथम दर्शन एवं दुग्धसे अभिषिक्त नैवेद्य यही उत्तम द्रव्य मैं देता हूं। हे पृथ्वीकान्त ! हे माधव ! मैं जो कुछ देता हू, आप उसको अङ्गीकार कीजिये। हे तात ! यह द्रव्य उत्तम है, हे कृपानिधि ! आप कृपा कीजिये ॥३१॥

इत्युक्तो हरिणा पोत्री हरये स्थानकाङ्क्षिणे ॥ तदा ददौ स्थलं
पादशतमात्रं रमापतेः ॥३२॥ परस्परं विनोदेन कुर्वाणावेकरू-
पिणौ ॥ मोहनार्थमभक्तानां भक्तानां भक्तिसिद्धये ॥३३॥ सं-
क्रीडाते वेङ्कटेशक्रोडरूपौ सुरोत्तमौ ॥

श्रीहरि द्वारा इस प्रकार कहे जानेपर तब वाराहने स्थानापेक्षी श्रीहरिको सौ पैर प्रमाण स्थान दिया और परस्परके विनोदसे देवताओंमें श्रेष्ठ वेङ्कटेश और वाराह-रूपी दोनों भगवान् अभक्तोंको मोहन करने एवं भक्तोंकी भक्तिसिद्धिके लिये एक रूप होकर क्रीड़ा करने लगे ॥३४॥

तदारभ्य धराकान्तो वकुलां पापकारिणीम् ॥२४॥ अर्पयामास देवस्य सेवार्थं वेङ्कटेशितुः ॥ भोजनार्थं रमेशस्य श्यामाकान्नं निरन्तरम् ॥३५॥ समधु प्रेषयन्नित्यं तया वकुलमालया ॥ सा बाला भक्तिनिरता श्रीनिवासस्य सन्निधौ ॥३६॥

तबसे वाराहने पापकारी वकुलमालिकाको श्रीवेङ्कटेशको सेवाके लिये समर्पण किया और उनके भोजनके लिये उसी वकुलमालिका द्वारा श्यामा ( सांवा ) मधुके साथ निरन्तर भेजते रहे। वह बाला भक्तिमें लगी श्रीनिवासके पास रहती थी ॥३६॥

अथ वकुलमालिकाख्यभगवत्परिचारिकापूर्वजन्मवृत्तान्तः

अन्नपानौषधाद्यैश्च पादसम्वाहनादिभिः ॥ पूजयामास गोविन्दं श्रीनिवासं निरामयम् ॥३७॥

वकुलमालिका नामकी दासीके पूर्वजन्मका वृत्तान्त

वह श्रीनिवास गोविन्दकी अन्न, पान, औषध एवं चरणोंकी सेवाके द्वारा पूजा करने लगी ॥३७॥

ऋषय ऊचुः—

श्रुतं सूत महाभाग देवागमनमुत्तमम् ॥ न श्रुतं श्रीवराहस्य प्रथमं दर्शने फलम् ॥३८॥ श्रीनिवासस्य कृष्णस्य कल्याणं शुभदं महत् ॥ पुनः श्रीवेङ्कटगिरौ वासः श्रीशार्ङ्गधारिणः ॥३९॥ वकुला सेविका प्रोक्ता का सा पूर्वं वदस्व नः ॥४०॥

ऋषि बोले—हे महाभाग ! हे सूत ! श्रीभगवानका आना हमने उत्तम रीतिसे सुना; किन्तु श्रीवाराहके प्रथम दर्शनका फल, श्रीनिवास कृष्णका शुभकारक विवाह और श्रीवेङ्कटाचलपर श्री शार्ङ्गधारीके वासके बारेमें नहीं सुना। वकुलमालिका दासी जो आपने कही, वह पहले कौन थी, हमसे कहिये ॥४०॥

सूत उवाच

पुरा यशोदा वकुला कृष्णस्य जननी ह्यभूत् ॥ अदृष्ट्वाऽनन्तरूपस्य कृष्णस्य तनयस्य सा ॥४१॥ कल्याणं सुखदं स्वस्य तदयाचत तं हरिम् ॥४२॥

सूतजी बोले—पहले वह वकुलमालिका श्रीकृष्णकी माता यशोदा थी; उसने अनन्त-रूप, सत्पुत्र श्रीकृष्ण भगवान्‌का विवाह जो उसके सुखका देनेवाला था, न देखकर उनसे प्रार्थना की ॥४२॥

*यशोदोवाच—*

**मनः सीदति मे कृष्ण तव कल्याणवीक्षणे ॥ दर्शयस्व रमानाथ यशोदानन्दवर्धन ॥४३॥ कल्याणादि महापुण्यं पावनं चरितं तव ॥ तयेत्युक्तो रमानाथः सोऽवदन्मधुरं वचः ॥४४॥**

यशोदा बोलीं—हे कृष्ण ! तुम्हारा कल्याण (विवाह) देखनेके लिये मेरा मन उत्कण्ठित है। हे यशोदाके आनन्द बढ़ानेवाले लक्ष्मीके पति ! कल्याण इत्यादि बड़े पुण्य और पवित्र अपने चरितको दिखाइये। यशोदासे इस प्रकार कहे जानेपर लक्ष्मीपति मधुर वचन बोले ॥४४॥

*श्रीभगवानुवाच—*

**जन्मन्यनन्तरे देवि तावकीनं मनोरथम् ॥ श्रीशैले पूरयिष्यामि किञ्चित्कालादनन्तरम् ॥ ४५ ॥ देवेनेत्थं दत्तवरा सात्यजत्तेन हेतुना ॥ कलेवरं तु कल्याणी यशोदा नन्दवल्लभा ॥४६॥ तस्याः प्रीत्यै वासुदेवो ह्यष्टाविंशे कलौ युगे ॥ आविर्भूय यशोदायास्तोषकैर्गुणकर्मभिः ॥४७। क्रीडन्नास्ते जगद्योनिर्निर्दोषोऽपीश्वरोऽपि च ॥ दैत्यानां वञ्चनायैव सुराणां मुक्तिहेतवे ॥४८॥ स्वभक्तानां हितार्थाय विरक्तानां विशेषतः ॥ मुक्तिमापादयन्देवः क्रीडते प्राकृताकृतिः ॥४९॥ इत्येवं कारणादेव यशोदा वकुलाऽभवत् ॥ सा करिष्यति कल्याणं हरेर्वेङ्कटवासिनः ॥५०॥ किमलभ्या हरौ तुष्टे ज्ञानविज्ञानसम्पदः ॥**

श्रीभगवान् बोले—हे देवि ! कुछ समयके बाद दूसरे जन्ममें श्रीशैलपर तुम्हारे मनोरथ पूर्ण करूंगा। भगवान्से इस प्रकार वरदान प्राप्त कर कल्याणी, नन्दकी प्यारी उस यशोदाने उसी कारणसे शरीर छोड़ दिया। उसीकी प्रसन्नताके लिये जगत्कारण श्रीवासुदेव, अट्ठाइसवें कलियुगमें, निर्दोष तथा ईश्वर होनेपर भी यशोदाको सन्तोष देनेवाले गुण और कर्मोंसे आविर्भूत होकर, दैत्योंकी वञ्चना, देवताओंकी मुक्ति एवं अपने भक्तोंके हितके लिये, विशेष करके विरक्तोंको मुक्ति देते हुए, प्राकृत जीवोंके समान क्रीड़ा करते हैं। इसी कारणसे

यशोदा वकुलमालिका हुई है। वही श्रीवेङ्कटाचलनिवासी भगवान्का विवाहादि करेगी। ज्ञान, विज्ञान और सम्पत्ति क्या भगवान्के प्रसन्न होनेपर अलभ्य हैं ॥५१॥

कश्चिद्देवं पूजयति कश्चिद्देवेन पूज्यते ॥५१॥ हनूमता पूजितोऽपि स्वयमर्जुनमर्चति ॥ को वर्णयेद्धरेः क्रीडां विचित्रां जनपावनीम् ॥५२॥ नित्यशुद्धस्य वै विष्णोर्यतोऽमुष्याभिवन्दने ॥ कृते पुण्यमृषीणामप्यकृते दोषसंग्रहः ॥५३॥ तस्मात्पूज्यो हरिः सर्वैर्ऋषिभिस्तत्त्वकोविदैः ॥ पितृभिर्भूमिपैर्विप्रैर्मानवै राक्षसैर्जडैः ॥५४॥

कोई देवताका पूजन ( सम्मान ) करता है, तो कोई देवता द्वारा पूजा जाता है। हनुमानके द्वारा पूजित होनेपर भी भगवान् स्वयं अर्जुनकी पूजा ( सारथ्य द्वारा ) करते हैं। भगवान्के विचित्र और मनुष्योंको पवित्र करनेवाले खेलको कौन वर्णन करे ? क्योंकि इस नित्य और शुद्ध विष्णुके अभिवादन करनेसे ऋषियोंको भी पुण्य और नहीं करनेसे दोषका सञ्चय होता है, इसलिये सब तत्वज्ञानी ऋषियों, राजाओं, पितरों, ब्राह्मणों, मनुष्यों एवं जड़ राक्षसों सभीसे श्रीहरि पूजे जाने योग्य हैं ॥५४॥

कलौ कलुषचित्तानां पापाचाररतात्मनाम् ॥ रक्षणार्थं रमाकान्तो रमते प्राकृतो यथा ॥५५॥ दैत्यानां मोहनार्थाय सुराणां मोदनाय च ॥ क्रीडते बालकैर्बालो जगत्पालकबालकः ॥५६॥ जगन्मोहनसौन्दर्यलीलामानुषविग्रहः ॥ नैतद्रूपं कृतं देवैर्न कृतं विश्वकर्मणा ॥५७॥ स्वेच्छया क्रीडते तत्र स्वेच्छारूपविराजितः ॥

कलियुगमें कलुषित चित्तवाले एवं पापकर्मोंमें लगे हुए जीवोंकी रक्षाके लिये लक्ष्मीपति प्राकृत मनुष्योंके जैसा रमण करते हैं। संसारको मोहन करनेवाले,सौंदर्ययुक्त,लीलासे ही मनुष्यका शरीरधारण करनेवाले एवं संसारका पालन करनेवाले भगवान् दैत्योंको मोहन करने और देवताओंको आनन्द देनेके लिये बालकोंके साथ खेलते हैं। यह रूप न तो देवताओंके द्वारा बनाया गया है और न विश्वकर्माहीके द्वारा; अपनी इच्छासे ही रूप धारण कर, वहां अपनी इच्छासे ही क्रीड़ा करते हैं ॥५८॥

क्षेत्रस्य महिमा दिव्यस्तथा तीर्थस्य वैभवम् ॥५८॥ तत्र साक्षाद्रमाकान्तः किं तत्र सुकृतं कृतम् ॥ बहुजन्मार्जितैः पुण्यैर्ल-

भ्यते क्षेत्रदर्शनम् ॥५९॥ तत्रापि वेङ्कटगिरेर्दर्शनं मुक्तिदं परम्॥ दुर्लभं देवसङ्घानां मनुष्याणां तु का कथा ॥६०॥

इति श्रीभविष्योत्तरपुराणे श्रीवेङ्कटाचलमाहात्म्ये पद्मावतीपरिणयोपोद्घातादिवर्णनं नाम पञ्चमोऽध्यायः ॥ ५ ॥

इस क्षेत्रका माहात्म्य और तीर्थका वैभव दिव्य ( अलौकिक ) है। जहांपर साक्षात् लक्ष्मीपति हैं, वहांपर पुण्यकी तो बात ही क्या है। बहुत जन्ममें उपार्जित पुण्यसे क्षेत्रोंके दर्शन मिलते हैं। तिसपर भी श्रीवेङ्कटाचलका मुक्तिदेनेवाला दर्शन देवताओंको भी दुर्लभ है, मनुष्यकी तो बात ही क्या ॥६०॥

इति पञ्चमोऽध्यायः ॥५॥

## षष्ठमोऽध्यायः ॥६॥

मृगया हित प्रस्थानके, प्रभु भूषण आख्यान।
मृगया पथ कन्या मिलन, नभसुत चिन्तावान ॥१॥
धरा जन्म पद्मावती, नभ नृप सुत वसुदान।
पद्मावति लक्षण कथन, नारद ज्ञाननिधान ॥२॥

अथ मृगयाविहारोद्युक्त श्रीनिवासालङ्कारवर्णनम्

*सूत उवाच—*

स कदाचिद्रमेशस्तु चिन्तयामास वै हयम् ॥ मनसा चिन्त्यमाने तु हयः प्रत्यक्षतां गतः ॥१॥ वायुरश्वत्वमापन्नो रज्जुस्तत्वाभिमानिनी ॥ उपासर्पत्स्वयं लक्ष्मीस्ततोऽश्वं तं स पूजयन् ॥२॥ तस्योपरि समातिष्ठत्सर्वाभरणभूषितः ॥

ग याके उपर्युक्त श्रीनिवासके अलंकारोंका वर्णन

सूतजी बोले—उस लक्ष्मीपतिने किसी समयमें घोड़ेकी चिन्ता की । मनसे चिन्ता किये जानेपर ही एक घोड़ा प्रत्यक्ष हो गया । वायुने घोड़ेका रूप धारण किया । वस्त्रोंकी अधिष्ठात्री देवी लक्ष्मीजी स्वयं रस्सी होकर समीप आयीं । सब आभूषणोंसे शोभित वह लक्ष्मीपति उस घोड़ेकी पूजा करते हुए उसके ऊपर बैठ गये ॥३॥

**शुभ्रं वस्त्रं पञ्चदशहस्तं बिभ्रत्तथोपरि ॥३। काञ्चीं बद्ध्वा रमाकान्तः काञ्चीदामविभूषितः ॥ शुभ्रवर्णं चोत्तरीयं पञ्चहस्तं तथा दधत् ॥ ४ ॥ आदर्शालोकिते वक्त्रे धृत्वा शुभ्रां च मृत्तिकाम् ॥ तन्मध्ये कुङ्कुमेनापि तिलकं सुमनोहरम् ॥५॥ पूगीफलं च ताम्बूलं चूर्णनिःक्षेपपात्रकम् ॥ कर्पूरवासितैः पूगकाचैर्जातीफलैः शुभैः ॥६॥ लवङ्गैः पत्रसम्मिश्रैर्गर्भितां रत्नपेटिकाम् ॥ आदर्शमृत्तिकां शुभ्रां तथा कुङ्कुमभाजनम् ॥७॥ स्वर्णनिर्मितवस्त्रेण बद्ध्वा तु कटिमध्यतः ॥ स्वर्णयज्ञोपवीताङ्गः कण्ठाभरणभूषितः ॥८॥ कङ्कणाङ्कितदोर्भ्यां च सम्पूर्णवरगात्रकः ॥ भुजकीर्त्या रत्नमय्या राजमानोऽङ्गुलीयकैः ॥९॥ कुंकुमाक्तसुगन्धेन लिप्तोरोबाहुरञ्जितः ॥ कबरीकृतकेशेषु रक्तवस्त्रं सुवेष्टय च ॥१०॥ लम्बितैः पुष्पजालैश्च स्कन्धगैः परिभूषितैः ॥ सुवर्णरत्नसम्बद्धपादुकागूहिताङ्घ्रिकः ॥११॥ धनुर्बाणधरः श्रीमान्साक्षान्मन्मथमन्मथः ॥ एवं मनोहरं रूपं धृत्वा श्रीवेङ्कटेश्वरः ॥१२॥ हयं रत्नसमाकीर्णैरुपबर्हैर्विभूषितम् ॥ सुवर्णतिलकोल्लासिवक्त्रं वायुमनोजवम् ॥१३॥ नीलवर्णं पाण्डुपादं हस्तपञ्चदशोन्नतम् ॥ १४ ॥ आरुह्य देवमण्यादिसर्वलक्षणसंयुतम् ॥ अवरुह्य गिरिश्रेष्ठान्मृगयार्थं जगाम सः ॥१५॥**

पन्द्रह हाथका शुभ्र वस्त्र पहनकर, उसके ऊपर कटिमें रस्सीके चिह्नवाले ( दामोदर ) लक्ष्मीपतिने करधनी पहन, श्वेत वर्ण और पाँच हाथका एक उत्तरीय दुपट्टा भी धारण कर, दर्पणमें मुख देखकर, श्वेत मृत्तिकाका सुन्दर तिलक धारण कर एवं उसके बीचमें कुंकुमका एक बिन्दु देकर, पूंगीफल ( सुपारी ),

ताम्बूल, चूना रखनेका पात्र, कर्पूरसे सुगन्धित उत्तम जातीफल (जावित्री), लवंग एवं जातीपत्रमें मिलाकर लगाये हुए बीड़ोंकी एक रत्नकी पेटी, दर्पण, स्वच्छ मृत्तिका तथा कुंकुमकी डिबिया इन सबोंको स्वर्णके बने हुए वस्त्रसे कमरमें बांधकर, स्वर्णका यज्ञोपवीत पहने हुए, कण्ठके आभूषणसे शोभित, कङ्कणसे सजे हुए बाहुओंसे सम्पूर्ण श्रेष्ठ अंगवाले, अंगुलियोंमें रत्नकी शुभकीर्ति-रूप रत्नजटित सुवर्णकी अंगूठियोंसे विराजमान, कुंकुम-युक्त सुगन्धिसे लपेटे हुए हृदय और बाहुवाले, केशोंमें कबरी (चोटी) बना, लाल वस्त्र लपेटकर, कन्धातक लम्बे फूलकी मालासे शोभित, सुवर्ण और रत्नोंसे जड़ी हुई पादुका पैरमें पहने हुए तथा धनुष-बाण धारण किये हुए, श्रीमान्, साक्षात् कामदेवके भी कामदेव जैसा मनोहर रूप धारण करके श्रीवेङ्कटेश भगवान्, रत्नसे भरे हुए आच्छादन (पायजामा) से शोभित, सुवर्णतिलकसे शोभित मुखवाले, वायु और मनके समान वेगवाले, नीलवर्ण एवं पीले पैरवाले पन्द्रह हाथ ऊंचे घोड़ेपर चढ़कर मणि आदि सब लक्षणोंसे संयुक्त देवश्रेष्ठ पर्वतपरसे उतरकर मृगयाके लिये गये ॥१५॥

अथ मृगयाविहारसमये श्रीनिवासस्य कन्यादर्शनम्

मृगान्बहुविधाकारान् सिंहशार्दूलजम्बुकान् ॥ मातङ्गाञ्छरभा-
न्घोरांस्तथा वै महिषानपि ॥१६॥ जघान तान् वने देवः संचरन्स
इतस्ततः ॥ तत्रैकं हस्तिनं दृष्ट्वा मदोन्मत्तं वनेचरम् ॥१७॥ तं
हन्तुमगमत्पृष्ठमनुसृत्य रमापतिः ॥ स जगाम वने दूरं भयाद्भीतो
घृपाकपेः ॥१८ ॥ स योजनार्धं गत्वा तु तत्र देवं जनार्दनम् ॥ द-
ण्डवत्पतितो भूत्वा शुण्डामुद्धृत्य गर्जयन् ॥१९॥ यदा गतस्तदा
कन्या दृष्टिमार्गमुपाश्रिता ॥ २० ॥

मृगयाके समयमें श्रीनिवासका कन्या देखना

उन्होंने इधर-उधर घूमकर बहुत तरहके हरिण, सिंह, शार्दूल, जम्बुक, हाथी, घोर शरभ तथा भैंसोंको उस वनमें मारा। वहां एक मदसे उन्मत्त वनचर हाथीको देखकर उसको मारनेके लिये लक्ष्मीपति उसके पीछे-पीछे गये। वह भगवानसे बहुत भयभीत होकर जंगलमें दूर चला गया। आधा योजन जानेपर हाथी शुण्ड उठा जनार्दन भगवान्को दण्डवत कर, गर्जता हुआ जब चला गया, तभी एक कन्या दृष्टि-गोचर हुई ॥२०॥

ऋषय ऊचुः—

सा कन्या कस्य सम्बद्धा किमर्थं वनमागता ॥ कस्येयं तनया

कन्या तद्वदस्व महामुने ॥२१॥ इति तैश्च स विज्ञप्तः सूतः परम-
धार्मिकः ॥ उवाच वचने भक्त्या सन्तोषाद्युक्तमानसः ॥२२॥

ऋषि बोले—हे महामुनि, वह कन्या वहां जंगलमें क्यों आयी तथा वह कन्या किसकी पुत्री थी, सो हमसे कहिये। इस प्रकार उनसे कहे जानेपर परम धर्मात्मा सूतजी सन्तुष्ट मन होकर भक्तिपूर्वक वचन बोले ॥२२॥

श्रीसूत उवाच—

शृण्वन्तु मुनयः सर्वे कन्याया जन्म पावनम् ॥

श्रीसूतजी बोले—हे मुनिगण! कन्याके पवित्र जन्मको सुनिये।।२३॥

पुरा तु द्वापरस्यान्ते पाण्डवानां महात्मनाम् ॥२३॥ युद्धे तु
भारतेऽतीते त्वष्टाविंशे कलौ युगे ॥ विक्रमार्कादयो भूपाः स्वर्ग-
लोकं यदा ययुः ॥२४ ॥ तत्कालान्ते वत्सरेषु सहस्रेषु गतेषु वै ॥
चन्द्रवंशे नृपः कश्चित्सुवीर इति विश्रुतः ॥२५॥ जज्ञे सुधर्म-
स्तत्पुत्रस्तत्सुतौ नृपपुङ्गवौ ॥ आकाशतोण्डमानाख्यौ जातौ लो-
कयशस्करौ ॥२६॥ धर्मिष्ठौ दृढभक्तौ तु नारायणपरायणौ ॥
ज्येष्ठो वियन्नृपः साधुः कनिष्ठस्तोण्डमान्नृपः ॥ २७॥ तोण्डदे-
शाधिपो भूत्वा शशास पृथिवीमिमाम् ॥

पहले द्वापरके अन्तमें महात्मा पाण्डवोंके महाभारतयुद्धके बीत जानेपर अट्ठाइसवें कलियुगमें जब विक्रमादित्य इत्यादि राजा स्वर्गको चले गये, उसी समयके अन्तमें हजार वर्ष बीतनेपर चन्द्रवंशमें कोई एक सुवीर नामक प्रसिद्ध राजा हुआ। उसका पुत्र सुधर्म हुआ। संसारमें यशस्वी, धर्मात्मा, दृढ़ भक्त, नारायणके परायण एवं राजाओंमें श्रेष्ठ आकाश और तोण्ड नामके उसके दो पुत्र हुए। उनमें सज्जन आकाश बड़ा था और तोण्ड राजा छोटा। आकाशराज तोण्डदेशका स्वामी होकर इस पृथ्वीका शासन करने लगे ॥१२॥

तस्मिञ्छासति भूचक्रमिदं स्वर्ग इवाभवत् ॥२८॥ निरातङ्क-
मभूत्सर्वं जगत्स्थावरजङ्गमम् ॥२९॥ गावो बहुपयोदाश्च नार्यः
पतिपरायणाः ॥

उनके शासनके समयमें यह भूमण्डल स्वर्गके तुल्य हो गया। संसारके स्थावर और जंगम सभी निर्भय हो गये। गौएं बहुत दूध देनेवाली और स्त्रियां पतिव्रता थीं ॥३०॥

अथ पुत्रालाभेन वियन्नृपानुभूतिचिन्ताप्रकारः

कदाचिदपुत्रकांक्षी स ह्येकान्ते भवने स्थितः ॥३०॥ अपुत्रो नृपतिर्दुःखाद् गुरुं प्रोवाच भक्तितः ॥३१॥

पुत्रलाभ न होनेसे आकाशराजकी चिन्ता

किसी समय वह अपुत्र राजा पुत्रके इच्छुक हो दुःखी होकर एकान्त भवनमें गुरुसे भक्तिपूर्वक बोले ॥३१॥

*आकाशराज उवाच—*

अनुभूतमिदं राज्यं हस्त्यश्वरथसङ्कुलम् ॥ नानादानमकार्षं च तीर्थयात्रां विशेषतः ॥३२ नानुभूतं पुत्रसुखं पितॄणां मुक्तिदं द्विज ॥ किं मयाचरितं पापं कस्य पुत्रो हतः पुरा ॥३३॥ केन पापेन विप्रेन्द्र न प्राप्तं पुत्रजन्म मे ॥ नेत्राभ्यां नैव दृष्टं च पुत्रस्य मुखपङ्कजम् ॥३४॥ कर्णाभ्यां न श्रुतः शब्दः पुत्रेण रुदता कृतः ॥ द्विजेन्द्रापितृबन्धूनां दुर्गतिश्च भवेत्तथा ॥३५॥

आकाशराज बोले—हाथी, घोड़े और रथसे भरे हुए इस राज्यका अनुभव मैंने किया है, नाना प्रकारके दान तथा विशेषकरके तीर्थयात्रा भी मैंने की है। हे द्विज! पितृगणोंको मुक्ति देनेवाला पुत्र-सुखका मैंने अनुभव नहीं किया। मुझसे कौन पाप हुआ है? पहले मैंने किसके पुत्रको मारा था? हे विप्रेन्द्र! किस पापसे मुझे पुत्र उत्पन्न नहीं हुआ? नेत्रसे मैंने पुत्रका मुखकमल नहीं देखा और कानोंसे पुत्रोंके रुदन शब्दको भी नहीं सुना। हे द्विजेन्द्र! इस प्रकार तो पितरोंकी दुर्गति ही होगी ॥३५॥

अपुत्रस्य गतिर्नास्तीत्येव वेदविदो विदुः ॥ पुत्रेण रुक्मपात्रे तु नान्नं भुक्तं मया सह ॥३६॥ कृतदोषेण न मया कदाचिल्लालितः सुतः ॥ भूषणान्यादरात्कृत्वा न पुत्रोऽलङ्कृतो मया ॥३७॥ स सञ्जातो न मे यः स्यात्पुत्रः पितृहिते रतः ॥ सुतार्थं कवचं

कृत्वा त्वमेहीति स नोदितः ॥३८॥ पुत्रहीनं च मां दृष्ट्वा कर्षन्ति यमकिङ्कराः ॥ गच्छ राजन्नवेनैव यमस्य भवनं त्विति ॥३९॥ पाशकुण्ठितसर्वाङ्गः किमु वक्ष्याम्यपुत्रवान् ॥ चित्रगुप्तेन लिखित-मपुत्रत्वं महामते ॥४०॥

अपुत्रोंकी गति नहीं होती, ऐसा वेदज्ञ कहते हैं, पुत्रके साथ सुवर्णपात्रमें मैंने अन्न भोजन नहीं किया है। मुझ पापीसे कभी भी पुत्रका लालन-पालन नहीं हुआ। आदर करके मुझसे पुत्रको आभूषण नहीं पहनाया गया। जो पुत्र पिताकी भलाईमें लगा रहता है वह मुझको नहीं हुआ। पुत्रके लिये कवच बनाकर, तुम यहां आओ ऐसा वह नहीं कहा गया। मुझ पुत्रहीनको देखकर यमदूत "हे राजन! शीघ्र ही यमराजके घर चलो" कहते हुए खींचते हैं। पाशसे जकड़े हुए सब अङ्गवाला, बिना पुत्रका, मैं क्या कहूं ? हे महामते ! चित्रगुप्त द्वारा मेरी अपुत्रता लिख दी गयी है ॥४०॥

मङ्गभंजेन सुकुलं मार्जितं तु कदा भवेत् ॥ दुराचारोऽसि दुर्बुद्धिरपुत्रेति यमेन च ॥४१॥ भाषितं वचनं श्रुत्वा कः पुमान्सु-खमाप्नुयात् ॥ नष्टदीपोऽतिनैष्ठुर्यः कष्टोद्भूतकलेवरः ॥४२॥ वृथा जातोऽतिपापात्माऽस्यात्मनो नरकावहः ॥ तन्तुहीनं कुलं चापि विजलां मुञ्च वापिकाम् ॥४३॥ अङ्गनां भर्तृहीनां च सन्तो निन्दन्ति संसदि ॥ किं करोमि महीदेव क गच्छामीह का ग-तिः ॥४४॥ कं देवं शरणं गत्वा भवाब्धिं प्रतराम्यहम् ॥

गर्भसे उत्पन्न हुए पुत्रसे मेरा सुन्दर कुल कब सुशोभित होगा ? "तू दुष्ट बुद्धिवाला, दुराचारी एवं अपुत्र है" इस प्रकारसे यमराजके कहे हुए वचनको सुनकर कौन पुरुष सुखी हो सकता है ? 'दीपक बुझा हुआ, बहुत निष्ठुर, कष्टसे उत्पादित शरीरवाला एवं अपनेको नरकमें ले जानेवाला पापात्मा, तू व्यर्थ पैदा हुआ; तन्तुहीन (पुत्रहीन) कुल, बिना जलकी बावड़ी तथा विधवा स्त्रीको छोड़ दो" ऐसी सज्जनगण भी सभामें निन्दा करते हैं। हे भूदेव ! क्या करूं ? कहां जाऊं ? किस देवताकी शरणमें जाकर संसार-समुद्र पार हो जाऊंगा ॥४६॥

रुदन्तं पुत्रमालोक्य कदा प्रेम्णा तमाह्वये ॥४५॥ घण्टां च प्रतिमां दत्वा पुत्रस्य फलकन्दुकौ ॥ गजमारोप्य मां तात कुर्व-न्ग्रामप्रदक्षिणम् ॥४६॥ सभां गच्छथ राजेन्द्र तथा तालस्वनेन

च ॥ इति पुत्रेण सोत्कण्ठं कृतां मञ्जुलभाषिणा ॥४७॥ कदाचिदपि नैवाहं श्रुतवान्प्रार्थनामिति ॥ अजातपुत्रः शोकेन मूर्च्छामाप महीपतिः ॥ ४८ ॥

रोते हुए पुत्रको देखकर कब प्रेमसे उसको घंटा, पुनझी, फल और गेन्द देकर बुलाऊंगा ? "हे तात ! हे राजेन्द्र ! मुझको हाथीपर चढ़ाकर गांवकी प्रदक्षिणा कराते हुए वाली ध्वजा सभामें जाइये"—इस प्रकार मधुर बोलनेवाले पुत्रसे उत्कण्ठापूर्वक की गयी प्रार्थनाको मैंने कभी भी नहीं सुना, ऐसा कहते हुए अजातपुत्र वह आकाश राजा शोकसे मूर्छित हो गये ॥४८॥

पुनः संज्ञामवाप्याथ विललाप सुदुःखितः ॥ कवचं कारयित्वा तु शिरोभूषणमप्यथ ॥४९॥ केशभूषणमत्यर्थं रत्नवज्रसमाकुलम् ॥ कदाचिदङ्कमारोप्य न मयालङ्कृतः सुतः ॥५०॥ नोपनीतोऽपि च प्रीत्या सुतो मे पञ्चवार्षिकः ॥ अष्टमे वाऽथ दशमे न कृतो दारसंग्रहः ॥५१॥ वालस्य जातकर्मापि नाकार्यं नापि चाभिधाम् ॥ पुत्रार्जितं धनं ब्रह्मन्नापि जीवितमद्य मे ॥५२॥ अभिषिच्य सुतं राज्ये भार्यया कृतभोजिना ॥ न गतं च वनं विद्वन् पारम्पर्यक्रमान्मया ॥५३॥ अहो दरिद्रस्य महानुभाव मे पुत्रेण हीनस्य कथं गतिर्भवेत् ॥ वृथा शरीरं घटकुड्यसन्निभं जातं सुधर्मस्य कुले सुपावने ॥ ५४ ॥

सचेत होकर यह दुःखी राजा पुनः विलाप करने लगे—केशको बहुत ही भूषित करनेवाले, रत्न और वज्रोंसे जटित शिरका आभूषण ( मुकुट ) एवं कवच बनवाकर गोदमें बैठा, मुझसे पुत्र कभी भी नहीं सजाया गया, पञ्चम वर्षमें मैंने पुत्रका उपनयन भी प्रीतिपूर्वक नहीं किया, अष्टम अथवा दशम वर्षमें मैंने उसका विवाह भी नहीं करवाया *। बालकका जातकर्म और नामकरणसंस्कार भी मैंने नहीं किया। पुत्रका उपार्जन किया हुआ धन हे ब्रह्मन् ! मैंने आजतक नहीं भोगा। हे विद्वन् ! सब प्रकारके भोग भोग चुकनेवाले मुझसे और मेरी पत्नीसे परम्पराके क्रमके अनुसार पुत्रका राज्याभिषेक करके वनगमन नहीं हुआ। हे महानुभाव ! मुझ दरिद्र

* "पञ्चमे वीर्यकामस्य" मनुके इस वचनसे पञ्चम वर्षमें उपनयन शास्त्रसम्मत है। "प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा" याज्ञवल्क्यके इस वचनसे उपनयनके अनन्तर पाँच वर्षतक अथवा ग्रहणपर्यन्त दो-तीन वर्षतक भी ब्रह्मचर्यका पालन विहित होनेसे गौण-रूपसे पुरुषोंका विवाह आठ या दस वर्षमें भी शास्त्रसम्मत है।

और पुत्रहीनकी गति कैसे होगी ? सुधर्मके सुन्दर और पवित्र कुलमें मेरे शरीरने घड़े और भीतके समान व्यर्थ ही जन्म लिया ॥५४॥

मनुष्याणामनाथानां दुर्लभं पुत्रजन्म च ॥ बहुपुण्यवशात्पुत्रो जायते मानवोदरे ॥५५॥ कन्यकाऽपि न सम्भूता ह्यस्माकमतिपाप्मनाम् ॥ सत्पुत्राः क नु जायेरन्धर्मसन्तानसंज्ञिकाः ॥५६॥

अनाथ मनुष्योंको पुत्रका जन्म दुर्लभ है; बहुत पुण्यसे मनुष्यके गर्भमें पुत्र होता है। मुझ अत्यन्त पापीका एक कन्या भी नहीं हुई, धर्म-सन्तान संज्ञक सुपुत्र कहांसे हो ॥५६॥

वरदाच्युत रङ्गेश जगन्नाथ जगद्गुरो ॥ सुब्रह्मण्य सुराधीश राम कृष्ण नमोऽस्तु ते ॥५७॥ वेङ्कटेश रमाकान्त वराहवदनाच्युत ॥ नारायण रमाधीश कृपां कुरु कृपानिधे ॥५८॥ सुपुत्रवन्तः खलु भाग्यवन्तो ह्यपुत्रवन्तो भुवि दुःखवन्तः ॥ संसारसिन्धोस्तरणेऽस्म्यशक्तः का मे गतिः कर्मफलानुभोगिनः ॥५९॥ एवमुक्त्वा महीदेवं विरराम महीपतिः ॥ पापिष्ठोऽहं दुराचारः पुत्रेणाहं दरिद्रितः ॥६०॥ हा कांल्लोकान् गमिष्यामि क्रूरं वा नरकं गुरो ॥ क उपायो महाप्राज्ञ पुत्रलाभे द्विजोत्तम ॥ ६१ ॥ इति राजवचः श्रुत्वा गुरुर्वाक्यमुवाच ह ॥ ६२ ॥

हे वरद ! हे अच्युत ! हे रङ्गेश ! हे जगन्नाथ ! हे जगद्गुरु ! हे सुब्रह्मण्य ! हे सुराधीश ! हे राम ! हे कृष्ण ! आपको नमस्कार है। हे वेङ्कटेश ! हे रमाकान्त ! हे वाराहमुख ! हे अच्युत ! हे नारायण ! हे रमाधीश ! हे दयानिधि ! कृपा कीजिये। जो सुन्दर पुत्रवाले हैं, वे ही भाग्यवान् हैं, तथा जो अपुत्रवान् हैं वे ही संसारमें दुःखी हैं। मैं संसार-समुद्रके पार होनेमें असमर्थ हूं। मुझ कर्मकी गतिको भोगनेवालेकी क्या गति होगी ? ऐसा गुरुजीसे कहकर वह राजा ठहर गये, फिर बोलने लगे कि मैं पापी हूं, दुराचारी हूं, पुत्रका दरिद्री हूं। हे गुरु ! मैं किस लोक वा नरकमें जाऊंगा ? हे महाप्राज्ञ द्विजोत्तम ! पुत्रलाभ करनेके लिये क्या उपाय है ? इस प्रकारके राजाके वचन सुन गुरुजी बोले॥६२॥

गुरुरुवाच—

यज्ञं कुरु नृपश्रेष्ठ पुत्रस्तेन भविष्यति ॥

गुरुजी बोले—हे नृपश्रेष्ठ ! यज्ञ कीजिये, उससे पुत्र होगा ॥६३॥

## अथ धरणीतलात्पद्मावत्युत्पत्तिवर्णन

*श्रीसूत उवाच—*

**गुरोर्वाक्यं समाकर्ण्य यज्ञायाशोधयद्धराम् ॥६३॥ स्वर्णला-ङ्गलसङ्घैश्च द्विजैर्मन्त्रिगणैस्तथा॥ शोध्यमाने धरापृष्ठे तत्र पद्मं ददर्श सः ॥६४॥ सहस्रपत्रं राजेन्द्रः किमेतदिति विस्मितः ॥६५॥ कन्यां च पत्रेषु रमाकृतिं शुभां दृष्ट्वाऽतिसन्तुष्टमना बभाषे ॥ देवेन दत्ता स्वियमिन्दिराभा कन्या कुमारी कमलाभनेत्री ॥६६॥**

### धरणीतलसे पद्मावतीकी उत्पत्तिका वर्णन

राजा गुरुके वचन सुनकर यज्ञके लिये भूमिको सुवर्णके लांगलों ( हलों ) से, ब्राह्मण और मंत्रीगणोंके साथ शोधन करने लगे, और शोधन करते समय पृथ्वीतलपर एक हजार दलवाले कमलको देख, यह क्या है इस प्रकार आश्चर्यके साथ उन दलोंमें लक्ष्मीके आकारवाली एक सुन्दर कन्याको देखकर प्रसन्न मनसे वह राजा बोले, यह लक्ष्मीके समान प्रकाशवाली, कमलनयनी कुमारी कन्या मुझे देवताके द्वारा दी गयी है ॥६६॥

**इत्थं समाभाष्य नृपोत्तमोऽसौ हस्ते प्रगृह्याशु बभाण दीनः ॥ माया महेशस्य दुरत्यया हरेः केयं तु या सम्प्रति गृह्यते म-या ॥६७। इत्येवं संशयानं तमाकाशाख्यं नराधिपम् ॥ उवाचा-काशगा वाणी पुत्रीयं तव वल्लभा ॥६८॥ संरक्षैनां महाभाग ब-हुकीर्तिफलप्रदाम् ॥**

इस प्रकार बोलकर वह श्रेष्ठ राजा उसको हाथसे पकड़कर बोले—क्या यह हरि या शिवकी दुर्धर माया है, जिसको मैं अभी ग्रहण कर रहा हूं ? इस प्रकार सन्देह करते हुए आकाश नामक राजाको आकाशवाणी हुई—बहुत कीर्तिरूपी फल देनेवाली यह आपकी ही प्यारी पुत्री है। हे महाभाग ! इसकी रक्षा करो ॥६८॥

**इत्यनन्तगतां वाणीं श्रुत्वा राजाऽतिहर्षितः ॥६९॥ तां कन्यां प्रतिगृह्याशु स्वभार्यां प्रत्युवाच ह ॥ शृणु भद्रे महाप्राज्ञे देवद-त्तामिमां शुभाम् ॥७०॥ संवर्धय वरां पुत्रीं गर्भजातां सुतामि-व ॥ इत्युक्त्वा तत्करे दत्त्वा बहुदानमथाकरोत् ॥७१॥**

इस प्रकार आकाशवाणी सुनकर उस राजाने बहुत आनन्दित होकर उस कन्याको शीघ्र ही ग्रहण कर अपनी स्त्रीसे कहा—हे भद्रे ! हे महाप्राज्ञे ! सुनो, देवताओंसे दी हुई इस श्रेष्ठ सुन्दरी पुत्रीका अपने गर्भसे उत्पन्न पुत्रीके समान पालन करो। ऐसा कहकर उसके हाथमें उस कन्याको समर्पण करके उस राजाने बहुत-सा दान दिया ॥७१॥

अथ वियन्नृपस्य वसुदानाख्यसुतोत्पत्तिः

कन्यागमनपुण्येन सा देवी गर्भमादधे ॥ गर्भिणीं स्वसतीं दृष्ट्वा चक्रे पुंसवनं पतिः ॥७२॥ पञ्चमासे तु सञ्जाते सीमन्तं नृपपुङ्गवः ॥ कारयामास विधिना ब्राह्मणैर्यजुषां गणैः ॥७३॥

आकाशराजाको वसुदान नामक पुत्रकी उत्पत्ति

कन्याके आनेके पुण्यसे उस देवीने गर्भ धारण किया। अपनी स्त्रीको गर्भिणी देखकर उस राजाने पुंसवन संस्कार किया और पांच मास हो जानेपर उस श्रेष्ठ राजाने याज्ञिक ब्राह्मणोंके साथ विधिपूर्वक सीमन्त-संस्कार किया ॥७३॥

ततः कालेन सा साध्वी नवमासे गते सती ॥ मासे तु दशमे प्राप्ते सुषुवे पुत्रमुत्तमम् ॥७४॥ कन्याराशिगते भानौ दशम्यां रोहिणीयुजि ॥ पक्षे तु प्रथमे देवी सायङ्काले गुरोर्दिने ॥७५॥ पुत्रोत्पत्तिप्रवक्तॄणां सर्वस्वं दत्तवांस्तदा ॥ गवां कोटिसहस्राणि चाश्वानामयुतं तथा ॥७६॥ नवधान्यानि वस्त्राणि विना स्वे छत्रचामरे ॥ दानं कृत्वा नृपश्रेष्ठः स्वस्तिवाचनमाचरत् ॥७७॥

तब समय पाकर उस साध्वीने नव मास व्यतीत होनेपर, दशम मास प्राप्त होनेपर, सूर्यके कन्याराशिमें रहते समय, शुक्लपक्ष, दशमी तिथि, रोहिणीनक्षत्रयुक्त गुरुवारके सायंकालमें उत्तम पुत्र जना और पुत्रजन्मके समाचार सुनानेवालेको राजाने अपने छत्र एवं चमरको छोड़कर सर्वस्व (सब कुछ) दिया। हजार कोटि गौ, दश हजार घोड़े, नवीन धान्य तथा वस्त्र उस श्रेष्ठ राजाने दान देकर स्वस्ति वाचन करवाया ॥७७॥

जातकर्मादिकं कर्म कृतवांस्तत्क्षणं नृपः ॥ दिने च द्वादशे प्राप्ते कृत्वा पुत्राभिधां तथा ॥७८॥ यन्नाम्ना वसुदानेति लोके ख्यातिं गमिष्यति ॥ तद्दिने बहुविप्रौघानन्नाद्यैः पर्यतोषयत् ॥७९॥

राजाने उसी क्षण जातकर्म इत्यादि संस्कार किये; बारहवां दिन आनेपर ऐसा नाम रक्खा, जिससे वह वसुदाता इस प्रकार संसारमें प्रसिद्ध होगा और उस दिन भी उस राजाने अन्न इत्यादिसे बहुत ब्राह्मणोंको सन्तुष्ट किया ॥७९॥

ऋषय ऊचुः—

श्रुतं पुत्रस्य चरितं न श्रुतं व्यासवल्लभ ॥ अयोनिजायास्त-
त्पुत्र्याः किं नाम च तदाऽकरोत् ॥८०॥

ऋषि बोले—हे व्यासप्रिय ! हमने पुत्रका चरित्र सुना, उस अयोनिजा पुत्रीका उसने क्या नाम रक्खा सो नहीं सुना ॥८०॥

पद्मोदरीं पद्मगर्भां पद्मजातां वराननाम् ॥ पद्माया अवतारां तां
मत्वा तस्यास्तदाऽकरोत् ॥८१॥ अनुरूपं नामकर्म नाम्ना पद्मा-
वतीति च ॥

श्रीसूतजी बोले—कमलके ऐसे उदरवाली, कमलके गर्भसे उत्पन्न, श्रेष्ठ मुखवाली उस पुत्रीको लक्ष्मीका अवतार जानकर उसके अनुरूप "पद्मावती" नामसे उसका नामकरण उस राजाने किया ॥८२॥

वर्धमानौ सुतौ दृष्ट्वा राजा सन्तोषमागतः ॥८२॥ अकलङ्केन्दु-
सदृशौ रमाचन्द्रमसाविव ॥ किं तेन सुकृतं राज्ञा बहुजन्मसु
सञ्चितम् ॥८३॥ अग्रजां पुत्रिकां दृष्ट्वा तदन्ते पुत्रमुत्तमम् ॥ दृष्ट्वा
तुतोष मनसा सम्पूर्णानन्दविभ्रमः ॥८३॥

निष्कलंक चन्द्रमाके जैसा या लक्ष्मी और चन्द्रके समान बढ़ते हुए सन्तानको देखकर राजा सन्तुष्ट हो गये। उस राजाने किस पुण्यका बहुत जन्मसे सञ्चय किया था कि वह पहले उत्पन्न पुत्रीको देख फिर उत्तम पुत्रको भी देख पूर्ण आनन्दसे विभ्रांत होकर प्रसन्नचित हुए ॥८३॥

इत्थं काले गते तस्मिन्सा बाला यौवनं गता ॥ यौवनाढ्यां
विशालाक्षीं दृष्ट्वा राजाप्यचिन्तयत् ॥८५॥ विचारयन्स नृपतिः
पुत्र्यर्थं वरमुत्तमम् ॥ न प्राप दुःखसंततः कस्मै देया मया
सुता॥८६॥ इति चिन्ताब्धिमग्नोऽसौ पुत्रीपरिणये तदा ॥ असंम-

तोऽकरोत्पुत्रं परं संस्कारसंस्कृतम् ॥८७॥ श्रुत्वा राजसुता बाला ब्राह्मणैरनुजं परम् ॥ तदोपनीतं सद्योऽभूत्पुत्री यौवनपीडिता ॥८८॥

इस प्रकार उस समयके व्यतीत होनेपर वह कन्या युवती हुई। उस बड़े नेत्रवालीको युवावस्थामें देखकर राजा चिन्ता करने लगे। यह पुत्री मैं किसको दूं, ऐसा सोचते हुए, उस दुःखसे सन्तप्त राजाने पुत्रीके लिये उत्तम वर नहीं पाया। मेरी पुत्री किसको दी जाय इस चिन्ता-समुद्रमें मग्न उस राजाने अपनी इच्छा न होनेपर भी पुत्रका उपनयन संस्कार किया। वह राजपुत्री ब्राह्मणोंसे अपने छोटे भाईका उपनयन सुन उसी क्षण जवानीसे पीड़ित हुई ॥८८॥

सा कदाचिद्वनं बाला सखीभिः परिवारिता ॥ जगाम पुष्पा- पंयाहर्तुं कन्या कमललोचना ॥ ८९ ॥ वसन्तमागतं वीक्ष्य वने ताभिर्भयाकुला ॥ पुष्पाण्याहारयामास तरुमूलमुपाश्रिता ॥९०॥

किसी समय वह कमलनयनी कन्या सखियोंके साथमें पुष्प लेनेके लिये गयी। वृक्षके मूलमें खड़े होकर भीरु कन्याने वनमें वसन्तको आया हुआ देखकर सखियोंसे फूलोंको तोड़वाया ॥९०॥

अथ नारदोक्तपद्मावतीशरीरसल्लक्षणानि

तदागतो नारदस्तु वृद्धो भूत्वा जटाधरः ॥ धूलीधूसरिताङ्- गश्च कर्पूरसदृशद्युतिः ॥९१॥

नारदकथित पद्मावतीके शुभलक्षण

तब धूलिसे धूसर अंगवाले, कर्पूरके समान कान्तिवाले, जटा धारण किये हुए, वृद्ध नारदजी वहांपर आ गये ॥९१॥

आगतं तं मुनिं दृष्ट्वा विस्मयाकुलमानसा ॥ पद्मावती सखीः प्राह चटुला भृशकातरा ॥९२॥ कोऽसौ भयङ्करो बाला क यात्यत्र विचार्यताम् ॥

आये हुए मुनिको देखकर अत्यन्त कातर हो, बोलनेमें चतुर वह पद्मावती आश्चर्यित मनसे अपनी सखियोंसे बोली—बालाओ! यह भयावन पुरुष कौन है और कहां जाता है? इसका विचार करो ॥९२॥

इत्युक्तास्तास्तदा कन्या पप्रच्छुः स्थविरं द्विजम् ॥९३॥

कोऽसि विप्र महाप्राज्ञ किमर्थं त्वमिहागतः ॥ वाक्यं तासां समाकर्ण्य गुरुः प्रोवाच सद्वचः ॥९४॥

उसके लिये इस प्रकार कहे जानेपर उन कन्याओंने उस वृद्ध ब्राह्मणसे पूछा—हे विप्र ! आप कौन हैं ? और यहां किसलिये आये हैं ? उनके इस बातको सुनकर गुरुजी शुभ बात बोले ॥९४॥

*नारद उवाच—*

अहं कुलगुरुः साक्षाद्युष्माकं वरयोषिताम् ॥ हस्तं दर्शय मे पुत्रि लक्षणानि वदामि ते ॥९५॥ उवाच लज्जया देवी किं वदिष्यसि हे द्विज ॥ ॥९६॥

नारदजी बोले—तुम सब श्रेष्ठ स्त्रियोंका मैं कुलगुरु हूं। हे पुत्री ! अपने हाथ दिखलाओ। मैं तुम्हारे लक्षणोंको बतला दूंगा। पश्चात् उस देवीने लज्जासे कहा हे ब्राह्मण! तुम क्या बतलाओगे ॥९६॥

*नारद उवाच—*

विद्धि त्वं पितृतुल्यं मां मनसा निर्मलेन च ॥ इत्युक्ता मुनिना तेन दत्त्वा हस्तं वराङ्गना ॥९७॥ प्राह भावि शुभं श्रोतुं निजलक्षणलक्षितम् ॥९८॥

नारदजी बोले—तुम निर्मल मनसे मुझको अपने पिताके तुल्य समझो। इस प्रकार मुनिसे कहे जानेपर उस श्रेष्ठ स्त्रीने अपना हाथ दिया और अपने लक्षणोंसे सूचित भावीको सुननेके लिये बोली ॥९८॥

*पद्मावत्युवाच—*

सत्यं वद महाप्राज्ञ लक्षणानि विलोक्य मे ॥ ततो दृष्ट्वा पाणितलं प्राह स्माजतनूभवः ॥९९॥

पद्मावती बोली—हे महाप्राज्ञ ! मेरे लक्षणोंको देखकर सत्य-सत्य कहिये। तब उसकी हथेली देखकर श्रीनारदजीने कहा ॥९९॥

*नारद उवाच—*

पतिर्भवति धर्मज्ञे त्रिलोकेशो रमापतिः ॥ पाणी पद्मदलोपेतौ पादौ ते स्वस्तिकायतौ ॥१००॥ मुखं चन्द्रसमाकारं चक्षुः कमलकुड्मलम् ॥ तिलपुष्पसमाकारा नासिका ते विराजते ॥१०१॥ कपो-

लौ मुकुराभौ ते भ्रुवौ ते धनुषा समे ॥ दन्ता दाडिमबीजाभा आस्यं कर्पूरभाजनम् ॥१०२॥ अधरं रक्तपद्माभं जिह्वा मृदुतरा शुभा ॥ अरालालकसम्बद्धा श्यामला भाति वेणिका ॥१०३॥ ललाटं रत्नपीठाभं श्रोत्रे शष्कुलिकासमे ॥ तनुस्ते मन्मथाकारप्रतिमाऽप्रतिमप्रभा ॥१०४॥ कण्ठः सूर्यांशुसदृशस्ताम्बूलरसदर्शकः ॥ स्तनौ पीनौ घनौ कुब्जौ शुभौ ते मग्नचूचुकौ ॥१०५॥ उदरं कदलीपर्णसदृशं निम्ननाभिकम् ॥ कटिस्तव करिध्वंसिकटिसाम्ययुता शुभा ॥१०६॥ रम्भास्तम्भसमाकारं तवोरुयुगुलं रमे ॥ पृष्ठं ते वेदिवद्भाति किं त्वया सुकृतं कृतम् ॥१०७॥ गमनं करिराजस्य सदृशं ते वरानने ॥

नारदजी बोले - हे धर्मज्ञे ! हे रमे ! तीनों लोकोंके मालिक रमापति तुम्हारे पति होंगे , क्योंकि तुम्हारे हाथ कमलके दलसे युक्त, चरण स्वस्तिकसहित और आयत, मुख चन्द्रमाके समान आकारवाला, नेत्र कमलकी कलीके समान, नासिका तिलके फूलके समान शोभायमान, कपोल दर्पणके समान चमकीले, भौंहें धनुषके समान, दन्त दाड़िमके बीजके समान प्रकाशवाले, मुख कर्पूरके पात्रके समान सुगन्धित, ओष्ठ लाल कमलके समान रंगवाले, जिह्वा मुलायम और सुन्दर, चोटी कुटिल केशोंसे बन्धी हुई एवं श्याम, ललाट रत्नके पीठके समान चमकीला, कर्ण शष्कुली ( पूड़ी ) के समान, शरीर कामदेवके आकारके समान, कण्ठ सूर्यकी किरणोंके समान तथा ताम्बूलके रसको दिखानेवाले, स्तन कठिन, पीन, उन्नत तथा दबे हुए चूचुकवाले, उदर केलाके पत्रके समान तथा नीची नाभीवाला, कटि हाथीको नाश करनेवाले सिंहकी कटिके समान, ऊरु केलेके स्तम्भके आकारवाले तथा पृष्ठ वेदीके समान सुन्दर है। तुमने कौन-सा पुण्य किया था ? हे वरानने ! तुम्हारी चाल श्रेष्ठ हाथीके समान है ॥१०८॥

इति संभष्य तां देवीं देवर्षिः पद्मसम्भवाम् ॥१०९॥ अन्तर्दधे नारदस्तु सर्वासां पुरतो मुनिः ॥ संस्तुत्य कमलां देवीं मनसा चिन्तयन् रमाम् ॥ मनसा वन्दनं कृत्वा जगामाथ ऋषिस्तदा ॥११०॥

इति श्रीभविष्योत्तरपुराणे श्रीवेङ्कटाचलमाहात्म्ये मृगयाविहाय कमीनिवासालंकारादिवर्णनं नाम षष्ठोऽध्यायः ॥ ६ ॥

शिकारके समय श्रीनिवासजीका पद्मावती प्रभृतिको देखना [ पृष्ठ ३४६ ]



तं दृष्ट्वा गजराजोऽपि हयस्थं पुरुषोत्तमम् । नमस्कृत्य यथान्याय जगाम विपिन महत् ॥
तं दृष्ट्वा योषित. सर्वा विस्मयाकुलमानसा । आगत पुरुष दृष्ट्वा कोऽसि कोऽसीति चाब्रुवन् ॥

तदन्तराऽबलाः सर्वा ददृशुर्हयमुत्तमम् ॥ बालार्कसदृशाकारं स्वर्णाभरणभूषितम् ॥५॥ पुरुषेण समायुक्तं मन्मथाकारतेजसा ॥ तं दृष्ट्वा गजराजोऽपि हयस्थं पुरुषोत्तमम् ॥६॥ नमस्कृत्य यथान्यायं जगाम विपिनं नदन् ॥ तं दृष्ट्वा योषितः सर्वा विस्मयाकुलमानसाः॥७॥ करसम्पुटमापन्नाश्चलितास्तु भयातुराः ॥ वृक्षमूलं गता बाला अन्योन्यं वाक्यमब्रुवन् ॥८॥

इसी बीच उन सब स्त्रियोंने कामदेवके समान तेजवाले पुरुषसे संयुक्त, बालरविके समान आकृतिवाले, स्वर्णभूषणसे भूषित एक उत्तम घोड़ेको देखा। वह हाथी भी घोड़ेपर बैठे हुए उस उत्तम पुरुषको देखकर विधिपूर्वक नमस्कार कर शब्द करता हुआ जङ्गलमें चला गया। वे सब स्त्रियां आश्चर्यान्वित होकर उसको देख भयभीत होकर हाथजोड़े हुए वहांसे चलीं। वृक्षके मूलके पास आकर उन स्त्रियोंने एक दूसरेसे कहा ॥८॥

कोऽयमत्र वरारोहे सखि कञ्जायतेक्षणे ॥ कोऽसौ किरातरूपी च किं न दृष्टस्त्वया पुरः ॥९॥ तुरङ्गोपरि संस्थाय य आगच्छति हे सखि ॥ एवं वदन्त्यस्तास्तस्थुः सा च पद्मावती शुभा ॥१०॥ उवाच मन्दं वचनं सखीस्तास्तु ततो द्विजाः ॥ पृच्छन्तु तस्य वृत्तान्तं पितृमातृस्ववान्धवान् ॥ ११ ॥ देशं वृत्तं कुलं शीलं नामगोत्रादिकं तथा ॥ इति सख्या समाज्ञप्तास्ता ऊचुर्वचनं स्त्रियः ॥१२॥ आगतं पुरुषं दृष्ट्वा कोऽसि कोऽसीति चाब्रुवन् ॥१३॥

हे वरारोहे! हे कमलनयनी सखी! यहांपर यह कौन है? यह किरात-रूपधारी जो घोड़ेपर चढ़कर आ रहा है, हे सखी! क्या यह तुमसे पहले देखा गया है? इस प्रकार कहती हुई वे ठहर गयीं। तब वह सुन्दर पद्मावती उन सखियोंसे धीरेसे बोली कि उसका वृत्तान्त, पिता, माता, बान्धवों एवं देशका नाम, उसकी अवस्था, कुल, शील एवं गोत्र इत्यादिको पूछना चाहिये। इस प्रकार सखीसे आज्ञा पाकर वे स्त्रियां आये हुए पुरुषको देख "तू कौन हो! तू कौन हो" इस प्रकार पूछती हुई बोलीं ॥१३॥

कन्या ऊचः —

किमर्थमागतोऽसि त्वं किं ते कार्यं वद प्रभो ॥ न सन्ति पुरुषा ह्यत्र गच्छ गच्छेति चाब्रुवन् ॥१४॥ तासां तद्वचनं श्रुत्वा हयस्थो वाचमूचिवान् ॥१५॥

कन्याएं बोलीं—हे प्रभु ! आप किसलिये यहां आये हैं ? आपको क्या काम है ? यहांपर पुरुषगण नहीं हैं, अतः आप चले जाइये। उनके इस प्रकारके वचनको सुनकर घोड़ेपर चढ़े हुए उन पुरुषने कहा ॥१५॥

श्रीभगवानुवाच—

अस्ति कार्यं वरारोहा राजपुत्र्याः समीपके ॥१६॥

श्रीभगवान् बोले—हे वरारोहा ! राजपुत्रीके समीप कार्य है ॥१६॥

स्त्रिय ऊचुः—

किं कार्यं वद शीघ्रं त्वं यच्च मनसि वर्तते ॥ क्व ते वासश्च किं नाम का ते माता च कः पिता ॥१७॥ को भ्राता का च भगिनी किं कुलं गोत्रमेव च ॥१८॥

स्त्रियां बोलीं—तुम्हारे मनमें जो हो; सो बोलो। तुम्हें क्या काम है ? तुम कहां रहते हो ? तुम्हारा क्या नाम है ? तुम्हारे कौन माता और कौन पिता हैं, तुम्हारा कौन भाई, कौन बहन, कौन कुल एवं कौन गोत्र है ॥१८॥

अथ पद्मावतीश्रीनिवासयोः परस्परसम्वादः

इति तासां वचः श्रुत्वा न्यगदज्जगदीश्वरः ॥१९॥

पद्मावती और श्रीनिवासमें परस्पर सम्वाद

उनके इस प्रकारके वचनको सुनकर जगदीश्वर बोले ॥१९॥

श्रीनिवास उवाच—

कन्यापेक्षा मुख्यकार्यं तदन्ते प्रवदामि वः ॥ इति ताः प्रोच्य चोवाच देवीं पद्मावतीमथ ॥२०॥ सिन्धुपुत्रकुलं प्राहुरस्माकं तु

कमलसे उत्पन्न उस देवीसे इस प्रकार बात कर नारद ऋषि सब किसीके सामने कमलादेवीकी स्तुति कर, मनमें रमाको स्मरण करते हुए, मनहीमें उनको नमस्कार कर अन्तर्धान हो गये ॥११०॥

इति षष्ठोऽध्यायः ॥६॥

## सप्तमोऽध्यायः ॥७॥

कुसुम चयन वेला मिलन, पद्मावति भगवान ।
पद्मावति संवाद प्रभु, गिरि आगमन विधान ॥१॥

अथ पद्मावत्याः पुष्पापचय समये श्रीनिवासदर्शनम्

*श्रीसूत उवाच—*

**कन्याया जननं प्रोक्तं कुमारस्यापि वै ततः ॥ तस्यापदान-चारित्रं वैवाहं पुण्यवर्धनम् ॥१॥ करीन्द्रसङ्गेन समागतो हरिस्तु-रङ्गमास्थाय वराङ्गनानाम् ॥ श्रीगन्धलेपारुणचारुवक्षा बालार्कभाः सोऽथ समीपमाययौ ॥२॥ गर्जन्तं गजराजं तं दृष्ट्वा पद्मावतीमु-खाः ॥ वनस्पतिमुपाश्रित्य तत्र लीनास्तदाऽभवन् ॥३॥ निमील्य नेत्रवर्माणि व्यूहं कृत्वा वराङ्गनाः ॥ पश्यन्त्योऽथ तरुच्छन्नाः पुनः पुनरवस्थिताः ॥४॥**

फूल तोड़नेके समय पद्मावतीको श्रीनिवासके दर्शन

श्रीसूतजी बोले—कन्याका जन्म और तत्पश्चात् कुमारका जन्म भी मैंने कहा। अब उसके पुण्यको बढ़ानेवाले विवाहचरित्रको सुनो। घोड़ेपर चढ़कर हाथीके साथ आये हुए, श्रीगन्धके लेपसे अरुण हृदयवाले, बालरविके समान प्रकाशवाले श्रीहरि उन श्रेष्ठ स्त्रियोंके समीप आ गये। उस हाथीको गरजते हुए देखकर पद्मावती आदि स्त्रियां वनस्पतिका आश्रय लेकर वहींपर छिप गयीं। वृक्षोंमें छिपी हुईं वे श्रेष्ठ स्त्रियां व्यूह बना, दृष्टिपथको बन्द कर बारम्बार देखने लगीं ॥४॥

पुराविदः ॥ जनको वसुदेवस्तु देवकी जननी मम ॥२१॥ अग्रजः श्वेतकेशस्तु सुभद्रा भगिनी मम ॥ पार्थोऽपि मे सखा देवि पाण्डवा मम बान्धवाः ॥ २२ ॥ षण्णां तु मृतपुत्राणां कृतनाम्नां महात्मनाम् ॥ वियोगततौ पितरौ सप्तमं राम इत्यथ ॥२३॥ चक्रतुः संस्कृतं नाम्ना पितृलिङ्गमुपागमत् ॥ जातोऽहमष्टमोऽष्टम्यां सुभद्रां मदनन्तरम् ॥२४॥ मातृवर्णश्च मे देवि कृष्णपक्षे जनिर्मम ॥ तस्मात्कृष्णेति मां देवि चक्रतुर्नाम संस्कृतम् ॥२५॥ वर्णतो नामतश्चापि कृष्णं प्राहुर्मनीषिणः ॥ वृत्तान्तो ह्यखिलो मत्तो ज्ञेयः पण्डितनन्दिनि ॥ २६ ॥ युष्माभिरुच्यतां वार्ता गोत्रनामकुलादिकम् ॥ इति तेन समाज्ञप्तो प्रोवाच नृपनन्दिनी ॥२७॥

श्रीनिवास बोले—कन्याकी इच्छा, यही मेरा मुख्य कार्य है, उसके पश्चात् मैं तुम लोगोंसे बोलता हूं। उन लोगोंसे इस प्रकार बोलकर पद्मावती देवीसे बोलने लगे कि पुराण जाननेवाला मेरा कुल सिन्धुपुत्र (चन्द्रवंश) है; मेरे पिता वसुदेव, मेरी माता देवकी, मेरे बड़े भाई श्वेतकेश (बलभद्र), मेरी भगिनी सुभद्रा, मेरे मित्र पार्थ (अर्जुन) और हे देवि! मेरे बान्धववर्ग पाण्डव हैं। नामकरण किये हुए एवं मरे हुए छः महात्मा पुत्रोंके वियोगसे दुःखी मेरे माता-पिताने, पिताके शरीरको प्राप्त हुए सप्तम पुत्रका "राम" नामसे नामकरण संस्कार किया। मैं अष्टमीमें आठवां पुत्र हुआ तथा मेरे पीछे सुभद्रा हुई। हे देवि! मेरा वर्ण माताके जैसा है। कृष्णपक्षमें मेरा जन्म है। इसलिये, हे देवि! कृष्ण ऐसा संस्कृत नाम मेरा रखा गया। विद्वान् लोग वर्णसे और नामसे भी मुझे कृष्ण ही कहते हैं। हे पण्डितकी पुत्री! मुझ द्वारा मेरा सब वृत्तान्त बतला दिया गया, आप भी अपने गोत्र, नाम, कुल इत्यादिकी वार्ता कहिये। उनसे इस प्रकार कहे जानेपर वह राजाकी कन्या बोली ॥२७॥

पद्मावत्युवाच—

आकाशराजतनयां निषादाधिप विद्धि माम् ॥ नाम्ना पद्मावतीं कृष्ण कुलं शीतकरस्य च ॥ २८ ॥ अत्रिगोत्रं किरातेन्द्र शीघ्रं गच्छेति चाब्रवीत् ॥२९॥

पद्मावती बोली—हे कृष्ण! हे निषादोंके स्वामी! मुझको आकाशराजकी पुत्री, पद्मावती नामकी, चन्द्रवंश एवं अत्रि गोत्रवाली जानो। हे किरातेन्द्र! आप शीघ्र चले जाइये ॥ २९ ॥

पद्मावतीका श्रीनिवासजीके घोड़ेको मारना [पृष्ठ ३५१]




ताडयामास गोविन्दं शिलौघैः शीघ्रगत्वरैः। गतासुं स हयं दृष्ट्वा मुक्तकेशो मुहुर्मुहुः॥
हयो मे संकटं प्राप्तो ममात्र कृतसंनिधेः। इत्युच्चरन् रमाकान्तो जगामोत्तरदिङ्मुखः॥

श्रीनिवास उवाच—

किमर्थं निष्ठुरं वाक्यं मन्दं किं न प्रभाषसे ॥ अन्नं कांक्षन्ति वै लोका यो ददाति नरोत्तमः ॥ ३० ॥ स पुमान्पुण्यमाप्नोति जलदोऽपि फलं लभेत् ॥ अदिशन्मृदुभाषी च न तु निष्ठुरभाषिणः ॥३१॥ अथाहं काममुद्दिश्य पात्रभूतोऽस्मि साम्प्रतम् ॥ सुखमेष्यसि दानेन त्वन्ते स्वर्गं गमिष्यसि ॥३२॥ आत्मानं दिश मह्यं त्वं वृथा निष्ठुरपंक्तिभिः ॥ सा तस्य वचनं श्रुत्वा क्रोधात्ताम्रविलोचना ॥३३॥

श्रीनिवास बोले—यह निष्ठुर वाक्य क्यों बोलती हो ? धीरे क्यों नहीं बोलती ? मनुष्यगण अन्न चाहते हैं, जो मनुष्यश्रेष्ठ अन्न देनेवाला है वही पुरुष स्वर्गको प्राप्त होता है। जल देनेवाला अथवा नहीं देनेवाला भी मृदुभाषी होनेसे फल पाता है, निष्ठुर बोलनेवाला नहीं पाता। मैं इस समय कामके उद्देश्यसे आया हुआ पात्र हूं; उसको देनेसे सुख पावोगी और अन्तमें स्वर्गको भी जाओगी। अतएव तुम मुझको अपनी देह समर्पण कर दो, इस निष्ठुर वचनसे क्या ?" पश्चात् वह उनके वचनको सुनकर क्रोधसे रक्तनेत्रवाली होकर बोली ॥३३॥

पद्मावत्युवाच—

अवाच्यं वदसे मूढ जीवनेच्छा न विद्यते ॥ आकाशराजस्त्वां दृष्ट्वा हनिष्यति न संशयः ॥३४॥ यावन्नायाति तावत्त्वं गच्छ शीघ्रं स्वमालयम् ॥३५॥

पद्मावती बोली—रे मूढ़ ! तू अवाच्य वचन बोलता है, क्या तेरी जीनेकी इच्छा नहीं है ? आकाशराज तुमको देखकर मार डालेंगे इसमें सन्देह नहीं । जबतक वे नहीं आते हैं उसके पहले ही अपने घर चले जाओ ॥३५॥

श्रीनिवास उवाच—

कार्यान्ते मरणं सौख्यं कार्यहानौ मृतिः कुतः ॥ कथं हन्यात्स राजेन्द्रस्त्वधर्माभिमुखो हि माम् ॥३६॥ त्वं कन्याऽहं वरो देवि कोऽत्रान्यायो महीपतेः ॥ ३७ ॥

श्रीनिवास बोले—कार्यकी सफलतामें मरना भी सुख है, कार्यकी हानिमें मरना कहाँ ? अधर्मका अभिमुख होकर वह राजा मुझको क्यों मारेगा ? हे देवि ! तू कन्या और मैं वर हूं, इसमें राजाकी दृष्टिसे अन्याय क्या है ॥३७॥

पद्मावत्युवाच—

श्रृणु मूढ न जानासि बालभावेन किं वृथा ॥ त्वां दृष्ट्वाकाशराजोऽपि कृत्वा ते गलबन्धनम् ॥३८॥ वध्नीयान्निगडैर्मूर्ख भविष्यत्प्रवदाम्यहम् ॥३९॥

पद्मावती बोली – रे मूढ़ ! सुनो, तुम नहीं जानते हो, व्यर्थ की बकवादसे क्या लाभ ? तुमको देखकर ही आकाशराज गलेमें रस्सी बान्धकर, बेड़ियोंसे जकड़वा देंगे, यह मैं तुम्हारा भविष्य कह रही हूं ॥३९॥

श्रीनिवास उवाच—

निश्चित्य मरणं देवि रन्तुकामोऽस्म्यहं त्वया ॥ जातस्य मरणं नित्यं पूर्वकर्मफलानुगम् ॥४०॥ आकाशराजो धर्मात्मा कथं हन्यादनागसम् ॥४१॥

श्रीनिवास बोले—हे देवि ! मैं मरना निश्चय कर तुम्हारे साथ रमण करनेकी इच्छा करता हूं। जो उत्पन्न हुआ है उसका पूर्व कर्मके फलके अनुसार मरना अवश्यम्भावी है। धर्मात्मा आकाशराज निरपराधको क्यों मारेंगे ॥४१॥

पद्मावत्युवाच—

गौरवं यन्निषादेन्द्र नृपस्यास्य हरेर्यथा ॥ वरदस्याथ रङ्गस्य वेङ्कटाचलवासिनः ॥४२॥ तद्रक्ष त्वं महाबाहो सुखं गच्छ स्वमालयम् ॥ इत्युक्तोऽपि तया देव्या निषदेन्द्राकृतिर्हरिः ॥४३॥ निराकृत्य च तद्वाक्यं हयस्थः पुनरापतत् ॥ हयमग्रागतं वीक्ष्य सा बाला वाक्यमब्रवीत् ॥४४॥

पद्मावती बोली—हे निषादेन्द्र ! इस राजाका श्रीवरदराज, श्रीरंगनाथ और श्रीवेङ्कटाचलवासी भगवान्‌के समान गौरव है। अतएव तू अपनी रक्षा करो तथा सुखसे अपने घर जाओ। उस देवीसे इस प्रकार कहे जानेपर वह निषादके आकारवाले भगवान उसके वाक्यका अनादर कर घोड़ेपर चढ़े हुए फिर भी आगे बढ़े और घोड़ेको आगे आया हुआ देखकर वह स्त्री बोली ॥४४॥

पद्मावत्युवाच—

त्यक्त्वा च पितरौ बन्धून्भ्रातृमुख्यान्वने चरन् ॥ अनाथो म्रियसे व्यर्थं किमर्थं काकभोजनम् ॥४५॥ इति तस्या वचः श्रुत्वा तामूचे वारिजेक्षणः ॥४६॥

पद्मावती बोली—माता, पिता, भाई, बन्धु इत्यादि मुख्य वर्गोंको छोड़कर जङ्गलमें घूमते हुए अनाथ होकर व्यर्थ मरते हो, काकभोजन किसलिये है ? इस प्रकार उसके वचनको सुनकर कमलनयन भगवान् उससे बोले ॥४६॥

श्रीनिवास उवाच—

विधिना लिखितं यत्तु न तद् व्यर्थं भविष्यति ॥ जयो वाऽपजयो वा स्यात्त्वयि भोगं करोम्यहम् ॥४७॥

श्रीनिवास बोले—ब्रह्मासे जो लिखा गया है, वह व्यर्थ नहीं होगा। जय हो अथवा पराजय, तुमसे भोग अवश्य करूंगा ॥४७॥

इत्युक्ता कोपताम्राक्षी सखीभिः परिवारिता ॥ तर्जयन्ती जगद्योनिं शिलापाणिः समागमत् ॥ ४८ ॥ ताडयामास गोविन्दं शिलौघैः शीघ्रगत्वरैः ॥ ताड्यमानः शिलावर्षैर्न्यपतद्घोटरात् स्वयम् ॥४९॥

इस प्रकार कहे जानेपर क्रोधसे लाल नेत्रवाली हो, हाथमें पत्थर लिये हुए, पद्मावती अपनी सखियोंसे रोके जानेपर भी जगत्कारण हरिको ललकारते हुए पासमें आयी और उन पत्थरोंसे शीघ्र ही गोविन्दको मारने लगी। पत्थरकी वर्षासे पिटा हुआ वह घोड़ा स्वयं गिर पड़ा ॥४९॥

त्यक्तासुं स हयं दृष्ट्वा मुक्तकेशो मुहुर्मुहुः ॥ पश्यन्पश्यन्दिशः सर्वा अभ्रमद्विभ्रमन्निव ॥ ५० ॥ हयो वै सङ्कटं प्राप्तो ममात्र कृतसन्निधेः ॥ इत्युच्चरन्रमाकान्तो जगामोत्तरदिङ्मुखः ॥५१॥ आरूढसोपानगणो गिरेर्विभुर्विडस्वयंह्लोकमवाप शय्याम् ॥ प्राप्याधिमानन्दयुतोऽपि माधवो यथा युगान्ते वटपत्रशायी ॥५२॥

इति श्रीभविष्योत्तरपुराणे श्रीवेङ्कटाचलमाहात्म्ये पद्मावतीश्रीनिवासयोः परस्परं सम्वादादिवर्णनं नाम सप्तमोऽध्यायः ॥ ७ ॥

भगवान् उस घोड़ेको मरे देखकर, केशोंको खोले हुए सब दिशाओंको देख-देखकर पागलके स
घूमने लगे और मेरे घोड़ेको यहाँपर संकट प्राप्त हुआ है ऐसा बोलते हुए लक्ष्मीपति उत्तर दिशामें गये
उस पर्वतके सोपानपर चढ़कर संसारको मोहते हुए शय्यापर पड़ गये, जिस प्रकार आनन्दसे
माधव युगके अन्तमें वटके पत्रपर सोये थे ॥५२॥

इति सप्तमोऽध्यायः ॥७॥

# अष्टमोऽध्यायः ॥८॥



पद्मावति तल्लीन प्रभु, वकुला वचन सुशान्त।
वकुलासे भगवानका, कथन दुःख दुर्दान्त ॥१॥
पद्मावति अभिमत कथन, पूर्व जन्म अनुलेख।
वकुलाका तेहि पुर गमने, कहि सब सखि तेहि देख ॥२॥
सखिसे वकुलाका कथन, प्रभू गमन धरि भेष।
प्रभु जननी संवाद बहु, अन्त हुए विनिवेश ॥३॥

अथ पद्मावतीपराजितश्रीनिवासं प्रति वकुलमालिकासान्त्वनवचनम्

*सूत उवाच —*

शयनं प्राप पर्यङ्के श्रीनिवासो वृषाकपिः ॥ तदा गत्वा च सा देवी सेवार्थं वकुला शुभा ॥१॥ षड्विधान्नं समाधाय सूपापूपरसान्वितम् ॥ रमापतेस्तु बहुलभक्तिभावेन संयुता ॥२॥ शयानं श्रीनिवासं च वल्मीकस्थानसंस्थितम् ॥ श्वसन्तं दीर्घनिश्वासं रुदन्तं नेत्रबिन्दुभिः ॥३॥ अभाषमाणं श्रीकान्तं बभाषे वकुला शुभा ॥४॥

कामातुर श्रीनिवासजीको वकुलादेवी द्वारा सान्त्वना [ पृष्ठ ३५२ ]



शयानं श्रीनिवासं च वल्मीकस्थानसंस्थितम्। अभाषमाणं श्रीकान्तं बभाषे वकुला शुभा ॥
मनोगतं वा किं देव तद्वदस्व यथार्थतः। परमान्नं कृतं देव भोक्तुमागच्छ माधव ॥

श्रीसूतजी बोले—जब वृषाकपि श्रीनिवास शय्यापर पड़े तब वह सुन्दरी वकुलादेवी सूप ( दाल ), अपूप ( पुआ ) इत्यादि रसोंसे युक्त छः प्रकारके अन्नको लेकर, रमापतिके ऊपर बहुत भक्ति-भावसे संयुक्त होकर सेवाके लिये गयी और वल्मीकके स्थानपर ठहरे हुए, दीर्घ निःश्वास छोड़ते हुए, नेत्र बिन्दुओंसे रोते हुए, सोये हुए तथा नहीं बोलते हुए लक्ष्मीपति श्रीनिवाससे वह सुन्दरी वकुला बोली ॥ ४ ॥

*वकुलोवाच—*

**उत्तिष्ठोत्तिष्ठ गोविन्द किं शेषे पुरुषोत्तम ॥ न कदापि दिवा स्वाप्सीर्नो कार्षी रोदनं हरे ॥५॥ किमर्थं दुःखमेणाक्ष आर्तव-दृश्यसे कुतः॥ मनोगतं वा किं देव तद्वदस्व यथार्थतः ॥६॥ पर-मान्नं कृतं देव भोक्तुमागच्छ माधव ॥ इत्युक्तं वचनं श्रुत्वा नो-वाच वचनं हरिः ॥ हरिं दृष्ट्वा हिरण्यांगी पुनर्वाचमुवाच ह ॥**

वकुला बोली—हे गोविन्द ! हे पुरुषोत्तम ! उठो ! उठो ! क्यों सोते हो ? दिनमें कभी भी आप नहीं सोये एवं हे हरि ! रोदन भी नहीं किया है; हे मृगके समान नेत्रवाले ! तुम किसलिये आर्तके समान दिखलायी पड़ते हो ? हे देव ! आपके मनमें क्या है, सो यथार्थ कहिये। हे देव ! हे माधव ! बनाये गये इस उत्तम अन्नको भोजन करनेके लिये आइये। इस प्रकार कहे हुए वचनको सुनकर हरि कुछ नहीं बोले और हरिको देखकर वह स्वर्णके रंगके समान शरीरवाली पुनः वचन बोली ॥ ८ ॥

*वकुलोवाच—*

**किं दृष्टं विपिने कृष्ण किमर्थं दुःखमुल्बणम् ॥ आर्तिहानोऽपि देव त्वमार्तवत् दृश्यसे कुतः ॥९॥ मनोगतं वदादेशं गौरवं मयि मा कृथाः ॥ गौरवं बलरामे स्याद्देवकीवसुदेवयोः ॥१०॥ दुःखं भवति दृष्ट्वा त्वामभुक्तं भूतभावन ॥ सर्वलोकार्तिसंहर्तः पुण्यमूर्ते न-मोऽस्तु ते ॥११॥ का दृष्टा कन्यका कृष्ण गान्धर्वी वा सुरोत्तम ॥ कस्याः सङ्गं समापेक्ष्य चित्तवैकल्यमद्य ते ॥१२॥**

वकुला बोली—हे कृष्ण ! वनमें आपने क्या देखा ? किसलिये यह भयंकर दुःख है ? हे देव ! अनात होनेपर भी तुम दुःखीके समान क्यों दीखते हो ? अपने मनकी बात कहिये। मेरे सामने गौरव मत दिखाइये; बलराम, देवकी और वसुदेवको ही गौरव दिखलाइये। हे भूतभावन ! तुमको भूखे देखकर दुःख होता है।

सब लोकके दुःखको छुड़ानेवाले पुण्यकी मूर्ति आपको नमस्कार है। हे देवताओंमें श्रेष्ठ कृष्ण! आपने किसी कन्याको देखा या किसी गान्धर्वीको? किसके संगकी इच्छासे आपके चित्तमें दुःख होता है ॥१२॥

का च पुण्यवती बाला बालं भक्तवशं हरिम् ॥ मोहयामास कामार्ता न जानामि जगद्गुरो ॥१३॥ वद गोविन्द ते कार्यं क्षणमात्रात्करोम्यहम् ॥ मृगं दृष्ट्वा भयं प्राप्तं चोरं वा क्रूररूपिणम् ॥१४॥ पिशाचभूतप्रेतान्वा न जानामि रमापते ॥ मन्त्रं वा यन्त्रपूगान्वा मूलिकाजौषधान्यपि ॥१५॥ कारयित्वा यथाशास्त्रं तत्सर्वं शमयाम्यहम् ॥

हे जगद्गुरु! वह कौन कामार्ता एवं पुण्यशाली स्त्री है, जिसने भक्तके वशीभूत बालरूप हरिको भी मोहित कर लिया, मैं नहीं जानती। हे गोविन्द! आप कहिये; आपका कार्य मैं क्षणमात्रमें कर दूंगी। हे रमापति! मृग, क्रूररूपी चोर, पिशाच, भूत वा प्रेत किसको देखकर आपको भय हुआ है, वह मैं नहीं जानती हूं। मंत्र, पवित्र यंत्र अथवा मूल इत्यादि ओषधियोंको शास्त्रकी विधिसे बनवाकर उन सबोंका शमन करूंगी ॥१६॥

इत्युक्तेऽपि हरौ तूष्णीं स्थिते वकुलमालिका ॥१६॥ आनीतं तत्र निःक्षिप्य तत्समीपमुपाश्रिता ॥ पादसंवाहनं कृत्वा सान्त्वयामास चासकृत् ॥१७॥

इतना कहे जानेपर भी भगवान्के चुप रहनेपर वह वकुलमालिका लाये हुए पदार्थोंको वहीं रख, उनके पास बैठ एवं पैर पकड़कर बारबार सान्त्वना देने लगी ॥१७॥

सान्त्वयन्त्या तयाऽऽयासस्विन्नं देहं समन्ततः ॥ आपादमौलिपर्यन्तं कराभ्यां परिमृज्य च ॥१८॥ बोधितोऽपि रमाकान्तो नोवाच वचनं यदा ॥ तदा सा वकुला खेदादुवाच वचनं हरिम् ॥१९॥ पृथक्कृत्वा छन्नवस्त्रं हस्तेन परिमृज्य च ॥

सान्त्वना देती हुई उससे, स्वेदसे भींगी हुई देहको शिरसे पैरतक हाथोंसे पोंछकर जगाये जानेपर भी लक्ष्मीपति हरि जब वचन नहीं बोले तब वह वकुला ढंके हुए वस्त्रको निकालकर एवं हाथसे मार्जन कर खेदपूर्वक हरिसे वचन बोली ॥ १८ ॥

देवदेव जगन्नाथ पुराणपुरुषोत्तम ॥२०॥ मनोगतं करिष्यामि

नात्र कार्या विचारणा ॥ सत्यं वद मनःस्थं ते मा लज्जां मा भयं कृथाः ॥२१॥ पूरयाम्यविलम्बेन यावन्मे वर्तते बलम् ॥ इति तद्वचनं श्रुत्वा हरिरुष्णं समुच्छ्वसन् ॥२२॥ उवाच चातिदुःखेन मन्दं मन्दं मनोगतम् ॥२३॥

हे देव-देव ! हे जगन्नाथ ! हे सनातन ! हे पुरुषोत्तम ! आपके मनमें जो है वही करूंगी, इसमें विचार नहीं करना चाहिये। मनकी बातको सत्य-सत्य कहिये, लज्जा और भय मत कीजिये। बिना विलम्बके मैं उसको पूरा करूंगो। उसकी इस बातको सुनकर श्रीहरिने गर्म सांस छोड़ते हुए बहुत दुःखसे अपने मनकी बातको धीरे-धीरे कहा ॥ २३ ॥

अथ वकुलां प्रति श्रीनिवासोक्तस्वमनोनिर्वेदहेतुवर्णनम्

*श्रीनिवास उवाच—*

नामोहयन्मां गान्धर्वी नर्षिपुत्री न राक्षसी ॥ न पिशाचो भूतगणाः प्रेता वा मे भयावहाः ॥२४॥ मृगाश्चारण्यकाश्चोरा न क्रूरा मे कदाचन ॥ मन्नामस्मरणादेव विद्रवन्ति दिशो दश ॥२५॥ ततस्तेभ्यो भयं नेह मृत्युमृत्योर्ममानघे ॥

वकुलमालिकाके प्रति श्रीनिवासका दुःखवर्णन

श्रीनिवास बोले—न मुझको गान्धर्वीने मोहित किया है, न ऋषिपुत्री और न राक्षसी ही ने, न पिशाच भूतगण वा प्रेत ही मुझको डरानेवाले हुए हैं। मृग और वनके चोर भी मेरे लिये कभी क्रूर नहीं हैं। ये सब मेरे नामके स्मरण ही से दशों दिशाओंमें भाग जाते हैं। हे अनघे ! इसलिये उनसे वा मृत्युकी मृत्युसे भी मुझको भय नहीं है ॥२६॥

मया दृष्टा वरा कन्या नाम्ना पद्मावती शुभा ॥२६॥ तां दृष्ट्वा मे मनो भ्रान्तं काममोहवशं गतम् ॥ सुरूपां सुन्दरीं सुभ्रूं नीलालकविराजिताम् ॥२७॥ पूर्णेन्दुवदनां श्यामां नीलमाणिक्यविग्रहाम् ॥ साक्षाद्रमासमां कन्यां घटयाशु वरानने ॥२८॥ बहुजन्मार्जितैनैव पुण्येनैषा हि लभ्यते ॥ मत्पुण्यं पक्वतां यातं दर्शनेन

सुलोचने ॥२९॥ मानुषं देहमासाद्य तां कन्यां कः पुमांस्त्यजेत् ॥ लोके विना जडमतिमन्नपानविवर्जितम् ॥३०॥ जीवनेन किमेतेन कार्यहीनेन मे सखि ॥ घटयाशु वराङ्गीं तामाकाशनृपनन्दिनी- म् ॥३१॥ तां विना न हि जीवामि सत्यमित्यवधारय ॥ ताडितोऽहं शिलावर्षैर्हताश्वोऽस्मि वरानने ॥३२॥ मज्जीवनं वृथा मातर्जातं वै वेङ्कटाचले ॥ यतोऽभूदवतारोऽत्र पद्मावत्यर्थमेव मे ॥३३॥

मैंने पद्मावती नामकी एक श्रेष्ठ सुन्दरी कन्या देखी है। उस सुन्दर भौंवाली,काले केशसे शोभित, सुरूप सुन्दरीको देखकर मेरा भ्रान्त मन काम और मोहके वश हो गया है। हे वरानने ! पूर्ण चन्द्रमाके समान मुखवा- ली, श्यामा,नील और माणिक्यकी मूर्ति तथा साक्षात् लक्ष्मीके समान उस कन्यासे मुझे शीघ्र मिलाओ। बहुत जन्ममें उपार्जन किये हुए पुण्यसे वह मिलेगी। हे सुन्दर नेत्रवाली ! मेरा पुण्य उसके दर्शनहीसे परिपक्व हो गया है। इस संसारमें मनुष्यशरीरको पाकर, अन्नपानसे रहित कुंद-बुद्धिको छोड़कर, कौन पुरुष उस कन्याको छोड़ सकता है ? हे सखी ! इस मेरे व्यर्थ जीवनसे क्या ? उस सुन्दर अङ्गवाली आकाशराजकी पुत्रीको शीघ्र मिलाओ। उसके विना मैं नहीं जीऊंगा, यह सत्य मानो। हे सुन्दर मुखवाली ! मैं पत्थरोंकी वर्षासे उससे मारा गया हूं। मेरा घोड़ा भी मार डाला गया है। हे माता ! श्रीवेङ्कटाचलमें मेरा जीवन व्यर्थ ही हुआ, क्योंकि यहांपर मेरा अवतार पद्मावतीके हेतु ही हुआ था ॥ ३३ ॥

पुत्रो मे वैरमापन्नः किं कृतं पूर्वजन्मनि ॥ दृष्टिहीनेन विधिना निर्मिता कन्यका वरा ॥३४॥ अनायासेन मे सा स्यादिति मे नि- श्चिता मतिः ॥ किं दृष्टं ब्रह्मणा पूर्वं मत्पापं घोरदर्शनम् ॥३५॥ यत्पापमनुस्मृत्यैवं घटनं नाकरोद्विधिः ॥ मद्भागस्थो विधिस्त्वं हि साहाय्यं कुरु मेऽङ्गने ॥३६॥ न करोषि यदा बाले तदा मे मरणं ध्रुवम् ॥ मरणे जीवनोपायं ये कुर्वन्ति नरोत्तमाः ॥३७॥ ते दिवं यान्ति यानेन पुण्यमार्गेण कन्यके ॥ इत्थं धर्मार्थकामास्त्वं धर्ममा- र्गमुपाश्रय ॥ ३८ ॥ किमुक्तेन विशेषेण विदिताशासि सङ्गमे ॥ त्वं मे माता पिता देवि भ्राता मातुल एव च ॥३९॥ त्वं प्रह्लाद- स्त्वमक्रूरस्त्वं ध्रुवस्त्वं गजेश्वरः ॥ त्वमुद्धवोऽतिभक्तो मे त्वं किरी-

टी वलिस्तथा ॥४०॥ अजामिलो द्रौपदी च भक्तो मे त्वं विभी-
षणः ॥ त्वां दृष्ट्वा मे मनो हर्षं गच्छतीह निरन्तरम् ॥४१॥ मद्-
दुःखव्यपनोदाय निर्मिता विधिनाङ्गना ॥ गवां कोटिसहस्रेण
हयानामयुतैस्तथा ॥४२॥ सुवर्णतिलदानैश्च समं माङ्गल्यवर्ध-
नम् ॥ कन्यां दृष्ट्वा तु सन्तोषं लभते नात्र संशयः ॥४३॥ इति तेन
समाज्ञप्ता वकुला वाक्यमब्रवीत् ॥४४॥

मेरे पुत्र ब्रह्माजी भी मेरे शत्रु बने, मैं पूर्व जन्ममें क्या किया था ? यह कन्या अपने ब्रह्मासे बनायी गयी है। अनायास ही वह मेरी होगी यह मेरी निश्चल धारणा थी। विधाता ब्रह्माने मेरा कौन-सा जन्मान्तरका भयङ्कर पाप देखा कि जिस पापके कारण उसने यह संयोगकी घटना नहीं की ? हे सुन्दरी ! मेरे भाग्यकी विधाता तू ही है। इसलिये मेरी सहायता करो। हे बाला ! यदि तू यह नहीं करती हो तो, मेरा मरना निश्चित है। हे कन्यके ! जो उत्तम मनुष्य मृत्युके अवसरपर जीवनका उपाय करते हैं, वे पुण्य मार्गसे सवारीपर चढ़कर स्वर्गको जाते हैं। हे धर्म और अर्थके इच्छुक ! तुम धर्ममार्गका इस प्रकार आश्रय लो। अधिक कहनेसे क्या ? संगमकी मेरी आशा तो तुमसे जाती गयी है। हे देवी ! तू ही मेरी माता, पिता, भ्राता, मातुल ( मामा ) तथा मेरा अत्यन्त भक्त प्रह्लाद, अक्रूर, ध्रुव, गजेन्द्र, उद्धव, किरीटी (अर्जुन), बलि, अजामिल, द्रौपदी एवं विभीषण हो। तुमको देखकर मेरा मन निरन्तर हर्षको प्राप्त होता है। मेरे दुःखको छुड़ानेके लिये ब्रह्मासे वह कन्या बनायी गयी है। माङ्गल्यको बढ़ानेवाली कन्याको देखकर करोड़ों गो, दश सहस्र घोड़ों तथा तिलपर्वतदानके समान, सन्तोष जरूर प्राप्त होता है, इसमें सन्देह नहीं। उनसे इस प्रकार कहे जानेपर वकुला देवी यह बात बोलीं ॥ ४४ ॥

वकुलोवाच—

कुलास्ते जगदाधार त्वया याऽत्र निरीक्षिता ॥ तन्मार्गं वद गो-
विन्द गच्छामि करुणानिधे॥४५॥ का सा पूर्वं किमर्थं च कन्यका
जनिता भुवि ॥ तद् वृत्तमखिलं ब्रूहि सत्येन मम केशव ॥४६॥

वकुला बोलीं – हे जगदाधार ! तुमसे जो यहांपर देखी गयी है वह कहांपर है ? हे गोविन्द ! उस मार्गको कहिये। हे करुणानिधि ! मैं जाऊंगी। वह कन्या पूर्वमें कौन थी ? किसलिये पृथ्वीपर उत्पन्न हुई है ? हे केशव ! वह सब वृत्तान्त सत्य-सत्य मुझसे कहिये ॥४६॥

अथ वकुलां प्रति श्रीनिवासवर्णितपद्मावतीपूर्वजन्मोदन्तः

इत्याज्ञप्तो विरिञ्चेशविनताङ्घ्रिसरोरुहः ॥४७॥ उवाच मन्दं वचनं वकुलां धरणीधरः ॥४८।

श्रीनिवास कथित पद्मावतीके पूर्वजन्मका वृत्तान्त

ब्रह्मा एवं शिवसे नमस्कृत चरणकमलवाले धरणीधर भगवान् इस प्रकार कहे जानेपर वकुलासे मन्द वचन बोले ॥ ४८ ॥

*श्रीनिवास उवाच—*

शृणु बाले पुरावृत्तं पद्मावत्या जनेः शुभम् ॥ त्रेतायां रामरूपेण स्ववतारमहं गतः ॥४९॥ पितृमातृवचः श्रुत्वा दण्डकारण्यमागतः ॥ लक्ष्मणेन सह भ्रात्रा सीतया वकुले शुभे ॥५०॥ तदा तु रावणो नाम राक्षसो लोककण्टकः ॥ लोकभर्तुः सतीं हृत्वा लङ्कां गन्तुमवर्तत ॥५१॥ लक्ष्मणोऽप्यग्रजं द्रष्टुं सीतया प्रेषिता बलात् ॥५२॥ तत्कालमालक्ष्य स राक्षसेन्द्रो विमानमारोपयितुं हि सीताम् ॥ प्रावर्ततैषा च तदा रुराव हा राम हा लक्ष्मण राघवेति ॥५३॥ तदार्तरावेण तदा वनौकसो विचुक्रुशुस्तत्र वनान्तरस्थिताः ॥ तद्वाक्यमाकर्ण्य च हव्यवाहनः पाताललोकादुदगाद्धरातलम् ॥५४॥ समायान्तं दुराधर्षमाकर्षन्तं च जानकीम् ॥ सम्भाव्य रावणं क्रूरं पातालादुपगम्य च ॥५५॥ रावणेन च पापेन सहितः सीतया तया ॥ रावणं बोधयामास नानावाक्यगणैस्तदा ॥५६॥

श्रीनिवास बोले—हे बाला! पद्मावतीके जन्मका शुभकारक वृत्तान्त सुनो। त्रेतामें राम-रूपसे मैंने अवतार धारण किया था। हे सुन्दरी वकुला! पिता और माताके वचन सुनकर भाई लक्ष्मण और सीताके साथ मैं दण्डकारण्यमें आया, तब रावण नामक लोककंटक राक्षस मुझ जगत्पतिकी सती सीताको

हरण करके लङ्का जानेके लिये तैयार हुआ, लक्ष्मण भी बड़े भाईको देखनेके लिये सीताद्वारा बलपूर्वक भेज दिया गया था। वह राक्षसेन्द्र उस समयसे देखकर सीताको विमानपर चढ़ानेको तैयार हुआ था। तब वह सीता "हा राम! हा लक्ष्मण! हा राघव!" इस प्रकार रोने लगी, वनवासीगण उस आर्त रुदनको सुनकर रो उठे। उस बातको सुनकर हव्यवाहन (अग्निदेव) पाताललोकसे धरातलपर ऊपर आये। वे पातालसे ऊपर आकर सीताको खींचते हुए क्रूर रावणसे बोलकर उस सीता एवं पापी रावणसे मिले थे और नाना प्रकारके वाक्योंसे समझाया ॥ ५६ ॥

इयं जनकपुत्री न विप्रपत्नी तु खेचर ॥ राघवस्त्वद्भयाद्रक्ष-न्जानकीं मम सन्निधौ ॥५७॥ संस्थाप्य विपिने रामो व्यचरत्सह-लक्ष्मणः ॥ शिष्योऽसि परमोदार मम कल्याण रावण ॥५८॥ प्रि-योऽसि मा गमो विप्रपत्न्यां सीताभ्रमं वृथा ॥ इति प्रतारयन्रक्ष-श्छद्मना जनकात्मजाम् ॥५९॥ इत्थं स्वलोकमादाय तां सम्पूजयितुं द्रुतम् ॥ स्वाहायां सन्निवेश्याथ नाम्ना वेदवतीं शुभाम् ॥६०॥ प्राग्रावणापचारेण प्रतिश्रुत्य च तद्वधम् ॥ कृतप्रवेशां क्रोधेन समिद्धे जातवेदसि ॥६१॥ तत आरभ्य समयमाकाङ्क्षन्तीं स्थितां सतीम् ॥ सीताकृतिधरां कृत्वा मायया मेषवाहनः ॥६२॥ प्रदर्शय-न्नुवाचाथ रावणं प्रीणयन्निव ॥ इमां सीतां समादाय गच्छ शीघ्रं निशाचर ॥६३॥

हे खेचर! यह जनकजीकी पुत्री नहीं है, किन्तु यह विप्रपत्नी है। राघव (श्रीराम) जानकीको तुम्हारे भयसे मेरे पास रखकर लक्ष्मणके साथ जंगलमें घूमते हैं। हे परम उदार रावण! तुम मेरे शिष्य हो, तुम प्रिय हो, अत: व्यर्थ ही विप्रपत्नीके बारेमे सीताका भ्रम मत करो। राक्षसको इस प्रकार छलसे ठगते हुए, इस प्रकार जानकीको अपने लोकमें लाकर, उसकी पूजा करनेके लिये उस सुन्दरीको शीघ्र स्वाहामे स्थापित कर, पहले रावणके दुराचारसे उसके वधकी प्रतिज्ञा कर, क्रोधसे अग्निमे प्रवेश की हुई और तबसे समयकी प्रतीक्षा करती ठहरी हुई, वेदवती नाम सतीको मायासे सीताका आकार धारण कराकर वह मेषवाहन (अग्निदेव) रावणको दिख-लाते हुए, उसको प्रसन्न करनेके लिये बोले—हे निशाचर! इस सीताको लेकर तू शीघ्र जाओ ॥ ६३ ॥

इत्युक्तः पावकेनायं तमादायागमत् द्रुतम् ॥ हरे चाग्नौ विशेषेण भक्तिर्वै रावणस्य च ॥६४॥ तस्मादग्निवचः श्रुत्वा स्वेयं तां जानकीं

तदा ॥ अज्ञानान्मन्यमानोऽसौ रावणो मोहदर्पितः ॥६५॥ लङ्कां गत्वाऽशोकवने शिंशुपावृक्षमूलतः ॥ सीताकृतिं तां संस्थाप्य विष्णवाविष्टां स राक्षसः ॥६६॥ कृतकृत्यं तदात्मानं मेने वै कालचोदितः ॥

अग्निसे इस प्रकार कहे जानेपर उसको लेकर शीघ्र चला गया। भगवान् शंकर और अग्निमें रावणकी विशेष भक्ति थी, इसलिये अग्निके वचनको सुनकर, उसको अज्ञानसे जानकी मानते हुए, वह मोहसे भरा हुआ रावण लङ्कामें जा विधिसे प्रेरित होकर अशोक वनमें शिंशुपा वृक्षके मूलमें राम राम रटती हुई उस सीताकी आकृतिको स्थापित कर अपनेको कृतकृत्य माना ॥ ६७ ॥

रामो गत्वा तु तं हत्वा रावणं सगणं खलम् ॥६७॥ सीतां प्राप्य जगन्नाथो युद्धान्ते पर्यचिन्तयत् ॥ तां तु लोकापवादेन पावकेन विशोधिताम् ॥६८॥ जिघृक्षुणा राघवेण सीता चाग्नौ प्रवेशिता ॥ सीताद्वन्द्वं तव दृष्ट्वा प्रोवाच निजभामिनीम् ॥६९॥ का सा देवी तव समा तव रूपसमन्विता ॥ न जानेऽहं वराङ्गीं तां तव बिम्बनिभां शुभाम् ॥ ७० ॥ राघवेणैवमुक्ता सा जानकी वाक्यमब्रवीत् ॥७१॥

रामचन्द्रजी भी वहां जा, खल रावणको उसके गणोंके साथ मारकर युद्धके अन्तमें सीताको पाकर सोचने लगे। लोकके अपवाद-भयसे, अग्निसे शुद्ध की हुई उसको ग्रहण करनेकी इच्छावाले राघवसे वह सीता अग्निमें प्रवेश करायी गयी। वहां सीता युगलको देखकर रामचन्द्रजी अपनी पत्नीसे बोले—वह तुम्हारे जैसे रूपवाली कौन है? तुम्हारे आकारवाली उस श्रेष्ठ अंगवाली सुन्दरीको मैं नहीं जानता। रामचन्द्रजीसे इस प्रकार कहे जाने पर जानकी यह बात बोलीं ॥ ७१॥

जानक्युवाच—

मद्दुःखं ह्येतया भुक्तं निर्निमित्तं दयालुना ॥ या सा वेदवती देव स्वाहायाः सन्निधौ स्थिता ।७२। तामङ्गीकुरु गोविन्द विवाह विधिपूर्वकम् ॥ इति सीतावचः श्रुत्वा रामो वचनमब्रवीत् ॥७३॥

वकुलमालिकाका शिवमंदिरमें धरणीदेवीकी सखियोंसे मिलना [ पृष्ठ ३१२ ]



हयमारुह्य वकुला सुवर्णमुखरीं तदा।
तीर्त्वाऽगस्त्याश्रमं प्राप्य सखीस्तस्या व्यलोकयत्॥

जानकी बोलीं—हे देव ! इस दयालुने मेरे लिये विना कारणहीके दुःख भोगा है, यह वही वेदवती है जो स्वाहाके पास थी; हे गोविन्द ! उसका विधि-पूर्वक विवाह कर उसे ग्रहण कीजिये। सीताके इस वचनको सुनकर श्रीरामचन्द्रजी यह बात बोले ॥ ७३ ॥

*श्रीराम उवाच—*

एकपत्नीव्रतं मेऽद्य कृतं जानासि भामिनि ॥ द्वापरेऽङ्गीकरोमीति बहूनां वरदो यतः ॥ ७४ ॥ तव वाक्यं करिष्यामि स्वष्टाविंशे कलौ युगे ॥ तावदेषा ब्रह्मलोके ब्रह्मणा पूजिता भवेत् ॥७५॥

श्रीरामचन्द्रजी बोले— हे भामिनी ! अभी मैंने एक-पत्नी-व्रत किया है, सो तुम जानती हो; चूंकि द्वापरमें अङ्गीकार करूंगा, ऐसा वरदान बहुतोंको दिया हुआ है, अतएव अट्ठाइसवें कलियुगमें तुम्हारा वचन पूरा करूंगा; तबतक यह ब्रह्मलोकमें ब्रह्मासे पूजित हो रहेगा ॥७५॥

श्रुत्वैवं रामवाक्यं सा जगाम भवनं विधेः ॥ पद्मावत्याः कारणं तु भणितं तव सुव्रते ॥७६॥ न मे वाक्यमसत्यं स्यादिति वेदविदो विदुः ॥ श्रुत्वा तज्जनने हेतुं वकुलाऽऽनन्दनिर्भरा ॥७७॥ कौतूहलसमाविष्टा श्रीनिवासमभाषत ॥७८॥

श्रीरामचन्द्रजीके इस वाक्यको सुनकर वह ब्रह्मलोकमें गयी। हे सुव्रते ! पद्मावतीके अवतारका कारण तुमसे मैंने कहा। मेरी बातें असत्य नहीं होतीं, यह वेदके जाननेवाले जानते हैं। उसकी उत्पत्तिके कारण सुनकर आनन्द एवं कौतूहलसे परिपूर्ण हो वकुला श्रीनिवाससे बोली ॥ ७८ ॥

अथ श्रीनिवासानुज्ञया नारायणपुरं प्रति वकुलागमनम्

*वकुलोवाच—*

गच्छामि राजेन्द्र सभां सभासदो यत्रासते सर्वकलाविशारदाः ॥ आकाशराजस्य पुरीं सुरोत्तमैः संस्तूयमानां च रमां विगूहिताम् ॥७९॥ इत्येवमुक्तो भगवाञ्जगद्गुरुः सम्प्रेषयिष्यन् वकुलां स्वकारणात् ॥ उत्थाय तल्पास्तिमितान्तरङ्गस्तस्थौ तदानीं भृशहृष्टचेताः ॥८०॥ मुक्त्वाऽन्नमुत्तममसौ वकुलाऽप्रदत्तमानन्दपूर्ण-

सुमनाः सुरवृन्दवन्द्यः ॥ तस्थावलङ्कृतवपुश्च विभूषणौघैर्मुक्ता-
फलैः सुरुचिरैरथ पुष्पसङ्घैः ॥८१॥

### वकुलाका नारायणपुर जाना

वकुला बोली—उत्तम-उत्तम देवताओंसे संस्तुत उस आकाशराजकी पुरी, छिपी हुई लक्ष्मी और जहांपर सब सभासद, सर्वकलाविशारद हैं, श्रेष्ठ राजाकी उस सभाके पास जाती हूं। अपने कारणसे वकुलाको भेजने हुए जगद्गुरु भगवान् इस प्रकार कहे जानेपर शीघ्र ही आनन्दित हृदयसे शय्यासे उठकर, वकुला द्वारा दिये गये उत्तम अन्नको भोजन कर, पूर्ण रूपसे देवगणोंसे वंदित, आभूषणोंके समूह, मुक्ता फल एवं सुन्दर पुष्पोंसे अलंकृत शरीर होकर बैठ गये ॥ ८१ ॥

दिव्यां तुरङ्गीमारुह्य निर्मितां देवमायया ॥ मार्गं विज्ञातुकामा
तमापृच्छ्य वकुलाऽवदत् ॥८२॥

देवमाया द्वारा बनायी गयी दिव्य घोड़ीपर चढ़कर मार्ग जाननेकी इच्छावाली हो वकुला उनसे आज्ञा लेकर बोली ॥ ८२ ॥

*वकुलोवाच—*

मार्गं वद रमाधीश गच्छामि नृपसत्तमम् ॥८३॥

वकुला बोली—हे रमाधीश! आप मार्ग बताइये, मैं उस श्रेष्ठ राजाके पास जाऊंगी ॥ ८३ ॥

*श्रीनिवास उवाच—*

अस्मादेव वरान्मार्गादवरुह्य गिरेस्तटात् ॥ त्वं गच्छाधःप्रदेशे
च कापिलं लिङ्गमुत्तमम् ॥८४॥ अत्रास्ते तीर्थराजो यः कपिले-
श्वरसन्निधौ ॥ तत्र स्नात्वा यथायोग्यं मदर्थे तीर्थपुङ्गवे ॥८५॥
कपिलेश्वरमासाद्य याच्यतां वरमव्ययम् ॥ श्रीनिवासेन बालेन
सदा कल्याणकाङ्क्षिणा ॥८६॥ प्रेषिताऽहं तदर्थं वै कुरु मेऽभीप्सितं
प्रियम् ॥

श्रीनिवास बोले—इसी पर्वतके किनारे श्रेष्ठ मार्गसे उतरकर तू निम्न भागमें उत्तम कपिल लिङ्गके पास जाओ। उस कपिलेश्वरके पास जो तीर्थराज है, उन श्रेष्ठ तीर्थमें मेरे लिये यथायोग्य स्नान करके, कपिले-

शरके पास पहुंचकर, अक्षय वर मांगो कि सदा कल्याणकी इच्छावाले बालक श्रीनिवाससे मैं भेजी गयी हूं; उन्हीके लिये मेरी प्रिय अभिलाषाको पूर्ण कीजिये ॥८७॥

एवमुक्त्वा शिवं देवि ततः पद्मतटं गता ॥ ८७ ॥ तत्र दृष्ट्वा कृष्णरामौ नत्वा तौ भक्तिभावतः ॥ पद्मतीर्थसमुद्भूतैः कमलैः कमलानने ॥८८॥ पूजां कुरु मदर्थं तौ भ्रातृभूतौ हि मे मतौ ॥ सुवर्णमुखरीं तीर्त्वा तत्र गच्छ यथासुखम् ॥८९॥ उचितं कुरु कल्याणि कन्यार्थे कमलानने ॥ आज्ञप्ता देवदेवेन त्वरितं वकुलमालिका ॥९०॥ जगाम शनकैः शेषशैलादुत्तीर्य चाङ्गना ॥ यदुक्तं श्रीनिवासेन तच्चकार तदाऽबला ॥९१॥ हयमारुह्य वकुला सुवर्णमुखरीं तदा ॥ तीर्त्वाऽगस्त्याश्रमं प्राप्य सखीस्तस्या व्यलोकयत् ॥९२॥ शिवालये शिवं द्रष्टुमागता यास्तु तत्र वै ॥ तत्र दृष्ट्वा वराः कन्याः का यूयमिति चाब्रवीत् ॥९३॥ तया सम्भाविता बाला ऊचुरेनां तथोत्तरम् ॥९४॥

हे देवि ! हे कमलमुखी ! इस प्रकार कपिलेश्वरसे कहकर, पद्मसरोवरके तीरपर जा, वहांपर कृष्ण एवं रामको देख, उनको भक्तिभावसे प्रणाम कर, पद्मतीर्थमें उत्पन्न कमलोंसे मेरे माने हुए उन दोनों भाइयोंका मेरे लिये पूजन करो। पश्चात् सुवर्णमुखरीको तैरकर वहां सुखपूर्वक जाओ और कन्याके लिये जो उचित हो वह करो। देवताओंके देवतासे इस प्रकार आज्ञा किये जानेपर, वकुलमालिका धीरे-धीरे शेषाचलको पारकर चली गयी। श्रीनिवाससे जो कुछ कहा गया था वह सब उस अबलाने किया। घोड़ेपर चढ़कर उस वकुलाने सुवर्णमुखरीको तैर अगस्त्यके आश्रमको पहुंच, पद्मावतीकी सखियोंको, जो वहां शिवालयमें शिवजीके दर्शनके लिये आयी थीं, देखा और वहां उस श्रेष्ठ कन्याको देखकर "आप कौन हैं ?" ऐसा बोली। उससे इस प्रकार कहे जानेपर वह बालाएं इसके उत्तरमें बोलीं ॥९४॥

अथ वकुलां प्रति पद्मावतीसखीज्ञापितपद्मावत्युदन्तः

*कन्या ऊचुः—*

वयमाकाशराजस्य सन्निधानगताः सदा ॥ इतः पूर्वदिने कश्चित्पुरुषं तुरगस्थितम् ॥ ९५ ॥ पद्मावत्याः समीपं च सम्प्राप्तं म-

न्मथाकृतिम् ॥ दृष्टवत्यो वयं सर्वाः किरातकृतिशोभनम् ॥९६॥ दृष्ट्वा पद्मावती भीत्या ज्वरतापविमूर्छिता ॥ तत्तापस्योपशान्त्यर्थं राज्ञाऽऽज्ञप्ता वयं त्विह ॥ ९७ ॥ अगस्त्येशाभिषेकार्थं वसामोऽद्य समागताः ॥ इदानीं कन्यकारूपां त्वां तु वीक्षामहे वयम् ॥९८॥ इति तद्वचनं श्रुत्वा वकुला वाक्यमब्रवीत् ॥९९॥

## पद्मावतीका वृत्तान्त

कन्याएं बोलीं—हमलोग सदा आकाशराजके समीप रहती हैं। इससे पूर्व दिनमें घोड़ेपर चढ़े हुए, पद्मावतीके समीप आये हुए, कामदेवके समान रूपवाले, किरातके समान सुन्दर आकृति बनाये हुए किसी पुरुषको हम सबोंने देखा। पद्मावती उनको देखकर भयके मारे ज्वरके तापसे मूर्च्छित हो गयी, राजासे आज्ञा पायी हुई, उसकी तापके उपशमनके हेतु अगस्त्येशके अभिषेकको आयी हुई हमलोग ठहरी हैं। अब कन्यारूप तुमको हमलोग देखती हैं। उसके इस वचनको सुनकर वकुला बोली ॥९९॥

वकुलोवाच—

कोऽसौ किरातरूपी च भवतीभिश्च सङ्गतः ॥ वदध्वं कन्यकाः सर्वास्तद्वृत्तमखिलं मम ॥१००॥

वकुला बोली—आपके पास आया हुआ वह किरात रूपी कौन था। हे कन्याओं! उसका सम्पूर्ण वृत्तान्त मुझसे कहो ॥१००॥

कन्या ऊचुः—

पद्मावत्या च सहिताः कदाचिद्वयमागताः ॥ पुष्पापचयनं कर्तुमारब्धास्तु वनान्तरे ॥ ॥१०१॥ तत्र कश्चित्पुमान्प्राप्तो विचित्रतुरगान्वितः ॥ अस्मान्प्रत्युदितं तेन ह्यवाच्यवचनं तदा ॥१०२॥ तत् श्रुत्वा तनया राज्ञो रुष्टा वचनमब्रवीत् ॥ तयोः कलहः आपन्नः कलहे ताडितो हयः ॥१०३॥ निपपात तदाऽश्वस्तु शिलाभिर्हतचेतनः ॥ स घोटां सम्परित्यज्य जगामोत्तरादिङ्मुखः ॥१०४॥

कन्याएं बोलीं—किसी समय पराशत्रीके साथ आकर हमलोगोंने वनके अन्तर्गत पुष्प तोड़ना आरम्भ किया। वहाँपर विचित्र घोड़ेपर चढ़ा हुआ एक पुरुष आया। उसने हमलोगोंसे अवाच्य वचन कहा। उसको सुनकर राजाकी पुत्रीने रुष्ट हो बातचीत की। उन दोनोंमें कलह उत्पन्न हो गया, कलहमें घोड़ा पीटा गया। तब शिलाओंसे मारा हुआ बेहोश घोड़ा गिर पड़ा। वह पुरुष घोड़ेको छोड़कर उत्तरकी ओर चला गया ॥१०४॥

गते किराते कमलोद्भवाऽथ मूर्च्छामुपागम्य पपात भूमौ ॥ कन्यां ततस्तामुपवेश्य याने वयं स्वकं राजपुरं गताः स्मः ॥१०५॥

पश्चात् वह कमलसे उत्पन्न कन्या उस किरातके चले जानेपर मूर्छित हो पृथ्वीपर गिर पड़ी। तब उस कन्याको सवारीपर बैठाकर हमलोग अपने राजमहलमें चली आयीं ॥१०५॥

तामागतां मानगतां सुतां नृपश्चिन्तामुपागम्य रुरोद दीनः॥ अङ्के निधायात्मसुतां च पश्यन्मुखं मुदा हीनमभाषणं च ॥१०६॥ का वाऽभवन्मे दुहितुर्दुरासदा विभीषिका विश्वविनाशकारिणी ॥ तस्या विनाशं न विजानते नरो गुरुं विनेति प्रसमीक्ष्य भूमिपः ॥१०७॥ ततः सुराणां गुरुमात्तकम्पः समानयत्तत्र सुतेन शीघ्रम् ॥

उस आयी हुई अपनी पुत्रीको मूर्छित देखकर, चिन्तित एवं दुःखी हो राजा रोने लगे और पश्चात् अपनी पुत्रीको गोदमें लेकर उसके खिन्न एवं भाषणरहित मुखको देखकर आलोचना करके कि "मेरी पुत्रीपर सर्वनाश करनेवाली कौनसी भयंकर अपरिहार्य विपत्ति आ गयी है, जिसका नाश गुरुके बिना कोई मनुष्य नहीं जानता", अपने पुत्रद्वारा देवोंके गुरुको शीघ्र ही बुलवाया ॥१०८॥

तद्वाक्यमाकर्ण्य गुरुर्धरातलं शीघ्रं प्रपन्नो नृपमन्दिरं च ॥१०८॥

उसके वाक्यको सुनकर गुरु शीघ्र ही पृथ्वीतलपर राज मन्दिरको पहुंचे ॥१०६॥

प्राप्तं गुरुं प्राणमिवागतं तदा प्राप्येव पुण्यं परिपक्वमागतम् ॥ दत्त्वाऽऽसनं रत्नमयं समर्पयन् सुसाधनैः सार्घ्यसुपुष्पभोजनैः॥१०९॥ राजाऽऽतिथेयो द्विजमात्रभावे सुतानिमित्तं गगनाभिधो नृपः ॥

तद्वाक्यमाकर्ण्य गुरुः सतां पतिः सम्प्रीणयन्वाक्यमुवाच भूपम् ॥११०॥

आये हुये परिपक्व पुण्य या प्राणके जैसा प्राप्त गुरुको रत्नजटित आसन देकर, अर्घ्य, पुष्प, भोजन इत्यादि अच्छे साधनोंसे आतिथ्य करके, अतिथिप्रिय आकाश राजाने सुताके लिये परामर्श किया। पश्चात् उनके वचनको सुनकर सज्जनोंके स्वामी गुरु राजाको प्रसन्न करते हुये बोले ॥११०॥

बृहस्पतिरुवाच—

दुहितुस्तव सङ्कष्टनिमित्तं श्रृणु भूमिप ॥ पुष्पार्थं तु गता बाला भीता पुरुषदर्शनात् ॥१११॥ तस्य शान्तिं प्रवक्ष्यामि श्रूयतामवधानतः ॥ कारयन्त्वधुना विप्रा अभिषेकं शिवस्य च ॥११२॥ अगस्त्येशस्य वै रुद्रैस्त्वमेकादशभिः प्रभो ॥ एवमुक्तोऽथ गुरुणा राजा विप्रान् समादिशत् ॥११३॥

बृहस्पति बोले—हे राजा! अपनी पुत्रीके कष्टके कारण सुनिये। यह कन्या पुष्पके लिये गई हुई एक पुरुषके दर्शनसे डर गई है। उसकी शान्तिका उपाय कहता हूं सो सावधान हो सुनिये। हे प्रभो! ब्राह्मण लोग आपसे अगस्त्येश शिवका अभिषेक एकादश रुद्रों ( एकादशाध्यायी रुद्री ) से करावें। इस प्रकार गुरुसे कहे जानेपर राजाने ब्राह्मणोंको आज्ञा दी ॥११३॥

सम्पाद्य सर्वसम्भारान्वयं विप्रसमन्विताः ॥ तत्पुत्री ज्वरतापेन शायिता निजमन्दिरे ॥११४॥ तच्छान्त्यर्थं वयं प्राप्ता अभिषेकार्थमङ्गले ॥ धिषणेन समाज्ञप्ता द्विजवर्याः समागताः ॥११५॥ तस्यादेशाद्वयं प्राप्ताः कैलासपतिमन्दिरम् ॥ गच्छसि त्वं कुत्र बाले किमर्थं त्वमिहागता ॥११६॥ वदादेशमिति स्त्रीभिर्वकुला चोदिताऽब्रवीत् ॥११७॥

हम लोग ब्राह्मणोंके साथ सब सामग्रियोंको एकत्र कर, अपने मन्दिरमें ज्वर तापसे उनकी पुत्रीके सोजानेपर, उसकी शान्तिके लिये अभिषेक करनेको आई हैं। हे अङ्गना! गुरुसे आज्ञा पाकर ब्राह्मण भी आ गये हैं। इसलिये हमलोग देशसे श्रीकैलासपतिके मन्दिरमें आई हैं। हे बाले! तू कहां जाती हो? किसलिये यहां आई हो? जो आज्ञा हो सो कहो! इस प्रकार स्त्रियोंसे कहे जानेपर वकुला बोली ॥११७॥

अथ पद्मावतीसखीः प्रति वकुलावेदितस्वागमनवृत्तान्तः

वकुलोवाच —

शृण्वन्तु कन्यकाः सर्वा मद्वाक्यमविचारतः ॥११८। प्रभावमात्मानुभवस्य विष्णोर्यूयं न जानीथ पुराणपुंसः ॥ कृष्णं मुकुन्दं तनयं विदन्त्या वृथा शरीरं पुनरागतं मम ॥११९॥ जगद्विधीशानमहेन्द्रपूर्वं सृजन्नयं मानुषवद्विभाति ॥ युष्मान्सहास्माभिरिहान्यदैवतं सम्प्रार्थयानाः स्वशुभं करोत्यसौ ॥१२०॥ हरिरेव वलं यस्मात्सर्वार्थानां वलं भवेत् । ध्रुवं ततो नृणां मोहात्कुपथोऽन्यसमाश्रयः ॥१२१॥

वकुला बोली—हे कन्याओं ! मेरी बातको बिना विचारे सुनो—स्वयंही अनुभव योग्य पुराण पुरुष विष्णुके प्रभावको आपलोग नहीं जानती हैं। मुकुन्द कृष्णको तनय जानते हुये मेरा शरीर पुनः व्यर्थही संसारमें आया है। यह विष्णु ब्रह्मा, शिव, इन्द्र इत्यादि सारे जगतकी सृष्टि करते हुए भी मनुष्यके जैसा मालूम होते हैं। आप और हम सब यहांपर दूसरे देवताओंकी प्रार्थना करते हैं, किन्तु हमारे कल्याण तो यही करते हैं; क्योंकि सब कार्योंका बल हरि हैं, इसलिये मोहके कारण मनुष्योंको दूसरोंका आश्रय लेना कुपथ है ॥१२१॥

हरेर्वममृतं यस्मात्कुपदं च तदाश्रयम् ॥ लालयामि ततो मां वै वकुलामवगच्छताम् ॥१२२॥ मा मां लालयतीत्येवं मालामप्यवगच्छत ॥ अहं श्रीवेङ्कटाधीशदासीभूताऽस्मि साम्प्रतम् ॥१२३॥ धरण्याश्च समीपे मे किञ्चित्कार्यं तु वर्त्तते ॥ नारायणपुरं दिव्यमभेद्यं परदेशिभिः ॥१२४॥ भवतीसङ्गमात्रेण करिष्यन्ति प्रवेशनम् ॥ इत्थमुक्त्वा स्थिता वाला कन्याभिः सा च सङ्गता ॥१२५।

हरिका अमृत "व" से ज्ञात होता है एवं "कु" से उसका आश्रय ग्रहण करना है। मैं उन दोनों "व" "कु" को लालन करती हूं इसलिये मुझको 'व' 'कु' 'ला' समझो। मां ( लक्ष्मी ) मुझको लालन करती हैं इसलिये मुझको "मां" "ला" भी समझो। सम्प्रति मैं श्रीवेङ्कटेशकी दासी हूं। "धरणीदेवी" के पास मुझको कुछ काम है, और यह दिव्य नारायणपुर परदेशियोंसे अभेद्य है। आप लोगोंके सहयोगसेही मेरा प्रवेश हो जायगा। इस प्रकार कहकर वह कन्या उन सबोंके साथ मिली ॥१२५॥

अथ श्रीनिवासस्य पुल्कसीरूपेण नारायणपुरगमनम्

एवं गतायां तस्यां तु न विश्वासमगाद्धरिः ॥ एकपुत्रो ह्यपुत्रः स्यादेकनेत्रो ह्यनेत्रवान् ॥१२६॥ स्त्रीभिस्तु यत्कृतं कर्म न तत्कार्यं फलप्रदम् ॥ इति सञ्चिन्त्य गोविन्दो लीलामानुषविग्रहः ॥१२७॥ स्वयं श्रीवेङ्कटाधीशो वनितारूपमाययौ ॥

श्रीनिवासका पुल्कसी रूपसे नारायणपुरको जाना।

इस प्रकार उस बकुलाके चले जानेपर भी हरिको तो विश्वास नहीं हुआ। जिसको एक ही पुत्र है वह अपुत्र ही है, जिसको एक ही नेत्र है वह अनेत्र ही है, एवं जो कार्य्य स्त्रियोंसे किया गया है, वह फलप्रद नहीं होता, ऐसा विचारकर लीलाके लिये मनुष्यका शरीर धारण किये हुए श्रीवेङ्कटाधीश गोविन्द स्वयं ही स्त्रीरूप हो लिये ॥१२८॥

चीरवस्त्रं ततो बद्ध्वा छिद्रकञ्चुकराञ्जिता ॥१२८॥ ब्रह्माणं च शिशुं कृत्वा यष्टिं कृत्वा महेश्वरम् ॥ ब्रह्माण्डं जगदाधारं त्रैगुण्यं गुल्ममेव च ॥१२९॥ आकीर्य केशपुञ्जानि पञ्चाशद्वर्षसंयुता ॥ गुञ्जामणिविभूषाङ्गशङ्खबद्धसुहारिका ॥१३०॥ वेणुगुल्मं स्वशिरसि दधाना धान्यपूरितम् ॥ लम्बोदरी लम्बकर्णा लम्बितार्धपयोधरा ॥१३१॥ अदन्ता शुष्कवदना तदाऽभूद्धर्मदेवता ॥

तब जालीकी कंचुकीसे शोभित, चीर वस्त्रको बान्धकर, ब्रह्माको बच्चा बनाकर, शिवको यष्टि (डंडा) बनाकर, केश-मालाको बिखेर कर, पचास वर्ष अवस्थावाली, जगदाधार तीनगुणवाले ब्रह्माण्डको गुल्म बनाकर, गुञ्जा (घुंघची) रूपी मणिसे शोभित शङ्खमिश्र सुन्दर हार पहनी हुई, धान्यसे भरी हुई, बांसकी टोकरी अपने मस्तकपर रखी हुई, लम्बे उदर, कर्ण और आधे स्तनवाली, बिना दांतकी, सूखे हुये मुखवाली वह धर्म देवताकी मूर्ति बन गई ॥१३२॥

ब्रह्माणं नाभिसञ्जातं सप्तमासवयोयुतम् ॥१३२॥ रुदन्तं शुष्कवदनं कृशाङ्गी दीर्घबाहुकम् ॥ शिशुं बद्ध्वा चीरवस्त्रे नृत्यन्ती जगदीश्वरी ॥१३३॥ यष्टिं धृत्वा करे चागात्सबला धर्मदेवता ॥

नारायणपुरं प्राप्ता नारदाब्जजवन्दिता ॥१३४॥ पुरीं समागत्य जगर्ज चेत्थं पतीन् सुतान् बन्धुगणान्ददामि ॥ श्रुत्वा वचस्तद्वदितं पुराङ्गना ऊचुस्तदा तां नृपवल्लभां प्रति ॥१३५॥

नाभीसे उत्पन्न ब्रह्मरूप सात मासकी अवस्थावाले, दुबला-पतला शरीर और लम्बे हाथवाले, सूखा हुआ मुखवाले, रोते हुए बच्चेको अपने चीर वस्त्रमें बान्धकर नाचती हुई वह जगदीश्वरी हाथमें यष्टि पकड़कर तथा नारद और ब्रह्मासे वन्दित हो नारायणपुर पहुंची और पुरीमें पहुंचकर वह इस प्रकार गर्जकर कहने लगी कि पति, सुत, बन्धुगण इत्यादि मैं दूंगी। उसके कहे हुए इस वचनको सुनकर गांवकी स्त्रियां रानीसे आकर बोलीं ॥१३५॥

अथ पुल्कसीरूपधारिभगवतः पद्मावतीजनन्याश्चान्योन्यसंवादः

ग्रामिकोवाच—

धर्मदेवी समायाता नरनारायणाश्रमात् ॥ वृद्धा सा वर्तते ह्यम्ब ! मितभाषेव दृश्यते ॥ १३६ ॥ मनोगतं वदामीति वदतीयं पुनः पुनः ॥ तमाह्वय महाभागे धर्मदेवीं पतिव्रताम् ॥१३७॥

पुल्कसी तथा धरणीदेवीका परस्पर संवाद

ग्रामिका बोली—हे अम्ब ! नरनारायणके आश्रमसे एक धर्मदेवी आयी है, वह वृद्धा एवं मितभाषी जैसी दीखती है। वह बार बार यह कहती है कि मैं मनकी बात बता दूंगी। हे महाभागे ! उस पतिव्रता धर्मदेवीको बुलाओ ॥१३७॥

तामित्थमावेदितचित्तवेदितां वियां निजग्रामभवाङ्गनागणैः ॥ आह्वापयत्तत्र सखीभिरादरात्सम्प्राप्तभाग्याऽहमिति स्मरन्त्यसौ ॥१३८॥ आज्ञप्ता धरणीदेव्याः सखीभूता वराङ्गनाः ॥ ऊचुस्तामग्रगाः सर्वा सबालां धर्मदेवताम् ॥१३९॥

उस धरणीदेवीने अपने ग्रामकी स्त्रियोंसे इस प्रकार मनकी बात बतानेवालीके आगमनका निवेदन पाकर, मैं भाग्यवती हूं-ऐसा स्मरण करती हुई, अपनी सखियोंसे आदरपूर्वक उस विदुषीको वहांपर बुलाया और धरणीदेवीसे आज्ञा पाकर आगे गयी हुई सब श्रेष्ठ स्त्रियां बालक सहित उस धर्म देवतासे बोलीं ॥१३९॥

ग्रामीकोवाच—

याहि मङ्गलदे देवि राजभार्यामिमामिति ॥ सा श्रुत्वा वचनं तासां मन्दमाह मनस्विनी ॥१४०॥

ग्रामिका बोली—हे मङ्गलको देनेवाली देवी! इस राजमहिषीके पास जाओ। उसके वचनको सुनकर वह मनस्विनी धीरे बोली ॥१४०॥

धर्मदेव्युवाच—

अहं दरिद्रा कुटिला सबालाऽभाग्यसंयुता ॥ आह्वानं किं विनोदार्थं हास्यार्थं हसिताननाः ॥१४१॥ मद्वस्त्रं पश्यत छिद्रं मदाभरणमण्डलम् ॥ नवधान्यसमाकीर्णगुल्मं गुञ्जाविभूषितम् ॥१४२॥ अन्नहीनं शिशुं मां च दृष्ट्वा देव्येति नो ध्रुवम् ॥ नागच्छामि विशिलालाक्ष्यः किं कार्यं राजमन्दिरे ॥१४३॥

धर्मदेवी बोली—मैं दरिद्र, कुटिल, बच्चेवाली एवं भाग्यहीना हूं, तुम हास्ययुक्त मुखवाली हो। क्या मुझे हंसी और खेलके लिये बुलाती हो ? मेरे फटे वस्त्र तथा आभरणमण्डलको देखो; नये धान्यसे भरी हुई टोकरी, गुञ्जा (घुंघची) से विभूषित एवं अन्नहीन मुझे, और मेरे बच्चेको देखकर ही देवियां हमारे पास आती हैं। हे बड़े नेत्रवाली, मैं नहीं आऊंगी। राज-मन्दिरमें मेरा क्या काम है ॥१४३॥

धर्मदेवीवचः श्रुत्वा जग्मुस्ता धरणीं प्रति ॥ यथोक्तं धर्मदेव्या तु तदाचख्युश्च तां प्रति ॥१४४॥ तासां तद्वचनं श्रुत्वा धरणी तां ययौ स्वयम् ॥ उवाच धर्मदेवीं तां धरणी राजसुन्दरी ॥१४५॥

धर्मदेवीके वचनको सुनकर वे सब धरणीदेवीके पास गयीं, और जिस प्रकार धर्मदेवीने कहा सो सब उससे बोलीं। उनके द्वारा उसके वचनको सुनकर धरणी उसके पास स्वयं गयी और धरणीदेवी उस धर्मदेवीसे बोली ॥१४५॥

धरण्युवाच—

एहि भद्रे महाभागे साक्षात्त्वं धर्मदेवता ॥ दैवयोगादागताऽसि मम कल्याणवर्धिनी ॥१४६॥ मनोरथो मनःसंस्थस्तथ्यं मे कथ्यतामिति ॥ भाषिता राजपत्न्या सा सत्यमाह धरां प्रति ॥१४७॥

धरणी बोली—हे भद्रे ! यहां आओ। हे महाभागे ! तू साक्षात् धर्मदेवता, मेरे कल्याणको बढ़ानेवाली, दैवके संयोगसे आयी हुई हो। मेरे मनके मनोरथको ठीक ठीक कहो। राजपत्नीसे इस प्रकार कही हुई वह धर्मदेवता धरणीसे सत्य बोली ॥ १४७ ॥

धर्मदेव्युवाच—

**कठिनं मम वाक्यं तु शृणु राजन्यवल्लभे ॥ मया तु गदितं वाक्यमसत्यं चेन्मनस्विनि ॥१४८॥ पुरान्निष्कास्य मां देवी जिह्वायाश्छेदनं कुरु ॥ नरनारायणः स्वामी मद्भर्ता राजसुन्दरि ॥१४९॥ तद्वीर्यजातपुत्रं तु प्रजापातिमिमं विदुः ॥ तेनाज्ञता त्वदर्थे च सम्प्राप्ता तव मन्दिरम् ॥१५०॥ भूतं भव्यं भविष्यच्च जानामि जगदीश्वरि ॥**

धर्मदेवी बोली—हे राजवल्लभे ! मेरे कठिन वचनको सुनो। हे मनस्विनी ! मेरी कही हुई बात यदि असत्य हो तो, हे देवी ! मुझे गांवसे निकालकर जीभ काट लो। हे राजसुन्दरी ! स्वामी नरनारायण मेरे भर्ता हैं। उनके वीर्यसे उत्पन्न इस पुत्रको प्रजापति कहते हैं। उनसे आज्ञा पाकर तेरे लिये तुम्हारे मंदिरको आयी हूं। हे जगदीश्वरी ! मैं भूत, वर्तमान और भविष्यको जानती हूं ॥ १५१ ॥

**इत्युक्ता धर्मदेव्या सा राजपत्नी पतिव्रता ॥१५१॥ सुवचोभिः सान्त्वयित्वा धरणी धर्मदेवताम् ॥ प्रापयद्भवनं स्वस्या मन्दं मन्दं मुदाऽन्विता ॥१५२॥ तामादाय गृहं प्राप्य वरं सिंहासनं ददौ ॥ सिंहासनगता सा च धर्मदेवी वचोऽब्रवीत् ॥१५३॥**

धर्मदेवीसे इस प्रकार कहे जानेपर उस पतिव्रता राजपत्नी धरणीदेवीने आनन्दयुक्त हो, धर्मदेवताको मीठी-मीठी बातोंसे सान्त्वना दे धीरे धीरे भवनमें लाया और उसको घरपर लाकर श्रेष्ठ सिंहासन दिया। सिंहासनपर बैठी हुई वह धर्मदेवी इस प्रकार वचन बोली ॥१५३ ॥

धर्मदेव्युवाच—

**मज्जनं कुरु कल्याणि वस्त्रालङ्कारभूषिता ॥ गुरुदेवनमस्कारं कुरु देवि हरिप्रियम् ॥ १५४ ॥ एवमुक्ताऽथ कल्याणी तथा चक्रे यथोदितम् ॥ तस्याश्चाभिमुखीभूय पश्चाद्वाक्यमुवाच सा ॥१५५॥**

धर्मदेवी बोली—हे कल्याणी ! स्नान करो और वस्त्र एवं अलंकारोंसे विभूषित हो हरिके प्रिय गुरु और देवताको नमस्कार करो। इस प्रकार कहे जानेपर उस कल्याणीने वही किया जो कहा गया था। पश्चात् उसके सम्मुख होकर वचन बोली ॥ १५५ ॥

धरण्युवाच—

किं कार्यं वद भद्रं मे करोमि तव शासनात् ॥

धरणी बोली—कौनसा मेरा शुभ कार्य है, कहो। तुम्हारी आज्ञासे मैं उसे अवश्य करूंगी।

पुलिन्दोवाच—

वायनं देहि कल्याणि देवानां प्रीतिसाधकम् ॥१५६॥ इत्थं पुलिन्दावचनं श्रुत्वा सा धरणी तदा ॥ स्वर्णशूर्पं समादाय मुक्तातण्डुलपूरितम् ॥१५७॥ निःक्षिप्य पुरतः शीघ्रं धर्मदेवीं वचोऽब्रवीत्॥

पुलिन्दा बोली—हे कल्याणी ! देवताओंका प्रीतिसाधक एक वायन ( दक्षिणाके साथ भक्ष्य पदार्थ ) दो। पुलिन्दाके इस वचनको सुनकर वह धरणीदेवी मोतियोंके चावलसे भरा हुआ सुवर्णका सूप ले, शीघ्र ही सामने रखकर धर्मदेवीसे वचन बोली ॥ १५८ ॥

धरण्युवाच—

सत्यं वद महाप्राज्ञे मम दुःखं प्रणोदय ॥१५८॥ धरणीवाक्यमाकर्ण्य धर्मदेवी वचोऽब्रवीत् ॥

धरणी बोली—हे महाप्राज्ञे ! सत्य कहो, मेरे दुःखको दूर करो। धरणीके वचनको सुनकर धर्मदेवी बोली ॥ १५९ ॥

धर्मदेव्युवाच—

सत्यं वदामि सुश्रोणि शिशोरन्नं प्रयच्छ मे ॥१५९॥ अहःकृतं रात्रिकृतं सुपक्वरसंयुतम् ॥ श्रुत्वा तद्वचनं रम्यं त्वरयाऽऽनीय भामिनी ॥१६०॥ क्षीरान्नं स्वर्णपात्रस्थमर्भकाय ददौ नृप ॥ तद् दृष्ट्वा स्वर्णपात्रस्थं मानुषान्नं न भुक्तवान् ॥१६१॥ रुरोद च शिशुः

पुल्कसी रूपसे भगवान्‌का भावी भाव बतलाना [ पृष्ठ ३६५ ]



कृत्वा मौक्तिकराशींस्तीन् मध्यराशौ विचिन्त्यताम् ।
इत्युक्तया तया देव्या मध्यराशौ विलोडिते ।
भावसाम्यं ततो ज्ञात्वा ब्रह्मणा वाक्यमब्रवीत् ॥

स्तस्या धर्मदेव्याः स भूमिप ॥ रुदन्तमात्मजं दृष्ट्वा विनिन्द्य च तताड सा ॥१६२॥ दरिद्रोऽसि दुराचार कन्दमूलफलाशनः॥ कथं न भोक्ष्यसे मृष्टं क्षीरान्नं राजनिर्मितम् ॥१६३॥ सदाऽपि रोदनं मातः किं करोमीति भूमिप ॥

धर्मदेवी बोली—हे सुन्दरी ! मैं सत्य कहती हूं, मेरे बच्चेको दिन और रात्रिका बनाया सुन्दर पका हुआ रसके साथ अन्न दो। हे राजा ! उस स्त्रीने उसके उस मीठे वचनको सुनकर स्वर्णके पात्रमें क्षीरान्न अर्थात् खीर उस बच्चेको दिया। सोनेके पात्रमें रखा हुआ उस मनुष्यान्नको देखकर उस धर्मदेवीके बच्चेने नहीं खाया, और हे राजा ! वह रोने लगा। अपने पुत्रको रोते हुए देखकर धर्मदेवी उसकी निन्दा कर कि—"हे दुष्ट आचारवाला ! तू कन्द, मूल तथा फलका खानेवाला दरिद्री है। राजाके लिये बना हुआ शुद्ध क्षीरान्न क्यों नहीं खाता है ?" उसे पीटने लगी और बोली कि हे माता ! यह सदा रोता रहता है, मैं क्या करूं ॥१६४॥

शिशुं तं भर्त्सयित्वाऽथ सम्भोज्यान्नमनुत्तमम् ॥१६४॥ ममोदरगतं चान्नं पुत्रस्य हितकारणम् ॥ इत्युक्त्वा सा धर्मदेवी शिशोर्दत्तं नृपोत्तम ॥१६५॥ क्षीरान्नं स्वर्णपात्रस्थं भुक्त्वा स्वस्था तदाऽब्रवीत् ॥ सत्यं वदामि सुश्रोणि ताम्बूलं देहि मेऽङ्गने ॥१६६॥

उस बच्चेको झिड़ककर और उत्तम अन्न उसे खिलाकर वह धर्मदेवी "मेरे उदरमें गया हुआ अन्न शिशुकी भलाईका कारण होता है"—ऐसा कहकर, हे नृपोत्तम ! बच्चेको दिये गये स्वर्ण-पात्रके क्षीरान्नको स्वयं खाकर, स्वस्थ हो बोली, हे सुन्दरी ! मैं सत्य कहती हूं, हे अङ्गने ! मुझको ताम्बूल दो ॥१६६॥

इत्युक्ता धरणी देवी धर्मदेव्या पुलिन्दया ॥ एलालवङ्गकर्पूरनागवल्लीदलैर्युतम् ॥ १६७ ॥ ताम्बूलमर्पयामास पुलिन्दायै पतिव्रता ॥

पतिव्रता धर्मदेवी पुलिन्दासे इस प्रकार कही जानेपर उस धरणीदेवीने इलायची, लवङ्ग, कर्पूर, नागवल्लीके साथ ताम्बूल उस पुलिन्दाको अर्पण किया ॥ १६८ ॥

ततः सा प्राङ्मुखी भूत्वा पुत्रमङ्के निधाय च ॥१६७। निःक्षिप्य पुरतो गुल्मं पादावास्तीर्य संस्थिता ॥

तब वह पूर्व मुख होकर, पुत्रको गोदमें रखकर, टोकरीको सामने रख, और पैर फैलाकर बैठी ॥१६८॥

एवंरूपं गतं कृष्णं श्रीनिवासं सुरोत्तमाः ॥१६९॥ द्रष्टुकामाः समायाता वैखरीं प्राकृतोचिताम् ॥ सम्पश्यन्तस्तस्य खस्थाः सविमानगणास्तथा ॥ १७० ॥ संलापं चक्रुरन्योन्यं संभ्रमात्कौतुकान्विताः ॥ किं तया सुकृतं राज्या कृतं पूर्वं यथाऽधुना ॥१७१॥ लक्ष्मीसहायो भगवान्क्रीडते प्राकृतो यथा ॥१७२॥ एवं हरेश्चित्रविचित्रकर्म गायन्ति कञ्जोद्भवशम्भुशक्राः ॥ कलौ युगे पापकृतां नराणां सुद्धारणार्था जगदीशचेष्टाः ॥१७३॥

इति श्रीभविष्योत्तरपुराणे वेङ्कटाचलमाहात्म्ये श्रीनिवासस्य पुलिन्दस्त्रीरूपवर्णनं नामाष्टमोऽध्यायः ॥ ८ ॥

इस प्रकारके रूपवाले श्रीनिवास कृष्णको देखनेके लिये आये हुए देवतागण प्राकृत मनुष्यके उचित उनकी वैखरी ( वाणी ) को आकाशमें ठहरे हुए विमानगणोंके साथ देखते हुए संभ्रमसे कौतूहलपूर्वक परस्पर वार्तालाप करने लगे कि उस रानीने पूर्व जन्ममें कौनसे सुकर्म किये हैं कि उसके साथ इस समय लक्ष्मीपति भगवान प्राकृत मनुष्यके समान खेलते हैं। इस प्रकारसे ब्रह्मा, शिव, इन्द्र इत्यादि जगदीश भगवान्के अनेक प्रकारके कर्म एवं कलियुगके पापी मनुष्योंके उद्धारके लिये किये हुए चरितको गाते हैं ॥ १७३ ॥

*इति अष्टमोऽध्यायः ॥८॥*

## नवमोऽध्यायः ॥९॥



पद्मावतिके रोग का, कहना गुप्त उपाय।
सखि सह बकुला आगमन, धैर्य्य दिये नृप आय ॥१॥
घराऽऽगमन गुरु देवका, पुनि लाना शुकदेव।
सुतोद्वाह उद्योगहित, लाज लग्न रखि लेव ॥२॥

लिखन लग्न भगवानका, दूत कार्य शुकदेव।
कथन ब्याह वृत्तान्त तहं, फिरे पुनः शुकदेव ॥३॥
बकुलाका प्रभुसे कथन, ब्याह विषयकी बात।
इस नववें अध्यायमें, बाकी ब्याह बरात ॥४॥

अथ धरण्यै पुलिन्दोक्तपद्मावतीदेहशोषणनिवृत्त्युपायः

शतानन्द उवाच—

भोजनान्तेऽस्मरद्देवी देवान् स्वकुलपूजितान् ॥ आदौ नारायणं ध्यात्वा पश्चाल्लक्ष्मीं पितामहम् ॥१॥ सरस्वतीमुमाकान्तमुमामिन्द्रमतः परम् ॥ शचीमग्नियमाद्यांश्च सदारान्दिक्पतीनथ ॥ २ ॥ देवानृषीन्पितॄन् राजन् गन्धर्वान् राजसत्तमान् ॥ काशीशं विश्वनाथं च बिन्दुमाधवमेव च ॥३॥ विष्णुपादं प्रयागं च गोदातीरनिवासिनम् ॥ नारसिंहं जगन्नाथं पाण्डुरङ्गं महाबिलम् ॥४॥ पम्पाध्यक्षं विरूपाक्षं श्रीशैलं पुण्यकाननम् ॥ श्रीवेङ्कटगिरीशं च कालहस्तीश्वरं हरम् ॥ ५ ॥ घटिकाचलसंस्थानं वृद्धाचलनिवासिनम् ॥ सुब्रह्मण्यं कुमाराख्यं मधुसूदनशङ्करौ ॥ ६ ॥ चन्द्रेश्वरं च गोकर्णं तथा हरिहरौ नृप ॥ गङ्गां गोदावरीं कृष्णां तुङ्गभद्रां मलापहाम् ॥७॥ कावेरीं कपिलां क्षीरां सुवर्णमुखरीं तथा ॥ मूकाम्बिकां भैरवं च कालभैरवमेव च ॥८॥ कामाक्षीं च विशालाक्षीं मत्स्याक्षीमपि सौख्यदाम् ॥ सस्मार लोकभावेन चोवाच मधुरं वचः ॥९॥ रमे कोल्लापुराध्यक्षे पाहि मां परदेशगाम् ॥ इति स्वकीयभावेन स्मरन्ती धर्मदेवता ॥१०॥ कृत्वा मौक्तिकाराशींस्त्रीन्मध्यराशौ विचिन्त्यताम् ॥ हस्ते दत्त्वा परां यष्टिमेष्वेकमनया स्पृश ॥ ११ ॥ इत्युक्तया तया देव्या

मध्यराशौ विलोडिते ॥ भावसाम्यं ततो ज्ञात्वा प्रहृष्टा वाक्यमब्रवीत् ॥१२॥

### पद्मावतीके देह सूखनेसे छूटनेका उपाय

शतानन्द बोले—उस देवीने भोजनके अन्तमें अपने कुलमें पूजित देवताओंका स्मरण किया। पहले नारायणका ध्यान कर पीछे लक्ष्मी, ब्रह्मा, सरस्वती, शिव, पार्वती, उसके पीछे शची ( इन्द्राणी ), अग्नि, यम इत्यादि सपत्नीक दिग्पाल, देवता, ऋषि, पितर, राजा, गन्धर्व राजश्रेष्ठ, काशीके स्वामी विश्वनाथ, बिन्दुमाधव, विष्णुपद, प्रयाग, गोदावरी-तीरके निवासी नरसिंह, जगन्नाथ, अहोबिल, पाण्डुरंग, पंपाके स्वामी विरुपाक्ष, पुण्य वनवाला श्रीशैल, श्रीवेङ्कटाचल, श्रीकाल हस्तीश्वर शिवघटिकाचलके रहनेवाले तथा विन्ध्याचलके निवासी परमात्मा कुमार नामक सुब्रह्मण्य, मधुसूदन, शंकर, चन्द्रेश्वर, गोकर्ण, हरिहर, गंगा, गोदावरी, कृष्णा, मलको धोनेवाली तुङ्गभद्रा, कावेरी, कपिला, क्षीरा, सुवर्णमुखरी, मुकाम्बिका, भैरव, कालभैरव, कामाक्षी, विशालाक्षी और सुखको देनेवाली मीनाक्षीको स्वयं मनुष्य-भावनाका अभिनय करती हुई स्मरण किया और बोली कि हे कोल्लापुरकी स्वामिनी लक्ष्मी, मुझ परदेशमें आयी हुई की रक्षा करो। इस प्रकार स्वभावतः स्मरण करती हुई उस धर्मदेवताने मोतीकी तीन ढेर बनाकर, मध्यवालीको स्वयं स्मरण कर, उस धरणीदेवीके हाथमें दूसरी एक यष्टि देकर कहा कि इनमेंसे एकको इस यष्टिसे छू दो। इस प्रकार कही गयी उस धरणीदेवीसे मध्यवाली ढेरके छू जानेपर भावकी समता जानकर, आनन्दित हो वचन बोली ॥ १२ ॥

*धर्मदेव्युवाच—*

वदेयं कारणं देवि दुहितुस्तेङ्गशोषणे ॥ आगतः पुरुषेणास्या येन केनाप्युपद्रवः ॥१३॥ इतः पूर्वदिने कञ्चित्पुरुषं तुरगास्थितम् ॥ दृष्ट्वा मोहवशं याता कामज्वरसुपीडिता ॥१४॥ शृणु मातः सविस्तारं शपे शुल्मं सपुत्रगम् ॥ भर्त्तारं बदरीवासं मातरं पितरं गुरुम् ॥१५ पतिं श्रीवेङ्कटाधीशं कर्तुमिच्छति ते सुता ॥ तथा भविष्यति शुभे वागियं नान्यथा भवेत् ॥१६॥ स्वात्मानं तु शपे राज्ञि सत्यमित्यवधारय ॥ सत्यं वदामि सुश्रोणि ताम्बूलं देहि मेऽङ्गने ॥१७॥ एलालवङ्गकर्पूरजातीपत्रैः सपूगकैः ॥ नागवल्लीदलैर्युक्तं पुनर्देहि वरानने ॥१८॥

धर्मदेवी बोली—हे देवी! तुम्हारी पुत्रीके अंग सूखनेका कारण मैं कहती हूं। किसी पुरुषसे इसका यह उपद्रव आया है। इसके पहले दिन वह घोड़ेपर चढ़े हुए किसी पुरुषको देखकर मोहके वश कामज्वरसे पीड़ित हो गयी। हे माता! विस्तारके साथ सुनो। पुत्रके साथ टोकरीकी, वहरी वनमें रहनेवाले भर्त्ताकी, माताकी, पिताकी एवं गुरुकी सौगन्ध करती हूं, तुम्हारी पुत्री श्रीवेङ्कटेशको अपना पति बनाना चाहती है, वैसा ही शुभ होगा, यह बात असत्य नहीं होगी। हे रानी! मैं आनो सौगन्ध करती हूं, इसको सत्य समझो। हे सुन्दरि! मैं सत्य कहती हूं। हे श्रेष्ठमुखवाली! हे सुन्दरी! मुझको इलायची, लवङ्ग, कर्पूर, जावित्री, सुपारी तथा नागवल्लीके दलके साथ ताम्बूल पुनः दो ॥ १८ ॥

इत्युक्ता धरणी देवी ताम्बूलं पुनरप्यदात् ॥ पुनरालोचयन्ती सा पुलिन्दा वाक्यमब्रवीत् ॥१९॥

इस प्रकार कहे जानेपर उस धरणीदेवीने पुनः उसको पान दिया। वह पुलिन्दा पुनः आलोचना करती हुई बोली ॥ १९ ॥

*पुलिन्द्रोवाच—*

योऽसौ तुरगमारूढः पुरुषः पूर्वमागतः ॥ किरातरूपधारी स साक्षान्मन्मथमन्मथः ॥२०॥ तं दृष्ट्वा मोहमायाता कामज्वरसुपीडिता ॥ दुहिता तेऽभवद्राज्ञि ततोऽस्या अङ्गशोषणम् ॥२१॥ तच्छान्त्यर्थं वरारोहे तस्मै सा सम्प्रदीयताम् ॥ इत्युक्ता धरणी देवी धर्मदेवीं वचोऽब्रवीत् ॥२२॥

पुलिन्दा बोली—पूर्वमें जो पुरुष घोड़ेपर चढ़ा हुआ आया था, वह किरातरूप धारण किये हुए साक्षात् कामदेवका भी कामदेव था। हे रानी! उसको देखकर तुम्हारी पुत्री मोहके वशमें कामके ज्वरसे पीड़ित हो गयी है। इस हेतु इसके अंग सूख रहे हैं। हे वरारोहे! उसकी शान्तिके लिये वह कन्या उन्हीं पुरुषको दे दो। इस प्रकार कहे जानेपर धरणीदेवी धर्मदेवीसे बोली ॥ २२ ॥

*धरण्युवाच—*

कास्ते किरातरूपी स दुहितुर्मेऽङ्गशोषकः ॥ वद तन्नाम किं भद्रे वरं दास्ये तवेप्सितम् ॥२३॥ इति पृष्टा धर्मदेवी धरणीं वाक्यमब्रवीत् ॥२४॥

धरणी बोली – हे भद्रे ! मेरी पुत्रीका अङ्ग शोषण करनेवाला किरात रूप वह कहां है ? उसका नाम क्या है ? कहो ? तुम्हारा इच्छित वर दूंगी । इस प्रकार पूछे जानेपर धर्मदेवी, धरणीदेवीसे बोली ॥ २४ ॥

धर्मदेव्युवाच—

वैकुण्ठस्थो हरिः साक्षाद्वर्त्तते वेङ्कटाचले ॥ श्रीनिवास इति ख्यातो विद्यावान्धनवान् बली ॥२५॥ तस्याश्वं त्वत्सुता बाला ताडयाभास चाश्मभिः ॥ आरामद्वारनिकटे पतितः स हयोत्तमः ॥ २६॥ अश्मभिस्ताडितोऽत्यन्तं विह्वलः पृच्छ तत्सखीः ॥ गौरवाद्राजपुत्र्यास्तु क्षमते पुरुषः स तत् ॥ २७॥ इति मे सत्यवचनं दत्वा तां सुखमेष्यसि ॥ अदत्वा दुःखमाप्नोषि न मे वाणी मृषा भवेत् ॥२८॥ अदाने दिनमात्रे सा म्रियेत न हि संशयः ॥ इति तस्या वचः श्रुत्वा धरणी पुनरब्रवीत् ॥२९॥

धर्मदेवी बोली—'वैकुण्ठमें रहनेवाले, विद्यावान्, धनवान् एवं बली श्रीनिवास ऐसा प्रसिद्ध हरि श्रीवेङ्कटाचलपर साक्षात् हैं। उनके घोड़ेको तेरी पुत्रीने पत्थरोंसे मारा है, वह श्रेष्ठ घोड़ा पत्थरोंसे बहुत पीटा हुआ विह्वल हो बगीचेके द्वारके पास गिरा हुआ है सो उसकी सखीसे पूछो । वह पुरुष इस अपराधको राजपुत्रीके गौरवसे क्षमा करते हैं। यह मेरा सत्य वचन है, कि उस कन्याको देकर सुख पाओगी और नहीं देकर दुःख पाओगी; मेरी वाणी झूठी नहीं होती। नहीं देनेसे वह एक दिनमें मर जायगा, इसमें संशय नहीं है। इस प्रकार उसके वचनको सुनकर धरणीदेवी पुनः बोली ॥ २९ ॥

धरण्युवाच—

किं मां वदसि दुर्वाक्यमसत्यं वामलोचने ॥ इति तस्या वचः श्रुत्वा पुनराह मनस्विनी ॥३०॥

धरणीदेवी बोली—हे वामलोचने ( सुन्दर नेत्रवाली ) ! असत्य एवं दुष्ट वचन मुझसे क्यों कहती हो ? उसकी इस बातको सुनकर वह मनस्विनी पुनः बोली ॥ ३० ॥

धर्मदेव्युवाच—

नासत्यं वचनं देवि मयोक्तं पूर्वमेव तत् ॥ इति भीता तद्वचनाद्राज्ञी वाक्यमथाब्रवीत् ॥३१॥

धर्मदेवी बोली—हे देवी ! मुझसे पूर्वमें कही हुई ये बातें असत्य नहीं हैं। इस प्रकार उसके वचनसे डरी हुई रानी बोली ॥ ३१ ॥

धरण्युवाच—

अयाचिता मया कन्या कथं देया भविष्यति ॥ इति चिन्तापरा राज्ञी धर्मदेवीं वचोऽब्रवीत् ॥३२॥

धरणीदेवी बोली—याचना किये बिना मेरी कन्या कैसे दी जायगी ? इस प्रकार चिन्तित रानीसे धर्मदेवी बोली ॥ ३२ ॥

धर्मदेव्युवाच—

अद्यैव घटिकान्ते त्वामागमिष्यति काचन ॥ अबला बहुवृद्धा च धर्मार्थकुशला भुवि ॥३३॥ मद्वाक्यं विश्वसन्ती त्वं राजानं परिचोदय ॥ तोण्डमानं च ते भर्तुर्भ्रातरं ससुहृद्गणम् ॥३४॥ सम्बोध्य साधुमार्गं त्वं समाश्रय नृपप्रिये ॥ सन्निधौ मम सङ्कल्पं कुरु कन्यानिमित्तकम् ॥३५॥

धर्मदेवी बोली—पृथ्वीपर धर्म और अर्थमें कुशल, बहुत वृद्ध, कोई अबला आज ही क्षणभरमें तुम्हारे पास आवेगी। मेरे वाक्योंका विश्वास करती हुई तुम राजाको प्रेरणा करो और अपने पतिके भाई तोण्डमान और उसके सुहृद् वर्गोंको समझा कर अच्छे मार्गका आश्रय लो। हे नृपप्रिये ! मेरे पास कन्याके निमित्त संकल्प करो ॥ ३५ ॥

धरण्युवाच—

येन केनाप्युपायेन जीविता स्यात्सुता मम ॥ सुतां तस्यैव दास्यामि गिरिगह्वरवासिनः ॥३६॥

धरणीदेवी बोली—जिस किसी उपायसे मेरी कन्या जीवित रहे, मैं उसी पर्वतके वनमें रहनेवालेको पुत्री दूंगी ॥ ३६ ॥

धर्मदेव्युवाच—

एवं चेत्ते सुता राज्ञि जीविष्यति न संशयः ॥ पतिर्मे वर्तते

यत्र देवि तत्र व्रजाम्यहम् ॥३७॥ इत्युक्त्वा तद्वचः सत्यं द्रष्टु-
कामा धराऽब्रवीत् ॥

धर्मदेवी बोली—हे रानी ! यदि ऐसा हो तो, तुम्हारी पुत्री जियेगी, इसमें संशय नहीं है। हे देवी ! मेरा पति जहांपर है मैं वहीं जाती हूं। इतना उसके कहने पर उसके वचनकी सत्यता देखनेकी इच्छा रखनेवाली धरणीदेवी बोली ॥ ३८ ॥

*धरण्युवाच—*

तदा ते वचनं सत्यं यद्येवं सम्भविष्यति ॥३८॥ इत्युक्ताऽसौ
जगमाशु निजधाम वराङ्गना ॥ साऽपि तां बाढमित्युक्त्वा निर्जगा-
म पुराद्बहिः ॥३९॥ कक्षे बद्ध्वा सुतं राजन्स्वर्णशूर्पं सगुल्मकम् ॥
जगामोत्तरमभ्येत्य पुलिन्दा मिथिलेश्वर ॥४०॥

धरणीदेवी बोली—इस प्रकार होगा, तो तुम्हारा वचन सत्य है। इतना कहनेपर वह शीघ्र अपने घर गई। हे राजन ! वह धर्मदेवी भी उसको "अच्छा" कहकर, कक्ष ( पार्श्व ) में पुत्रको एवं टोकरीके साथ सुवर्णके सूपको बांधकर गांवसे बाहर निकल गई। हे मिथिलेश ! वह पुलिन्दा बाहर आकर उत्तरकी ओर गई ॥ ४० ॥

पुलिन्दायां गतायां तु धरणी वामलोचना ॥ पुत्र्या निकेतनं
प्राप्य रुदन्ती भृशदुःखिता ॥४१॥ किं ते मनोगतं पुत्रि यत्त्वामि-
च्छसि तद्वद ॥ न च मातृसमं मित्रं पुत्रीणामस्ति नन्दिनि ॥४२॥
किन्तु कार्यमकार्यं वा तन्ममाचक्ष्व भामिनि ॥ पूरयामि मनःस्थं
च किमर्थं तव शोषणम् ॥४३॥ अभाग्याऽहं महाभागे विषपानं
करोमि च ॥ इत्युक्त्वा सा पराधीना दुःखिता रुदिताऽभवत् ॥४४॥
दुःखितां जननीं दृष्ट्वा मन्दमाह मनोगतम् ॥४५॥

पुलिन्दाके चले जानेपर सुन्दर नेत्रवाली रोती और बहुत दुःखी होती हुई धरणीदेवी अपनी पुत्रीके घर पर पहुंच कर कहने लगी कि हे पुत्री ! तुम्हारी क्या अभिलाषा है ? जो तुम चाहती हो सो कहो। हे नन्दिनी ! पुत्रियोंका माताके समान मित्र नहीं है। करने योग्य अथवा नहीं करने योग्य भी क्या काम है ? तेरी अभिलाषाको मैं पूरी करूंगी। किस लिये तुम सूख रही हो ? हे महाभागे ! भाग्यहीना मैं इसलिये विष

पान भी करूंगी। ऐसा कह कर पराधीन और दुःखी हो वह रोने लगी और दुःखी माताको देखकर उसने धीरे धीरे अपनी अभिलाषा प्रकट की ॥ ४५ ॥

किं वदिष्यामि हे मातः सूतिकादुःखमागतम् ॥४६॥ अथवा पुत्रलाभं किं प्रवदामि निगूढजम् ॥ नाकृत्यं तादृशं किञ्चिज्जातं कापि तु मे वरे ॥४७॥ काङ्क्षां सम्प्रति तामद्य वक्तुं शक्नोमि न स्वयम् ॥ तथापि तव वक्ष्यामि मातृत्वाच्छृणु भामिनि ॥४८॥

पद्मावती बोली—हे माता! क्या सूतिका दुःख हुआ है, ऐसा बोलूं? अथवा गुप्तरूपसे पुत्रलाभ हुआ ऐसा बोलूं? हे श्रेष्ठ! उस प्रकारका कोई भी अकर्म कहीं भी मुझसे नहीं हुआ है। हे माता! मैं अपनी उस आकांक्षाको स्वयं कह नहीं सकती हूं, तथापि माता होनेके [illegible] मैं तुमसे कहती हूं॥ ४८॥

अथ पद्मावतीकथितभगवल्लक्षणतद्भक्तलक्षणानि

त्वयाज्ञतागमं मातः पुण्यारामं सखीयुता ॥ तत्रायातः पुमान्कश्चित्पुराणपुरुषोत्तमः ॥४९॥ मातः स्मरामि तद्भक्तं पुण्डरीकनिभेक्षणम् ॥ तं विना न हि जानामि सत्यमित्यवधारय ॥५०॥ चरितं तस्य कृष्णस्य जानन्ति विबुधेश्वराः ॥ पातालजाश्च मनुजा न जानन्ति हरिं परम् ॥५१॥ सत्यं सर्वोत्तमः साक्षात्स एव पुरुषोत्तमः ॥ दक्षिणं पाणिमाश्रित्य राजते चक्रमुत्तमम् ॥ ५२ ॥ तथा सव्ये शङ्खराजो राजते राजवल्लभे ॥ यत्कण्ठे कौस्तुभं रत्नं श्रुत्योर्मकरकुण्डले ॥५३॥ यस्य चक्रप्रभावेण दग्धा वाराणसी पुरी ॥ यस्य शङ्खध्वनिं श्रुत्वा विद्रवन्त्यसुरादयः ॥५४॥ तद्भक्तलक्षणं वक्ष्ये शृणु मातः सविस्तरम् ॥

पद्मावतीके कहे हुए श्रीभगवानके और उनके भक्तके लक्षण

हे माता! तुमसे आज्ञा पा सखियोंके साथ मैं पवित्र आराम (बगीचा) में गयी थी। एक अनादि एवं पुरुष श्रेष्ठ वहांपर आया। हे माता। मैं कमल-दल-नयन उसके भक्तको स्मरण करती हूं। इसके अतिरिक्त मैं कुछ नहीं जानती हूं, यह सत्य मानो। उस कृष्णके चरित्रको देवता ही जानते हैं; पाताल लोकके रहनेवाले और

मनुष्यगण श्रेष्ठ हरिको नहीं जानते हैं। यह सत्य है कि सबसे उत्तम पुरुषोत्तम साक्षात् वही भगवान् हैं। उसके दक्षिण हस्तमें उत्तम चक्र शोभता है एवं वाम हस्तमें, हे राजवल्लभे! शङ्खराज पाञ्चजन्य शोभता है; जिसके कण्ठमें कौस्तुभरत्न, कानोंमें मकरके आकारके कुण्डल हैं, जिसके चक्रके प्रभावसे वाराणसीपुरी जल गई थी और जिसके शङ्खके शब्दको सुनकर राक्षसगण डर जाते हैं, हे माता! उसके भक्तोंके लक्षणको विस्तार पूर्वक वर्णन करती हूं; सुनो ॥५५॥

वेदशास्त्रपरा ये च स्वधर्माचरणे रताः ॥५५॥ वेदोक्तं कर्म कुर्वन्ति तद्भक्तान्विद्धि वैष्णवान् ॥ शङ्खचक्राङ्किता ये चाप्यूर्ध्वपुण्ड्रधराश्च ये ॥ ५६ ॥ नासत्यवचना ये तु पितृमातृमते स्थिताः ॥ तद्भक्तलक्षणं त्वेतत्तं विना को नु जीवति ॥५७॥ तनयावचनं श्रुत्वा सानन्दा वाक्यमब्रवीत् ॥ सत्यं वद महाप्राज्ञे भ्रमो वा ज्वरकारणात् ॥५८॥

जो वेद और शास्त्रके अनुकूल अपने धर्मोंके आचरणमें लगे रहते हैं, जो वेदमें कहे हुए कर्मको करते हैं, जो शङ्ख और चक्रसे चिह्नित हैं, जो ऊर्ध्व पुण्ड्रको धारण करते हैं, जो असत्य वचनवाले नहीं होते और जो पिता माताकी आज्ञामें रहते हैं, उन भक्तोंको वैष्णव समझो। उनके भक्तोंके लक्षण उनके बिना कौन जान सकता है। पुत्रीके वचनको सुनकर वह धरणीदेवी आनन्द पूर्वक बोली—हे महाबुद्धिवाली! सत्य कहो। यह तुम्हारा भ्रम है वा ज्वरका कारण है? ॥५८॥

पद्मावत्युवाच—

सत्यं वदामि मातर्यो दृष्टपूर्वो महाप्रभुः ॥ तद्दर्शनधियो मेऽद्य जायते देहशोषणम् ॥५९॥

पद्मावती बोली—हे माता! जिन महाप्रभुको पूर्वमें मैंने देखा है उन्हींके फिर दर्शनके विचार (चिन्ता) से मेरा शरीर सूखा जा रहा है ॥५९॥

शतानन्द उवाच—

सान्त्वयित्वा सुतां भद्रा भर्तुर्भवनमभ्यगात् ॥ पाकार्थं परमानन्दभरिता भाग्यसम्पदा ॥६०॥ पुत्र्यङ्गशोषं संस्तुर्ध्य कृच्छ्रसन्तापसंयुतम् ॥ अवदत्स्वपतिं प्राप्य पुत्रीकार्यविशेषणे ॥६१॥ कारणं धर्म-

देव्युक्तमथ तच्छान्तिकारणम् ॥ सर्वं संबोधयामास पुत्र्या हृद्गतमादरात् ६२॥

शतानन्द बोले—अपनी पुत्रीको सान्त्वना दे कर परम आनन्दसे भरी हुई तथा भाग्यसे संपन्न धरणीदेवी पाक-क्रिया करनेके लिये अपने पतिके मन्दिरमें गई। पुत्रीके अंग सूखनेके दुःखसे दुःखी, कठिन तथा तापसे युक्त अपने पतिके पास पहुंच कर पुत्रीके शरीर सूखनेमें धर्मदेवीके कहे हुए कारण और उसकी शान्तिके उपाय धरणीने कहा, और आदर पूर्वक अपनी पुत्रीके हृदयकी सब बातोंको भी समझा दिया ॥६२॥

अथ धरणीदेवीं प्रति पद्मावतीसखीभिः सह वकुलागमनम्

एतस्मिन्नेव समये कन्याश्च वकुलान्विताः ॥ अभिषिच्यागस्त्येशं शङ्करं ब्राह्मणैः सह ॥६३॥ सम्भाराञ्छिरसा धृत्वा ब्राह्मणैः सपुरोहितैः ॥ राजधानीं समासाद्य भर्तुर्भवनमभ्ययुः ॥६४॥

धरणीदेवीके स्वामीके पास पद्मावतीकी सखियोंके साथ वकुलाका आना

इसी समय वकुलाको लिये हुई वे कन्यायें अगस्त्येश शिवको ब्राह्मणोंके साथ अभिषेक करनेकी सामग्रियोंको शिरपर रख, पुरोहित और ब्राह्मणोंके साथ राजधानीमें आकर राजाके भवनको आ गईं ॥६४॥

समागतान्द्विजान्सर्वान्सम्पूज्य विधिपूर्वकम् ॥ गन्धपुष्पाक्षताद्यैश्च वस्त्रालङ्कारभूषणैः ॥६५॥ विप्राशीर्वादमन्त्रैश्च मार्जयित्वा स्वकां सुताम् ॥ अभुङ्क्त च स्वयं राजा ब्राह्मणानामथाज्ञया ॥६५॥ सा भुक्त्वाथ महाभागा धरणी बहिरागता ॥ ददर्श तां महाराज वकुलां नवरूपिणीम् ॥६७॥ धर्मदेव्या वचः स्मृत्वा तत्समीपमुपागमत् ॥ पप्रच्छ तास्तदा कन्या एतद्वृत्तान्तकोविदाः ॥६८॥

आये हुए ब्राह्मणोंकी गन्ध, पुष्प, अक्षत इत्यादि वस्त्र, अलङ्कार तथा आभूषणोंसे विधि पूर्वक पूजा करके, ब्राह्मणोंके आशीर्वाद मन्त्रसे अपनी पुत्रीको मार्जन कर, ब्राह्मणोंकी आज्ञासे स्वयं राजाने भोजन किया। वह महाभागा धरणीदेवी भी भोजन करके बाहर आयी और उस नये रूपवाली वकुलाको देखीं तथा धर्मदेवीके वचनको स्मरण कर उसके पास आई और इसके वृत्तान्तको जाननेवाली उन कन्याओंसे पूछी ॥६८॥

धरण्युवाच —

कैषा कस्मादुपायाता पूज्येव प्रतिभाति मे ॥ पृच्छ्यतां कन्यका अस्याः किमागमनकारणम् ॥६९॥ एवमुक्ताः कन्यकास्तु धरणीमब्रुवंस्तदा ॥

धरणी बोली—यह कौन है ? किस कारणसे आई है ? मुझको यह पूज्यके जैसी मालूम होती है। हे कन्याओं ! इसके आगमनका क्या कारण है, सो कहो। ऐसा पूछे जानेपर वे कन्यायें धरणीदेवीसे बोलीं ॥७०॥

वासः पन्नगशैलेऽस्याः स्वामी श्रीवेङ्कटेश्वरः ॥७०॥ तदाज्ञाकारिका काचिन्नाम्ना वकुलमालिका ॥ अनया धरणीदेव्याः संनिधौ मम किंचन ॥७१॥ कार्यमस्तीति कथितं ततस्तु सहितास्तया॥ वयं प्राप्ता महाभागे त्वत्समीपमिहाधुना ॥७२॥ पृच्छ्यतां सर्ववृत्तान्तं तदागमनकारणम् ॥ एवमुक्ताथ कल्याणी वकुलां समभाषत ॥७३॥ तिष्ठ भद्रे वरारोहे रत्नपीठे सुनिर्मले ॥ इत्युक्तानन्दभरिता वकुला तत्र संस्थिता ॥७४॥ मेने कृतार्थमात्मानं साफल्यं जन्मनोऽपि च ॥

कन्यायें बोलीं—इसका निवास श्रीशेषाचलपर है, इसके स्वामी श्रीवेङ्कटेश्वर हैं; उन्हींकी आज्ञाकारिणी यह कोई वकुलमालिका नामकी है। इसने कहा कि धरणीदेवीके पास मेरा कुछ कार्य है, अतः हे महाभागे ! उसके साथ हमलोग इस समय यहाँपर तुम्हारे पास आई हैं। उसके आनेका कारण उसीसे पूछिये। ऐसा कहे जानेपर वह कल्याणी वकुलासे बोली—हे भद्रे ! स्वच्छ रत्नोंकी पीठपर बैठो। ऐसा कहे जानेपर आनन्दसे भरी हुई वकुला वहाँ पर बैठी और अपनेको कृतार्थ एवं अपने जन्मको भी सफल समझी ॥७५॥

धरण्युवाच —

स्वागतं ते वरारोहे मम पुण्यसमुच्चयात् ॥७५॥ मन्ये कृतार्थमात्मानं सफलं साधुसङ्गमात् ॥ निर्देष्टव्यं भवत्कर्म तदद्य विदधीमहि ॥७६॥ किमर्थमागमो मातः शीघ्रं तत्कथ्यतामिति ॥

धरणी बोली—हे वरारोहे ! मेरे पुण्य-राशिसे तुम्हारा आना शुभ हो है। साधु समागमसे मैं अपनेको

कृतार्थ मानती हूं। आप अपना कार्य कहें, आज ही मैं उसको करूंगी। हे माता! किसलिये आयी हो सो शीघ्र कहो ॥७६॥

बभाषे वकुला भार्यां राज्ञस्तस्य महात्मनः ॥७७।

महात्मा राजाकी स्त्रीसे वकुला बोली ॥७७॥

अथ धरणीं प्रति वकुलोक्तस्वागमनकारणम्

वकुलोवाच—

कन्यापेक्षा मुख्यकार्यं पुनः कार्यशतेन किम् ॥ मुख्यकार्यं ततः श्रुत्वा वकुलामब्रवीदिदम् ॥७८॥

धरणीके प्रति वकुलाका अपने आनेका कारण वर्णन

वकुला बोली—कन्याकी इच्छा ही मुख्य कार्य्य है, फिर और सैकडों कार्यसे क्या? मुख्य कार्यको सुनकर धरणीदेवी वकुलादेवीसे बोली ॥७८॥

धरण्युवाच—

सम्यगुक्तं त्वया देवि वरापेक्षापि वर्तते ॥ को वरः कश्च देशोऽस्य गोत्रं नक्षत्रकं च किम् ॥७९॥ किं नाम जनकश्चास्य माता चापि महात्मनः ॥ किं कुलं कोऽस्य चाचारो जातिर्वा तस्य का वद ॥८०॥ कुलाचारादिकं पृष्टा वकुला वाक्यमब्रवीत् ॥८१॥

धरणीदेवी बोली—हे देवी! आपने अच्छा कहा—यहां वरकी खोज भी है। कौन वर है? इसका कौन देश है? कौन नक्षत्र है? कौन गोत्र है? उस महात्माका नाम क्या है? पिता कौन हैं? माता कौन हैं? उसका कौन कुल है? कौन आचार है? और उसकी जाति क्या है सो कहो। इस प्रकार कुल आचार इत्यादि पूछे जानेपर वकुला बोली ॥ ८१ ॥

वकुलोवाच —

शृणु राज्ञि सविस्तारं गोत्रं बन्धुजनं तथा ॥ देवकी जननी तस्य जनकः शूरनन्दनः ॥८२॥ निशाकरकुलं तस्य नाम कृष्ण इति स्मृतम् ॥ वसिष्ठगोत्रे चोत्पत्तिर्नक्षत्रं श्रवणं तथा ॥८३॥ आचा-

सो वेङ्कटागिरिर्विद्यावान् धनवान् बली ॥ बहुलाचारसम्पन्नो वय-
सा पञ्चविंशकः ॥८४॥ पाणिग्रहणकाले तु तं दृष्ट्वा तोषमेष्यसि ॥
किमत्र बहुनोक्तेन दर्शनात्ते सुखं भवेत् ॥ तद् वृत्तमखिलं श्रुत्वा
तामाहानन्दनिर्भरा ॥८५॥

बकुला बोली—हे रानी ! उनके गोत्र तथा बन्धुजनोंका परिचय विस्तारपूर्वक सुनो । उनकी माता देवकी एवं पिता शूरनन्दन वसुदेव हैं । चन्द्रवंश उनका वंश है । कृष्ण उनका नाम है । वशिष्ठ गोत्रमें उनका जन्म है । श्रवण उनका नक्षत्र है । उनका निवासस्थान श्रीवेङ्कटाचल है । वे विद्यावान्, धनवान्, बली एवं बहुत आचार विचारवाले पचीस वर्षकी अवस्थावाले हैं । पाणिग्रहणके समयमें उनको देखकर सन्तुष्ट हो जाओगी । यहां अधिक कहनेसे क्या ? उनके दर्शनहीसे तुमको सुख होगा । उनके पूर्ण वृत्तान्तको सुनकर आनन्दसे भरी हुई धरणीदेवीने उससे कहा ॥ ८५ ॥

धरण्युवाच—

शङ्का जाता वरारोहे मम ते वचनात्सखि ॥ सभाग्यश्च कु-
लीनश्च बुद्धिमाञ्श्च युवा बली ॥८६॥ वागमी चोक्तोऽस्य चैताव-
द्विवाहो न कृतः कुतः ॥ सा तद्वचनमाकर्ण्य निपत्यमनुचिन्त्य-
तम् ॥ धैर्येण वचनं प्राह धरणीं राजवल्लभाम् ॥८७॥

धरणी बोली—हे वरारोहे ! हे सखी ! तुम्हारी बातसे मुझको शंका हुई है । आपने कहा—वे भाग्यवान्, कुलीन, बुद्धिमान्, बलवान्, युवा तथा विद्वान हैं, उनका अभीतक विवाह क्यों नहीं हुआ ? वह बकुला उस मर्मभेदी वचनको सुनकर, उन हरिको स्मरण कर, धैर्यके साथ राजाकी प्यारी धरणीदेवीसे वचन बोली ॥८७॥

बकुलोवाच—

कृतवैवाहिको देवि बाल्ये भागीरथीपिता ॥ तत्रापत्यमनालोक्य
द्वितीयं कर्तुमुत्सुकः ॥८८॥ न दोपमितरं विद्धि श्रीनिवासे नि-
रामये ॥ तद् वृत्तमखिलं श्रुत्वा समाहूय स्वकं सुतम् ॥८९॥ नृप-
माज्ञापयामास धरणी पतिमात्मनः ॥ एकान्ते राजशार्दूलमिदं
वचनमब्रवीत् ॥९०॥

वकुला बोली—हे देवी ! उन गङ्गाके जन्मदाताने बाल्यकालमें विवाह किया था; परन्तु उससे सन्तानोत्पत्ति नहीं देखकर दूसरा विवाह करनेको उद्यत है। निर्दोष श्रीनिवासमें दूसरा दोष मत जानो। उस सब वृत्तान्तोंको सुनकर, धरणीदेवीने अपने पुत्रको बुलाकर अपने पति राजाको बुलवाया और उस श्रेष्ठ राजासे एकान्तमें यह वचन बोली ॥९०॥

अथ धरण्युक्त्या वियन्नृपकृतपद्मावत्याश्वासनप्रकारः

धरण्युवाच—

कन्यार्थमागता राजन् वकुला वेङ्कटाचलात् ॥ सुतं संप्रेष्य चापि त्वं स्वपुरोहितमन्त्रिभिः ॥९१। वरस्यापि विचार्याशु कुलविद्याबलादिकम् ॥ गोत्रऋक्षानुकूल्यं च ब्राह्मणैर्वेदपारगैः ॥९२॥ विचार्य वरवध्वोश्च योनिनाडीसुसङ्गतिम् ॥ सर्वं सम्यक्समालोच्य कन्यादानं कुरु प्रभो ॥९३॥ कन्यार्थमागता साध्वी दुहितुर्विदितं मनः ॥ तमेवेच्छसि ते पुत्री वेङ्कटाचलवासिनम् ॥ ९४ ॥ धर्मदेवीवचः सत्यं शुभं शीघ्रं विधीयताम् ॥ इति पत्न्या वचः श्रुत्वा सोऽभूदानन्दनिर्भरः ॥९५॥

धरणीके वचनसे आकाशराजा द्वारा पद्मावतीका आश्वासन

धरणी बोली—हे राजन् ! यह वकुला श्रीवेङ्कटाचलसे कन्या (देखने)के लिये आयी है; आप भी अपने पुरोहित और ब्राह्मणोंके साथ अपने पुत्रको भेजकर, वरका कुल, विद्या, बल इत्यादिका शीघ्र विचार करो, वेदज्ञ ब्राह्मणोंसे गोत्र, नक्षत्र इत्यादिकी अनुकूलता एवं वर कन्याकी योनि, नाड़ी इत्यादिकी सुसंगतिका विचार करो, हे प्रभो ! सब कुछ अच्छी तरह देखभाल कर कन्या दान करो। यह साध्वी कन्याके लिये आयी है और मैंने पुत्रीका मन भी टटोला है। आपकी पुत्री उस श्रीवेङ्कटाचलवासीको ही चाहती है। धर्मदेवीके शुभ वचनोंका शीघ्र ही पालन करो। पत्नीके इस वचनको सुनकर वह राजा आनन्दसे भर गया ॥९५॥

आकाशराज उवाच—

अहो मङ्गलमस्माकं संप्राप्तं पूर्वपुण्यतः ॥ अस्माकं पितरः सर्वे कृतार्था मुक्तिभागिनः ॥९६॥ त्वद्वाक्यामृतपानेन रोमहर्षस्तु जायते ॥ कदा पश्यामि कल्याणं वधूवरसमागतम् ॥९७॥ सभ-

तृकां राजपुत्रीं राजसिंहासने स्थिताम् ॥ कदा पश्यामि नेत्राभ्यां वन्धुमण्डलमध्यगाम् ॥९८॥ इत्युक्त्वा भवने चागाद् दुहितुर्दुहितृप्रियः ॥ नृपः पद्मावतीं प्राह सान्त्वयन् वचसा सुताम् ॥९९ ।

आकाशराज बोले—अहा ! पूर्व पुण्यके संस्कारसे हमलोगोंको मङ्गल प्राप्त हुआ है; हमलोगोंके सब पितर कृतार्थ और मुक्तिके भागी हैं। तुम्हारी वाणीरूपी अमृतको पीकर रोम-हर्ष होता है। वर वधू सम्बन्धी कल्याण कब देखूंगा ? बंधुमण्डलके मध्यमें पतिके साथ राजसिंहासनपर बैठी हुई राजपुत्रीको आखोंसे कब देखूंगा ? पुत्री-प्रेमी राजा इस प्रकार कहकर पुत्रीके घर गये और अपनी पुत्री पद्मावतीको वचनोंद्वारा सान्त्वना देते हुए बोले ॥ ९९ ॥

नृप उवाच—

भद्रे दुःखं मनस्स्थं ते त्यज शीघ्रमतः परम् ॥ हृदये तव कल्याणि काऽपेक्षा वर्तते वद ॥१००॥ तामद्याहं करिष्यामि नात्र कार्या विचारणा ॥ जनकस्य वचः श्रुत्वा जननीं वाक्यमब्रवीत् ॥१०१॥

राजा बोले—हे भद्रे ! अपने मनके दुःखोंको अबसे छोड़ दो। हे कल्याणी ! तुम्हारे हृदयमें क्या अभिलाषा है सो कहो। उसको मैं आज पूरा करूंगा; इसमें विचार करना नहीं चाहिये। पिताके इस वचनको सुन कर पद्मावतीने मातासे यह बात कही ॥ १०१ ॥

पद्मोवाच—

मातस्ते कथितं सर्वं जनकाय वचो मम ॥ समाचक्ष्वाद्य सङ्कोचान्नाहं वक्तुं समुत्सहे ॥ पुत्रीगिरं विदित्वा सा भर्तारं वाक्यमब्रवीत् ॥१०२॥

पद्मावती बोली—हे माता ! मैंने तुमसे सब कह रखा है। मेरे वचन अब पिताजीसे कह दो; क्योंकि संकोचसे मैं उनसे नहीं कह सकती हूं। पुत्रीके वचनको समझकर धरणीदेवी अपने पतिसे बोली ॥ १०२ ॥

धरण्युवाच—

साधयस्व महाभाग विवाहं विधिपूर्वकम् ॥ विलम्बो नैव कर्तव्यः शुभार्थं तु शुभानन ॥१०३॥

धरणी बोली—हे महाभाग! विधिपूर्वक विवाह सम्पन्न करो; हे सुन्दर मुखवाले! शुभ कार्यके लिये विलम्ब नहीं करना चाहिये ॥ १०३ ॥

अथ वियन्नृपाज्ञया धरातलं प्रति बृहस्पत्यागमनम्

राजोवाच—

तस्मै दास्यामि कृष्णाय श्रीनिवासाय धीमते ॥१०४॥ इत्या-श्वास्य सुतां राजा पुत्रमिन्द्रनिकेतनम् ॥ प्रेषयामास राजेन्द्र गु-र्वानयनकाङ्क्षया ॥०५१॥ विलिख्य पत्रिकां राजा पुत्रीकल्याण-सूचिकाम् ॥ संप्रेषयामास तदा स्वपुत्रेण वियन्नृपः ॥१०६॥

आकाशराजकी आज्ञासे बृहस्पतिका आना

राजाने कहा—उसी बुद्धिमान् श्रीकृष्ण श्रीनिवासको अपनी पुत्री दूंगा। इस प्रकार राजाने अपनी पुत्री-को आश्वासन देकर, हे राजेन्द्र! अपने पुत्रको इन्द्रके यहाँ गुरुको बुलानेकी इच्छासे भेजा, और पुत्रीका कल्याणसूचक पत्र लिखकर आकाशराजने अपने पुत्रद्वारा भेजा ॥१०६॥

स गत्वा वायुवेगेन चन्द्रांशत्वात्तु भूमिप ॥ अवन्दतानन्दपूर्णो गुरुमिन्द्रस्य च क्षणात् ॥१०७॥ सपत्रं राजपुत्रं च समालोक्यागतं गुरुः ॥ प्रतिष्ठाप्यासने तं च तेनानीतां तदा शुभाम् ॥१०८। पपाठ च महाराज पत्रिकां शुभसूचिकाम् ॥ तत्क्षणादागमद्राजन् राजानं स पुरोहितः ॥१०९॥ प्राप्तं पुरोहितं दृष्ट्वा कृत्वार्चां विधि-पूर्वकम् ॥ कालोचितं वाचयित्वा वन्दमान उवाच सः ॥

हे राजा! आनन्दसे पूर्ण उसने, चन्द्रके अंशसे उत्पन्न होनेके कारण, वायुवेगसे क्षणमात्रमें आकर इन्द्रके गुरुको प्रणाम किया। गुरु बृहस्पतिने पत्रके साथ आये हुए राजाके पुत्रको देखकर, उसको आसनपर बैठाकर, हे महाराज! उससे लायी गयी शुभ पत्रीको पढ़ा। हे राजन्! वह पुरोहित राजाके पास उसी क्षण आये। और आये हुए पुरोहितको देखकर विधिपूर्वक पूजा कर समयोचित बातें कर, वह राजा प्रणाम करते हुए बोले॥ ११० ॥

राजोवाच—

तवाज्ञया करिष्यामि विवाहं दुहितुर्मम ॥११०॥ श्रीनिवासस्य

सम्बन्धो विदितस्य प्रशस्यते ॥ कन्यार्थमागता साध्वी विदिते गोत्रनामनी ॥१११॥ तथापि तव वाक्येन विवाहं कर्तुमुत्सहे ॥ स राज्ञो वचनं श्रुत्वा राजानं प्रत्यभाषत ॥११२॥

राजा बोले—अपनी पुत्रीका विवाह मैं आपकी आज्ञासे करूंगा; प्रसिद्ध श्रीनिवासका सम्बन्ध अच्छा कहा जाता है। एक साध्वी स्त्री कन्याके लिये आयी थी, गोत्र और नाम ज्ञात हुआ, तथापि आपकी आज्ञासे ही विवाह करना चाहता हूं। राजाकी यह बात सुनकर बृहस्पति उनसे बोले ॥११२॥

गुरुरुवाच

सफलं वृक्षमाश्रित्य जीवन्ति बहवो भुवि ॥ तथा वयं च जीवामस्तव भाग्यावलम्बिनः ॥११३॥ अहं कदाचिदेवात्र समागच्छामि भूतलम् ॥ न जानामि ततः सम्यक्शुक आश्रितवान्सदा ॥११४॥ स जानाति महाराज स्थितिमेतस्य शार्ङ्गिणः ॥ अत्रैवोत्तरदिग्भागे पञ्चक्रोशमिते नृप ॥११५॥ शुकोऽस्ति व्यासतनयः श्रीनिवासपरायणः ॥ तमाहूय महाराज शीघ्रं ते पृथिवीपते ॥११६॥ स वक्ष्यत्यात्मनः सौख्यं वृत्तान्तं तस्य चादितः ॥११७॥

गुरुजी बोले—जैसे फलवाले वृक्षका आश्रय लेकर पृथ्वीपर बहुतसे जीव जीते हैं उसी प्रकार आपके भाग्यका आश्रय ले हमलोग जीते हैं। मैं कभी कभी पृथ्वीतलपर आता हूं; इसलिये मैं अच्छी तरहसे उनको नहीं जानता हूं। शुकदेवजी सदा उन्हींके आश्रयमें रहते हैं। अतएव हे महाराज ! यह इस शार्ङ्गधारीकी स्थितिको जानते हैं। यहांसे उत्तर दिशामें पचास कोसकी दूरीपर व्यासके पुत्र, श्रीनिवासके भक्त शुकदेवजी रहते हैं। हे पृथ्वीपति ! उनको आप शीघ्र ही बुलाइये, वह आपका सुख साधन और उनका वृत्तान्त आदिसे बतावेंगे ॥११७॥

अथ बृहस्पत्युक्त्या वियद्राजनृपकृतशुकाह्वानम्

एवमुक्तोऽथ गुरुणा भ्रातरं ब्राह्मणप्रियम् ॥ सन्दिदेश महाराज शुकाश्रममरिन्दमः ॥११८॥ स गत्वा वायुवेगेन रथेनादित्यवर्चसा ॥ ध्यानयोगादुत्थितं तं दृष्ट्वा शुकमुवाच ह ॥११९॥

### आकाशराजाके द्वारा शुकदेवजीका बुलाया जाना

हे महाराज ! गुरुसे ऐसा कहे जानेपर ब्राह्मण-प्रिय अपने भाई तोण्डमानको उस राजाने शुकदेवजीके आश्रमको भेजा। वह वायुवेग तथा सूर्यके समान तेजवाले रथसे जाकर ध्यानयोगसे उठे हुए शुकदेवजीको देखकर उनसे बोले ॥११९॥

*तोण्डमानुवाच—*

श्रृणु तापसशार्दूल वचनं राजभाषितम् ॥ पद्मावती विवाहार्हा
सम्पन्ना गुरुपूजिता ॥१२०॥ श्रीनिवासाय तां कन्यां प्रदातुं काङ्क्ष-
ते नृपः ॥ युक्तायुक्तविचिन्तायै गुरुमाहूतवानपि ॥१२१॥ तदर्थमे-
व चाद्य त्वां समाह्वयति भूमिपः ॥ युक्तायुक्ते विचिन्त्याथ लेखि-
तुं शुभपत्रिकाम् ॥१२२॥ अवकाशं च कृत्वाद्य गच्छ तन्न-
गरीं प्रति ।

तोण्डमान बोले हे तपस्वियोंमें श्रेष्ठ ! राजाके कहे हुए वचनको सुनिये। गुरुओंकी मान्य पद्मावती अब विवाहके योग्य हो गयी है। राजा उस कन्याको श्रीनिवासको देना चाहते हैं। औचित्य या अनौचित्यके विचारके लिये गुरु भी बुलाये गये हैं। उसीके लिये आज आपको राजाने बुलाया है। योग्य और अयोग्यका विचार करके शुभ पत्री लिखनेके लिये आज अवकाश कर उस नगरीको चलिये ॥१२३॥

एवमुक्तो महीदेव महीपालेन भूमिप ॥१२३॥ स संभ्रमात्समु-
त्थाय व्यभ्रमद्विभ्रमन्निव ॥ भिन्दन् कमण्डलुं राजंश्छिन्दन् कृष्ण-
मृगत्वचम् ॥१२४॥ विच्छिद्य मणिमालाश्च स ननर्त महामुनिः ॥
मुहूर्तमित्थं राजेन्द्र तद्बुद्धिरवशं गता ॥१२५ उवाच पश्चाद्राजानं
कार्ष्णद्वैपायनिर्मुनिः ॥१२६॥

हे राजा ! राजासे ऐसा कहे जानेपर वह शीघ्र उठकर विभ्रान्त जैसा घूमने लगे। कमण्डलको फोड़ते हुए, कृष्ण मृगचर्मको फाड़ते हुए, मणियोंकी मालाको तोड़कर वह महामुनि नाचने लगे। हे राजेन्द्र ! इस प्रकार एक मुहूर्ततक उनकी बुद्धि पराधीन रही। इसके पीछे कृष्णद्वैपायनके पुत्र शुकदेवमुनि राजासे बोले ॥१२६॥

*श्रीशुक उवाच—*

साधूदितं वाक्यमुदारविक्रम त्वया हरेर्वेङ्कटशैलवासिनः ॥

कन्याप्रदानं पुरुषार्थसाधनं समस्तलोकस्य पवित्रकारकम् ॥१२७॥ आकाशराजधिषणौ श्रीनिवासकृपाबलात् ॥ महादानपराविर्थं भूयास्तां च दिने दिने ॥१२८॥ इत्याशिषो प्रशस्याथ पद्मतीर्थेऽवगाह्य च ॥ कृत्वा मध्याह्निकीं संध्यां त्यक्त्वा जीर्णोपबर्हणम् ॥१२९॥ स नवानि कुशाग्राणि निकृत्य मुनिसत्तमः ॥ किरीटं बन्धयित्वा तैरुत्तमाङ्गानिबन्धनम् ॥१३०॥ कवचं कल्पयामास कुशाग्रैः कुसुमैस्तथा ॥ तुलसीमणिमालाभिः कण्ठकर्णविभूषितः ॥१३१॥ आपादलम्बिकृष्णत्वक्कवचैस्समलङ्कृतः ॥ अश्वयानेऽधिरोप्यैनं निनाय स नृपानुजः ॥१३२॥

श्रीशुकदेवजी बोले—हे उदार विक्रम! आपने पुरुषार्थके साधन एवं समस्त लोकको पवित्र करनेवाले श्रीवेङ्कटाचलवासी हरिको कन्यादान सम्बन्धी वाक्य अच्छा कहा। दानमें लगे हुए आकाशराजा उन श्रीनिवासकी कृपाके बलसे दिन-दिन वृद्धि पावें। इस प्रकार आशीष प्रार्थना कर उन मुनिश्रेष्ठने पद्मतीर्थमें स्नान कर, मध्याह्न सन्ध्या कर, पुराने उपबर्हण (वस्त्रों) को त्यागकर, कुशाको तोड़कर, उनसे श्रेष्ठ अंग (मस्तक) के भूषण किरीटको बांधकर कुशाके अग्रभाग और फूलोंसे कवच बनाया; तुलसीमणिकी मालासे कण्ठ और कर्णोको विभूषित किया; सिरसे पैरतक शरीरको काले मृगचर्मके कवचसे भूषित कर लिया और वह राजाके छोटे भाई घोड़ेकी सवारीपर इनको चढ़ाकर ले आये ॥१३२॥

तमायान्तं मुनिं दृष्ट्वा चतुरङ्गबलान्वितः ॥ पुरोहितं पुरस्कृत्य कुशमूलफलोदकैः ॥१३३॥ अभियातस्तदा राजा सन्तोषं प्राप सा पुरी ॥ यानादुत्तीर्य राजेन्द्र साष्टाङ्गं प्रणिपत्य तम् ॥ गजमारोप्य नगरीं स पुरोहित आनयत् ॥१३४॥ निकेतनान्तर्भवने निवेश्य निधिं मुनीनां प्रवरं स राजा ॥ सम्पूजयामास विधानवित्तमो विद्यागुरुं ज्ञानगुरुं च नत्वा ॥१३५॥ तापसं परिपप्रच्छ कन्यार्थं धिषणामतः ॥

आये हुए उस मुनिको देखकर कुशाके मूल, फल और जलके सहित पुरोहितको आगे कर, चतुरङ्गिनी सेनाके साथ वह राजा अगवानी करने गये, तब वह नगरी सन्तोषको प्राप्त हुई। हे राजेन्द्र! सवारीसे उतर

कर, साष्टाङ्ग प्रणाम कर, उनको हाथीपर चढ़ाकर, पुरोहितके साथ वह राजा नगरीमें ले आये और उस राजाने मुनियोंमें श्रेष्ठ, विद्या और ज्ञानमें बड़े उन मुनिको अन्तर्भवनमें रख एवं प्रणाम करके पूजा की तथा धिषण (बृहस्पति) के सम्मुख कन्याके निमित्त तपस्वीसे पूछा ॥१३६॥

राजोवाच—

पद्मावतीं प्रदास्यामि भवद्भ्यामनुमोदितः ॥ श्रीनिवासाय कृष्णाय निश्चितो हि मया वरः ॥ १३६ ॥ स तद्वचनमाकर्ण्य राजानं राजसत्तम ॥ शुकोऽब्रवीद्गिरं पुत्रीकारणात्करुणान्वितः ॥१३७॥

राजा बोले—आप दोनोंसे अनुमोदन किये जानेपर मैं श्रीनिवासको अपनी कन्या दूंगा, मैंने यही वर ठीक किया है। हे राजाओंमें श्रेष्ठ! श्री शुकदेवजी पुत्रीके कारणसे करुणान्वित उनके इस वचनको सुनकर राजासे बोले ॥ १३७ ॥

अथ पद्मावतीपरिणयोद्युक्तचित्तन्नृपं प्रति शुककृतश्लाघाक्रमः

श्रीशुक उवाच—

मा कुरुष्व महाराज सन्देहं दानकर्मणि ॥ धन्योऽसि त्वं महीपाल कुलं पावनतां गतम् ॥ पितरस्तु दिवं प्राप्ता नात्र कार्या विचारणा ॥ किं त्वयाऽऽचरितं पुण्यं पूर्वजन्मनि भूमिप ॥१३९॥ भगवानरविन्दाक्षः श्रीनिवासः सतां गतिः ॥ जामातृत्वं समापन्नस्तस्मान्नास्ति तवाधिकः ॥१४०॥ विलम्बो नैव कर्तव्यः शुभं शीघ्रं विधीयताम् ॥ वयं धन्याः कृतार्थाः स्मस्तव सङ्गेन भूमिप ॥१४१॥ वयं तु तपसाराध्य कन्दमूलफलाशनाः ॥ सर्वसङ्गं परित्यज्य न पश्यामोऽत्र तं विभुम् ॥१४२॥ सङ्गतेस्तव पश्यामः श्रीनिवासं श्रिया युतम् ॥ सङ्गतिस्तव भद्रा नो भवेज्जन्मनि जन्मनि ॥१४३॥ एवं तमुक्त्वा राजर्षि तूष्णीमास स तापसः ॥

## आकाशराजके प्रति शुकदेवजीकी प्रशंसा करना

श्रीशुकदेवजी बोले— हे महाराज ! इस दान कर्ममें सन्देह मत कीजिये । हे राजा ! आप धन्य हैं, आपका कुल पवित्र हो गया । आपके पितर भी स्वर्गमें गये, इसमें विचार न करना चाहिये । हे राजा ! आपने पूर्व जन्ममें कौनसा पुण्य किया है ? कमलनयन तथा संतोंकी गति भगवान् श्रीनिवास आपके जामातृ (दामाद) हुए हैं, इसलिये आपसे बढ़कर कोई नहीं है । अतएव इसमें विलम्ब नहीं करना चाहिये, शुभ कर्मको शीघ्र ही करना चाहिये । हे राजा ! आपके संगसे हमलोग भी धन्य हुए । सब भोगोंको छोड़कर, कन्द, मूल और फलको खाते हुए तपस्याद्वारा आराधना करनेपर भी हमलोग उस प्रभुको नहीं देखते हैं; आपकी सङ्गतिसे ही लक्ष्मीके साथ श्रीनिवासको देखेंगे । आपकी शुभ संगति हमलोगोंको जन्म-जन्ममें मिले । इस प्रकार उस राजर्षिसे कहकर तपस्वी शुकदेवजी चुप हो गये ॥ १४४ ॥

**शुकवाक्यं ततः श्रुत्वा स राजाऽऽनन्दनिर्भरः॥१४४॥ वैयासके-र्वचः श्रुत्वा प्रशशंस प्रजापतिः॥ मन्ये कृतार्थमात्मानं व्यासपुत्र नमोऽस्तु ते ॥ १४५ ॥ ग्रहाणां च गतिस्तात तयोर्योगो विचिन्त्य-ताम् ॥ ऋक्षयोगं गोत्रयोगं पश्य विप्र बलाबलम् ॥ १४६ ॥ इति राज्ञो वचः श्रुत्वा सुराचार्यः ससंभ्रमम् ॥ छायाशास्त्रविधानज्ञो बकुलां वाक्यमब्रवीत् ॥१४७॥**

शुकदेवजीके वचनको सुनकर वह राजा आनन्दसे भर गया । व्यासके वचनको सुनकर प्रजाओंके स्वामी राजाने बहुत प्रशंसा की और कहा कि हे व्यासपुत्र ! मैं अपनेको कृतार्थ मानता हूं और आपको प्रणाम है । हे तात ! अब ग्रहोंकी गति और उनके योगका विचार कीजिये । हे विप्र ! नक्षत्रोंका योग, गोत्रका योग, एवं बलाबल देखिये । इस प्रकार राजाके वचन सुनकर छायाशास्त्रके विधान जाननेवाले, देवताओंके गुरु बृहस्पति शीघ्र ही बकुलासे यह वचन बोले ॥ १४७ ॥

### अथ गुरुकृतपद्मावती-श्रीनिवासविवाहयोगाद्यानुकूल्यविचारः

*बृहस्पतिरुवाच—*

**गोत्रं श्रीवेङ्कटेशस्य तन्नामाचक्ष्व भामिनि ॥ नक्षत्रं च वरा-रोहे कथ्यतामिति चाब्रवीत् ॥१४८॥ सा तस्य वचनं श्रुत्वा किञ्चित्कोपान्विताऽब्रवीत् ॥१४९॥**

पद्मावती और श्रीनिवासके विवाहयोग आदिकी अनुकूलताका विचार

बृहस्पति बोले—हे भामिनी ! श्रीवेङ्कटेशके गोत्र और उनके नाम बताओ, और हे वरारोहे ! उनके नक्षत्र भी कहो। बकुला उनके वचनको सुनकर कुछ क्रोधसे बोली ॥ १४९ ॥

बकुलोवाच—

ब्राह्मणाः सत्यसम्पन्नाः कलौ मिथ्या प्रवादिनः ॥ जानन्तोऽपि महाराज न वदन्ति हिताहितम् ॥१५०॥

बकुला बोली—हे महाराज ! सत्यसे सम्पन्न ब्राह्मण कलियुगमें मिथ्याभाषी हो गये। क्योंकि हित और अहितको जानते हुए भी वे नहीं बताते हैं ॥ १५० ॥

श्रीशुक उवाच—

अविश्वासश्च विप्रेषु क्षत्रियाणां वरानने ॥ धर्मोऽप्यधर्मतामेति ह्यधर्मो धर्मतां गतः ॥१५१॥ तस्मात्त्वया महाभागे कथनीयं हिताहितम् ॥

श्रीशुकदेवजी बोले—हे वरानने ! क्षत्रियोंका ब्राह्मणोंमें अविश्वास होनेसे धर्म भी अधर्मताको प्राप्त हो गया और अधर्म धर्मताको। अतएव हे महाभागे ! तुमको हित और अहित कहना चाहिये ॥ १५२ ॥

बकुलोवाच—

नक्षत्रं श्रवणं तस्य गोत्रं वासिष्ठसंज्ञकम् ॥१५२॥ ऊचुः पुरातना मत्स्यकूर्मकृष्णादिरूपिणम् ॥

बकुला बोली—उनका नक्षत्र तो श्रवण और गोत्र वासिष्ठ है। पुराणके जाननेवाले इनको मत्स्य, कूर्म इत्यादि रूपवाले कहते हैं ॥ १५३ ॥

राजोवाच—

गोत्रमत्रेर्महाभाग नक्षत्रं मृगशीर्षकम् ॥१५३॥ सीतासत्यादिरूपायाः पद्मवत्या विदुर्बुधाः ॥ उभयोर्वचनं श्रुत्वा गुरुर्योगं विचिन्त्य सः ॥ हर्षोद्रिक्तमना भूत्वा सत्यमाह महामतिः ॥१५४॥

राजा बोले—हे महाभाग ! सीता सती इत्यादिके रूपवाली पद्मावतीके गोत्र तो अत्रि और नक्षत्र मृग-

शीर्षक है, ऐसा विद्वान् बताते हैं। दोनोंके वचन सुनकर योगका विचारकर हर्षसे भरे हुए महामति बृहस्पतिने सत्य-सत्य कहा ॥१५४॥

गुरुरुवाच—

नाडीकूटं विशेषेण सूत्रकूटं विशेषतः ॥ योनिकूटं चानुकूलं ग्रहाश्च शुभदर्शनाः ॥१५५॥ सर्वं विचार्य भूपालः स्वार्थभावं समाश्रितः ॥ सम्मन्त्र्य बन्धुमित्राद्यैः कन्यादानं कुरु प्रभो ॥१५६॥ एवं गुरुवचः श्रुत्वा विचार्याशु विचक्षणः ॥ भक्त्या परमया राजा स्वार्थभावं समाश्रितः ॥१५७॥ ज्ञातिबान्धवसम्बन्धिसुहृन्मित्रजनैर्युतः ॥ मन्त्रं चकार राजेन्द्र कन्यादाननिमित्तकम् ॥१५८॥ ते सर्वे बन्धुवर्गाश्च राजानं प्रत्यपूजयन् ॥ सभां च कारयामास रत्नसिंहासने स्थितः ॥१५९॥ वाचयित्वाथ पुण्याहं कन्यानिश्चयकारणात् ॥ ताम्बूलं दक्षिणां चादात्पूजयित्वा गणाधिपम् ॥ भुजमुद्धृत्य राजेन्द्रः सभामध्ये वचोऽब्रवीत् ॥१६०॥

गुरु बोले—नाड़ीकूट विशेषतासे है और सूत्रकूट भी विशेषता होसे है। योनिकूट भी अनुकूल एवं ग्रह भी शुभ दृष्टिके हैं। हे राजा! हे प्रभु! स्वार्थभाव लेकर, सब विचारकर, बन्धु-मित्रादिकोंसे मंत्रणा कर, कन्यादान दीजिये। हे राजेन्द्र! गुरुके इस प्रकारके वचनको सुन और शीघ्र विचारकर, स्वार्थभावका आश्रय ग्रहण किया हुआ वह विचक्षण राजा बहुत भक्तिसे ज्ञाति (जाति), बांधव, सम्बन्धी, सुहृद मित्रादिके साथ कन्यादानके लिये मंत्रणा करने लगा। उन सब बन्धुओंने भी राजाका अभिनन्दन करते हुए सभा करवायी और रत्नोंके आसनपर बैठे हुए वह राजा कन्याके निश्चयके लिये पुण्याह वाचन करवा, ताम्बूल और दक्षिणा दे, गणेशजीकी पूजा कर, सभामें हाथ उठाकर बोले ॥१६०॥

राजोवाच—

पद्मावतीं प्रदास्यामि श्रीनिवासाय शार्ङ्गिणे ॥ यूयं बन्धुगणाश्चात्र दयां कुरुत मां प्रति ॥१६१॥ प्रतिज्ञामकरोदित्थं कन्यार्थे वेङ्कटेशितुः ॥ स चोवाच महाराजो गुरुं गुरुजनप्रियः ॥१६२॥

राजा बोले—शार्ङ्गधारी श्रीनिवासको पद्मावती दूंगा, आप बन्धुगण मेरे प्रति दया कीजिये। इस प्रकार श्रीवेङ्कटेशको कन्या देनेके लिये उस राजाने प्रतिज्ञा की और गुरुजनोंके प्यारे वह महाराज बोले ॥१६२॥

राजोवाच—

**किं कार्यं वद विप्रेन्द्र सङ्कल्पानन्तरं मया ॥ राजानमब्रवीद्राजन्नङ्गिरा देवतागुरुः ॥१६३॥**

राजा बोले—हे विप्रेन्द्र, संकल्पके उपरान्त मुझे क्या करना चाहिये ? हे राजन ! देवताओंके गुरु अङ्गिरा उस राजासे बोले ॥१६३॥

बृहस्पतिरुवाच—

**विलिख्य पत्रिकां राजञ्छ्रीनिवासाय विष्णवे ॥ विप्रं प्रेषय राजेन्द्र तस्यागमनकारणात् ॥ १६४ ॥ स्वगुरोर्वाक्यमाकर्ण्य राजा गुरुमभाषत ॥१६५॥**

बृहस्पति बोले—हे राजन ! श्रीनिवास विष्णुके लिये पत्रिका लिखकर, उनको बुलानेके लिये उनके पास ब्राह्मण भेजिये । अपने गुरुके वचनको सुनकर राजाने बृहस्पतिसे कहा ॥१६५॥

राजोवाच—

**किं लेख्यं प्राकृतैर्विद्वन्नप्राकृतशरीरिणः ॥ तथापि लेखनीयं यत्तद्ब्रूहि गुरुसत्तम ॥१६६॥ आकाशराजवचनं श्रुत्वा गीष्पतिरादरात् ॥ लिखित्वा बोधयामास राज्ञस्तस्य महात्मनः ॥१६७॥ गुरूपदिष्टमार्गेण विलिलेख स पत्रिकाम् ॥**

राजा बोले—हे विद्वान ! अप्राकृत शरीरवालेको प्राकृत मनुष्यों द्वारा क्या लिखा जाय, तथापि, हे गुरुवर ! जो कुछ लिखनेके योग्य है सो कहिये । आकाशराजाके वचन सुन, आदरपूर्वक लिखकर बृहस्पतिजीने उस महात्मा राजाको समझाया; और गुरुके बताये हुए मार्गसे राजाने पत्रिका लिखी ॥१६८॥



अथ श्रीनिवासं प्रति वियन्नृप
लिखितविवाहपत्रिकाप्रकारः




अप्राकृताय नित्याय सच्चिदानन्द-
मूर्तये ॥१६८॥ स्वतन्त्रायाद्वितीयाया-
नन्तरूपाय शार्ङ्गिणे ॥ भक्तप्रियाय
भक्त्यैकवेद्योपादेयरूपिणे ॥ १६९ ॥
देवाधिदेवपूज्याय ब्रह्मपूज्याय विष्णवे ॥
श्रीनिवासाय कृष्णाय वेङ्कटाचलवासिने ॥१७०॥ साङ्गैस्सर्वै-
श्च वेदाद्यैरागमैः सपुराणकैः ॥ अवेदितानन्तगुणकर्मणे श्रीधराय
ते ॥१७१॥ आशीर्वादं करिष्यामि बन्धुत्वात्ते सुरोत्तम ॥ त्वत्पा-
दपद्मसन्वीक्षाकाम आकाशनामकः ॥१७२॥

अथ विवाह निश्चय पत्रिका

हे सुरोत्तम, अप्राकृत, नित्य, सच्चिदानन्दमूर्ति, स्वतन्त्र, अद्वितीय, अनन्तरूप, शार्ङ्गधारी, भक्तप्रिय, भक्तिहीसे जानने योग्य, उपादेयरूपी, देवताओंके भी देवता, पूज्य, ब्रह्मासे पूज्य, विष्णु, श्रीनिवास, कृष्ण, श्रीवेङ्कटाचलवासी, अङ्गोंके साथ सब वेदादि, शास्त्रों और पुराणोंसे नहीं जानने योग्य तथा अनन्त गुण और कर्मवाले! आप श्रीधरको, तुम्हारा बन्धु होनेके कारण, तुम्हारे चरणकमलोंके दर्शनका इच्छावाला, आकाश नामक मैं आशीर्वाद करता हूं ॥१७२॥

आकाशराजाका चिट्ठी लिखना [ पृष्ठ २१८ ]



किं लेख्यं प्राकृतैर्विद्वन्नप्राकृतशरीरिणि ।
तथापि लेखनीयं यत् तद् ब्रूहि गुरुसत्तम ॥
गुरूपदिष्टमार्गेण विलिलेख स पत्रिकाम् ।

त्वदाश्रयं समाकांक्षँल्लेखयाम्यथ माधव ॥ स्त्रीपुत्रभ्रातृभिः साकं सर्वे कुशलिनो वयम् ॥१७३॥ त्वदनुग्रहमात्रेण वसामोऽत्र हरे पुरे ॥ सर्वेषां भवतां क्षेमं पत्रद्वारा निबोधय ॥१७४॥

हे माधव ! तुम्हारे आश्रयकी इच्छा करते हुए स्त्री, पुत्र, भ्रातादिकोंके साथ कुशलपूर्वक हमलोग आपके अनुग्रहमात्रसे ही यहां नारायणपुरमें सुखसे रहते हैं। आप अपने सब किसीका कुशल पत्र द्वारा बताइये ॥१७४॥

चैत्रशुक्लत्रयोदश्यामेतत्पत्रं विलिख्यते ॥ कन्यां पद्मावतीं तुभ्यं ददामीति मतिर्मम ॥१७५॥ तामङ्गीकुरु गोविन्द विवाहविधिपूर्वकम् ॥ शुको वेत्ति गुरुर्वेत्ति हृदयं मम सर्वतः ॥१७६॥ मा कुरुष्वात्र सन्देहं कन्यार्थं पुरुषोत्तम ॥ वैशाखशुक्लदशाशमीभृगुवारे शुभे दिने ॥१७७॥ बन्धुभिः सह संप्राप्य मामुद्धृत्य गणैः सह ॥ हर्षेण पाणिग्रहणं कर्तव्यं मे मनोगतम् ॥१७८॥ अधिकं लेखनीयं ते किमस्ति पुरुषोत्तम॥ शुको वदति यत्सत्यं तत्सर्वं कुरु केशव ॥१७९॥ इत्याशिषः सन्तु महानुभाव ते समस्तकल्याणगुणार्णव प्रभो ॥ नित्याय सत्याय सुखस्वरूपिणे समस्तलोकप्रभवे महात्मने ॥ १८० ॥

चैत्र शुक्ल त्रयोदशीको यह पत्र लिखा जाता है। मैं अपनी पद्मावती नामक कन्या आपको दूंगा, यह मेरा विचार है। हे गोविन्द ! उसको विवाहकी विधिपूर्वक अंगीकार कीजिये। मेरे हृदयको श्रीशुकदेवजी और गुरु बृहस्पति सर्वथा जानते हैं। हे पुरुषोत्तम ! कन्याके लिये आप सन्देह न कीजिये। वैशाख शुक्ल दशमी भृगुवारके शुभ दिनमें बन्धुओंके साथ आकर, मेरे बन्धुबान्धवोंके साथ मेरा उद्धार कर, हर्षसे मेरे मनोनुकूल पाणिग्रहण कीजिये। हे पुरुषोत्तम ! आपको अधिक क्या लिखना है ? हे केशव ! जो श्रीशुकदेवजी कहते हैं उसे सत्य कीजिये। हे महानुभाव, समस्त कल्याण और गुणोंके समुद्र, प्रभु, नित्य, सत्य, सुखस्वरूप, समस्त लोकके स्वामी तथा महात्मा ! आपको यह आशीर्वाद है ॥१८०॥

इत्थं लिखित्वा वरपत्रिकां शुभामाकाशराजो जगदीशसन्निधिम् ॥ संप्रेषयामास शुकं महान्तं सपुत्रमित्रः सहबान्धवानुगः ॥१८१॥ क्रोशमात्रमुपागम्य शुकं वचनमब्रवीत् ॥

इस प्रकार शुभ वरपत्रीको लिखकर पुत्र, मित्र एवं बान्धवके साथ आकाशराजाने महात्मा शुकदेवजीको श्रीजगदीशके पास भेजा; और एक कोस उनके साथ आकर राजाने शुकदेवजीसे कहा ॥१८२॥

*राजोवाच—*

येन केन प्रकारेण तस्य चित्तं वशीकुरु ॥१८२॥ अयुतं स्वर्णलक्षं वा कोटिमर्बुदमेव वा ॥ दास्यामि द्रव्यनिचयं नात्र कार्या विचारणा ॥ १८३ ॥ एवमुक्तो महीदेवो गतः शेषाचलं प्रति ॥ मध्यं गते दीप्तकरे महात्मा समागतस्तत्र शुकस्सशिष्यः ॥१८४॥ हरेर्जनन्याऽनुगतो विरागी तद्दर्शनाह्लादगताध्वशेषः ॥ अम्बामवीक्ष्य चायान्तीं वेङ्कटाद्रिशिखामणिः ॥१८५॥ माता च नागता कस्मादिति चिन्तापरो हरिः ॥ एतस्मिन्नेवं काले तु कृष्णद्वैपायनात्मजम् ॥१८६॥ ददर्श सशिरःपाणिं कृतकार्यविनिश्चयम् ॥ शुकं प्राह स्म भक्त्यैव चासनादुत्थितो हरिः ॥१८७॥

राजा बोले—जिस किसी प्रकारसे उनके चित्तको वशमें कीजिये। लाख-लाख स्वर्णके दश हजार अथवा करोड़ अर्बुद तक द्रव्य मैं दूंगा, इसमें विचार नहीं करना चाहिये। ऐसा कहे जानेपर उस ब्राह्मणने शेषाचलको प्रस्थान किया, और हरिकी माता भी उनके पीछे पीछे गयीं। उनके दर्शनके आनन्दमें मार्गको अन्त कर विरागी महात्मा शुकदेवजी शिष्यके साथ सूर्यके मध्याह्न होनेपर वहां आये। श्रीवेङ्कटाचलके शिखामणि श्रीहरि अम्बाको नहीं आती हुई देखकर यह चिन्ता करने लगे कि माता क्यों नहीं आयीं। इसी समयके बीचमें शिरपर हाथ रखे हुए एवं कार्यको समाप्त किया है ऐसे निश्चयसे जाते हुए कृष्णद्वैपायनके पुत्र शुकदेवजीको हरिने देखा और आसनसे उठकर भक्तिपूर्वक उनसे बोले ॥१८७॥

*श्री श्रीनिवास उवाच—*

कार्यं मदीयं विप्रेन्द्र पक्वं वाऽपक्वमेव वा ॥१८८॥

श्रीनिवास बोले—हे विप्रेन्द्र ! मेरा कार्य पक्व है वा अपक्व ? ( अर्थात् हुआ वा नहीं )

*श्रीशुक उवाच—*

**कार्यं तव कृपासिन्धो पक्वमेव न संशयः ॥ शुभं वाक्यमिति श्रुत्वा दण्डवत्प्रणतं भुवि ॥ १८९ ॥ समालिङ्ग्य शुकं कृष्णो भक्त्या हर्षवशं गतः ॥ अतिचित्रचरित्रात्मा शुकमाह महीपते ॥१९०॥**

श्रीशुकदेवजी बोले—हे कृपासिन्धु ! आपका कार्य पक्का हो गया है, इसमें सन्देह नहीं। इस शुभ वाक्यको सुनकर श्रीकृष्णने दण्डवत् प्रणाम करते हुए शुकदेवजीको आलिंगन कर उनकी भक्तिसे प्रसन्न हो गये। और हे महीपति ! अत्यन्त विचित्र चरित्रवाले हरिने शुकसे कहा ॥१९०॥

*श्री श्रीनिवास उवाच—*

**वदन्ति लोका अनृतान् सहस्रान् विवाहकामा नरजन्मनो ये ॥ ते यान्ति मद्धाम किमस्य वाच्यं जगत्कुटुम्बस्य विवाहकामे ॥१९१॥ नरो बिभर्ति स्वसुतं स्वभार्यां स्वजनं गृहम् ॥ ब्रह्माण्डं भवनं विद्धि ब्रह्मा मे नाभिसम्भवः ॥१९२॥ या लक्ष्मीर्मम कल्याणी ये चान्ये मम चौरसाः ॥ चतुर्नवतिलक्षाणि जीवाः सन्ति ह्यसङ्ख्यकाः ॥१९३॥एतेषां रक्षणे बद्धदीक्षोऽहं मुनिसत्तम॥१९४॥ महाकुटुम्बयुक्तस्य मम कल्याणकारणात् ॥ यन्मिथ्या भाषितं स्वामिंस्त्वयाऽद्य मुनिसत्तम ॥१९५॥ त्वत्कृतस्योपकारस्य प्रतिदातुं न विद्यते ॥ तथापि तव दास्यामि शरीरालिङ्गनं मुने ॥१९६॥ मच्छरीरादद्रिष्ठन्तु न विजानामि ते शुभम्॥ एवमुक्त्वाऽङ्गसङ्गं च तस्यादात्पुरुषोत्तमः ॥१९७॥**

श्रीनिवास बोले—जो मनुष्यके विवाहके निमित्त एक सहस्र अनृत (असत्य) बोलते हैं, वे भी मेरे धामको जाते हैं—संसाररूपी कुटुम्बवालेके विवाहके लिये तो कहना ही क्या है। मनुष्य अपने पुत्र, भार्या, स्वजन, गृह इत्यादिका भरणपोषण करता है। हे विद्वन् ! मेरे नाभीसे उत्पन्न ब्रह्मा ब्रह्माण्डरूपी घरको बनाते हैं। जो लक्ष्मी हैं वह मेरी कल्याणी भार्या हैं और जो अन्य ९४ लाख * असंख्य जीव हैं वे मेरे पुत्र हैं। हे

*यहां पर ९४ लाख जीवोंकी योनि लिखी है, किन्तु अन्य स्थानोंमें ८४ लाख कही गयी है। गोस्वामी तुलसीदासजीने लिखा है:—'आकर चारि लाख चौरासी'।

मुनिसत्तम ! इनकी रक्षाके लिये मैं सदा उद्यत रहता हूं। हे स्वामी ! हे मुनिसत्तम ! मुझ बहुत बड़े कुटुम्बवालेकी भलाईके कारण आप जो अनृत बोले हैं, आपके किये हुए इस उपकारकी बराबरी नहीं हो सकती। हे मुनि ! तथापि मैं अपने शरीरका आलिंगन दूंगा। अपने शरीरसे बढ़कर आपके योग्य दूसरा शुभ मैं नहीं जानता, ऐसा कहकर पुरुषोत्तमने उनको अपने अंगका संग दिया ॥१९७॥

**त्वत्पुण्यस्यावधिर्नास्ति मत्सङ्गस्तव पुण्यजः ॥ यथा त्वया कृतं कर्म तथा पूर्वं कपीश्वरः ॥१९८॥ सीतानिमित्तं यः कर्म कृतवान्मारुतात्मजः॥ तस्मै प्रादां महीदेव सन्तुष्टः सहभोजनम् ॥१९९॥ सत्यलोकाधिपत्यं च सीतावार्तावलम्बिने ॥ तस्माद्वरिष्ठं ते कर्म मुने तापसपुङ्गव ॥२००॥ एवमुक्त्वा सुभद्राणि वाक्यानि विविधानि च ॥ ततः प्रोवाच भगवान् कक्षे किं भाति भानुवत् ॥२०१॥**

आपके पुण्यका अन्त नहीं है, मेरा संग आपके पुण्यका फल है। जैसा आपने कार्य किया है वैसा ही पूर्वमें हनुमानने किया था। सीताके लिये वायुपुत्र हनुमानने जो काम किया था, उसके लिये, हे महीदेव ! उस सीताके समाचारके देनेवालेको मैंने भोज और सत्यलोकका आधिपत्य भी दिया था। हे तपस्वियोंमें श्रेष्ठ मुनि ! उससे भी आपका काम श्रेष्ठ है। इस प्रकार अनेकों सुन्दर शुभ वाक्योंको कहकर भगवान्ने पूछा—आपके कक्ष ( पार्श्व ) में सूर्यके जैसा क्या शोभता है ॥२०१॥

अथ श्री श्रीनिवाससन्निधौ वियन्नृपप्रेषित शुकोक्तविवाहोदन्तः

*श्रीशुक उवाच—*

**राजराजेन लिखिता पत्रिका पुरुषोत्तम ॥ २०२ ॥ प्रोक्तं तव महाभाग पूर्वमेवास्य कारणम् ॥ इत्युक्तः सन् रमाकान्तः पत्रिकां शिरसा दधौ ॥२०३॥**

आकाशराजा द्वारा भेजा हुआ श्रीनिवासके प्रति विवाहका वृत्तान्त

श्रीशुकदेवजी बोले—हे पुरुषोत्तम ! यह आकाशराजकी लिखी हुई शुभ पत्रिका है। हे महाभाग ! इसका कारण मैंने आपसे पूर्व ही कहा है। इतना कहे जानेपर लक्ष्मीपतिने पत्रिकाको शिरपर रखा ॥२०३॥

*श्री श्रीनिवास उवाच—*

**कुशली वर्तते राजा भार्या तस्य पतिव्रता ॥ भ्राता तस्य महाभागः पुत्रस्तस्य विशाम्पतेः ॥२०४॥**

श्रीनिवास बोले—राजा, उसकी पतिव्रता स्त्री, भाई, महाभाग पुत्र इत्यादि कुशलसे हैं ॥२०४॥

*श्रीशुक उवाच—*

सर्वं तु कुशलं तस्य भगवन् भूतभावन ॥२०५॥ एवमुक्तः पपाठाथ पत्रिकां पुरुषोत्तमः ॥ पठन् हृष्टमना भूत्वा वाचमूचे रमापतिः ॥२०६॥

श्रीशुकदेवजी बोले—हे प्राणियोंके प्रिय ! उनके यहां सब कुशल है। ऐसा कहे जानेपर पुरुषोत्तमने पत्रिका पढ़ी और पत्रिका पढ़ते हुए लक्ष्मीपतिने प्रसन्न मन होकर कहा ॥२०६॥

*श्री श्रीनिवास उवाच—*

पत्रिका लिख्यते विप्र मयाऽऽकाशनृपाय च ॥ त्वद्वाचमनुसृत्यैव राज्ञः प्रीतिविधायिका ॥२०७॥

श्रीनिवास बोले—हे विप्र ! आपके वचनके अनुसार राजाकी प्रीतिको बढ़ानेवाली एक पत्रिका आकाशराजाको लिखता हूं ॥२०७॥

ततः स पत्रं पुरुहूतमित्रं स्वयं लिलेखाथ महार्थसंयुतम् ॥ अत्यन्तसंहृष्टमनःप्रसूचकं कृष्णावतारे प्रति रुक्मिणीमिव ॥२०८॥

तब बहुतही आनन्द सूचित करनेवाला तथा गम्भीर अर्थवाला पत्र श्रीहरिने इन्द्रके मित्र आकाशराजाको स्वयं लिखा, जिस प्रकार कृष्णावतारमें रुक्मिणीको लिखा था ॥२०८॥



## अथ वियन्नृपं प्रति श्रीनिवासविलिखितशुभपत्रिका

राजाधिराजपूज्याय सुधर्मतनयाय च ॥ नमो नमोऽतिभक्त्यैव कृत्वेयं पत्रिकाधुना ॥२०९॥ लिख्यते श्रीनिवासेन शुभविज्ञप्तिगर्भिणी ॥

### आकाशराजाके प्रति श्रीनिवासकी लिखी हुई पत्रिका

राजाधिराजसे पूज्य, सुधर्मके तनयको अति भक्तिसे नमस्कार करके यह शुभ समाचारवाली पत्रिका श्रीनिवाससे लिखी जाती है ॥२१०॥

श्रीमद्राजाधिराजेन्द्रकिरीटावृष्टपादुक ।२१०॥ अस्मद्बन्धुवरे धनाढ्यगुणपूर्णसमृद्धिमन् ॥ सुधर्मतनयाकाशनाम्नाशासु सुकीर्तिमन् ॥२११॥ नमो नमोऽस्तु ते राजञ्छ्रीनिवासस्य शार्ङ्गिणः ॥ श्रीनिवासेन बालेन विज्ञप्तिः क्रियते त्वियम् ॥२१२॥ भवद्भिर्लिखितं दृष्ट्वा सन्तोषो ह्यभवन्मम ॥

श्रीमान् राजाधिराज, इन्द्रके किरीटसे घिसे हुए पादुकावाले, हमारे बन्धुओंमें श्रेष्ठ, धनवान्, गुणसे पूर्ण, समृद्धिशाली, आकाश नामक,सुधर्मके पुत्र, शासनमें सुन्दर कीर्तिवाले, आपको श्रीनिवास शार्ङ्गधारीका बार-बार नमस्कार है। बालक श्रीनिवाससे यह विदित किया जाता है कि आपके लिखे हुए पत्रको देखकर इसे सन्तोष हुआ ॥२१३।

वैशाखशुद्धदशमीभृगुवारे महोत्सवे ॥२१३॥ अङ्गीकरोमि राजेन्द्र कन्यां तव विशाम्पते ॥ यथा पुरा सागरो मे कन्यादानं सुकीर्तिमान् ॥२१४॥ तथा दत्त्वा तु मे कन्यां भवेस्त्वं बहुकीर्तिमान् ॥ यथा वै सागरान् पूर्वान् कपिलेन निपातितान् ॥२१५॥ भ-

गीरथो महाराजो गङ्गामादाय वै पुरा ॥ उद्धृत्य कीर्तिमापेदे तथा त्वं राजसत्तम ॥२१६॥ दत्त्वा मे सुभगां कन्यां तव पूर्वोत्तरं कुलम् ॥ उद्धृत्य बहुलां कीर्तिं लभस्वेतरदुर्लभाम् ॥ २१७ ॥ लिखितव्यं विशेषेण किन्तेऽस्ति नृपसत्तम ॥ विशेषज्ञोऽसि धर्मात्मा वेत्ति सर्वं शुको मुनिः ॥२१८॥ इति विज्ञापनं ज्ञेयं मम प्रणतिपूर्वकम् ॥२१६॥

हे राजेन्द्र ! वैशाख शुक्ल दशमी भृगुवारके महोत्सवमें, हे विशाम्पति ( राजा ) मैं आपकी कन्याको अङ्गीकार करूंगा। जिस प्रकार पूर्वमें सागरने मुझको कन्यादान दे सुन्दर कीर्तिवाला हुआ उसी प्रकार आप भी मुझको कन्यादान देकर बहुत कीर्तिवाले हो जायं। जिस प्रकार महाराज भगीरथने गङ्गाको लाकर, कपिलके द्वारा पहिलेके भस्म किये गये सगरके पुत्रोंका उद्धार कर कीर्ति पायी, उसी प्रकार, हे राजसत्तम ! मुझको अपनी सुन्दरी कन्या देकर, अपने पूर्व और आगेके कुलोंका उद्धार कर दूसरोंसे दुर्लभ उनकी कीर्तिको पाइये। हे नृपसत्तम ! आपको विशेष लिखना क्या है ? हे धर्मात्मा ! आप भी विशेष जाननेवाले हैं और श्रीशुकदेवमुनि तो सभी जानते हैं, यह मेरा प्रणाम पूर्वक विज्ञापन है ॥२१६॥

इत्थं लिखित्वा वरपत्रिकां शुभां शेषाद्रिनाथो मुनिना शुकेन ॥ संप्रेषयामास सुरेन्द्रपूज्यं पुरं नृपेन्द्रस्य वियन्नृपस्य ॥२२०॥

इस प्रकार शुभ वरपत्रीको लिखकर शेषाचलके स्वामीने शुकदेवमुनिके द्वारा, राजाओंमें श्रेष्ठ आकाशराजाके यहां देवताओंसे पूज्य नगरीमें भेजा ॥२२०॥

श्री श्रीनिवास उवाच—

अविदित्वा कुलं गोत्रं नाम संस्थानमन्दिरम् ॥ कथं दास्यति राजेन्द्रः कन्यां मम महीसुर ॥२२१॥

श्रीनिवास बोले—हे ब्राह्मण ! मेरे कुल, गोत्र, नाम, रहनेके घरको नहीं जाननेवाला वह राजेन्द्र मुझको किस प्रकार अपनी कन्या देगा ॥ २२१ ॥

श्रीशुक उवाच—

न कुलं न च गोत्रं ते न जन्ममरणे हरे ॥ न जरा न च वृद्धिश्च न च स्थानं न चाश्रयः ॥ २२२॥ विडम्बमात्रं गोविन्द कुरुषे पुरुषोत्तम ॥ न तेऽपेक्ष्यं कुलं गोत्रं विदितस्य जगत्पतेः ॥२२३॥ मम वाक्याद्वियद्राजः कन्यां ते सम्प्रदास्यति ॥ मम वाक्याज्जगन्नाथ दयां कृत्वा वियन्नृपे ॥२२४॥ इयं च कन्या गोविन्द स्वीकार्या कृपया त्वया ॥२२५॥

श्रीशुकदेवजी बोले—हे हरि! आपके न कुल है, न गोत्र है, न जन्म है, न मरण है, न बुढ़ापा है, न वृद्धि है, न स्थान है और न आश्रय ही है। हे पुरुषोत्तम गोविन्द! आप केवल विडम्बना करते हैं; प्रसिद्ध एवं संसारके स्वामी आपके कुल और गोत्रके विचारकी अपेक्षा नहीं है। मेरी आज्ञासे आकाशराजा आपको कन्यादान करेंगे। हे जगन्नाथ गोविन्द! मेरे कहनेसे आप भी आकाशराजापर कृपा करके इस कन्याको स्वीकार कीजिये ॥ २२५ ॥

अथ श्रीनिवासाज्ञया शुकस्य वियन्नृपनगरं प्रत्यागमनम्

इति स्तुत्वा शुकस्तीव्रं विसृष्टो हरिणा पुनः ॥ हरिसन्दर्शनाल्लब्धहर्षो राजपुरं ययौ ॥२२६॥ गते तु मुनिशार्दूले भगवान्भक्तवत्सलः ॥ मातरं सन्ददर्शाथ मार्गश्रान्तां वयोगताम् ॥ वकुलां प्रणिपत्याथ माधवो वाक्यमब्रवीत् ॥२२७॥

श्रीनिवासकी आज्ञासे शुकदेवजीका आकाशराजके नगरमें लौट आना

भगवान्‌के दर्शनसे हर्षित श्रीशुकदेवजी भगवानकी तीव्र स्तुति कर, पुनः भगवानसे विसर्जन किये जानेपर राजाके नगरमें गये। श्रेष्ठ मुनिके चले जानेपर भक्तवत्सल भगवान्‌ने वृद्ध एवं मार्गसे थकी हुई माताको देखा। माधव वकुलाको प्रणाम कर वचन बोले ॥ २२७ ॥

अथ श्रीनिवासाय वकुलाकथितपद्मावतीपरिणयोदन्तः

श्री श्रीनिवास उवाच—

अम्ब कालविलम्बस्ते किमर्थं कमलानने ॥ का तत्र वार्ता नगरे तन्ममाचक्ष्व भामिनि ॥२२८॥

श्रीनिवासके प्रति बकुलाके कहे हुए पद्मावतीके विवाहका वृत्तान्त

श्रीनिवास बोले—हे कमलके समान मुखवाली माता! आपको विलम्ब किस कारणसे हुआ? उस नगरमें क्या वार्ता है, हे भामिनी! सो मुझसे कहो ॥ २२८ ॥

बकुलोवाच —

साधिता बहुयत्नेन कन्या ते पुरुषोत्तम ॥ दैवमेव परं मन्ये पौरुषं नैव कारणम् ॥२२९॥ नारायणाश्रमात्कृष्ण धर्मदेवी समागता ॥ दैवयोगेन सा भद्र सम्प्राप्ता राजमन्दिरम् ॥२३०॥ उवाच तां भवद्दानयोग्यां कन्यां नृपात्मज ॥ कन्यापि त्वदृतेऽन्यं सा नैवाकाङ्क्षति लौकिकम् ॥२३१॥ तयोर्वाक्यं समाकर्ण्य दातुं ते सोऽन्वमन्यत ॥ इमां दास्यामहे पुत्रीं वेङ्कटाद्रिनिवासिने ॥२३२॥ इत्थं सङ्कल्पयामास सभामध्ये मुदा नृपः ॥ त्वयैव जातमेतद्धि न दैवं भवतः परम् ॥२३३॥

बकुला बोली—हे पुरुषोत्तम! आपके लिये कन्याका प्रबन्ध बहुत यत्नसे हुआ है; भाग्यहीको मैं बढ़कर मानती हूं; केवल पौरुषसे कार्यसाधन नहीं होता। हे कृष्ण! नारायणके आश्रमसे एक धर्मदेवी आयी थी, दैवयोगसे वह राजमंदिरमें गयी और हे राजाके पुत्र! उस कन्याको आपहीके योग्य बताया। वह कन्या भी आपके अतिरिक्त और किसी प्राकृत मनुष्यको नहीं चाहती है। उन दोनोंके वचन सुनकर उस राजाने आपहीको देनेका विचार किया है। यह पुत्री श्रीवेङ्कटाचलवासी हरिको ही दूंगा—इस प्रकारकी प्रतिज्ञा राजाने सभामें आनन्दसे की है; यह सब आपहीसे हुआ है, आप जैसा दूसरा दैव नहीं है ॥२३३॥

इति मातृवचः श्रुत्वा किञ्चिद्धास्यमुखो हरिः ॥ मातरं प्रतिनन्द्याथ चिन्तयन् वाक्यमब्रवीत् ॥२३४॥

इति श्रीमद्भविष्योत्तरपुराणे श्रीवेङ्कटाचलमाहात्म्ये पद्मावतीपरिणयनिश्चयो नाम नवमोऽध्यायः ॥९॥

इस प्रकार माताके वचन सुनकर, कुछ हास्ययुक्त मुखसे हरि माताको प्रसन्न करके सोचते हुए वचन बोले ॥२३४॥

इति नवमोऽध्यायः ॥९॥

# दशमोऽध्यायः ॥१०॥

लाने ब्रह्मादिक सुरन, गमन शेष विहगेश ।
देखन व्याह सुरेशके, पहुंचे सब गिरिशेष ॥१॥
नमस्कार दर्शन मिलन, ब्रह्मा प्रभु संवाद ।
रुद्रादिक पुनि आगमन, ईश ईशसे वाद ॥२॥
श्रीको ला करवीरसे, शेषाचल पहुंचाय ।
पीछे व्याह बरातका, वर्णन कहि नहिं जाय ॥३॥

अथ श्रीनिवासाज्ञया ब्रह्माद्यानयनार्थं शेषगरुडगमनम्

जनक उवाच—

**मातुर्वचनमाकर्ण्य कृतवान् किं रमापतिः ॥ तन्ममाचक्ष्व भगवन् सविस्तारं सतां प्रिय ॥१॥**

*श्रीनिवासकी आज्ञासे ब्रह्मादिको लानेके लिये शेष और गरुड़का जाना*

जनक बोले—माताके वचन सुनकर लक्ष्मीपतिने क्या किया ? हे सन्तोंकी गति भगवान् ! वह मुझसे विस्तारपूर्वक कहिये ॥१॥

शतानन्द उवाच—

**त्वं हरेरसि भक्तेषु प्रथमोऽतिप्रियः सदा ॥ तस्माद्धरिकथासक्तमनास्ते तु वदामि तत् ॥ २ ॥ स्वयमानन्दपूर्णोऽपि कर्मभुङ्नरवद्धरिः ॥ मात्रा चोदितमाकर्ण्य तामूचे मधुरं वचः ॥३॥**

शतानन्द बोले—आप भगवान्‌के भक्तोंमें प्रथम और सदा अत्यन्त प्यारे हैं तथा भगवान्‌की कथामें आसक्त हैं ; इसलिये आपसे यह कहता हूं । स्वयं आनन्दसे पूर्ण होनेपर भी मनुष्योंके जैसा कर्मके भोगी हरि माताके वचन सुनकर उससे मधुर वचन बोले ॥३॥

*श्रीनिवास उवाच—*

**महोत्सवं विधातुं हि मम बुद्धिर्न जायते ॥ अबन्धोर्बन्धुयुक्तस्य सम्बन्धो न प्रशस्यते ॥ ४ ॥ ययोरेव समं वित्तं ययोरेव समं कुलम् ॥ तयोर्विवाहो मैत्री च नोत्तमाधमयोः क्वचित् ॥५॥ विवाहश्च विवादश्च समयोरेव शोभते ॥ अहमेकः सोऽपि बन्धुसमेतो धरणीपतिः ॥६॥ कथं नृपस्यास्य ममोचितः स्यादबन्धुना बन्धुयुतस्य सङ्गः ॥ भवेत्सुखं नेति वदन्ति सन्त इत्यद्य चिन्ता खलु बाधते माम् ॥ ७ ॥ बन्धुहीनस्य मे राजा कथं कन्यां प्रदास्यति ॥ वासुदेववचः श्रुत्वा बकुला वाक्यमब्रवीत् ॥८॥**

श्रीनिवास बोले—महोत्सवको सम्पन्न करनेका मेरा विचार नहीं होता । बिना बन्धुवालेका बंधुवालेके साथ सम्बन्ध होना अच्छा नहीं कहा जाता । जिन दोनोंके धन वा कुल समान हों उन्हीं दोनोंमें विवाह और मित्रता अच्छी होती है—उत्तम और अधमके साथ कभी नहीं । विवाह और विवाद समानमें ही शोभा पाते हैं; मैं तो एक हूं और वह धरणीपति बन्धुके सहित हैं । बन्धुके सहित इस राजाके साथ बन्धुरहित मुझसे सम्बन्ध कैसे उचित होगा ? सन्त लोग इसमें सुख नहीं कहते । आज मुझको यह चिन्ता दुःख दे रही है कि मुझ बन्धुहीनको राजा किस प्रकार कन्या देगा । वासुदेवके वचनको सुनकर बकुला बोली ॥ ८ ॥

*बकुलोवाच—*

**त्वादृशः पुरुषो लोके नासत्यं वदति क्वचित् ॥ सत्यमेव प्रशंसन्ति मुनयो वीतकल्मषाः ॥९॥ शुकस्त्वत्कार्यनिष्ठस्तु देवानां गुरुरङ्गिराः ॥ सद्धर्मणो महीपस्य तस्याशां मा वृथा कुरु ॥१०॥ स्मर बन्धून् सुरान् सर्वान् ब्रह्मरुद्रपुरोगमान् ॥ पुत्रान् पौत्रांस्तथा भ्रातॄन् स्नुषाश्च पुरुषोत्तम ॥११॥ तदाऽऽगतास्तु गोविन्द दुर्लभं च कलौ युगे ॥ सोऽपि पश्यतु राजर्षिस्त्वत्सम्बन्धिजनानिह ॥१२॥**

बकुला बोली—तुम्हारे जैसे पुरुष संसारमें असत्य कभी नहीं कहते । निर्द्वन्द्व मुनिगण भी सत्यहीकी प्रशंसा करते हैं । शुकदेवजी कर्मसंन्यासमें निष्ठ हैं, एवं अंगिरा देवताओंके गुरु हैं । सद्धर्मवाले राजाकी आशा भी आप व्यर्थ न कीजिये । हे पुरुषोत्तम ! ब्रह्म, रुद्र इत्यादि सब देवताओं तथा उनके पुत्र, पौत्र,

भ्रातृ एवं स्नूषा ( पतोहू ) आदि सबको स्मरण कीजिये। कलियुगमें आये हुए दुर्लभ गोविन्दको और उनके सम्बन्धी जनोंको वह राजर्षि यहांपर देखें ॥ १२ ॥

**मातुर्वचनमाकर्ण्य मनसा शेषपक्षिणौ॥ सस्मार पृथिवीपालः श्रीनिवासः सतां गतिः ॥ १३ ॥ तावागतौ शेषवियच्चरौ तदा क्षणेन शेषाचलवल्लभान्तिकम् ॥ ददर्श भक्त्या पुरतः स्थिताविमौ निवेदयामास पुराणपूरुषः ॥१४॥**

माताके इस वचनको सुनकर पृथ्वीको पालन करनेवाले तथा सन्तोंके आश्रय श्रीनिवासने मनसे शेष और गरुड़को स्मरण किया। तब क्षणमात्रमें शेषाचलके प्रियके पास आये हुए शेष और गरुड़को पुराण पुरुषने देखा और भक्तिसे सामने खड़े हुए इन दोनोंको आज्ञा दी ॥ १४ ॥

*श्रीनिवास उवाच—*

**पक्षिराड् गच्छ मे पुत्रं सत्यलोकेश्वरं नृप ॥ गच्छाहिभूषणं शेष मम पौत्रमुमापतिम् ॥१५॥ इत्युक्त्वा पत्रिकां ताभ्यां विलिख्यादाच्छुभात्मिकाम् ॥ प्रणिपत्याथ विश्वेशं खगमार्गेण जग्मतुः ॥१६॥ सत्यलोकं ततो गत्वा ब्रह्माणं भास्करोपमम् ॥ दृष्ट्वा नत्वाऽथ भक्त्यैव पक्षिराट् पत्रिकामदात् ॥१७॥ पितामहस्तु तं दृष्ट्वा गरुडं प्रत्यभाषत ॥**

श्रीनिवास बोले—हे पक्षिराज ! सत्यलोकके स्वामी मेरे पुत्रके पास जाओ। और हे शेष ! तू सर्पोंके भूषणवाले मेरे पौत्र उमापतिके पास जाओ—ऐसा कहकर शुभ-पत्रिका लिखकर उनको दी। तब वे दोनों संसारके स्वामीको प्रणाम कर आकाशमार्गसे गये। तब सत्य लोकमें जाकर, सूर्यके सदृश ब्रह्माको देखकर एवं भक्तिसे प्रणाम करके गरुड़ने पत्रिका दी। ब्रह्मा भी गरुड़को देखकर उनसे बोले ॥ १८ ॥

*ब्रह्मोवाच—*

**चिरकालेन सम्प्राप्तः पक्षिराट् कश्यपात्मज ॥१८॥ कुत्रास्ति श्रीनिवासः स वासुदेवः पिता मम ॥ पितामहवचः श्रुत्वा पक्षिराट् वाक्यमब्रवीत् ॥१९॥**

ब्रह्मा बोले—हे कश्यपके पुत्र पक्षिराज ! आप बहुत दिनपर आये हैं। मेरे प्रसिद्ध पिता वासुदेव श्रीनिवास कहांपर हैं ? पितामहके वचन सुनकर पक्षिराज बोले ॥ १९ ॥

*गरुड उवाच—*

वासुदेवो वसत्यद्य वैकुण्ठगिरिमूर्द्धनि ॥ तद्विवाहार्थमायान्तं मां विद्धि चतुरानन ॥२०॥ नारायणेन लिखितां पत्रिकामवलोकय ॥ पपाठ पत्रिकामित्थं चोदितोऽनेन वै विधिः ॥२१॥

गरुड बोले—हे ब्रह्मन् ! वासुदेव भगवान् वैकुण्ठ पर्वतके शिखरपर रहते हैं । हे चतुरानन ! मुझको उनके विवाहके लिये आया हुआ समझें । नारायणकी लिखी हुई पत्रिका देखें । इनसे इस प्रकार कहे जानेपर ब्रह्माने पत्रिका पढ़ी ॥२१॥

चिरञ्जीवाय पुत्राय ब्रह्मणे नाभिजन्मने ॥ श्रीवेङ्कटाद्रिनाथस्य श्रीनिवासस्य मङ्गलाः ॥२२॥ वैदिक्य आशिषः सर्वाः सर्वदा सन्तु पुष्कलाः ॥ कलावाकाशराजो मे कन्यादानं करिष्यति ॥ २३ ॥ पत्रिकादर्शनादेव सपुत्रः सपरिग्रहः ॥ सलोकपालः सस्त्रीकः सगन्धर्वः सहोरगः ॥२४॥ समागत्याशु कल्याणं दृष्ट्वा गच्छ यथासुखम् ॥

नाभीसे उत्पन्न चिरञ्जीवि पुत्र ब्रह्माको श्रीवेङ्कटाचलके स्वामी श्रीनिवासका सब मंगल बहुत और वैदिक आशीर्वाद होवे । कलियुगमें आकाशराजा मुझको कन्यादान करेंगे । पत्रिका देखनेहीसे पुत्र, सेना स्त्री, स्त्रीयुक्त लोकपालों, गन्धर्वों एवं उरगोंके साथ शीघ्र आ विवाहको देख सुखपूर्वक चले जाओ ॥२४॥

पत्रिकार्थमिति ज्ञात्वा किञ्चिद्ध्यानमुपागतः ॥२५॥ सन्तोषमतुलं लेभे विधिः कल्याणकौतुकी ॥ द्वारपालान् समाहूय चेदं वचनमब्रवीत् ॥ २६ ॥ भेरीदुन्दुभयश्चाद्य वाद्यन्तां सर्वतोमुखम् ॥ भवद्भिर्मे ख्यापयद्भिर्गमनं धरणीतले ॥२७॥ इत्युक्ता द्वारपालास्ते वाद्यानि समवादयन् ॥ ब्रह्माणं प्रणिपत्याथ निदेशज्ञो वचोऽब्रवीत् ॥२८॥ प्रयाणभेरीनिनदः सुमङ्गलः संश्रूयते सर्वजनैः

कुतूहलात् ॥ कं देशमुद्दिश्य पितामहाद्य सन्ताड्यते वाद्यगणो वदाद्य ॥२९॥

विवाह देखनेके लिये उत्सुक ब्रह्माने पत्रिकाके अर्थको जान, कुछ ध्यानयुक्त हो अतुल सन्तोषको प्राप्त किया और द्वारपालोंको बुलाकर यह बात कही कि आज सभी ओर भेरी और दुन्दुभी बजाओ, जिनके शब्दसे तुम लोगोंके साथ मेरा पृथ्वीतलपर जाना विदित हो। इस वचनको सुनकर बाजाओंको बजाते हुए वे द्वारपाल ब्रह्मासे बोले कि हे श्रीमन्! यात्राकी भेरीका सुन्दर मङ्गलपूर्ण शब्द सब मनुष्योंसे कौतूहलके साथ सुना जाता है। हे पितामह! आज किस देशकी यात्राका उद्देश्य करके बाजे बजाये जाते हैं ॥२९॥

## अथ श्रीनिवासविवाहदर्शनार्थं शेषाचलं प्रति ब्रह्मायागमनम्

चतुर्मुख उवाच—

भारतेऽस्मिन्महावर्षे जम्बूद्वीपस्य दक्षिणे ॥ शेषाचलं समुद्दिश्य नियुङ्क्ष्व चतुरङ्गिणीम् ॥३०॥ सेनां परां ममेत्युक्त्वा सेनापतिमथाब्रवीत् ॥ स्कन्दाह्वय सुरान् सर्वान् सर्वान् दिक्पालकानिति ॥३१॥ सत्यलोकजनान् सर्वान्स्वयमाह पितामहः॥ भवन्तो रसिकाः सर्वे कल्याणार्थं कलौ युगे ॥३२॥ श्रीनिवासस्य कृष्णस्य पितुर्मे पुरुषोत्तमाः ॥ समागच्छन्तु सर्वे मे सेनाधीशा मया सह ॥ इति ब्रह्मवचः श्रुत्वा सेनानाथास्तमब्रुवन् ॥३३॥

## श्रीनिवासके विवाह-दर्शनके लिये ब्रह्माका शेषाचलको आना

"इस बड़े भारतवर्षमें जम्बूद्वीपके दक्षिण शेषाचल चलनेके उद्देश्यसे मेरी श्रेष्ठ चतुरङ्गिनी सेनाको तैयार करो" ऐसा कहकर सेनापतिसे ब्रह्मा बोले—हे स्कन्द! सब देवताओं और सब दिग्पालोंको बुलाओ। पश्चात् सत्यलोकके मनुष्योंसे स्वयं ब्रह्माने कहा कि आप रसिक लोग सर्वश्रेष्ठ पुरुष और सेनाधीश मेरे पिता श्रीनिवास श्रीकृष्णके विवाहोत्सवके लिये कलियुगमें कल्याणके लिये मेरे साथ आवें। ब्रह्माके इस वचनको सुनकर सेनापतिगण उनसे बोले ॥३३॥

सेनापतय ऊचुः—

वार्षिकं देहि नो ब्रह्मन् नागच्छामस्त्वया सह ॥३४॥ एवमुक्तो

धनं तेषां दत्तवान् स पितामहः ॥ वाहनानि विचित्राणि रथांश्च विविधानपि ॥३५॥ भूषणानि च वस्त्राणि रत्नानि विविधानि च ॥ पत्नीः सन्देशयामास विवाहार्थं पितामहः ॥३६॥

सेनापतिगण बोले—हे ब्रह्मन् ! हमलोगोंको एक वर्षके लिये पर्याप्त धन दे दीजिये, हमलोग आपके साथ नहीं जायंगे। ऐसा कहे जानेपर ब्रह्माने उनको धन, अनेक प्रकारके वाहन, अनेकों रथ, भूषण, वस्त्र, एवं अनेकों रत्न भी दिये। ब्रह्माने विवाहमें चलनेके लिये अपनी पत्नीको भी आज्ञा दी ॥३६॥

स्वयमन्तर्गतः श्रीमानात्मानं समभूषयत् ॥ दधार शिरसा शीघ्रं किरीटं पश्चिमेन तु ॥३७॥ अन्येन शिरसा धाता रक्तोष्णीषम-धारयत् ॥ दक्षिणेनोत्तमाङ्गेन शिरोवेष्टमबन्धयत् ॥३८॥ कुशकेतुं कुशश्रेष्ठैर्धृतवानन्यमूर्धनि ॥ नीलमौक्तिकवैडूर्ययुते मकरकुण्ड-ले ॥ कर्णयोर्भूषयामास करौ कनककङ्कणैः ॥ ३९ ॥ कवचं धार-यामास नवरत्नसमाकुलम् ॥

श्रीमान् ब्रह्मा स्वयं भीतर जाकर अपनेको भूषित करने लगे, और उन्होंने पश्चिमके मस्तकपर किरीट रखा, दूसरे शिरपर रक्तवर्ण उष्णीष ( पगड़ी ) धारण किया, दक्षिण शिरपर शिरोवेष्ठन ( पाग ) बांधा, एवं अन्य शिरपर श्रेष्ठ कुशाओंकी ध्वजा धारण की, नीलमणि, मुक्ता तथा वैडूर्यसे युक्त मकरके आकारके कुण्डलसे कानोंको एवं कङ्कणसे हाथोंको भूषित किया, नव प्रकारके रत्नजटित कवच धारण किये ॥४०॥

काञ्चीदामसमाबद्धां मुक्तामणिविभूषिताम् ॥ ४० ॥ सरस्वतीं च सावित्रीं गायत्रीं वै ततः परम् ॥ ४१ ॥ पुत्रान् पौत्रांस्तथा स-र्वान् सवाजिरथकुञ्जरान् ॥ मनःपुत्रान् वीर्यपुत्रान्समाहूय पितामहः ॥ ४२ ॥ अलङ्कारयुतान् कृत्वा गमनाभिमुखोऽभवत् ॥ स्वसेनां पुरतः कृत्वा नाभिजो निर्ययौ पुरात् ॥४३॥

सोनेकी करधनी पहनी हुई तथा मुक्तामणिसे विभूषित सरस्वती, सावित्री और गायत्रीको, तत्पश्चात् घोड़े रथ और हस्तियों सहित पुत्रों, पौत्रों, मानसपुत्रों और वीर्यपुत्रोंको बुलाकर एवं अलङ्कारके साथ करके ब्रह्माजी चलनेको तैयार हुए और अपनी सेनाको आगे करके नगरसे बाहर हुए ॥४३॥

हंसं चन्द्रप्रतीकाशमारुरोह पितामहः ॥ विमानानि विचित्राणि वध्व आरुरुहुस्तदा ॥ ४४ ॥ घण्टाचामरनिर्घोषैः सहिता नृप रेजिरे ॥ शूरा वीरासना धीर गजाश्वरथसंस्थिताः ॥ ४५ ॥ समुच्छ्रितैर्ध्वजैर्दीर्घपताकैः समलङ्कृताः ॥ नानायुधधरा वीरास्तेषां मध्ये पितामहः ॥ ४६ ॥ रराज चन्द्रमा राजंस्ताराभिर्गगने यथा ॥

ब्रह्मा चन्द्रमाके समान प्रकाशवाले हंसपर चढ़े, तब तरह-तरहके विमानोंपर वधुएं चढ़ीं। हे राजा! घण्टाके शब्द और चामरसे ब्रह्मा शोभने लगे। हे धीर! हाथी, घोड़े और रथपर बैठे हुए वीर आसनवाले शूरगण नाना प्रकारके आयुध धारण किये, हुए और ऊंची ध्वजा और लम्बी पताकाओंसे शोभित थे। हे राजन! उनके बीचमें ब्रह्मा आकाशमें तारागणोंके बीचमें चन्द्रमा जैसे शोभते थे ॥४६॥

श्वेतच्छत्रं हेमदण्डं रत्नकुम्भयुतं धृतम् ॥ ४७ ॥ योजनत्रयविस्तीर्णं दशलक्षजनैर्वृतम् ॥ नभः प्रकाशयामास देवदेवस्य वै तदा ॥४८॥

सोनेके डण्डेवाले, रत्नके कलशसे युक्त, तीन योजनतक फैले हुए, दश लाख मनुष्योंसे घिरे हुए, देवताओंके देवता ब्रह्मा द्वारा धारण किये गये श्वेतच्छत्रने आकाशको प्रकाशित कर दिया ॥४८॥

अवादयन्महाराज वाद्यानि विविधानि च ॥ भेरीश्च नवसाहस्रं दुन्दुभीनां शतत्रयम् ॥४९॥ मृदङ्गपणवान् ढक्कामड्डुनिस्साणडिण्डिमान् ॥ गोमुखान्मुरजान्वीणास्तथा वै झर्झरादिकान् ॥५०॥ वर्वरैः शतशृङ्गैश्च दीर्घशृङ्गैश्च सस्वरैः ॥ सप्तस्वरैः सप्तरागैः सर्पाणमपि मोहकैः ॥५१॥ पूत्कारैश्च वषट्कारैर्ध्वनयद्भिश्च वारिजान् ॥ गन्धर्वैर्गाननिपुणैः स्वरभेदविचक्षणैः ॥५२॥ वीणादण्डस्थसूत्रैश्च वादयद्भिः सुखावहैः ॥ नर्तकैर्नटकैश्चैव हाहाहूहूमुखैर्वृतम् ॥ ५३ ॥ स्तूयमानास्तुम्बुरुणा सूतमागधवन्दिभिः ॥ सुराः सर्वे श्रीनिवासमहोत्सवदिदृक्षवः ॥ ५४ ॥ अनुजग्मुर्महाराजं ब्रह्माणं यान्तमग्रतः ॥

हे महाराज ! वे लोग नव सहस्र भेरी, तीन सौ दुन्दुभी, मृदङ्ग, पणव, ढक्का, शङ्ख, निस्साण, डमरू, गोमुख, मुरज, वीणा, झर्झर इत्यादि अनेकों बाजोंको बजाने लगे। वर्बर, शतशृङ्ग, सप्तस्वर, सप्तराग तथा सर्पोंको मोहित करनेवाले सस्वर-दीर्घशृङ्ग, क्रमशोंको ध्वनियुक्त करते हुए फुत्कार और वषट्कारों, गानमें निपुण, स्वरभेदको जाननेवाले तथा वीणाके दण्डमें लगे हुए तारोंको सुखसे बजाते हुए गन्धर्वों, नाचनेवाले, हाहा-हूहू इत्यादि नटोंसे घिरे हुए, तुम्बुरु, सूत एवं मागध बन्दियोंसे स्तुत, आगे जाते हुए ब्रह्माजीके पीछे पीछे श्रीनिवासके महोत्सवको देखनेकी इच्छावाले सब देवगण गये ॥५४॥

सत्यलोके तपोलोके जनोलोके ततः परम् ॥५५॥ महर्लोके सुवर्लोके स्वर्गलोके महीतले ॥ एवं क्रमान्महाभागं ब्रह्माणं ददृशुर्जनाः ॥५६॥ ऋषयः सत्त्वसम्पन्नास्तदात्यद्भुतदर्शनम् ॥ वासुदेवसमाकारं वैश्वानरसमाननम् ॥५७॥ केचिन्नारायणं तं हि गाम्भीर्यादब्रुवंस्ततः ॥५८॥ केचिन्नारायणो नायं वदनानां विपर्ययात् ॥ इत्यब्रुवंस्ततः सर्वे मत्वा तं चतुराननम् ॥५९॥ हंसस्थं भूषणैर्युक्तं कवचाडम्बरान्वितम् ॥ अपृच्छंस्ते महीदेवा ब्रह्मणोऽनुचराञ्जनान् ॥६०॥

सत्यलोक, तपोलोक, जनलोक, तिसके पश्चात् महर्लोक, सुवर्लोक, स्वर्गलोक तथा महीतलमें क्रमसे सात्विक ऋषियोंने उस अद्भुतदर्शन, वासुदेवके समान आकार तथा अग्निके समान मुखवाले सब लोकोंके स्वामी एवं सबसे पूर्व उत्पन्न साक्षात् ब्रह्माको देखा। कोई उनके गाम्भीर्य गुणके कारण उनको नारायण कहते थे, कोई उनके मुखकी भिन्नताके हेतु कहते थे कि यह नारायण नहीं हैं। पश्चात् उन सब ब्राह्मणोंने हंसपर चढ़े हुए, भूषण पहने हुए एवं कवचके आडम्बर (वेश) से युक्त उनको ब्रह्मा जान उनके सेवकोंसे पूछा ॥६०॥

*महीदेवा ऊचुः—*

कं वा देशं प्रति जनाः कुतो वागमनं विधेः ॥

ब्राह्मण बोले—हे सेवको ! कहांसे और किस देशकी ओर ब्रह्माका जाना होता है ॥६१॥

*जना ऊचुः—*

गच्छामोऽद्य विवाहार्थं श्रीनिवासस्य भूतलम् ॥६१॥ तेनैवा-

कारिताः सर्वे सत्यलोकान्महीश्वराः ॥ तत् श्रुत्वा वचनं तेषामनु-
जग्मुर्महर्षयः ॥६२॥ साग्निहोत्राः सपुत्राश्च सशिष्याः सपरिग्रहाः ॥
एवं विभवमास्थाय ब्रह्मागाद्वेङ्कटाचलात् ॥६३॥ वादित्राणां स्वने-
नैव दुन्दुभीनां च निस्स्वनैः ॥ आपूरितं जगदिदं सशैलवनका-
ननम् ॥ ६४ ॥

सेवकगण बोले—आज हमलोग श्रीनिवासके विवाहमें पृथ्वीपर जाते हैं। हे ब्राह्मण! उनसे ही हम सब सत्यलोकसे बुलाये गये हैं। उनके उस वचनको सुनकर अग्निहोत्र, पुत्रों, शिष्यों एवं स्त्रियोंके साथ सब महर्षि उनके पीछे पीछे गये। इस प्रकारके विभवमें होकर ब्रह्माजी श्रीवेङ्कटाचलको आये और दुंदुभी आदि बाजाओंके शब्दसे पर्वत और वनके साथ यह सारा संसार भर गया ॥ ६४ ॥

अथ श्रीनिवासं प्रति चारादिज्ञापितब्रह्मागमनम्

एतस्मिन्नेव काले तु भगवाँल्लौकिकैः समः ॥ अदृष्ट्वा खगराजं
तं मातरं वाक्यमब्रवीत् ॥६५॥

ब्रह्माजीका आगमन

इसी समय भगवान् गरुड़को न देखकर लौकिक मनुष्योंके समान श्री मातासे यह वचन बोले ॥६५॥

*श्रीनिवास उवाच—*

किं नागतोऽम्ब ! खगराट् पुत्रार्थं प्रेषितो मया ॥ मार्गे निरोधि-
तः केन किं वा स्यात्कारणं वद ॥६६॥ एवं वदति गोविन्दे चारो
दृष्टिपथं गतः ॥ चारं दृष्ट्वातिसन्तोषं स लेभे पुरु-
षोत्तमः ॥६७॥

श्रीनिवास बोले—हे माता! पुत्रको लानेके लिये मुझसे भेजा हुआ गरुड़ क्यों नहीं आया? वह मार्गमें किसके द्वारा रोक लिया गया? अथवा क्या कारण है, सो कहो। गोविन्दके इस प्रकार बोलते ही एक चर दृष्टिगोचर हुआ और उसको देखकर पुरुषोत्तम अत्यन्त सन्तुष्ट हुए ॥ ६७ ॥

*श्रीनिवास उवाच—*

क्व चार मम पुत्रस्तु केन वै प्रेषितो भवान् ॥

श्रीनिवास बोले—हे चर! मेरा पुत्र कहाँ है? तुमको किसने भेजा है ॥६८॥

चार उवाच—

आगमिष्यति गोविन्द गङ्गां तरति ते सुतः ॥ ६८ ॥ एवं वदति तच्चारे पुनरेकोऽभ्यभाषत ॥

चर बोला—हे गोविन्द ! आपके पुत्र आ जायेंगे; वे गंगाको पार करते हैं। उस चरके ऐसा कहते ही पुनः एक दूसरा चर आकर बोला ॥ ६९ ॥

द्वितीय उवाच—

गोदावरीं तरति ते पुत्रः पौरजनैः सह ॥६९॥ स दूतवचनं श्रुत्वा किञ्चिद्धास्यमुखोऽभवत् ॥ तदाऽऽजगाम गरुडः पक्षिराड् ब्रह्मचोदितः ॥७०॥ प्रणिपत्य श्रीनिवासं प्रोवाच च वचस्तदा ॥

दूसरा चर बोला—आपके पुत्र मनुष्योंके साथ गोदावरीको पार करते हैं। वह श्रीनिवास उस दूतके वचन सुनकर प्रसन्नमुख हो गये। उसी क्षण ब्रह्माके भेजे हुए गरुड़ आये, और श्रीनिवासको प्रणाम कर यह वचन बोले ॥ ७१ ॥

गरुड़ उवाच—

कृष्णां तीर्त्वा तु ते पुत्रः श्रीशैलमुपगम्य च ॥७१॥ अहोबिलं चाससाद तत्राज्ञतोऽहमागतः ॥ इत्येवमुच्यमाने तु गरुडेन महात्मना ॥७२॥ तत्क्षणेनैव राजेन्द्र विष्वक्सेनोऽभिवन्द्य च ॥ विनीतो वाचमूचेऽथ श्रीनिवासं परात्परम् ॥७३॥

गरुड़ बोले—आपके पुत्र कृष्णाको पार कर, श्रीशैलके पास आकर अहोबिलके पास बैठे हैं और वहींसे उन्होंने आज्ञा दी है कि मैं आ गया हूं। हे राजेन्द्र ! महात्मा गरुड़से इस प्रकार कहे जानेपर परात्पर श्रीनिवासको उसी क्षण प्रणाम कर, विनीत हो विष्वक्सेन यह वचन बोले ॥ ७३ ॥

विष्वक्सेन उवाच—

तुम्बुरोस्तीर्थमासाद्य हरे तत्रावगाहते ॥ पुत्रस्तव महाराजः परमात्मा चतुर्मुखः ॥७४॥ पुत्रस्तवागच्छतीह भवद्दर्शनकौतुकी ॥ सेनापतौ वदत्येवं भगवानुत्थितो मुदा ॥ ७५ ॥ गरुडस्कन्धमारूढः प्रयाणाभिमुखो हरिः ॥ उत्तराभिमुखः प्रायात्पुत्र-

स्नेहेन भूमिप ॥७६॥ विष्वक्सेनोऽतिवेगेन ब्रह्माणमुपगम्य च ॥ आनम्य शिरसा भक्त्या प्रोवाच वचनं विधिम् ॥७७॥

विष्वक्सेन बोले—हे हरि ! हे परमात्मा ! चार मुखवाले आपके पुत्र ब्रह्मा तुम्बुरू तीर्थ पहुंचकर वहां स्नान करते हैं। आपके दर्शनकी इच्छावाले आपके पुत्र यहां आते हैं। सेनापति विष्वक्सेनके इस प्रकार कहते ही भगवान् आनन्दसे उठे, और हे राजा ! गरुड़के कन्धेपर चढ़, चलनेके लिये तैयार श्रीहरि पुत्रके स्नेहसे उत्तरकी ओर गये। विष्वक्सेन भी अत्यन्त वेगसे ब्रह्माके पास जाकर भक्तिपूर्वक शिरसे प्रणाम कर उनसे वचन बोले ॥ ७७ ॥

अथ चतुर्मुखश्रीनिवासयोः परस्परप्रयाणावलोकन संवादः

*विष्वक्सेन उवाच—*

भगवानरविन्दाक्षस्तव दर्शनलालसः ॥ गरुडस्कन्धमारुह्य समागच्छति तेऽन्तिकम् ॥ ७८ ॥ तच्छ्रुत्वा वचनं तस्य विष्वक्सेनस्य धीमतः ॥ चन्द्रबिम्बनिभाद्धंसादवरुह्य पितामहः ॥७९॥ पादाभ्यामागमच्छीघ्रं यत्रागच्छति केशवः ॥ स ददर्श महाराज जनकं चतुराननः ॥८०॥ दण्डवत्प्रणिपत्याथ चाग्रे बद्ध्वा करौ स्थितः ॥ स चावरुह्य गरुडादाससाद पितामहम् ॥८१॥ उत्थाप्यालिङ्ग्यग्य चाप्येनमुवाच मधुसूदनः ॥

ब्रह्मा और श्रीनिवासका परस्पर संवाद

विष्वक्सेन बोले—आपको देखनेकी इच्छासे कमलनयन भगवान् गरुड़के कन्धेपर चढ़कर आपके पास आते हैं। उस बुद्धिमान विष्वक्सेनके उस वचनको सुनकर ब्रह्मा उस पूर्ण चन्द्रके समान प्रकाशवाले हंससे उतरकर जहां केशव आ रहे थे, वहां पैदल चलकर शीघ्र आये। हे महाराज ! उस चार मुखवालेने पिताको देखा और दण्डवत् प्रणाम करके हाथोंको बांध आगे ठहर गये। वह भी गरुड़से उतरकर पितामह ब्रह्माके पास आये और भगवान इनको उठा आलिङ्गन कर बोले ॥ ८२ ॥

*श्रीनिवास उवाच—*

उत्तिष्ठ तात भद्रं ते पश्य मामातुरं कृशम् ॥८२॥ बहुकालेन

ते बुद्धिर्मम दर्शनलालसा ॥ तदेव परमं मन्ये त्वद्बुद्धिसमं दर्शने ॥८३॥ कौतूहलं नोपनीता कदाचिदपि येन वै ॥ न कश्चिद् ध्रियते क्वापि त्वां विना चतुरानन ॥८४॥ वदत्येवं हृषीकेशे नोवाच चतुराननः ॥ मुहूर्तद्वयमात्रं तु श्रीनिवासोऽपि नोचिवान् ॥८५॥ आनन्दबाष्पसंपूर्णनयनौ तौ परस्परम् ॥ स्नेहात्प्रफुल्लवदनौ मुखं ददृशतुर्मुदा ॥८६॥ पितुर्मुखं सुतोऽपश्यत्सुतवक्त्रं हरिस्तथा ॥ ततः सन्तुष्टमनसौ लेभाते परमां मुदम् ॥८७॥ तौ क्रीडन्तौ श्रीनिवासब्रह्माणौ देवसंसदि ॥ पितापुत्रौ तदा दृष्ट्वा सत्यलोकनिवासिनः ॥८८॥ लेभिरे परमानन्दं तन्मायामोहिताः सुराः ॥

श्रीनिवास बोले—हे तात ! तुम्हारा कल्याण हो, उठो और मुझ आतुर और कृशको देखो। बहुत कालसे मेरा मन तुम्हारे दर्शनके लिये लालायित है। हे चतुरानन ! यह तो आश्चर्य है कि तुम्हारा मन मेरे दर्शनके लिये कभी उत्सुक नहीं हुआ। तुम्हारे बिना कहीं भी कोई भी, नहीं जीवित रहता। हृषीकेशके इस प्रकार कहे जानेपर ब्रह्मा तथा श्रीनिवास भी दो मुहूर्ततक चुप रहे और आनन्दके आँसूसे पूर्ण नेत्रवाले एवं स्नेहसे प्रफुल्ल मुखवाले हो वे दोनों आनन्दसे परस्पर मुख देखते ही रहे। पिताके मुखको पुत्र तथा पुत्रके मुखको हरि देख रहे थे; तब सन्तुष्ट मनवाले वे दोनों परम आनन्दको प्राप्त हुए। देवताओंकी सभामें उन पिता-पुत्र, श्रीनिवास और ब्रह्माको क्रीड़ा करते हुए देखकर उनकी मायासे मोहित सत्यलोकके निवासी देवताओंने परम आनन्द लाभ किया ॥८६॥

*देवा ऊचुः—*

न तेन सदृशः पुत्रो न तेन जनको भुवि ॥८९॥ इत्येवं प्रशशंसुस्ते भक्तिस्नेहवशं गताः ॥

देवता बोले—उनके समान पृथ्वीपर न पुत्र है और न उनके समान पिता ही—ऐसा कहते हुए भक्ति और स्नेहके वशमें होकर वे सब उनकी प्रशंसा करने लगे ॥८०॥

ततः सुतं समाश्वास्य परिमृज्याक्षिजं जलम् ॥९०॥ ब्रह्मणः पाणिमुद्धृत्य स्वनेत्रजलमुन्मृजन् ॥ वल्मीकस्थानमाश्रित्य पुत्रेण सह तस्थिवान् ॥९१॥ तत्र च श्रीनिवासस्तमुवाच पुरुषोत्तमः ॥

तब पुत्रको आश्वासन देकर, नेत्रके जलको पोंछकर, ब्रह्माके हाथको पकड़कर, अपने नेत्रसे जल छोड़ते हुए वल्मीकके स्थानको आश्रय कर पुत्रके साथ पुरुषोत्तम श्रीनिवास ठहर गये और उनसे वचन बोले ॥६२॥

*श्रीभगवानुवाच—*

**कच्चित्ते कुशलं तात स्नुषाया मम संप्रति ॥६२॥ पुत्रपौत्रप्रपौत्राणां क्षेमं प्रब्रूहि मे सुत ॥**

श्रीभगवान् बोले—हे तात ! तुम्हारी और मेरी स्नुषा ( बहू ) का कुशल तो है ? हे पुत्र ! अपने पुत्रों, पौत्रों और परपौत्रोंका कुशल मुझसे कहो ॥ ६३ ॥

*ब्रह्मोवाच—*

**सर्वं मङ्गलमस्माकं त्वत्प्रसादेन केशव ॥६३॥ तात मे वद ते क्षेमं पुराणपुरुषोत्तम ॥**

ब्रह्मा बोले—हे केशव ! आपके प्रसादसे हमारा सब कुशल है । हे तात, पुराण पुरुषोत्तम ! आप अपना कुशल मुझसे कहिये ॥ ६४ ॥

अथ चतुर्मुखं प्रति श्रीनिवासज्ञापितस्वपरिणयोदन्तः

*श्रीभगवानुवाच—*

**द्वापरान्ते कृतं कर्म शृणु पुत्र समाधिना ॥६४॥ वैकुण्ठे शेषतल्पस्थं भृगुः पादतलेन माम् ॥ तताडोरसि ते मातुरास्पदे कमलासन ॥६५॥ तदा ते जननी पुत्र करवीरपुरं गता ॥ तेन दुःखेन सन्तप्तस्त्यक्त्वा वैकुण्ठमुत्तमम् ॥६६॥ इहागतो वेङ्कटाद्रिं नात्रापश्यं निकेतनम् ॥ अत्र वल्मीकगं नित्यं चोलभृत्यः कुठारतः ॥ ६७॥ प्राहरन्मां राजभार्याताडितो धनुकोपतः ॥ बृहस्पतेः प्रसादेन जीवामि करुणानिधेः ॥ ६८ ॥ अभिवादय कल्याणीं मातरं मम नन्दन ॥ इत्युक्तो बकुलां ब्रह्मा ववन्दे हरिमातरम् ॥ ६९ ॥**

## चतुर्मुखके प्रति श्रीनिवास द्वारा बताया हुआ विवाहका वृत्तान्त

श्रीभगवान् बोले - हे पुत्र ! द्वापरके अन्तमें किये हुए कर्मको ध्यानसे सुनो। हे कमलासन। वैकुण्ठमें शेष शय्यापर शयन करते हुए मुझको भृगुने अपने चरण तलसे वक्षस्थलमें तुम्हारी माताके समक्ष ही मारा। हे पुत्र! तब तुम्हारी माता करवीरपुरमें चली गयी, उस दुःखसे संतप्त मैंने उत्तम वैकुण्ठको छोड़कर यहां श्रीवेङ्कटाचलपर आकर कोई घर नहीं देखा। यहां वल्मीकमें सदा ठहरे हुए मुझको, गौके ऊपर कोपके कारण राजभार्यासे पीटे गये चोल राजके भृत्यने कुठारसे मारा। करुणानिधि बृहस्पतिकी कृपासे मैं जी रहा हूं। हे पुत्र मेरी माता कल्याणीका अभिवादन करो। इतना कहे जानेपर ब्रह्माने हरिकी माता वकुलाकी वन्दना की ॥९९॥

ब्रह्मोवाच—

जननी तव गोविन्द कुत्रेयं जनिता पुरा ॥ एतदाख्याहि भगवञ्छ्रोतुं कौतूहलं हि मे ॥१००॥

ब्रह्मा बोले—हे गोविन्द! यह आपकी माता पूर्वमें कहां पैदा हुई थी ? हे भगवन! यह आप मुझसे कहिये, मुझको सुननेके लिये कौतूहल हो रहा है ॥१००॥

श्रीभगवानुवाच—

यशोदा वकुला भूत्वा वर्तते वेङ्कटाचले ॥ रक्षितोऽहं तया भद्र बहुकालं पितामह ॥१०१॥ आपत्काले तु यो रक्षेत्तं विद्यात्पितरं गुरुम् ॥ कदाचिन्मृगयासक्तः पद्मतीर्थसमीपतः ॥१०२॥ आगामहं तत्र पुष्पवने कन्या उपागमन् ॥ तासां मध्ये विराजन्ती कन्या काचिदुपागमत् ॥१०३॥ यामाकाशप्रभोः पुत्रीं नाम्ना पद्मावतीं विदुः ॥ तामवेक्ष्यातिमोहान्मे मनस्तामेव कांक्षते ॥१०४॥ तामेव घटयाशु त्वं पुत्रोऽसि परमो मम ॥ वदत्येवं हृषीकेश शुश्रुवे दुन्दुभिस्वनः ॥१०५॥

श्रीभगवान् बोले—हे भद्र पितामह! यशोदा ही वकुला होकर श्रीवेङ्कटाचलपर रहती है, उसके द्वारा बहुत काल तक मेरी रक्षा की गयी है। आपत्तिकालमें जो रक्षा करे उसको पिता वा गुरु जानना चाहिये। किसी समय मृगयामें लगा हुआ मैं पद्मतीर्थके समीप आया। वहांके पुष्प वनमें बहुतसी कन्याएं आयीं, उनके बीचमें शोभती हुई कोई कन्या आयी, जिसको आकाशराजकी कन्या पद्मावतीके नामसे जानते हैं।

उसको देखकर अत्यन्त मोहसे मेरा मन उसीको चाहता है। तुम उससे मुझे मिलाओ, क्योंकि तुम मेरे सबसे बड़े पुत्र हो। भगवान्‌के ऐसा कहनेपर दुंदुभीका शब्द सुनायी दिया ॥ १०५ ॥

## अथ श्रीनिवासपरिणयार्थं शेषाचलं प्रति रुद्राद्यागमनम्

*श्रीभगवानुच—*

कस्य वाद्यमिदं ब्रह्मन् कश्च मामुपगच्छति ॥ वदत्येवं परे धाम्नि
नीलकण्ठोऽन्वपद्यत ॥१०६॥ पितामहं च पितरं ववन्दे वसुधा-
धिप ॥ पार्वत्या षण्मुखेनापि प्रमथाधिपसेवकैः ॥१०७॥ तमा-
लिङ्ग्य हृषीकेशः प्राह शङ्करमागतम् ॥ वत्सात्रायाहि निकटं तिष्ठ
भद्र वरासने ॥१०८॥

## श्रीनिवासके विवाहके लिये रुद्रादिका शेषाचलपर आना

श्रीभगवान् बोले—हे ब्रह्मा ! यह किसका बाजा है ? कौन मेरे पास आ रहा है ? ऐसा कहनेपर उस श्रेष्ठ धाममें नीलकण्ठ शिवजी आये। हे वसुधाके स्वामी ! उन्होंने पार्वती और सेनापति षट्मुखके साथ पितामह ( ब्रह्मा ) और अपने पिता ( श्रीनिवास ) को प्रणाम किया। उन आये हुए शंकरका आलिङ्गन कर हृषीकेश बोले—हे वत्स ! यहाँ आओ और समीपमें ही श्रेष्ठ आसनपर बैठो ॥ १०८ ॥

एवं सम्भाषमाणे तु नीलकण्ठेन केशवे ॥ ततः समागम-
रसवः कुबेरो नरवाहनः ॥१०९॥ यक्षेन्द्रपुत्रभृत्यैश्च भार्याबन्धु-
भिरन्वितः ॥ तमायान्तमुपालक्ष्य भगवानाह भूमिपः ॥११०॥
धनाधिप महाप्राज्ञ धनवान् भव सर्वदा ॥

इस प्रकार नीलकण्ठके साथ केशवकी बातचीत होते ही वहाँपर यक्ष, इन्द्र, पुत्र, भृत्य, भार्या एवं बन्धुजनोंके साथ मनुष्यके वाहनवाले साक्षात् कुबेर आये। हे भूमिपाल ! आते हुए कुबेरको लक्ष्य कर भगवान्‌ने कहा - हे महाप्राज्ञ धनेश ! आप सदा धनवान् बने रहें ॥ १११ ॥

इत्याशिषानन्दयति हृषीकेशे धनेश्वरम् ॥१११॥ स्वाहास्वधा-
भ्यां सहित आरूढो मेषवाहनम् ॥ अग्निश्चागात्सपुलश्च सबन्धु-
र्वेङ्कटाचले ॥ ११२॥ स जातवेदसं दृष्ट्वा जाताह्लादो जगत्पतिः ॥

## श्रीनिवासजीकी सज्जनगोष्ठी [ पृष्ठ ४२८ ]



देवानां च ऋषिणा च मानने शकर न्यधात् ।
देवाह्वाने कुमारं तु प्रत्युत्थाने च मन्थम् ।
गृहाण त्वं वीटिका च पाकार्थं ——— ॥

तमालिङ्ग्यातिवेगेन तिष्ठ तिष्ठेति चाब्रवीत् ॥११३॥ ततः प्रेतप-
पतिश्चापि स्वदूतैश्च स्वभार्यया ॥ स्ववाहनं समारुह्य प्राप शेष-
गिरिं स्वयम् ॥११४॥ चित्रगुप्तो महाप्राज्ञः सम्प्राप्तो राजसत्तम ॥
ततो जलपतिश्चागान्नक्रमारुह्य भक्तिमान् ॥ ११५ ॥ भार्यया
बहुरत्नाढ्यो नारायणगिरिं प्रति ॥ आरुह्य गजराजं स्वमिन्द्रः
साक्षाच्छचीपतिः ॥११६॥ भोगिराजगिरिं राजन् सर्वभोगालयो
महान् ॥ पौलोम्या सह पुत्रेण सम्प्राप्तस्त्रिदशेश्वरः ॥ यथार्हं
श्रीनिवासेन सत्कृतो निषसाद च ॥११७॥

भगवान्‌के इस प्रकार आशीर्वादसे कुबेरको आनन्दित करते समय पुत्रों, बन्धुओं, स्वाहा और स्वधाके साथ मेषवाहन अग्नि वहां श्रीवेङ्कटाचलपर आये । उस जगदीशने अग्निको देख, आनन्दयुक्त हो एवं अत्यन्त वेगसे उनको आलिङ्गन कर कहा—ठहरो ! ठहरो !! तब प्रेतपति यमराज भी अपने दूत और भार्याके साथ अपने वाहनपर चढ़कर शेषाचलपर पहुंचे । हे राजसत्तम ! तब महाप्राज्ञ चित्रगुप्त भी आ पहुंचे और भक्तिमान वरुण भी ग्राहपर चढ़कर भार्या और बहुत रत्नोंसे युक्त वहां नारायण पर्वतपर आये । हे राजन् ! इन्द्राणी और पुत्रोंके साथ देवताओंके स्वामी शचीपति, सब भोगोंके घर साक्षात् इन्द्र भी अपने हाथीपर चढ़कर महान् भोगिराज पर्वतपर आये और श्रीनिवाससे यथायोग्य सत्कृत होकर वहां ठहरे ॥११७॥

एवं समारुह्य च भारतीयुतः सुगन्धयुक्तः समुपाययौ गिरिम् ॥
भक्तोऽथ वायुस्तमिमं जनार्दनं क्षेमं च पप्रच्छ तदा मुदाऽन्वि-
तः ॥११८॥ स्थीयतामिति राजेन्द्र हरिर्वायुमभाषत ॥११९॥

इसी प्रकार भारती और सुगन्धसे युक्त भक्त वायु भी चढ़कर उस पर्वतपर आये और आनन्दयुक्त हो जनार्दन भगवान्‌से कुशल पूछा । हे राजेन्द्र ! हरिने वायुसे कहा—बैठिये ॥११९॥

एतस्मिन्नेव काले तु सम्प्राप्तौ चन्द्रभास्करौ ॥ मन्मथोऽप्या-
गमद्रूपी सरतिस्तुरगोपरि ॥१२०॥ मुनयश्च महाराज समाजग्मु-
र्महागिरिम् ॥ कश्यपोऽत्रिर्भरद्वाजो वामदेवश्च गौतमः ॥१२१॥
विश्वामित्रो वसिष्ठश्च वाल्मीकिर्जमदग्निजः ॥ पुलस्त्यश्च दधी-

चिश्च शुनश्शेपश्च गालवः ॥१२२॥ गार्ग्यः कृष्णो महाराज सपुत्राः सपरिग्रहाः ॥ गन्धर्वाप्सरसश्चैव सर्वे सिद्धाः सहोरगाः ॥१२३॥ एवं महर्षयो देवा राजानश्च समागताः ॥ विवाहार्थं समाजग्मुः सर्वे सम्भ्रमकातराः ॥१२४॥ समाश्वास्याथ गोविन्दो यथायोग्यं तदा नृप ॥ स्थीयतामिति चोवाच सर्वेषां पुरतो हरिः ॥१२५॥

इसी समय चन्द्रमा और सूर्य्य भी आये। कामदेव भी रूपधारण करके रतिके साथ घोड़ेपर आये। हे महाराज! पुत्र और परिवारके साथ कश्यप, अत्रि, भरद्वाज, वामदेव, गौतम, विश्वामित्र, वशिष्ठ, वाल्मीकि, जमदग्निके पुत्र, पुलस्त्य, दधीचि, शुनःशेप, गालव, गार्ग्य, कृष्ण इत्यादि सब मुनि, उरगोंके साथ गन्धर्व, अप्सरा और सब सिद्ध सब बड़े पर्वतपर आये। इस प्रकारसे महर्षि, देवता और राजा आदि सब लोग उत्सुक हो शीघ्रतासे विवाहोत्सव देखनेके लिये आये। हे राजा! गोविन्दने तब सबको यथायोग्य आसन देकर सबसे कहा कि "बैठिये" ॥१२५॥

अथ ब्रह्माज्ञया विश्वकर्मकृतपरिणयार्हपुरनिर्माणम्

ततोऽभूद्वासुदेवश्च विश्वकर्माक्षिगोचरः ॥ तमालोक्य हृषीकेश इन्द्रमाह स्म मन्युमान् ॥१२६॥

ब्रह्माकी आज्ञासे विश्वकर्मा द्वारा विवाहके योग्य नगरनिर्माण

तत्पश्चात् विश्वकर्मा भगवान्को दृष्टिगोचर हुआ; उसको देखकर रोषयुक्त भगवान् हृषीकेश इन्द्रसे बोले ॥१२६॥

श्रीभगवानुवाच—

इन्द्रास्य गर्ववाहुल्यं पश्य विश्वकृतोऽधुना ॥ भ्रातुर्बाहुबलादेष न जानाति हिताहितम् ॥ १२७ ॥ यथान्यान्पश्यति सुरांस्तथा मामपि पश्यति ॥ साधु जातं सुरश्रेष्ठ त्यजैनमसमञ्जसम् ॥१२८॥ अन्यं शालाकर्मरतं शुद्धं मद्भक्तिसंयुतम् ॥ नियोजय सुरश्रेष्ठ देवतागृहकर्मणि ॥ १२९ ॥ इत्यप्रियं वचः श्रुत्वा

विश्कर्मा नरेश्वर ॥ प्रणिपत्याह गोविन्दं वर्धकी भयवि-
ह्वलः ॥१३०॥

श्रीभगवान् बोले—हे इन्द्र ! इस विश्वकर्माके अभिमानकी अधिकताको देखो; भ्राताके बाहुबलके कारण यह अपना भला बुरा नहीं देखता है। जैसे यह और-और देवताओंको देखता है वैसे ही मुझको भी देखता है। हे सुरश्रेष्ठ! यह अच्छा ही हुआ, इस अविनीतको छोड़ो। हे सुरश्रेष्ठ, मेरी भक्तिसे युक्त, शुद्ध, शाला-कर्म करनेवाले किसी दूसरे ( कारीगर ) को देवताओंके घर बनानेमें लगाओ। हे राजा ! इस प्रकारके अप्रिय वचनको सुनकर भयसे विह्वल हो वर्धकी ( राजमिस्त्री ) विश्वकर्मा प्रणाम कर गोविन्दसे बोला ॥१३०॥

वर्धक्युवाच—

भगवंस्त्वदभीष्टं यदज्ञानान्न मया कृतम् ॥ क्षमस्व मम
दौरात्म्यं भगवन् करुणानिधे ॥१३१॥ देवादिदेव देवेश स्वल्पस्य
मम कारणात् ॥ इयान् कोपः किमर्थं ते सञ्जातो भगवन् ह-
रे ॥ १३२ ॥ एवं सम्प्रार्थितः शक्रं श्रीनिवास उवाच ह ॥ सभां
कारय देवेन्द्र देवार्थं मुनिकारणात् ॥१३३॥ पञ्चाशद्योजनगण-
विशालां सुमनोहराम् ॥ सुविचित्रां च महतीं त्रिंशद्योजनमाय-
ताम् ॥ १३४॥

वर्धकी बोला—हे भगवान् ! आपका जो अभीष्ट है सो मेरी अज्ञानतासे नहीं किया गया; हे करुणा-निधि भगवान् ! मेरी दुष्टताको क्षमा कीजिये। हे देवताओंमें आदि देव, देवताओंके स्वामी, हरि ! मेरे तुच्छ अपराधके कारण आपको इतना क्रोध किस लिये हुआ ? इस प्रकार प्रार्थना किये जानेपर श्रीनिवास इन्द्रसे बोले—हे देवेन्द्र ! देवता और मुनियोंके लिये पचास योजन लम्बी एवं तीस योजन चौड़ी सुन्दर तथा सब तरहसे बढ़िया एक बहुत बड़ी सभा बनवाइये ॥१३४॥

इत्येवं शासितः शक्रस्तेन वर्धकिना तदा ॥ कारयामास विपुलां
विचित्रां महतीं सभाम् ॥१३५॥ चक्रे शक्राज्ञया तत्र विश्वक-
र्मा ममाग्रजः ॥ अनन्तरं वाक्यमूचे शतक्रतुमनामयम् ॥१३६॥

इस प्रकार आज्ञा किये गये इन्द्रने उस वर्धकीसे अत्यन्त विचित्र और बड़ी सभा बनवायी। मेरे बड़े भाई विश्वकर्माने इन्द्रकी आज्ञासे सभा बनायी। पश्चात् भगवान इन्द्रसे शुभ वचन बोले ॥१३६॥

श्रीभगवानुवाच—

आकाशराजनगरं शीघ्रं गच्छ शचीपते॥ राजानं सान्त्ववचनैः कार्यं कर्माणि बोधय ॥१३७॥ तत्राप्यनेन कर्तव्यं सभागेहादि कारय ॥

श्रीभगवान् बोले—हे इन्द्र ! आकाशराजके नगरमें शीघ्र जाओ और सान्त्वनायुक्त वचनसे राजाको कार्य करनेके लिये समझाओ। वहांपर भी इस विश्वकर्मासे विशाल सभा और गेहादिकी रचना करवाओ ॥१३८॥

वासुदेवस्य वाक्यानि श्रुत्वा तस्य शचीपतिः ॥१३८॥ जगाम राजनगरं सहितो विश्वकर्मणा॥ विस्तार्य नगरं राज्ञः परितो बहुयोजनम् ॥१३९॥ सञ्छिद्य च महाराज वनानि गिरिगह्वरान् ॥ विषमां च समां चक्रे धरां तां धरणीपते ॥ गृहाणि च विचित्राणि सभाश्च पटमण्डपान् ॥१४०॥ कल्याणवेदीं स ददर्श रत्नसम्पूर्णकक्षैः सुकृतां विचित्राम् ॥ स्तम्भैर्युतां मौक्तिकरत्ननिर्मितैर्नारायणस्येव नृपेण निर्मिताम् ॥१४१॥ वासुदेवस्य भवनं वासवो विश्वकर्मणा ॥१४२॥ कारयामास राजेन्द्र सरत्नस्तम्भगोपुरम् ॥ धनधान्यसमाकीर्णं रत्नतोरणमण्डितम् ॥१४३॥ वापीकूपशतं वाजिगजानां भवनं तथा॥ वासवे तु गते राजन् वासुदेवोऽवदत्सुरान् ॥१४४॥

भगवान् वासुदेवके वचनको सुनकर विश्वकर्माके साथ इन्द्रदेव राजाके नगरको गये। हे धरणीपति, हे महाराज! विश्वकर्माने राजाके नगरको कई योजन बढ़ा कर, वनों और पहाड़ोंकी विषमताको काटकर एवं उस विषम भूमिको समतल बनाकर सभा बनायी। विचित्र-विचित्र गृह, सभा एवं कपड़के मण्डप (खेमा) बनाये। रत्नोंसे जड़ी हुई सुन्दर एवं विचित्र सीढ़ियोंकी, मुक्ता और रत्नोंसे जटित स्तम्भवाली, राजाकी बनवायी हुई, नारायणकी वेदी जैसी, कल्याणवेदीको इन्द्रने देखा। हे राजेन्द्र! इन्द्रने विश्वकर्मासे रत्नोंके स्तम्भ और गोपुर (फाटक) वाला, धनधान्यसे भरा हुआ, रत्नोंके तोरणसे शोभित वासुदेवका भवन एवं सैकड़ों वापी, कूप और घोड़े तथा हाथियोंके लिये भवन बनवाये। हे राजन! इन्द्रके चले जानेपर वासुदेवने देवताओंसे कहा ॥१४५॥

## अथ देवादिकृतपरिणयार्थभगवत्प्रार्थनाभ्युपगमः

श्रीभगवानुवाच—



आकाशराजस्य सुताऽस्ति या सुरा इच्छामि कर्तुं किल तत्करग्रहम् ॥ अङ्गीकृतं चेद्भवदीयमण्डलैरङ्गीकरोम्यद्य तु राजकन्यकाम् ॥ १४५ ॥ वासुदेववचः श्रुत्वा वासुदेवात्मजादिकाः ॥ वाक्यमाहुर्महाराज वासुदेवपरायणाः ॥१४६॥

### भगवान्के विवाहप्रस्तावकी देवताओं से स्वीकृति

श्रीभगवान् बोले—हे देवतागण ! आकाशराजकी जो कन्या है उसका पाणिग्रहण करनेकी इच्छा मैं करता हूं। आपलोगोंकी मण्डलीसे यदि यह बात स्वीकृत हुई तो मैं उस राजकन्याको स्वीकार करूंगा। हे महाराज ! भगवान्के भक्त तथा उनके पुत्रगण उनके वचनको सुनकर यह वचन बोले ॥१४६॥

ब्रह्मादिदेवा ऊचुः—

वयं तु दासभावेन तिष्ठामः पुरुषोत्तम ॥ त्वत्प्रसादाद्वयं सर्वे पश्यामोऽत्र महोत्सवम् ॥१४७॥

ब्रह्मादि देवता बोले—हे पुरुषोत्तम ! हमलोग यहांपर नौकर होकर रहेंगे, आपकी कृपासे हमलोग इस महोत्सवको देखेंगे। शंकर बोले ॥१४७॥

शङ्कर उवाच—

विनोदवचनं कृष्ण भाषसे प्राकृतो यथा ॥ मनसस्ते प्रशस्तं चेत्क्रियतामिति चाब्रवीत् ॥१४८॥ शङ्करस्य वचः श्रुत्वा प्रशशंस हसन् हरिः ॥ ततश्चतुर्मुखः प्राह शेषाचलपतिं प्रति ॥१४९॥

हे कृष्ण ! आप प्राकृत मनुष्योंके जैसा विनोदके वचन कहते हैं, आपकी इच्छा हो तो कीजिये। शंकरके वचनको सुनकर हंसते हुए भगवान्ने उनकी प्रशंसा की। तब ब्रह्माने शेषाचलके स्वामीसे कहा ॥१४९॥

ब्रह्मोवाच—

सर्वज्ञस्त्वं दयासार सत्यसङ्कल्पवानसि ॥ अष्टवर्गं ततः कार्यं विवाहात्पूर्वमेव हि ॥१५०॥ तस्मादाज्ञां देहि मम पुण्याहे पुरुषोत्तम ॥ स पुत्रवचनं श्रुत्वा वसिष्ठं मुनिमानयत् ॥१५१॥

ब्रह्मा बोले—हे दयासार ! आप सर्वज्ञ हैं, सत्य संकल्पवाले हैं; तथापि विवाहके पहले अष्टवर्ग करना चाहिये; इसलिये, हे पुरुषोत्तम ! मुझे पुण्याहवाचनकी आज्ञा दीजिये । भगवान्‌ने पुत्रके वचनको सुनकर वसिष्ठ मुनिको बुलाया ॥१५१॥

अथ वसिष्ठादीन् प्रति भगवत्कृतविवाहकार्यनियोजनप्रकारः

वसिष्ठं च महाभागं पौरोहित्ये न्ययोजयत् ॥ यजुःशाखामहामन्त्रैः कर्त्तव्यं स्वस्तिवाचनम् ॥१५२॥ सर्वेषामपि देवानां यजमानो भवानिति ॥ देवानां च ऋषीणां च मानने शङ्करं न्यधात् ॥१५३॥ देवाह्वाने कुमारं तु प्रत्युत्थाने च मन्मथम् ॥ दत्त्वा तेषां वीटिकां तु कृष्णवर्त्मानमाह्वयत् ॥१५४॥ गृहाण त्वं वीटिकां च पाकार्थं हव्यवाहन ॥ ऋषीणां सर्वदेवानां तव पाकस्तु सम्मतः ॥१५५॥ तस्मात्पाकं कुरुष्व त्वं स्वधास्वाहासमन्वितः ॥ इति शिष्टो यज्ञमूर्तिस्तथास्त्वित्यब्रवीद्धरिम् ॥१५६॥

भगवान्‌का वसिष्ठादिकोंको विवाह कार्य्यमें नियोजित करना

भगवान्‌ने महाभाग वसिष्ठको पुरोहिताईके पदपर नियुक्त किया और कहा—यजुर्वेदकी शाखाके महामन्त्रसे स्वस्ति वाचन करना होगा क्योंकि आप सब देवताओंके यज्ञ करानेवाले हैं । देवताओं और ऋषियोंका सम्मान करनेका शंकरको, देवताओंको बुलानेका कुमार ( कार्त्तिकेय ) को, स्वागतका कामदेवको बीड़ा दिया, और तब अग्निको बुलाकर कहा—हे हव्यवाहन ! आप पाक करनेका बीड़ा लीजिये, ऋषियों और देवताओंको आपहीका पाक पसन्द है । इसलिये स्वधा और स्वाहाके साथ आप पाक करें । इस प्रकार आज्ञा पाये हुए यज्ञमूर्ति अग्नि "ऐसा ही होगा" यह भगवान्‌से बोले ॥१५६॥

ततः स प्राह वरुणं जलार्थं सर्वदेहिनाम् ॥ दुष्टानां दण्डने राजञ्छिष्टानां परिपालने ॥१५७॥ यमं स कल्पयामास सुगन्धे

वायुमादिशत् ॥ धनदाने ब्रह्मणार्थे वस्त्रालङ्कारदापने ॥१५८॥
कुबेरं योजयामास भगवान्नृपसत्तम ॥ प्रदीपधारणे राजन्निशा-
करमयोजयत् ॥१५९॥ वसून्सन्देशयामास भाण्डानां शुद्धिका-
रणात् ॥ ग्रहांश्च द्रोणपात्रेषु न्ययोजयदरिन्दम ॥ १६० ॥ एवं
संशासिताः सर्वे पुराणपुरुषेण च ॥ आज्ञामादाय तेऽभूवन् सर्वे
स्वस्थाः स्वकर्मसु ॥१६१॥ ततो वाक्यमुवाचेदं ब्रह्मा लोकपि-
तामहः ॥

तब उन्होंने जलके लिये वरुणको कहा। हे राजन ! दुष्टोंको दण्ड देने और सज्जनोंका परिपालन करनेके लिये उन्होंने यमको, सुगन्धके लिये वायुको, धनदान करनेके लिये और ब्राह्मणोंको वस्त्र अलङ्कार देनेके लिये कुबेरको, दीप धारण करनेके लिये निशाकर ( चन्द्रमा ) को और पात्रोंको शुद्ध करनेके लिये अष्टवसुओंको नियुक्त किया। हे शत्रुदमन ! ग्रहोंको द्रोणपात्र ( कठौता ) शुद्ध करनेके लिये नियुक्त किया। पुराण पुरुषसे इस प्रकार आज्ञा मिलनेपर वे सब अपने-अपने कामोंके लिये सावधान हो गये। तब लोकपितामह ब्रह्मा यह वचन बोले ॥१६२॥

ब्रह्मोवाच—

मज्जनं कुरु गोविन्द मङ्गलं मधुसूदन ॥ १६२ ॥ पुण्याहपूर्वक-
र्माणि स्वेष्टदेवप्रपूजनम् ॥ कुलदेवप्रतिष्ठां च साङ्गं कुरु रमा-
पते ॥१६३॥

ब्रह्मा बोले—हे गोविन्द ! हे मधुसूदन ! आप स्नान कीजिये। हे रमापति, पुण्याह सहित सब कर्मोंको, अपने इष्टदेवताका पूजन एवं कुलदेवताकी प्रतिष्ठा विधि पूर्वक कीजिये ॥१६३॥

अथ विवाहार्थं करवीरपुरान्महालक्ष्म्या आह्वानम्

स पुत्रवचनं श्रुत्वा सस्मार जगदीश्वरः ॥ रमां राजीवनयनां
करवीरपुरालयाम् ॥१६४॥ मत्वा वियोगिनीं राजन्दुःखितः सुर-
सत्तमः ॥ रुरोद लोकरीत्यैव भगवाँल्लौकिकैः समः ॥ १६५ ॥ न
शोभते सभा दिव्या तया विरहिता सुत ॥ भवानहं महाप्राज्ञ

देवाश्च सपरिग्रहाः ॥१६६॥ न शोभते यथाकाशे तारास्तारापतिं विना ॥ अपादपं यथारण्यमपक्षाश्च विहङ्गमाः ॥१६७॥ अफलाश्च यथा वृक्षा अधनाः सुहृदो यथा ॥ तथा वयं महाप्राज्ञ रहिता रमया तया ॥१६८॥ वासुदेववचः श्रुत्वा वासुदेवमभाषत ॥ शङ्करः पृथिवीपाल समुत्तिष्ठन्महाभुजः ॥१६९॥

विवाहके लिये करवीरपुरसे लक्ष्मीको बुलाना

पुत्रके वचनको सुनकर जगदीशने करवीरपुरमें रहती हुई कमलनयनी लक्ष्मीको स्मरण किया। हे राजन्! उसको वियोगिनी मानकर, देवताओंमें श्रेष्ठ भगवान् लौकिक मनुष्योंके समान दुःखी होकर, लोकरीतिके जैसा गाने लगे और कहने लगे—हे पुत्र! उसके विना यह सभा नहीं शोभती। हे महाप्राज्ञ! आप, स्त्रियोंके साथ देवतागण और मैं नहीं शोभता। जिस प्रकार आकाशमें चन्द्रमाके बिना तारागण, बिना वृक्षके वन, बिना पंखकी चिड़ियां, बिना फलके वृक्ष तथा बिना धनके सुहृद होते हैं, हे महाप्राज्ञ! हमलोग भी उसके बिना उसी प्रकार हैं। वासुदेवके वचनको सुनकर, हे पृथ्वीपाल! वह महाबाहुवाले शङ्कर वासुदेवसे बोले ॥१६९॥

शङ्कर उवाच—

किमर्थं रोदनं तात किं ते कार्यं विडम्बनम् ॥ असङ्गस्याप्रमेयस्य चाक्रूरवरदस्य च ॥१७०॥ अक्लेशकस्य देवेश किमर्थं रोदनं वृथा ॥ स च तद्वचनं श्रुत्वा नीलकण्ठमभाषत ॥१७१॥

शङ्कर बोले—हे तात, संगतिसे रहित, अप्रमेय एवं अक्रूरको वर देनेवाले! आपका यह रोना किस लिये है? आपको कौनसे कार्यकी घबड़ाहट है? हे देवेश, बिना दुःखवाले! आपका व्यर्थ ही रोना किस लिये है? उस वचनको सुनकर भगवान् भी नीलकण्ठसे बोले ॥१७१॥

श्रीभगवानुवाच—

त्वं न जानासि भोः शम्भो बालभावेन पौत्रक ॥ यदा ब्रह्मावसाने च न किञ्चिदवशिष्यते ॥१७२॥ तदा क्षीरोदके शम्भो निरालम्बे निराश्रये ॥ सा मे शय्यासखी भूत्वा क्रीडते हितकारिणी ॥१७३॥ एतादृशीं विना शम्भो मम सौख्यं कथं भवेत् ॥ वदत्येवं जगन्नाथे वेधा वाक्यमभाषत ॥१७४॥

श्रीभगवान् बोले—हे पौत्रक शंभु ! तुम बालपनके कारण नहीं जानते हो। जब ब्रह्माके भी अन्त होनेपर संसारमें कुछ भी नहीं शेष रह जाता, तब वह बिना अवलम्बके एवं बिना आश्रयके क्षीर समुद्रमें मेरा हित करनेवाली तथा शय्या सखी होकर क्रीड़ा करती है। हे शम्भु ! इस प्रकारकी उस (लक्ष्मी) के बिना मेरा सौख्य कैसे होगा ? भगवान्‌के इस प्रकार कहनेपर ब्रह्मा बोले ॥१७४॥

*ब्रह्मोवाच—*

नोक्तं त्वयेदं गोविन्द पूर्वमेव जनार्दन ॥ अद्य मां कमलानाथ रमाह्वाने नियोजय ॥१७५॥ सोऽपि पुत्रवचः श्रुत्वा द्युमणिं शीघ्रमाह्वत् ॥ षण्मुखेन महाराज सोऽपि तत्र समागतः ॥ १७६ ॥ ननाम भक्त्या स्तुत्वाऽथ प्राञ्जलिः सम्मुखे स्थितः ॥ भास्करं भक्तिनम्राङ्गं भगवानाह हृद्गतम् ॥१७७॥

ब्रह्मा बोले—हे गोविन्द ! हे जनार्दन ! आपने पहले यह नहीं कहा। हे लक्ष्मीपति ! लक्ष्मीको लानेके लिये आज मुझको नियुक्त कीजिये। भगवान्‌ने पुत्रके वचनको सुनकर षड्मुखसे दिनमणि सूर्य्यको बुलवाया। हे महाराज ! सूर्य्य भी वहां आ गये और प्रणाम किया; भक्तिपूर्वक स्तुति कर, हाथ जोड़कर संमुख ठहर गये। भक्तिसे नम्र शरीरवाले सूर्य्यसे भगवान्‌ने अपने हृदयकी बात कही ॥१७७॥

### अथ भगवदुक्त्या रमानयनाय करवीरपुरं प्रति सूर्यगमनम्

*श्री श्रीनिवास उवाच—*

शृगालवासुदेवस्य नगरं गच्छ भानुमन् ॥ तत्रास्ते जगतां माता तामानय समान्तिकम् ॥१७८॥ भारतीं वासुदेवस्य श्रुत्वा पौत्रो दिवाकरः ॥ विनयेन समायुक्तः शिरसाऽऽनम्य चाबदत् ॥१७९॥

### लक्ष्मीको लानेके लिये सूर्य्यका करवीरपुर जाना

श्रीभगवान् बोले—हे सूर्य्य ! शृगाल वासुदेवके नगर करवीरपुरको जाओ; वहांपर संसारकी माता लक्ष्मी हैं; उनको मेरे पास ले आओ। वासुदेवका यह वचन सुनकर सूर्य्य विनयसे युक्त हो, शिरसे प्रणाम करके बोले ॥१७९॥

*भानुरुवाच—*

**कथं तां लोकजननीमानयिष्ये तवान्तिकम् ॥ तन्ममाचक्ष्व
गोविन्द कथं मां विश्वसेद्रमा ॥१८०॥**

सूर्य्य बोले—इस संसारकी माताको आपके पास कैसे लाऊंगा, लक्ष्मी मुझपर कैसे विश्वास करेंगी, सो, हे गोविन्द ! मुझसे कहिये ॥१८०॥

*श्रीभगवानुवाच—*

**अस्ति तस्यास्त्वयि स्नेहः सदा लोकमहोदये ॥ त्वदागमनसं
हृष्टा समायाति ममान्तिकम् ॥१८१॥ उपायं प्रवदिष्यामि तदा-
गमनकर्मणि ॥ अश्रु मुञ्चन्नपमृजंस्तद्द्वारि कुरुषे स्थिति-
म् ॥१८२॥ त्वां तु दृष्ट्वा जगन्माता सान्त्वयिष्यति भानुमन् ॥
एवं वदन्ती वाक्यं त्वां किञ्चिद् दुःखसमाकुला ॥१८३॥ शासनं
ते हृतं केन धरण्यां कथ्यतामिति ॥ त्वं समाचक्ष्व तां देवीमि-
त्थमत्यन्तदुःखितः ॥१८४॥ न शासनं हृतं मेऽद्य मातः केनापि
भूतले ॥ शयनं तु कृतं तेन तव भर्त्राऽद्य भूतले ॥१८५॥ येन वै
शासनं दत्तं मातर्मे कृपयेदृशम् ॥ निश्चेतनोऽद्य पतितो भर्ता जी-
वति ते न वा ॥१८६॥ भर्ता तव जगन्नाथस्त्वशक्तोऽद्य विभा-
ति मे ॥ कदा द्रक्ष्यामि देवीं तामित्यास्ते प्रलपन्निति ॥ १८७ ॥
सा त्वद्वचनमाकर्ण्य समायाति न संशयः ॥**

श्रीभगवान बोले—तुम संसारकी अभिवृद्धि करनेवालेपर उनका स्नेह सदा रहता है; तुम्हारे जानेके आनन्दसे ही वह मेरे पास आ जायगी और उसके आनेके उपाय भी कहता हूं। उसके द्वारपर खड़े होकर, आंखोंको मलते हुए आंसू छोड़ा करना। हे सूर्य ! तुमको देखकर संसारकी माता कुछ दुःखसे घबड़ायी हुई, इस प्रकार कहती हुई तुमको सान्त्वना देगी कि पृथ्वीपरसे तुम्हारे शासनको किसने हरण कर लिया, सो कहो। तुम अत्यन्त दुःखी होकर उस देवीसे इस प्रकार कहना कि हे माता ! मेरा शासन पृथ्वीतलपर किसीसे नहीं हरण किया गया है; परन्तु हे माता ! जिस तुम्हारे भर्त्ताने मुझे कृपा कर शासनाधिकार दिया है उसने तो आज पृथ्वीतलपर शयन किया है। तुम्हारे भर्त्ता आज अचेत होकर पड़े हुए हैं, वे जीते हैं या नहीं। तुम्हारे भर्त्ता

जगन्नाथ.आज हमको शक्तिहीन मालूम पड़ते हैं और "उस देवीको कब देखूंगा" यही प्रलाप करते रहते हैं। वह तुम्हारे वचनको सुनकर आवेगी, इसमें संशय नहीं है ॥१८८॥

उपायं तु ततः श्रुत्वा किञ्चिद्धास्यमुखान्वितः ॥ १८८ ॥
बभाषे भक्तिनम्राङ्गो भयभक्तिसमन्वितः ॥ सर्वज्ञा सर्वलोकेषु
विश्रुता कमलालया ॥१८९॥ जानाति हृद्गतं सर्वं कथं मां विश्व-
सेद्विभो ॥ अरोगस्य च रोगं हि कथं वक्ष्यामि ते हरे ॥१९०॥
स भानोर्वचनं श्रुत्वा भानुमाह मनोगतम् ॥

तब इस उपायको सुनकर मुस्कराते हुए, भक्तिसे नम्र शरीरवाले एवं भय और भक्तिसे युक्त सूर्य बोले, हे प्रभु! लक्ष्मीदेवी सब लोकोंमें सबको जाननेवाली ऐसी प्रसिद्ध हैं। वह हृदयकी सब बातोंको जानती हैं। वह मेरा क्यों विश्वास करेंगी और हे हरि! बिना रोगवाले आपके रोगको किस प्रकार कहूंगा? भगवान् सूर्यके वचन सुनकर उनसे अपने मनकी बात बोले ॥ १९१ ॥

श्रीभगवानुवाच—

मन्मायया मोहिता सा भविष्यति न संशयः ॥१९१॥ इत्यु-
क्तः प्रणिपत्याथ वासुदेवरथे स्थितः ॥ करवीरपुरं गत्वा यथोक्तं
तत्तथाकरोत् ॥१९२॥

श्रीभगवान् बोले—वह मेरी मायासे अवश्य मोहित हो जायेगी, इसमें सन्देह नहीं है। ऐसा कहे जानेपर प्रणाम करके, वासुदेवके रथपर बैठकर, करवीरपुरमें जा सूर्यने वैसा ही किया जैसा कहा गया था ॥ १९२ ॥

अथ करवीरपुराच्छेषाचलं प्रति रमागमनम्

सा तद्वचनमाकर्ण्य यथादेशं तदा रमा ॥ रथमारुह्य खेदेन
भानुवाक्यादरेण सा ॥१९३॥ सम्प्राप्ता वायुवेगेन रतियुक्ता रमा
पतिम् ॥ तदागमवार्तां च श्रुत्वा तस्मिन् क्षणे हरिः ॥१९४॥ ज-
गाम दर्शनापेक्षी ह्यशक्त इव सम्मुखम् ॥ तादृशीमाकृतिं प्राप्य
तदद्भुतमिवाकरोत् ॥१९५॥ देवानां पूर्वदेवानां मुनीनामूर्ध्वरेत-

साम् ॥ भुजं भुजङ्गभूषस्य वामं संस्थाप्य वै भुजम् ॥ १९६ ॥
तथाऽपरं ब्रह्मकण्ठे निधायागाद्भुजं स्वभूः ॥

करवीरपुरसे लक्ष्मीका शेषाचल आना

वह लक्ष्मी उसके वचनको सुनकर दुखित हो आदरसे उस आज्ञाके अनुसार, रथपर चढ़कर, सूर्यके साथ वायु वेगसे रमापति भगवान्‌के पास पहुंच गयीं। लक्ष्मीके आगमनका समाचार सुनकर उसके दर्शनके इच्छुक हो शक्तिहीन जैसे हरि उसी क्षण उसके सम्मुख गये। उन्होंने जो रूप धारण किया, वह देवताओं, असुरों, एवं जितेन्द्रिय मुनियोंको अद्भुत मालूम हुआ। सर्पोंके आभूषण धारण करनेवाले श्रीशिवजीकी भुजापर अपने वाम हस्तको तथा दूसरे हस्तको ब्रह्माके गलेमें डालकर स्वयंभू हरि आये ॥ १९७ ॥

एवं भूतं श्रीनिवासं ददर्श कमलालया ॥ १९७ ॥ रथादुत्तीर्य
वेगेन किञ्चिद्धास्यमुखाम्बुजा ॥ चम्पकं पुष्पनिचयं विकीर्य पद-
पङ्कजे ॥ १९८ ॥ समालिङ्ग्यातिभक्त्यैव मुहूर्तद्वयमास्थिता ॥ तदा-
लिङ्गनमात्रेण पुष्टाङ्गो विष्टरश्रवाः ॥ १९९ ॥ कुशलं परिपप्रच्छ
तस्याः सापि हरेस्तदा ॥ पितरौ सर्वलोकानां रमानारायणा-
वुभौ ॥ २०० ॥ संप्राप्तौ स्वस्थतां राजन् सर्वदेवनमस्कृतौ ॥

इस प्रकारके श्रीनिवासको लक्ष्मीने देखा और वह कुछ हंसीके साथ वेगसे रथसे उतरकर, चरणकमलोंपर चंपा पुष्पके समूहकी वर्षा कर, अत्यन्त भक्तिसे आलिङ्गन करके दो मुहूर्त ठहर गयी। उसके आलिङ्गन-मात्रसे ही विष्टरश्रवा (श्रीनिवास) ने पुष्ट शरीर होकर उसका कुशल पूछा और उसने भी हरिका कुशल पूछा। हे राजन्! सब देवताओंसे नमस्कृत तथा सब लोकोंके पितर दोनों लक्ष्मी और नारायणने इस प्रकार सुख प्राप्त किया ॥ २०१ ॥

अथ रमायै श्रीनिवासकथितपद्मावतीपरिणयोदन्तः

*श्रीरमोवाच—*

*मां मोहयति गोविन्द तव माया दुरत्यया ॥ २०१ ॥ भानुना*
मयि गोविन्द कर्म चित्रं त्वया कृतम् ॥ त्वन्मायामोहिताः सर्वे
ब्रह्मेशानादयः सुराः ॥ २०२ ॥ वदादेशं वासुदेव ममाद्याह्वानकार-
णम् ॥ स रमावचनं श्रुत्वा साध्वीमाह महीपते ॥ २०३ ॥

## लक्ष्मीसे कहा हुआ पद्मावतीका विवाह-वृत्तान्त

श्रीलक्ष्मी बोली—हे गोविन्द ! आपकी अलभ्य माया मुझे मोहती है। हे गोविन्द ! सूर्यके द्वारा आपसे विचित्र काम मेरे बारेमें किया गया है; आपकी मायासे ब्रह्मा, शिव इत्यादि सब देवता मोहित किये गये हैं। हे वासुदेव ! आज मुझे बुलानेके कारणरूपी उस आज्ञाको कहिये। हे महीपति ! विष्णु भगवानने लक्ष्मीके इस वचनको सुनकर उससे कहा ॥ २०३ ॥

*श्रीनिवास उवाच—*

त्वया रामावतारे तु कथितं स्मर भामिनि ॥ वेदवत्या विवाहस्य संप्राप्तः काल एष वै ॥२०४॥ त्वत्सान्निधौ वोढुमेनां कामयेऽहं कलौ युगे ॥ वदत्येवं हृषीकेशे साऽस्मरत्पूर्विकां गिरिम् ॥२०५॥

श्रीनिवास बोले—हे भामिनी ! रामावतारमें आपने कहे हुए वचनको स्मरण करो, वेदवतीके विवाहका यह समय उपस्थित हुआ है। विवाह करके कलियुगमें तुम्हारे पास ही इसको भी ले जानेकी इच्छा करता हूं। हृषीकेश ( इन्द्रियोंके स्वामी ) के इस प्रकार कहनेपर उसने पहलेकी बातको स्मरण किया ॥ २०५ ॥

*श्रीरमोवाच—*

तामङ्गीकुरु गोविन्द विवाहे विधिपूर्वकम् ॥ इति मे वचनं कृष्ण सफलं कुरु वत्सल ॥२०६॥ इत्युक्त्वा श्रीनिवासं सा ननाम च मुदान्विता ॥ हरिस्तु लोकजननीमानन्दयदुदारधीः ॥२०७॥

श्रीलक्ष्मी बोली—हे गोविन्द ! उसको विधिके साथ विवाह करके स्वीकार कीजिये। हे वत्सल कृष्ण ! मेरे इस वचनको सफल कीजिये। इतना कहकर उसने श्रीनिवासको प्रणाम किया। उदार बुद्धिवाले हरिने भी संसारकी माताको आनन्दित किया ॥ २०७ ॥

स रमागिरमाकर्ण्य परिपूर्णमनोरथः ॥ परमानन्दसम्पूर्ण उरगाद्रौ व्यराजत ॥ २०८ ॥ सन्तोषसंसूचकसर्वगात्र आनन्दबाष्पेण समृद्धनेत्रः ॥ ब्रह्मादिदेवैर्नुतसच्चरित्रस्तदा बभौ वेङ्कटशैलमित्रः ॥२०९॥

इति श्रीभविष्योत्तरपुराणे श्रीवेङ्कटाचलमाहात्म्ये श्रीनिवासस्य वेदवतीविवाहाय बकुलालक्ष्म्यागमनं नाम दशमोऽध्यायः ॥ १० ॥

लक्ष्मीके वचनको सुनकर मनोरथ एवं अत्यन्त आनन्दसे पूर्ण हो वह हरि शेषाचलपर शोभित हुए। सन्तोषसे हृष्ट-पुष्ट शरीरवाले, आनन्दकी आंसुसे भरे हुए नेत्रवाले, श्रीहरि ब्रह्मा इत्यादि देवताओंसे स्तुत मङ्गल चरित्रवाले हो श्रीवेङ्कटाचलके सूर्य ही हुए ॥ २०६ ॥

इति दशमोऽध्यायः ॥१०॥

# एकादशोऽध्यायः ॥११॥

लक्ष्मी कृत भगवानका, मंगल भूषण साज।
प्रभु कुल देवन पूजना, ऋण लेना धनराज ॥१॥
द्रव्य साज पाकाग्निकी, कश्यप पूजन धर्म्म।
व्रात साज व्रातागमन, नभ नृप स्वागत कर्म्म ॥२॥
पद्मा-प्रभु दुर्गा मिलन, पाक पूजना द्वार।
भोज समागम व्याह विधि, धरणी पूजाकार ॥३॥
वियत पखारन प्रभु चरण, कन्यादान विधान।
बाद विवाह विदाइ वधु, भूषण दायज दान ॥४॥
वसन प्रतिज्ञा मास पट, अगस्त्येशके धाम।
श्रवण विवाह विधान प्रभु, पूरक सब मनकाम ॥५॥

अथ भगवतः पद्मादिकारितपरिणयार्हमङ्गलाभिषेकक्रमः

जनक उवाच—

ततः किमकरोत्कृष्णः श्रीनिवासः सतां गतिः ॥ तन्ममाचक्ष्व भगवन् विस्तरेण महामुने ॥१॥

लक्ष्मी इत्यादि द्वारा किया गया विवाहके योग्य भगवानका मंगल अभिषेक

जनक बोले—हे भगवन् महामुनि! तब सन्तोंके आश्रय श्रीनिवास कृष्णने क्या किया, वह मुझसे विस्तार पूर्वक कहिये ॥ १ ॥

शतानन्द उवाच—

श्रीलक्ष्मीसहितः श्रीमाञ्छ्रीनिवासः पितामहम् ॥ अब्रवीत्प्रीतमनसा प्रयुञ्जानः प्रयोजनम् ॥२॥

शतानन्द बोले—श्रीलक्ष्मीके साथ श्रीमान् श्रीनिवास प्रसन्न मनसे ब्रह्माको काममें नियुक्त करते हुए बोले ॥ २ ॥

श्रीनिवास उवाच—

कर्माणि पुत्र कार्याणि कुरु शीघ्रमतन्द्रितः ॥ स तद्वचनमाकर्ण्य ससन्तोषः पितामहः ॥३॥ कटाहभाण्डनिचयमानेतुं प्रैषयत्सुरान् ॥ गरुडप्रमुखान् वीरान्नारायणपरायणान् ॥४॥ ते तस्य वचनं श्रुत्वा क्षणेन गरुडादयः ॥ कटाहादीन् गृहीत्वाथ समाजग्मुरनेकधा ॥५॥

श्रीनिवास बोले—हे पुत्र ! करने योग्य कामोंको बिना आलस्यके शीघ्र ही करो। इस वचनको सुन सन्तुष्ट हो ब्रह्माने कड़ाही और भांड़के समूहोंको लानेके लिये भगवान्के भक्त गरुड़ प्रभृति सब देवताओंको भेजा। उनके वचनको सुनकर वे सभी गरुड़ इत्यादि देवतागण कड़ाही इत्यादि लेकर क्षणभरमें आ गये ॥५॥

अपूरयत्ततस्तेषु सवायुः सलिलाधिपः ॥ सुगन्धं तोयनिचयं दिव्यतीर्थोद्भवं शुभम् ॥६॥ ततः सर्वाः सुवासिन्यो वस्त्रालङ्कारमण्डिताः ॥ अरुन्धतीं पुरस्कृत्य कृतमङ्गलकौतुकाः ॥७॥ सदीपकलशान् राजन् पार्वतीप्रमुखाः स्त्रियः॥ चक्रुः समन्तान्मगाङ्गल्यान् ससावित्रीपुरोगमाः ॥८॥ गायन्त्यः शुभगानानि निरातङ्कं कृतं तथा ॥ कृष्णावताराविभवं गायन्त्यश्चामराङ्गनाः ॥९॥ सिद्धाङ्गनाश्च राजेन्द्र तस्थुर्वैखानसाङ्गनाः ॥ एवं प्रवृत्ते पुण्येऽस्मिन् विवाहे वेङ्कटेशितुः ॥१०॥ स्नुषाश्च वासुदेवस्य जहसुश्चारुलोचनाः ॥ श्वश्रूं च पुरतः कृत्वा मातरं वकुलां हरेः ॥११॥ एवं महोत्सवस्तत्र समभूत् सप्तमीदिने ॥

तब उनमें वायुके साथ वरुणभगवान्ने सुगन्ध तथा शुभ दिव्य तीर्थोंका जल भर दिया।

हे राजन्! तब वस्त्र और अलङ्कारोंसे शोभित पार्वती इत्यादि स्त्रियोंने अरुन्धतीको आगे कर, मंगलाशीर्वाद किया हुआ दीपसहित कलश लाकर सब ओरसे मंगल किया। हे राजेन्द्र! सावित्री इत्यादि देवताओं, सिद्धों एवं वैखानसों (विखनस) की स्त्रियां, बिना भयके विचित्र शुभ गीतों तथा कृष्णावतारके विभवको गाती हुई ठहरीं। इस प्रकार श्रीवेङ्कटेशके पवित्र विवाहके आरम्भ होनेपर सुन्दर नेत्रवाली वासुदेवकी स्नुषाएं (पुत्रवधुएं) श्वसुर एवं श्वसुरकी माता बकुलाको आगे कर प्रसन्न हुईं। इस प्रकारका महोत्सव वहां सप्तमीके दिन हुआ ॥१२॥

चतुर्दिक्षु च संस्थाप्य कलशाञ्जलपूरितान् ॥१२॥ सूत्रेण वेष्टयित्वा तु तन्मध्ये रत्नपीठकम् ॥ संस्थाप्य सम्भ्रमयुक्ता इदमाहुः सुराङ्गनाः ॥१३॥ उत्तिष्ठ पुरुषश्रेष्ठ तिष्ठ त्वं सूत्रमण्डले ॥ स इत्थमुक्तो भगवान्योषितां पुरतो हरिः ॥१४॥ प्रोवाच दीनवदनः प्रस्रवन्नेत्रशम्बरम् ॥ पितामह महाप्राज्ञ विवाहविभवे मम ॥१५॥ कः करोत्यभिषेकं तु तैलेनाशीः क्रमेण वै ॥ यस्य नास्ति महाराज माता वापि पिता तथा ॥ १६ ॥ विवाहे च विपत्तौ च तस्य धिग्जन्म जीवनम् ॥ भगिन्यो भ्रातरश्चैव मातुला भागिनेयकाः ॥१७॥ न मे सन्ति महाप्राज्ञ कः करोत्यभिषेचनम् ॥ मातापितृविहीनानां का गतिर्वै भविष्यति ॥१८॥

जलसे भरे हुए घड़ोंको सूतसे लपेट चारों दिशाओंमें रख एवं उनके बीचमें रत्नोंकी पीढ़ा रखकर शीघ्रताके साथ देवताओंकी स्त्रियां बोलीं—हे पुरुषश्रेष्ठ! उठिये और आप सूत्रके घेरेमें बैठिये। इस प्रकार कहे जानेपर दीन मुखवाले भगवान् हरि नेत्रोंसे आंसू छोड़ते हुए स्त्रियोंके आगे बोले—हे महाप्राज्ञ ब्रह्मा! मेरे विवाहके उत्सवमें तैलसे, आशीर्वादके क्रमसे मेरा कौन अभिषेक करेगा? हे महाराज! जिसकी माता अथवा पिता विवाह और विपत्तिमें न हों, उसके जन्म एवं जीवनको धिक्कार है। हे महाप्राज्ञ! मुझे भगिनी (बहिन), भाई, मामा अथवा भागिनेय (भगिना) नहीं है, कौन अभिषेक करेगा? माता एवं पितासे वियोगी लोगोंकी कैसी गति होती होगी ॥१८॥

न च मातृसमं मित्रं जनकेन समं सुखम् ॥ न भार्यासदृशं भाग्यं न पुत्रेण समा गतिः ॥१९॥ न हि भ्रातृसमो बन्धुर्न विष्णोर्देवता परा ॥ इति सम्भाष्य गोविन्दो लीलामानुषविग्र-

हः ॥२०॥ रुरोद लोकरीत्यैव पश्यन् ब्रह्माननं हरिः ॥ उपधार्य ह-
रेर्वाक्यं सभवः कञ्जसम्भवः ॥२१॥ सान्त्वयन्वासुदेवं तु भारती-
माह भूपते ॥

माताके समान मित्र, पिताके समान सुख, भार्याके समान भाग्य, पुत्रके समान गति, भ्राताके समान सम्बन्धी एवं विष्णुसे उत्तम देवता नहीं है। इतना कहकर लीलाके लिये ही शरीर धारण करनेवाले हरि ब्रह्माके मुखको देखते हुए लौकिक ढंगसे रोने लगे। हे पृथ्वीके स्वामी! हरिके वचनको सुनकर शिवके साथ ब्रह्मा उनको सान्त्वना देते हुए बोले ॥२२॥

ब्रह्मोवाच—

किमर्थं मोहयसि नो मायापञ्जरवासिनः ॥ २२ ॥ कोऽपि नास्तीति यत्प्रोक्तं तदसत्यं चतुर्भुज ॥ पुत्रोऽहं तव कल्याण पौत्रः साक्षात् त्रिलोचनः ॥२३॥ मन्मथोऽन्यः पुमान् पुत्रः पौत्रपुत्रः षडाननः ॥ जगत्प्राणो ज्येष्ठपुत्रः स्नुषा ते भारती हरे ॥२४॥ सरस्वत्यादिकाः सर्वाः स्त्रियस्त्वत्पादसेविकाः ॥ त्वं पुमान् परमः साक्षाज्जगद्धात्री तवाङ्गना ॥२५॥ क्रीडामात्रमिदं मन्ये त्वत्कृतं पुरुषोत्तम ॥ एवं विभवमापन्नस्त्वं नो मोहयसे वृथा ॥२६॥ इत्थमुक्त्वा चतुर्वक्त्रो वासुदेवं रमासखम् ॥ रमां सङ्केतयामास सा रमा वाक्यमब्रवीत् ॥२७॥

ब्रह्मा बोले—मायाके पिञ्जरेमें रहते हुए हम लोगोंको आप किस लिये मोहते हैं? हे चतुर्भुज! आपने जो यह कहा कि मेरे कोई भी नहीं है, सो असत्य ही है। हे कल्याण! मैं आपका पुत्र हूं, साक्षात् शिव आपके पौत्र हैं और कामदेव आपके दूसरे पुत्र हैं, एवं षट्मुख (कार्तिकेय) पौत्रके पुत्र। हैं हे हरि! संसारके प्राण (वायु) आपके बड़े पुत्र हैं और सरस्वती आपकी पुत्रवधू हैं। सरस्वती इत्यादि सब स्त्रियां आपके चरणकी सेवा करनेवाली हैं, आप साक्षात परम पुरुष हैं और आपकी ही स्त्री संसारकी माता हैं। हे पुरुषोत्तम! इसको मैं आपका बनाया हुआ खेलमात्र समझता हू। इस प्रकारके विभवसे युक्त आप हम लोगोंको व्यर्थ ही मोहते हैं। ब्रह्माने लक्ष्मीके सखा (हरि) से इस प्रकार कहकर लक्ष्मीको सङ्केत (इशारा) किया और वह लक्ष्मी वचन बोली ॥२७॥

*श्रीरमोवाच—*

विदितं हृदयं देव तव वेङ्कटवल्लभ ॥ तैलाभ्यङ्गादिकर्माणि करिष्ये पुरुषोत्तम ॥२८॥ उत्तिष्ठ त्यज दुःखं ते समारोह वरासनम् ॥

श्रीलक्ष्मी बोली—हे वेङ्कटाचलके प्यारे देव! आपका हृदय मालूम हुआ। हे पुरुषोत्तम! तैल और उबटन इत्यादिके कामको मैं करूंगी। उठिये, अपने दुःखको छोड़िये तथा वरके आसनपर बैठिये ॥२६॥

स रमागिरमाकर्ण्य सन्तोषान्नयनाज्जलम् ॥२९॥ मुञ्चन्मुनिवरान् राजन्नन्दयन्नरसारथिः॥ कश्यपात्रिभरद्वाजविश्वामित्रपुरोगमान् ॥३०॥ प्रणिपत्य वसिष्ठं स आह विश्वं विडम्बयन् ॥

हे राजन्! लक्ष्मीके इस वचनको सुनकर सन्तुष्ट हो वह पार्थसारथी आंखोंसे जल छोड़ते, कश्यप, अत्रि, भरद्वाज, विश्वामित्र इत्यादि मुनिवरोंको आनन्दित करते एवं संसारको मोहते हुए, वसिष्ठको प्रणाम कर बोले ॥३१॥

*श्रीनिवास उवाच—*

अनुज्ञां देहि मे ब्रह्मन् मज्जनार्थं महामुने ॥ ३१ ॥ तथास्त्वित्यब्रवीत्कृष्णं वसिष्ठः स पुरोहितः ॥ सपत्नीकान् सुरान्सर्वान् सभार्यानृषिमण्डलान् ॥३२॥ अनुज्ञाप्यानुगैः सार्धमुदतिष्ठत्सुरोत्तमः ॥

श्रीनिवास बोले—हे ब्रह्मन्! हे महामुनि! मुझको स्नान करनेकी आज्ञा दीजिये। तब पुरोहित वसिष्ठजी "ऐसा ही हो" बोले और सपत्नीक देवताओं तथा ऋषिमण्डलीको आज्ञा दे, अनुचरोंके साथ देवताओंमें श्रेष्ठ हरि उठे ॥३३॥

विकीर्य केशमूलानि पूर्वाशाभिमुखं ततः ॥३३॥ आरोपयन् रत्नपीठे श्रीनिवासं सुयोषितः ॥ तासां मध्ये सिन्धुपुत्री रमा कमललोचना ॥३४॥ रुक्मपात्रं समादाय तैलपूरितमादरात् ॥ अभ्यञ्जयत्तदा देवी स्वाशीर्भिरभिनन्द्य तम् ॥३५॥

तब सुन्दरी स्त्रियोंने श्रीनिवासके केशको बिखेरकर उनको पूर्वमुख रत्नके पीढ़ेपर बैठाया। उनके बीचमें समुद्रकी पुत्री, कमलनयनी लक्ष्मी देवीने तेलसे भरे हुए सोनेके पात्रको लेकर, अपने आशीर्वादसे उनका अभिनन्दन करके उबटन लगाया ॥३५॥

*रमोवाच—*

दीर्घायुर्भव गोविन्द बहुपुत्रो धनाधिपः ॥ चतुर्दशानां लोकानामेकच्छत्राधिपो भव ॥३६॥

श्रीलक्ष्मी बोली—हे गोविन्द! दीर्घ आयुवाले, अनेक पुत्रवाले एवं धनके स्वामी होओ और चौदह लोकोंके एकछत्र स्वामी होओ ॥३६॥

एवमुक्त्वा तदा देवी साऽभ्यनक्ति स्म माधवम् ॥ देवाङ्गं मर्दयामास तैलेनातिसुगन्धिना ॥३७॥ तदा ददौ ब्रह्मपत्नी चन्द्रकाश्मीरकर्दमम् ॥ तेन मार्जारतैलेन तथा मृगमदेन च ॥३८॥ हरिद्राचूर्णपिष्टेन निर्मृज्य च वृषाकपिम् ॥ सुमङ्गलैर्वाद्यघोषैः सह सर्वपरिच्छदैः ॥३९॥ समन्तात् सर्वविधिषु करिकुम्भैरुपाहृतैः ॥ समन्तात्पुण्यतीर्थस्थपुण्यतीर्थाभिपूरितैः ॥४०॥ सरत्नैः काञ्चनैः कुम्भैः स्थापितोदकमिश्रितैः ॥ अभिषेकं ततश्चक्रे कमला जगदीशितुः ॥४१॥ आपादमौलिपर्यन्तं सा कृत्वोद्वर्त्तनं हरेः ॥ मेने कृतार्थमात्मानं सेवया केशवस्य तु ॥४२॥

ऐसा कहकर उस देवीने माधवको उबटन लगाया और अत्यन्त सुगन्धित तेलसे उनके अंगको मर्दन किया। तब ब्रह्माकी पत्नी सरस्वतीने कपूर और केसरका लेपन किया और उस तेल तथा कस्तूरीके साथ पिसे गये हरिद्राके चूर्णसे भगवान्के शरीरको साफ किया। माङ्गलिक बाजेके शब्दके घोष सब परिच्छद (पोशाक) पहना लेनेपर, चारों ओरसे हाथियोंपर लाये गये पवित्र तीर्थके पवित्रजलसे भरे तथा चारों ओर रखे हुए रत्नजटित सुवर्णमय घटोंसे कमलाने जगदीशका अभिषेक किया और चरणसे मस्तकतक उबटन मलकर भगवान्की सेवासे उसने अपनेको कृतकृत्य माना ॥४२॥

चतस्रस्तु सुवासिन्यः पाणिभिः कलशान्नृप ॥ धृत्वा मौक्तिकतोयैस्तमभ्यषिञ्चन् सुरेश्वरम् ॥ ४३ ॥ जलैर्नीराजयामासुः

पुत्रवान्धनवान् भव ॥ इत्याशिषाऽभिनन्दन्त्यः श्रीनिवासं सुराङ्ग-
नाः ॥४४॥ गायन्त्यः शुभगीतानि कौङ्कुमैः सलिलैस्ततः ॥ आ-
रार्तिकां माङ्गलिकां सर्वाश्चक्रुस्तथाऽङ्गनाः ॥४५॥

चार सुन्दरियोंने हाथों द्वारा घटोंको लेकर मोतीके जलसे उस देवताओंके देवताका अभिषेक किया और देवताओंकी स्त्रियोंने श्रीनिवासका "पुत्रवाला और धनवाला होओ" इस आशीर्वादसे अभिनन्दन करती हुई जलसे आरती उतारी और शुभ गीत गाती हुई सब स्त्रियोंने कुंकुमके जलसे मंगल आरती उतारी ॥४५॥

तदा ददौ ब्रह्मपत्नी सावित्री वस्त्रमुत्तमम् ॥ तेन वस्त्रेण
सर्वाङ्गं ममार्ज विधिवद्रमा ॥४६॥ पार्वती धूपमादाय ददौ ल-
क्ष्मीकराम्बुजे ॥ धूपयित्वा सुधूपेन विकीर्योज्झितबन्धनान् ॥४७॥
बबन्ध कमला देवी मूर्धजान्मधुघातिनः ॥ आदर्शं दर्शयामास सा-
वित्री स्वर्णभूषितम् ॥४८॥ रतीशच्यौ चामरे च वीजयन्त्यौ स्थि-
ते तदा ॥ छत्रं दधार सा देवी भारती भक्तिसंयुता ॥४९॥
पादुके प्रददौ भद्रा गङ्गा गङ्गापितुस्तदा ॥ विधाय पादौ वर-
पादुकाद्वये ययौ प्रपन्नार्तिहरो हरिः स्वयम् ॥ याभ्यां पुरा पावन-
तां गता मुनेः शापेन चाश्मत्वमुपागताऽवला ॥५०॥ पादुकाभ्यां
चरन् भूमिं वरासनमगाद्धरिः ॥

ब्रह्मपत्नी सावित्रीने उत्तम वस्त्र दिया और लक्ष्मीने उस वस्त्रसे उनके सब अङ्गोंको विधिपूर्वक पोंछा। पार्वतीने धूप लेकर लक्ष्मीके हस्त कमलमें दिया और कमलादेवीने मधु दैत्यको मारनेवाले भगवान्के खुले हुए सिरके केशोंको फैलाकर तथा सुगन्धित धूपसे धूपित कर बांध दिया। तत्पश्चात् सावित्रीने सुवर्णसे शोभित दर्पण दिखलाया। रति और शची चमर डुलाती थीं। सरस्वती देवीने भक्तिके साथ छत्र धारण किया और गङ्गाने अपने पिता भगवानको खड़ाऊं दी। मुनिके शापसे पत्थर बनी हुई अबला ( अहल्या ) जिन चरणोंसे पवित्र हुई थी, उन्हीं दोनों श्रेष्ठ चरणोंको खड़ाऊंपर रखकर शरणागतके दुःखको छुड़ानेवाले भगवान् स्वयं पृथ्वीपर पैदल चलकर वरके आसनके पास आये ॥५१॥

*श्रीभगवानुवाच—*

ब्रह्मादयः सुरश्रेष्ठा इन्द्राद्या लोकपालकाः ॥ कश्यपादिमुनि-

श्रेष्ठा वसिष्ठादितपोधनाः ॥५२॥ सनकाद्याश्च योगीन्द्रा भृग्वा-
द्याश्च ऋषीश्वराः ॥ अर्यमाद्याश्च पितरस्तुम्बुर्वाद्याश्च गाय-
काः ॥५३॥ रम्भाद्याश्चैव नर्तक्यः सूतमागधवन्दिनः ॥ उपास-
तासने रम्यं पश्यन्तः पुरुषोत्तमम् ॥ ५४ ॥ स्वामिपुष्करिणीतीरे
दक्षिणे पक्षिवाहनम् ॥

ब्रह्मा इत्यादि श्रेष्ठ देवता, इन्द्र इत्यादि लोकपाल, कश्यप इत्यादि श्रेष्ठ मुनि, वसिष्ठ इत्यादि तपस्वी, सनक इत्यादि योगी, भृगु इत्यादि श्रेष्ठ ऋषी, अर्यमा इत्यादि पितर, तुम्बुरु इत्यादि गानेवाले, रंभा इत्यादि नाचनेवाली, एवं सूत, मागध और बन्दीजन स्वामी पुष्करिणीके दक्षिण तीरपर, पक्षीके वाहनवाले सुन्दर पुरुषोत्तमको देखते हुए आसनपर बैठ गये ॥५५॥

अष्टमीन्दुकलाकारे ललाटे दर्पणस्फुटे ॥५५॥ ऊर्ध्वपुण्ड्रं दधा-
राथ श्रीनिवासः सतां गतिः ॥ तदाह कमलां राजन् वकुला लो-
कमातरम् ॥५६॥ रेखां रचय कल्याणि ललाटे कुङ्कुमेन तु ॥ एव-
मुक्ता देवमात्रा रमा कुङ्कुमरेखिकाम् ॥५७॥ तदा मुहूर्तकालस्तु
दर्शितो दैवचिन्तकैः ॥ भूषणानि स्वपुत्रस्य पौत्रं तु जगदीशि-
तुः ॥५८॥ याचयित्वा महाराज कुवेरमथ सा रमा ॥ आदाय तं
ददर्शाथ भगवानाह तां नृप ॥५९॥

तत्पश्चात् सज्जनोंके आश्रय श्रीनिवासने दर्पणमें प्रतिबिम्ब देखकर अष्टमीके चन्द्रमाके आकारका ललाटमें ऊर्ध्वपुण्ड्र धारण किया। हे राजन् ! तब वकुलाने संसारकी माता श्रीलक्ष्मीजीसे कहा—हे कल्याणी ! ललाटमें कुंकुमसे रेखा खींचो। देवकी माता वकुलाके ऐसा कहनेपर लक्ष्मीने कुंकुमकी रेखाको किया। उसी समय ज्योतिषियोंसे मुहूर्तका समय दिखाया गया। हे महाराज ! उस लक्ष्मीने अपने पुत्रके भूषणोंको भगवान्के पौत्र कुवेरसे मांगकर दिखलाया। हे राजा ! तब भगवान्ने उससे कहा ॥५९॥

*श्रीभगवानुवाच—*

सम्भूषय वरारोहे भूषणैर्मां वरानने ॥ एवमुक्ता हसन्ती सा
भूषणैस्तमभूषयत् ॥ ६० ॥ पीताम्बरं दधाराशु कटिसूत्रमनर्घ्यक-
म् ॥ स्वर्णैराभरणैर्वज्रैर्भूषितस्तु ततो हरिः ॥६१॥ कश्यपात्रिभ-

रद्वाजवसिष्ठादीन्महामुनीन् ॥ नमश्चक्रे विरिञ्चेशविनुतोऽपि विडम्बयन् ॥६२॥ सन्ध्यामुपास्य विधिवत्कृत्वा तात्कालिकक्रियाः ॥ वसिष्ठमाहूयोवाच सन्तोषोद्रिक्तमानसः ॥६३॥

श्रीभगवान बोले—हे श्रेष्ठ मुखवाली वरारोहे! मुझको भूषणोंसे सजा दो। ऐसा कहने पर वह हंसती हुई उनको भूषणोंसे सजा दी। शीघ्रही भगवान्ने स्वयं पीताम्बर और उत्तम कटिसूत्र धारण किया। पश्चात् वे स्वर्णके भूषणों और वस्त्रोंसे सजा दिये गये। ब्रह्मा और शिवसे स्तुत भगवान्ने कश्यप, अत्रि, भरद्वाज, वसिष्ठ इत्यादि महामुनियोंको, लौकिक विडम्बना करते हुए, प्रणाम किया और विधिपूर्वक सन्ध्या उपासना करके तथा समयके सब कर्मोंको समाप्त कर सन्तोष-पूर्ण होकर भगवान् वसिष्ठजीको बुलाकर बोले ॥६३॥

*श्रीभगवानुवाच—*

मुनिश्रेष्ठ वसिष्ठ त्वमुत्तरं कार्यमाचर ॥ वासुदेववचः श्रुत्वा वसिष्ठो वदतां वरः ॥६४॥ विरच्य वेदिकां तत्र मौक्तिकैश्चतुरश्रिकाम् ॥ श्रीनिवासं प्रतिष्ठाप्य सङ्कल्पं विधिपूर्वकम् ॥६५॥ चक्रे पुण्याहकर्माथ वरयित्वा द्विजन्मनः ॥ अष्टवर्गं ततश्चक्रे सृष्टिकर्ता पितामहः ॥६६॥ ततो नियुक्तविधिना दत्त्वा ताम्बूलदक्षिणाः ॥ विप्राणां वेदविदुषां तथा मङ्गलवादिनाम् ॥ ६७ ॥ ददुर्देवाः धनं वस्त्रं वासुदेवस्य ये प्रियाः ॥ ततः समाप्य कर्माणि शास्त्रोक्तानि यथाविधि ॥६८॥

श्रीभगवान् बोले—हे मुनि श्रेष्ठ वसिष्ठ! आप आगेका कार्य कीजिये। वासुदेवके वचनको सुनकर वक्ताओंमें श्रेष्ठ वसिष्ठजीने वहांपर मोतीसे चौकोन वेदी बनाकर श्रीनिवासको बैठा विधिके साथ संकल्प किया! अनन्तर ब्राह्मणोंको वरणकर पुण्याह कर्म किया। तब जगतको बनानेवाले ब्रह्माने अष्ट वर्ग सम्पादन किया। तदनन्तर यथा विधिसे वेदके विद्वान् ब्राह्मणों और मङ्गलके बाजेवालोंको ताम्बूल दक्षिणा देकर वासुदेवके प्रिय देवताओंको उन्होंने धन और वस्त्र दिया ॥६८॥

अथ भगवत्कृतपरिणयाङ्गकुलदेवताप्रतिष्ठाविधानम्

कुलदेवमपृच्छत्तं वसिष्ठो वसुधाधिप ॥ तस्य तद्वचनं श्रुत्वा भगवानाह वै मुनिम् ॥६९॥

## भगवान्‌के कुलदेवताकी स्थापन विधि

हे राजा ! तब शास्त्रमें कहे हुए कर्मोंको विधिके साथ पूराकर वसिष्ठजीने हरिसे कुलदेवीको पूछा और भगवान्‌ने उनके वचनको सुनकर कहा ॥६९॥

**वसिष्ठ मम कल्याणी कुलदेवी शमी स्मृता ॥ ममापि पाण्डवानां च नात्र कार्या विचारणा ॥७०॥ क्व चास्ति स द्रुमश्रेष्ठ इत्युक्तेऽगस्त्य ऊचिवान् ॥**

श्रीभगवान् बोले—हे वसिष्ठ ! मेरी कुलदेवी कल्याणी शमी हैं—यह मेरी भी हैं और पाण्डवकी भी—इसमें विचार नहीं करना चाहिये। वह श्रेष्ठ वृक्ष कहांपर है—ऐसा पूछे जानेपर अगस्त्यने कहा ॥७१॥

*अगस्त्य उवाच—*

**अत्रैवोत्तरदिग्भागे तीर्थे कौमारसंज्ञके ॥७१॥ वर्तते वृक्षराजश्च तत्र गत्वा तमानय ॥ अगस्त्यवचनेनैवं तत्र गत्वाऽथ तं द्रुमम् ॥७२॥ कृत्वा प्रदक्षिणं राजन्भगवाँल्लौकिकैः समः ॥ नमश्चक्रे शमीवृक्षं कुलदेवं वृषाकपिः ॥७३॥**

अगस्त्य बोले—यहांसे उत्तर दिशामें कुमार नामक तीर्थमें वह श्रेष्ठ वृक्ष है—वहां जाकर उसको ले आइये। हे राजन् ! अगस्त्यके वचनसे ही वहांपर जा, प्राकृतके समान उस वृक्षकी प्रदक्षिणा कर भगवान् वृषाकपीने कुलदेवी शमीवृक्षको प्रणाम किया ॥७३॥

*श्रीभगवानुवाच—*

**शमि पापं शमय मे शमि शत्रुविनाशिनि ॥ अर्जुनस्य धनुर्धात्रि रामस्य प्रियदर्शिनि ॥७४॥ मातर्मे कुरु कल्याणमविघ्नेन सुरप्रिये ॥ कलहः सर्वदेवानां राज्ञस्तस्य च नोद्भवेत् ॥७५॥**

श्रीभगवान् बोले—हे शमी ! मेरे पापको नाश करो ! हे शत्रुओंका नाश करनेवाली, अर्जुनके धनुषको रखनेवाली, रामको प्रिय दिखनेवाली शमी माता ! विना विघ्नसे मेरा कल्याण करो। हे देवताओंकी प्रिय ! देवताओं और उस राजासे मुझसे झगड़ा न हो ॥७५॥

**इति सम्प्रार्थ्य देवेशः कुलदेवीं सुरार्चिताम् ॥ अर्चयित्वा विधानेन स्कन्धमल्पं महीपते ॥७६॥ निकृत्य शिरसा धृत्वा वादि-**

त्राणां स्वनेन च ॥ पूरयन्नम्बरं सर्वं पुनः स्वस्थानमा-
गतः ॥७७॥

हे पृथ्वीके स्वामी ! देवताओंके स्वामी श्रीनिवास देवताओंसे पूजी हुई कुलदेवीकी प्रार्थना और विधिसे पूजा कर, एक छोटी शाखाको तोड़ एवं उसे मस्तकपर रख बाजोंके शब्दसे सम्पूर्ण आकाशको पूरा करते हुए पुनः अपने स्थानको आ गये ॥७७॥

*श्री श्रीनिवास उवाच —*

सा कुत्र स्थाप्यते ब्रह्मन् वासिष्ठ कुलदेवता ॥ वदत्येवं वासु-
देवे वसिष्ठं वसुधाधिप ॥ ७८ ॥ नारदश्चान्तिकं गत्वा प्रोवाच
मधुसूदनम् ॥

श्रीनिवास बोले—हे वसिष्ठ ! यह कुलदेवी कहांपर रखी जायगी ? हे राजा ! वसिष्ठसे इस प्रकार वासुदेवके कहते समय नारदजी समीपमें जाकर मधुसूदनसे बोले ॥७८॥

*श्रीनारद उवाच—*

वराहशरणे देव स्थाप्यतां कुलदेवता ॥ ७९ ॥ यस्मिन्स्थाने
स्वकं धाम तां कृष्ण पूजयेत् ॥ एवं विद्वन्मतं पूर्वं निर्मितं परमे-
ष्ठिना ॥८०॥ स नारदवचः श्रुत्वा वसिष्ठसहितो हरिः ॥ वरा-
हशरणं गत्वा वच एतत्तमब्रवीत् ॥ ८१ ॥

श्रीनारद बोले—हे देव ! वाराह भगवान्के घरमें कुलदेवी रखी जायं। हे कृष्ण ! जहांपर अपना धाम है वहींपर उस कुल देवीकी पूजा करे—ऐसा विद्वानोंका माना हुआ और आदिमें ब्रह्माजीसे भी निश्चित किया गया है। नारदके वचनको सुनकर, वसिष्ठके साथ वाराहके घरमें जाकर हरि यह वचन बोले ॥८१॥

*श्री श्रीनिवास उवाच—*

प्रसादात्तव गोविन्द विवाहं कर्तुमुत्सुकः ॥ सहितो धरया
सार्धं त्वमागच्छ नृपालयम् ॥८२॥ गुरुस्त्वं सर्वलोकानां कृतकृत्यं
च मां कुरु ॥ श्रीनिवासवचः श्रुत्वा भूधरो वाक्यमब्रवीत् ॥८३॥

श्रीनिवास बोले—हे गोविन्द ! आपकी कृपासे मैं विवाह करनेके लिये तैयार हूं, पृथ्वीके साथ आप

राजाके घरपर आइये। सब लोकोंके आप गुरु हैं; आप मुझको कृतार्थ कीजिये। श्रीनिवासके इस वचनको सुनकर पृथ्वीको धारण करनेवाले वाराह बोले ॥८३॥

*श्रीवराह उवाच—*

मम स्थाने महाराज वकुलां विद्धि मे सखीम् ॥ क्षेत्रं पक्वं मदीयं यत्तस्मान् मां त्यक्तुमर्हसि ॥८४॥ वराहवचनं श्रुत्वा वासुदेवोऽभ्यभाषत ॥

श्रीवाराह बोले—हे महाराज! मेरे स्थानपर मेरी सखी वकुलाको जानिये। क्योंकि मेरे खेत पक गये हैं, इसलिये आप मुझको छोड़ दीजिये। वाराहके वचनको सुनकर वासुदेव बोले ॥८५॥

*श्रीनिवास उवाच—*

कुलदेवीप्रतिष्ठां च करिष्ये शरणे तव ॥८५॥ इत्येवं प्रार्थयन्तं तं श्रीनिवासं परात्परम् ॥ तथास्त्वित्यब्रवीद्राजन् कोलरूपी हरिः स्वयम् ॥ ८६ ॥ कलशे स्वर्णखचिते मुक्ताराशिं प्रपूर्य च ॥ वस्त्रेण वेष्टयित्वाथ पूजां कृत्वा विधानतः ॥८७॥ प्रतिष्ठाप्य वराहस्य सन्निधौ प्राकृतो यथा ॥ स्वस्थानं पुनरागत्य श्रीनिवासः सतां गतिः ॥८८॥ अभोजनेन गन्तव्यं नारायणपुराह्वयम् ॥ आकाशराजनगरमिति निश्चित्य चेतसि ॥८९॥ ब्रह्माणमब्रवीद्राजंस्त्वरया गमने रतः ॥

श्रीनिवास बोले—आपके घरमें कुलदेवीकी स्थापना करूंगा। हे राजन! इस प्रकार प्रार्थना करने पर परात्पर श्रीनिवासको वाराहरूपी स्वयं हरि "ऐसा ही हो" यह बोले। प्राकृत मनुष्योंके समान, खुदे हुए सोनेके कलशमें मोतियां भरकर, कपड़ेसे लपेटकर, विधिपूर्वक पूजा करके, श्रीवाराहके समीपमें स्थापना कर, अपने स्थानपर पुनः लौटकर, मनमे निश्चय कर कि—"नारायणपुर नामक आकाशराजके नगरको बिना भोजनके जाना होगा", जानेमें लगे हुए शीघ्रतासे ब्रह्मासे बोले ॥९०॥

अथ कुबेराच्छ्रीनिवासकृतः स्वपरिणायार्थमृणादानप्रकारः

*महादिदेवा ऊचुः—*

विधेऽद्यैव नियुङ्क्ष्वैतां सेनां ते चतुरङ्गिणीम् ॥९०॥ शीघ्रं गन्तुं

चतुर्वक्त्र नारायणपुरं प्रति ॥ मा भूत्कालो वृथैवात्र दूरोऽध्वाह्यस्य वर्त्तते ॥९१॥ बलं सर्वं वने तात वृद्धबालाबलान्वितम् ॥ शनैर्गच्छतु राजेन्द्र मुनिमण्डलपूर्वकम् ॥९२॥

## कुबेरका श्रीनिवासको ऋण देना

श्रीनिवास बोले—हे चारमुखवाले विधि ! नारायणपुरको जानेके लिये अपनी इस चतुरङ्गिणी सेनाको शीघ्र तैयार कीजिये। यहांपर समय व्यर्थ नष्ट न हो, क्योंकि इसका मार्ग दूर है। हे तात ! हे राजेन्द्र ! मुनिकी मण्डली, वृद्धों, बालकों और स्त्रियोंसे युक्त सारी सेना वनमें धीरे-धीरे चली ॥९२॥

स तस्य वचनं श्रुत्वा चक्रपाणेश्चतुर्मुखः ॥ वचनं व्याहरच्छीघ्रं पितरं पुरुषोत्तमम् ॥९३॥

उस चक्रपाणिके वचनको सुनकर वह ब्रह्मा अपने पिता पुरुषोत्तमसे शीघ्र यह वचन बोले ॥९३॥

*ब्रह्मोवाच—*

कृत्वा पुण्याहकर्माणि प्रतिष्ठाप्य कुलेश्वरीम् ॥ नोपवासेन गोविन्द गन्तव्यमिति मे मतिः ॥९४॥ मुनयः क्षुधिताः सर्वे बालवृद्धादयस्तथा ॥ वदत्येवं चतुर्वक्त्रे चक्रपाणिरभाषत ॥९५॥

ब्रह्मा बोले—हे गोविन्द ! मेरा यह विचार है कि पुण्याहकर्म एवं कुलदेवताकी स्थापना कर बिना भोजन किये नहीं चलना चाहिये। मुनि एवं बालक-वृद्ध इत्यादि सभी भूखे हैं। ब्रह्माके ऐसा कहनेपर चक्रपाणि बोले ॥९५॥

*श्रीनिवास उवाच—*

वचनानि महार्हाणि तव पुत्र पितामह ॥ कथं कार्यमकार्यं च नैव जानासि पुत्रक ॥९६॥ देशकालावनालोच्य भाषसे बलिशो यथा ॥ द्रव्याणामयुतं तात गतं मे कानने गिरौ ॥ ९७ ॥ एवं व्ययं समापन्नं कथं पश्यसि चक्षुषा ॥ ज्ञात्वापि रिक्ततां मेऽद्य त्वेवमुक्ते कथं भवेत् ॥९८॥ वदत्येवं स्वपितरि ब्रह्मा लोकपिता-

महः ॥ तूष्णीमभून् महाराज भगवत्पुरतस्तदा ॥ ९९ ॥ नीलकण्ठोऽब्रवीद्वाक्यं पितरं स्वपितुस्ततः ॥

श्रीनिवास बोले—हे पुत्र ब्रह्मा ! तुम्हारे वचन बहुत ही मूल्यवान हैं, किन्तु कार्य वा अकार्य तुम नहीं जानते हो, देश और कालको न देखकर तुम बच्चेके जैसा बोलते हो। मेरे दश हजार द्रव्य जङ्गल और पहाड़में चले गये हैं; इस प्रकारके उपस्थित व्ययको किस प्रकार आंखोंसे देखते हो ? अब मेरी द्रव्यकी कमीको जानकर भी ऐसा कहनेसे काम कैसे होगा ?' अपने पिताके इस प्रकार कहनेपर लोकपितामह ब्रह्मा भगवानके सामने चुप हो गये। तब हे महाराज ! नीलकण्ठ अपने पिताके पितासे बोले ॥१००॥

*नीलकण्ठ उवाच*—

श्रोतव्यं वचनं तात मम बालस्य माधव ॥१००॥ विवाहकरणे देव तथा भवनकर्मणि ॥ प्रारब्धस्यान्तपर्यन्तं यो हि यत्नं समाचरेत् ॥ १ ॥ स एव पुण्यवाँल्लोके कीर्तिमेति न संशयः ॥ सम्पाद्याः सर्वसम्भाराः शुभकार्येषु पुष्कलाः ॥ २ ॥ बहुलार्थव्ययेनापि तदभावे ऋणं चरेत् ॥ स शम्भुवचनं श्रुत्वा शम्बरारिपिताऽब्रवीत् ॥३॥

श्रीनीलकण्ठ बोले—हे तात ! हे माधव ! मुझ बालकके वचनको भी सुनना चाहिये। हे देव ! विवाह करने तथा घर बनानेमें प्रारम्भसे अन्ततक जो यत्न करता है, वही पुण्यवाला संसारमें कीर्ति लाभ करता है, इसमें संदेह नहीं है। बहुत धन व्यय करके भी शुभ कार्योंमें सब सामग्रियोंका पूर्ण रूपसे संग्रह करना चाहिये, और धनके अभावमें तो ऋण भी लेना चाहिये। शम्भुके इस वचनको सुनकर शंबरासुरके शत्रु ( प्रद्युम्न ) के पिता भगवान बोले ॥१०३॥

*श्रीभगवानुवाच*—

सभायां किमिदं प्रोक्तं पौरुषेण वचः शिव ॥ को वाऽद्य ऋणदाताऽस्ति विवाहस्यास्य पुष्कलम् ॥४॥ पुरुषः पौरुषं यत्नमाचरेन्नैव भाषयेत् ॥ एवमुक्त्वा शिवं प्राह कुबेरं पुरुषोत्तमः ॥५॥

श्रीभगवान् बोले—हे शिव ! सभामें साहस कर यह वचन कैसे बोले ? अस्तु, इस विवाहके लिये बहुत ऋण देनेवाला आज कौन है ? पुरुष यथाशक्ति केवल यत्न करता रहे, किन्तु कहे नहीं। इस प्रकार शिवसे कहकर पुरुषोत्तम कुबेरसे बोले ॥१०५॥

*श्रीभगवानुवाच—*

निमित्तं वर्तते किञ्चिदित एहि धनाधिप ॥ इत्येवमुक्तो धनदः पितामहसमन्वितः ॥ ६ ॥ समुत्तस्थौ सभामध्यात्त्वरितं शिवसंयुतः ॥ ब्रह्मणा सकुबेरेण शङ्करेण रमापतिः ॥७॥ एकान्ते स्वामितीर्थस्य पश्चिमेऽश्वत्थसन्निधौ ॥ गत्वोवाच धनेशानं श्रीनिवासः सतां गतिः ॥८॥

श्रीभगवान् बोले—हे धनके स्वामी ! कुछ काम है, यहां आइये । इतना कहे जानेपर कुबेर पितामह और शिवके साथ सभाके बीचसे शीघ्र ही उठे; और ब्रह्मा, कुबेर और शिवके साथ लक्ष्मीपति, सन्तोंकी गति श्रीनिवास एकान्तमें स्वामीतीर्थके पश्चिम अश्वत्थके पास जाकर कुबेरसे बोले ॥१०८॥

*श्रीनिवास उवाच—*

साधयस्व महाभाग कल्याणं मे कलौ युगे ॥ दत्त्वा धनं यावदिष्टं पुत्रस्य नरवाहन ॥ ९ ॥ वासुदेववचः श्रुत्वा वसुपालोऽब्रवीद्धरिम् ॥

श्रीनिवास बोले—हे महाभाग कुबेर ! जितना चाहिये उतना धन मेरे पुत्र ब्रह्माको देकर कलियुगमें मेरे कल्याणका साधन कीजिये । वासुदेवके वचनको सुनकर वसु ( धन ) के पालनेवाले कुबेर हरिसे बोले ॥ ११० ॥

*कुबेर उवाच—*

त्वदधीनं देव सर्वं जगदेतच्चराचरम् ॥ ११० ॥ बहूनां जीवराशीनां मध्ये कोऽहं जगत्पते ॥ नियोजितेन भवता रक्षितं त्वद्धनं मया ॥११॥ तद्दानादानयोः शक्तिर्मम नास्ति खगध्वज ॥ ग्रहीता त्वं च दाता च स्वतन्त्रोऽतस्त्वमेव हि ॥१२॥ ब्रुवत्येवं धनपतौ श्रीपतिर्वाक्यमब्रवीत् ॥

कुबेर बोले—हे देव ! यह सारा चराचर संसार आपके अधीन है । हे संसारके स्वामी ! बहुतसे जीवोंके समूहमें मैं कौन हूं ? आपसे नियुक्त किये जानेपर मैंने उस धनकी रक्षा की है । हे गरुड़ध्वज ! इसलिये उसको लेने और देनेका मुझे कोई अधिकार नहीं है । आप ही लेने और देनेवाले हैं तथा स्वतन्त्र हैं । कुबेरके ऐसा कहनेपर श्रीनिवास बोले ॥ ११३ ॥

# कुबेरसे श्रीनिवासजीका कर्जा लेना [ पृष्ठ ४५२ ]



धनंदेहि धनेशान पत्ते लिखितमात्रकम्।
एवमुक्तो वसुपतिर्वसुदेवेन भूमिप॥
ददौ धनं[illegible]स्तु कुम्भसंख्यं वृषाकपेः।

*श्रीनिवास उवाच—*

एकस्मिन्ब्रह्मदिवसे त्ववतारा दश स्मृताः ॥१३॥ ममावतार-
समये नानयामि धनं गृहात् ॥ भूगतं च धनं राजन्नैव नेष्यामि
मद्गृहम् ॥ १४ ॥ यथायुगं यथाकालं यथादेशं यथावयः ॥ अव-
तारमहं कुर्वन् रमेऽत्र रमया सह ॥ १५॥ निमित्तमात्रमपि मे धनं
त्वं धनदोऽधुना ॥ युगानुसारिणे देहि देशकालानुसारतः ॥१६॥
स तस्य वचनं श्रुत्वा कुबेरो वाक्यमब्रवीत् ॥

श्रीनिवास बोले—ब्रह्माके एक दिनमें हमारे दश अवतार कहे गये हैं। अपने अवतारके समय घरसे मैं धन नहीं लाता हूं; एवं हे राजन ! पृथ्वीपरके धनको भी अपने घर नहीं ले जाता हूं। युग, समय, देश एवं अवस्थाके अनुसार अवतार धारण कर मैं लक्ष्मीके साथ रमण करता हूं। मेरे धनमें केवल निमित्तमात्र होनेसे ही अभी आप ही धनद हैं। हे कुबेर ! देश-कालके अनुसार जितना चाहिये उतना ही धन आप मुझ युगधर्मके अनुसरण करनेवालेको दीजिये। उनके वचनको सुनकर कुबेर यह वचन बोले ॥ ११७ ॥

*कुबेर उवाच—*

युगानुसारिणस्तेऽद्य कथं दास्यामि चक्रभृत् ॥१७॥ यदि दत्तं
त्वया पत्रं तदा दास्यामि ते वसु ॥ अधनः सधनं लोके यथा
काङ्क्षति माधव ॥ १८ ॥ तथैव नरशार्दूल भगवाँल्लौकिकैः
समाः ॥ एवं तद्वचनं श्रुत्वा हरिर्ब्रह्माणमब्रवीत् ॥१९॥

कुबेर बोले—हे चक्रके धारण करनेवाले भगवन् ! आप युगके अनुसरण करनेवालेको मैं किस प्रकार धन दूं ? यदि आप पत्र ( प्रमाण-पत्र, तमीका ) लिख दें तो मैं आपको धन दूं। हे माधव ! धनहीन लोग संसारमें जिस तरह धनवानको चाहते हैं। उसी तरह, हे नरश्रेष्ठ ! आप भगवान् भी लौकिक मनुष्योंके समान ही चाहते हैं। इस प्रकार उनके वचनको सुनकर हरि ब्रह्मासे बोले ॥ ११९ ॥

*श्रीनिवास उवाच—*

कथं लेख्यं मया पत्रमृणादाने वदाद्य मे ॥

श्रीनिवास बोले—ऋण लेनेके लिये मैं किस प्रकार पत्र लिखूं सो आज मुझसे कहो ॥ १२० ॥

ब्रह्मोवाच —

ऋणग्राही श्रीनिवासो धनदायी धनेश्वरः ॥१२०॥ आत्मकार्यनिमित्तं तु कल्याणार्थं कलौ युगे ॥ वैशाखे शुक्लसप्तम्यां विलम्बे चैव वत्सरे ॥२१॥ निष्काणां राममुद्राणां लक्षाणि च चतुर्दश ॥ द्रव्यं दत्तं धनेशेन वृद्धिग्रहणकारणात् ॥ २२ ॥ सवृद्धि दित्सता मूलं स्वीकृतं चक्रपाणिना ॥ विवाहवर्षमारभ्य सहस्रान्ते धनं पुनः ॥२३॥ दातव्यं यक्षराजाय श्रीनिवासेन शार्ङ्गिणा ॥ एकः साक्षी चतुर्वक्त्रो द्वितीयस्तु त्रिलोचनः ॥ २४ ॥ तृतीयोऽश्वत्थराजस्तु वेत्ति सर्वमिदं दृढम् ॥

ब्रह्मा बोले—ऋणके लेनेवाले श्रीनिवास हैं, एवं धनके देनेवाले कुबेर हैं। अपने कामके लिये, भलाईके लिये, कलियुगमें विलम्ब नामक संवत्सरके वैशाख शुक्ल सप्तमीको, रामराज्यके मुद्राका चौदह लाख निष्क द्रव्य कुबेर द्वारा वृद्धि (ब्याज) पानेके लिये दिया गया, और ब्याजके साथ मूलधन देनेकी इच्छावाले चक्रपाणि द्वारा स्वीकार किया गया कि विवाहके वर्षसे लेकर हजार वर्षके अन्तमें यह धन शार्ङ्गधारी श्रीनिवाससे पुन कुबेरको दिया जायगा। प्रथम साक्षी ब्रह्मा, द्वितीय शिव एवं तीसरे यह अश्वत्थराज हैं, जो सब कुछ पक्का जानते हैं। इस प्रकारका यह ऋणपत्र श्रीनिवासने स्वयं लिखा ॥ १२५ ॥

इत्येतदृणपत्रं तु श्रीनिवासोऽलिखत्स्वयम् ॥२५॥ एवं पत्रार्थमाकर्ण्य ऋणपत्रं रमापतिः॥ लिखित्वा तत्करे दत्त्वा धनेशं चाब्रवीद्धरिः ॥२६॥ धनं देहि धनेशान पत्रे लिखितमात्रकम् ॥ एवमुक्तो वसुपतिर्वासुदेवेन भूमिप ॥२७॥ ददौ धनं कुबेरस्तु कलशसङ्ख्यं वृपाकपेः ॥ दृष्ट्वा तद्धनराशिं तु तत्करेऽदाद्धरिर्नृप ॥२८॥ कुबेरमब्रवीद्देवः सम्भारानयनं प्रति ॥

इस प्रकार पत्रके अर्थको सुनकर लक्ष्मीपति ऋणपत्रको लिखकर, कुबेरके हाथमें दे उनसे बोले कि हे धनेश (कुबेर)! पत्रमें लिखे हुए धनको दीजिये। हे राजन्! वासुदेवने इस प्रकार कहे जानेपर वसुपति कुबेरने श्रीहरिके हाथमें पत्रमें लिखे अनुसार गिनकर धनकी ढेरी लगा दी ॥ १२८ ॥

### अथ श्रीनिवासाज्ञया कुबेरकृतवैवाहिकपदार्थसज्जीकरणप्रकारः

श्रीभगवानुवाच—

आनीयतां तण्डुलं च मितं प्रस्थैर्धनेश्वर ॥ २९ ॥ माषादिकं च मुद्गादीन्गोधूमांश्च समानय ॥ गुडतैलमधुक्षीरशर्कराज्यदधीनि च ॥ १३० ॥ वस्त्राणि योग्यमूलानि सोत्तरीयाणि चानय ॥ तिलहिङ्गुमरीचादिजीरसर्षपमेथिकान् ॥ ३१ ॥ हरिद्राक्तानि कुर्वीथा वस्त्राणि द्विजयोषिताम् ॥ कम्बलाश्च धनाधीश क्रीयन्तामिति चाब्रवीत् ॥ ३२ ॥ देवानामुत्तरीयं च देवस्त्रीणां दुकूलकम् ॥ पूगीफलानि दिव्यानि नागवल्लीदलानि च ॥ ३३ ॥ एलालवङ्गकर्पूरमृगनाभिरसं तथा ॥ माङ्गल्यतन्तुं कन्यार्थं पादाङ्गुष्ठादिमुद्रिकाम् ॥ ३४ ॥ हस्ताङ्गुलीयकं मेऽद्य कुबेर कुरु शीघ्रतः ॥ इति गोविन्दवचनं श्रुत्वासौ निर्ममे क्षणात् ॥ ३५ ॥

### श्रीनिवासकी आज्ञासे कुबेरके द्वारा विवाहके पदार्थोंका सजाया जाना

हे राजन् ! हरिने उस धनकी ढेरीको देखकर उसे कुबेरके हाथमें दे दिया और सामग्री लानेके लिये उनसे कहा। श्रीभगवान् बोले—हे धनेश्वर ! सेरसे माप कर प्रस्थ, चावल, माष ( उड़द ), मुद्ग ( मूंग ), गेहूं, गुड़, तैल, मधु, क्षीर, शर्करा, घी, दधि तथा उत्तरीय ( चादर ) के साथ अमूल्य वस्त्र और तिल, हींग, मिर्च जीरा, सर्षप, मेथी इत्यादि ले आइये। ब्राह्मणियोंके वस्त्रको हल्दीमें रंगवा दीजिये और हे कुबेर ! कम्बल भी खरीद लाइये। देवताओंको उत्तरीय और देवताओंकी स्त्रियोंको साड़ी, उत्तम पुंगीफल, नागवल्लीके पत्र, इलायची, लवंग, कर्पूर, कस्तूरीका रस, कन्याके लिये मांगलीक सूत्र खरीदवा मंगाइये और पैरके अंगूठा अंगूठी इत्यादि तथा मेरे हाथोंकी अंगूठी, हे कुबेर ! आज शीघ्र बनवाइये। इस प्रकार गोविन्दके वचनको सुनकर इन्होंने क्षणभरमें बनवा दिया ॥ १३५ ॥

कुबेर उवाच—

त्वत्प्रसादेन गोविन्द सर्वं सज्जीकृतं मया ॥ पाकार्थं पुण्डरीकाक्ष नियुङ्क्ष्वाभिमतः परम् ॥ ३६ ॥

कुबेर बोले—हे गोविन्द ! आपकी कृपासे मैंने सब कुछ सजा दिया है। हे पुण्डरीकाक्ष ! अब पाक ( रसोई ) के लिये अग्निको नियुक्त कीजिये ॥ १३६ ॥

अथ भगवदाज्ञया वह्निकृतदिव्यान्नसञ्जीकरणप्रकारः

एवमुक्तः कुबेरेण श्रीनिवासः सतां गतिः ॥ षण्मुखं प्रेषया-
मास वह्नेराह्वानकारणात् ॥३७॥ स गत्वा त्वरितं स्कन्दः शासनं
ज्ञापयन्हरेः ॥ सम्प्राप्तो वायुवेगेन सहितो जातवेदसा ॥३८॥ त-
तः प्रोवाच भगवान् त्वरितं हव्यवाहनम् ॥

अग्निके द्वारा अलौकिक अन्नोंका बनाया जाना

कुबेरसे इस प्रकार कहे जानेपर सज्जनोंकी गति श्रीनिवासने अग्निको बुलानेके लिये षट्मुखको भेजा। वह स्कन्द शीघ्रतासे जाकर, भगवान्‌की आज्ञा कह, अग्निको साथ ले वायु वेगसे आ गये। तब अग्निसे भगवान् शीघ्र बोले ॥ १३९ ॥

*श्रीभगवानुवाच—*

क्षणाद्भक्ष्यान्नशाकादि पच स्वाहासमन्वितः॥३९॥ इति नारायण-
वचः श्रुत्वाग्निस्तमभाषत ॥

श्रीभगवान् बोले—स्वाहाके साथ क्षणभरमें भोजनके अन्न और शाक इत्यादिको बनाओ। नारायणके इस वचनको सुनकर अग्नि उनसे बोले ॥ १४० ॥

*अग्निरुवाच—*

पाकार्थं भाजनं कृष्ण नास्त्येकमपि मे हरे ॥ १४० ॥ कथं
पाको महाराज बहूनां भक्तवत्सल ॥ इति तस्य वचः श्रुत्वा शा-
र्ङ्गधर्ग्निं प्रत्यभाषत ॥४१॥

अग्नि बोले—हे कृष्ण ! हे हरि ! पाकके लिये एक भी भाजन। ( बरतन ) नहीं है। हे महाराज ! हे भक्तवत्सल ! बहुतोंका पाक कैसे होगा ? उनके इस वचनको सुनकर शार्ङ्गधारीने अग्निसे कहा ॥१४१॥

*श्रीभगवानुवाच—*

भवतो भवने तात किञ्चिज्जाते महोत्सवे ॥ भाजनानि महा-

भाग वर्धन्ते वटबीजवत् ॥४२॥ मम कल्याणसमये भाण्डमेकं न दृश्यते ॥ दैवमेव परं मन्ये सर्वेषां सर्वसाधने ॥ ४३ ॥ उपायं शृणु सप्तास्य ! पाकार्थं भाजनैर्विना ॥ अन्नं स्वामिसरोमध्ये सूपं पापविनाशने ॥४४॥ वियद्गङ्गाजले वह्ने ! परमान्नं गुडान्वितम् ॥ देवतीर्थे शाकमन्नं तुम्बुतीर्थे तु चित्रकम् ॥ ४५ ॥ कुमारधारिकातीर्थे भक्ष्याणि विविधानि च ॥ पाण्डुतीर्थे च कर्तव्यस्तिन्त्रिणीरस उत्तमः ॥४६॥ व्यञ्जनान्यन्यतीर्थेषु कन्दमूलफलैः सह ॥ क्रियन्तां लेह्यपेयानि तीर्थेष्वन्येषु पावक ॥ ४७ ॥ इति देवस्य वाक्यानि प्रशशंसुर्महर्षयः ॥ तथाच कृतवाञ्जातवेदा वेदविशारदः ॥४८॥ एवं विचित्रकर्माणि हरेर्वैकुण्ठवासिनः ॥ युगानुसारिणस्तस्य तदद्भुतविडम्बनम् ॥४९॥ अचिन्त्यं देवताकार्यमवाङ्मनसगोचरम् ॥

श्रीभगवान् बोले—हे तात ! आपके घरमें कोई महोत्सव होनेपर, हे महाभाग ! वटके बीज जैसे भाजन बढ़ते हैं, परन्तु मेरे कल्याणके समय एक भी भाजन नहीं दिखलायी पड़ता है ! सब किसीके सब साधनोंमें दैवको ही बढ़कर मानता हूं । बिना भाजनके इनके पाकके लिये सात उपाय सुनिये । अन्नको स्वामि सरोवरमें, सूपको पापविनाशक आकाश-गङ्गाके जलमें, हे अग्नि ! गुड़के साथ उत्तम अन्नको देवतीर्थमें, हे अग्नि ! शाक और चटनीको तुम्बुरु तीर्थमें, विविध प्रकारके भोजनको कुमारधारिका तीर्थमें, तितिणीके उत्तम रसको पाण्डु तीर्थमें एवं कन्द, मूल और फलोंके साथ शेष व्यञ्जनको अन्य तीर्थोंमें और लेह्य ( चाटनेको ) तथा पेय (पीनेको) भी हे अग्नि ! अन्यान्य तीर्थोंमें ही बनाओ । महर्षियोंने भगवान्के इस वाक्यकी प्रशंसा की, और वेदके जाननेवाले अग्निने भी वैसा ही किया । वैकुण्ठवासी भगवान्के इसी प्रकार कार्य होते हैं । उस युगका अनुसरण करनेवालेकी अद्भुत विडम्बना ( माया ) अचिन्त्य, वचन और मनसे अगोचर तथा देवसाध्य ही, हुई ॥ १५० ॥

*अग्निरुवाच—*

दध्योदनतिलान्ने च परमान्नं मधुस्रवम् ॥१५०॥ माषापूपा गुडापूपाः शाकद्वयमतः परम् ॥ सर्वं सुपक्वतां नीतं त्वत्प्रसादेन

केशव ॥५१॥ आमन्त्र्य द्विजेन्द्रांश्च सुरानपि मुनीनपि ॥ अग्नि-
वाणीं समाकर्ण्य श्रीनिवासो निरामयः ॥५२॥ सम्प्रैषयच्छिवसुतं
षण्मुखं मिथिलेश्वर ॥

अग्नि बोले—हे केशव ! आपकी कृपासे दही-भात, तिलके सहित अन्न, मीठे रसवाले उत्तम अन्न, उड़दके पूप ( बड़ा ), गुड़के पूप और दो शाक, ये सब अच्छे प्रकारसे बनाये जा चुके हैं। श्रेष्ठ ब्राह्मणों देवताओं और मुनियोंको भी बुलाइये। अग्निके वचनको सुनकर दोषरहित श्रीनिवासने, हे मिथिलेश जनक ! शिवके पुत्र षट्मुखको उन्हें बुलानेके लिये भेजा ॥ १५२ ॥

अथ श्रीशेषाद्रौ कश्यपादिभ्यो ब्रह्मादिकृतोपचारप्रकारः

स जगामातिवेगेन जपतोऽग्निपरायणान् ॥ ५३ ॥ ब्राह्मणान्
वेदविदुष आजुहाव जनाधिप ॥ पाकः सम्पूर्णतां प्राप्त उत्तिष्ठत
सुरद्विजाः ॥ ५४ ॥ इति तेन समाहूताः कश्यपात्रिपुरोगमाः ॥
देवाश्च निकटं तस्य पाकस्थानस्य भेजिरे ॥५५॥

शेषाचलपर ब्रह्मा इत्यादि द्वारा किया गया कश्यप इत्यादिका सत्कार

उसने जप करते हुए अग्निके भक्तों तथा वेदके विद्वान् ब्राह्मणोंके पास बहुत तेजीसे आकर कहा कि हे देवता एवं ब्राह्मणो ! पाक तैयार हो गया है, उठिये। इस प्रकार उनसे बुलाये गये कश्यप, अत्रि इत्यादि ऋषि और देवतागण उस पाक स्थानके समीप आ गये ॥ १५५ ॥

विभज्य तत्र विधिवत्पात्रभूतान् पृथक्पृथक् ॥ पङ्क्तीश्च कार-
यित्वाऽथ तारतम्यानुसारतः ॥ ५६ ॥ पात्राणि व्यस्तृणाच्छम्भुः
पात्रापात्रविचक्षणः ॥ पाण्डुतीर्थं समारभ्य श्रीशैलावधि भूसु-
राः ॥५७॥ देवाश्च निबिडीभूतास्तस्मिन् कृष्णमहोत्सवे ॥ स्थिता
देवद्विजास्तत्र स्वस्वपात्रान्तिके पृथक् ॥ ५८ ॥ तदाऽऽह भगवान्
राजन् ब्रह्माणं चतुराननम् ॥

योग्य और अयोग्यके जाननेमें चतुर शिवजीने उन सब आगतोंको विधिवत् पृथक् पृथक् बाँटकर, छोटाई बड़ाईके अनुसार पंक्ति बनवाकर पात्र परस दिया। पाण्डुतीर्थसे लेकर श्रीशैलतक ये ब्राह्मण एवं देवता-

गण, उस कृष्णके महोत्सवमें, सघन एवं एकत्र होकर, अपने अपने पात्रके समीप पृथक् पृथक् बैठ गये। हे राजन्! तब भगवान्‌ने चार मुखवाले ब्रह्मासे कहा ॥ १५८ ॥

*श्रीभगवानुवाच—*

अनर्पितं न दातव्यं देवानां च द्विजन्मनाम् ॥५९॥

श्रीभगवान् बोले—बिना अर्पण किये देवताओं और ब्राह्मणोंको नहीं देना चाहिये ॥ १५९॥

*ब्रह्मोवाच—*

सर्वज्ञं सर्वभोक्तारं सर्वलोकेश्वरेश्वरम् ॥ त्वामेव वेद्मि गोविन्द न त्वत्तुल्यो न चाधिकः ॥ १६० ॥ कस्मै निवेदयेयं भोः प्रशाधि कमलापते ॥ स पुत्रवचनं श्रुत्वा पुत्रमाह हसन्निव ॥६१॥

ब्रह्मा बोले—हे गोविन्द! सब कुछ जाननेवाले, सब कुछ भोगनेवाले,सब लोकोंके ईश्वरके ईश्वर आप ही को जानता हूं; न तो कोई आपके बराबर है और न आपसे कोई अधिक ही है। हे कमलापति! किसको अर्पण करना चाहिये सो कहिये। हरिने पुत्रके वचनको सुनकर मुस्कराते हुए उससे कहा ॥१६१॥

*श्रीभगवानुवाच—*

अहोबिलनृसिंहस्य पूजां कृत्वा निवेदय ॥ इत्युक्तो वासुदेवेन नृसिंहस्यार्पणं नृप ॥६२॥ ब्रह्मा चकार सर्वेषां मुनीनामपि सम्मतम् ॥ ब्रह्माराधनदेवांश्चामन्त्र्याऽनर्च ततः परम् ॥ अक्षतार्घ्याम्बुगन्धैश्च धूपदीपानुलेपनैः ॥ विप्राणामर्चनं चक्रे ब्रह्मा च विधिपूर्वकम् ॥६४॥ सदात्मानन्दसम्पूर्णो हरिस्ताँल्लौकिकैः समः ॥ परिवेषं ततश्चक्रुरष्टौ दिक्पालकास्तदा ॥ ६५ ॥ पात्रसंस्कारपूर्वं च चक्रुस्ते परिवेषणम् ॥ परिवेषं च सम्पूर्णमाकर्ण्याभिमुखाद्धरिः ॥६६॥ "एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ॥ त्रींल्लोकान्व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः" ॥६७॥ इत्थं कृष्णार्पणं चक्रे श्रीनृसिंहाय विष्णवे ॥ कश्यपाद्यांश्च गोविन्दो जुषध्वमिति चाब्रवीत् ॥६८॥ भवतां ज्ञानपूर्णानां किमनेनाद्य पूर्णता ॥

भविष्यति महाप्राज्ञा दयावन्तस्तपोधनाः ॥६९॥ दरिद्रं मां च जानन्तस्त्वन्नं मे सजलं लघु ॥ बहूकृत्य स्वीकुरुत कृपया नितरामिति ॥ १७० ॥ प्रार्थनां ब्राह्मणानां तु कृतवान् प्राकृतो यथा ॥ वासुदेववचः श्रुत्वा वाक्यमाहुर्महीसुराः ॥७१॥

श्रीभगवान् बोले—अहोबिलके नृसिंहकी पूजा करके उन्हींका निवेदन करो। हे राजा! वासुदेवसे इस प्रकार कहे जानेपर ब्रह्माने मुनियोंकी सम्मतिसे नृसिंहको अर्पण किया। उसके उपरान्त ग्रहों और आराध्य देवताओंका आवाहन करके अक्षत, अर्घ्य, जल, गन्ध, धूप, दीप एवं अनुलेपनसे उनकी पूजा की। ब्रह्माने ब्राह्मणोंकी भी विधि-पूर्वक पूजा की। आनन्दसे पूर्ण भगवान्ने उनको प्रणाम किया। तत्पश्चात् आठ दिग्पालोंने पात्र शुद्ध करके परिवेष ( परोसन ) किया। अग्निके मुखसे परिवेषका पूर्ण वृत्तान्त सुनकर हरिने श्रीनृसिंह विष्णुको इस मन्त्रसे "एको विष्णुर्महद्भूतं पृथक् भूतान्यनेकशः। त्रीन् लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः अर्थात्—सब जीवोंकी आत्मा, विश्वको भोग करनेवाले, अव्यय, विराट्रूपी विष्णु अकेले ही तीनों लोकमें पृथक् हुए महाभूतमें अनेक प्रकारसे व्याप्त होकर भोजन करते हैं," अर्पण किया और गोविन्दने कश्यप इत्यादिसे भोजन कीजिये—ऐसा कहा। हे महाप्राज्ञों! ज्ञानसे पूर्ण आपको इससे क्या पूर्ति होगी? दयालु तपस्वीगण मुझको दरिद्र जानते हुए, जलके साथ मेरे थोड़ेसे अन्नको बहुत बनाकर कृपापूर्वक सदा स्वीकार करें इस प्रकार प्राकृतोंके जैसा भगवानने ब्राह्मणोंकी प्रार्थना की। वासुदेवके वचन सुनकर ब्राह्मणगण बोले ॥१७१॥

ऋषय ऊचुः—

तवान्नममृतप्रख्यं मुक्तिमार्गस्य साधनम् ॥ वयं धन्याः कृतार्थाः स्म कलौ पापाकुले हरे ॥७२॥ अभिनन्द्य तमित्थं ते सुसन्तुष्टा अभुञ्जत ॥ भोजनानन्तरं राजन् ब्राह्मणानां यथार्हतः ॥७३॥ ताम्बूलं दक्षिणां चैव प्रददौ भगवान् हरिः ॥ स विप्रभोजनस्यान्ते स्वयं भोजनमाचरत् ॥७४॥ पुत्रेण पुत्रपुत्रेण भार्यया बन्धुभिर्युतः॥ साग्निः सलोकपालश्च सशेषो गरुडान्वितः ॥७५॥ भोजनान्ते दिनाधीशो रात्रिस्थानमुपागतः॥ शयनं कृतवान् कृष्णः पर्यङ्के रमया सह ॥७६॥ स्वयं निद्राविहीनोऽपि रेमे प्राकृतवद्धरिः ॥ ब्रह्मादयः सुरश्रेष्ठाः कश्यपात्रिपुरोगमाः ॥७७॥ शयनं

चक्रिरे राजन् कन्दरेषु गृहेषु च ॥ वृक्षमूलेषु शैलानां गह्वरेषु दरीषु च ॥७८॥

ऋषि बोले— आपका अन्न अमृतके तुल्य एवं मुक्तिका साधक है। हे हरि! पापसे भरे हुए कलियुगमें हम धन्य हैं। उन लोगोंने हरिका इस प्रकारसे अभिनन्दन कर तथा अत्यन्त सन्तुष्ट होकर भोजन किया। हे राजन्! ब्राह्मणोंके भोजनके उपरान्त भगवान् हरिने उनको ताम्बूल और यथायोग्य दक्षिणा दी। ब्राह्मणोंके भोजनके उपरान्त पुत्र, पौत्र, भार्या, बन्धु, अग्नि, लोकपाल एवं गरुड़ सहित भगवानने स्वयं भोजन किया। भोजनके अन्तमें दिनके स्वामी (सूर्य) रात्रिके स्थानमें आये (अर्थात् रात्रि हुई) और कृष्णचन्द्रने लक्ष्मीके साथ पलङ्गपर शयन किया। भगवान्ने स्वयं निद्राविहीन होनेपर भी प्राकृत मनुष्यों की तरह रमण किया। हे राजन्! ब्रह्मा इत्यादि श्रेष्ठ देवता एवं कश्यप, अत्रि इत्यादि मुनिगण भी कन्दराओं, घरों, वृक्षोंके नीचे, पर्वतोंकी गुफाओं और घाटियोंमें सोये ॥१७८॥

अथ भगवदाज्ञया ब्रह्मकृतसैन्यसज्जीकरणप्रकारः

ततः प्रभाते विमले श्रीनिवासः सतां गतिः ॥ गरुडं प्रेषयामास ब्रह्माणं प्रति भूमिप ॥७९॥ स गत्वा वायुवेगेन ब्रह्माणं तल्पसंस्थितम् ॥ प्रत्युवाच महाराज पक्षिराट् परमं वचः ॥१८०॥

भगवान्की आज्ञासे ब्रह्माद्वारा सेनाओंका सजाया जाना

हे राजन्! तत्पश्चात् स्वच्छ प्रभातके होनेपर सन्तोंकी गति श्रीनिवासने ब्रह्माके पास गरुड़को भेजा। हे महाराज! वह पक्षिराज गरुड़ पलङ्गपर सोये हुए ब्रह्माके पास वायु-वेगसे गये और उनसे उत्तम वचन बोले ॥१८०॥

*गरुड उवाच—*

गच्छ तातान्तिकं ब्रह्मन् वस्त्रालङ्कारभूषितः ॥ हंसमारुह्य चन्द्राभं गन्तुं राजेन्द्रपत्तनम् ॥८१॥ वाद्यन्तां च विचित्राणि वादित्राणि महान्ति च ॥ गजमारोप्य महती भेरी वाद्यानुवाद्यताम् ॥८२॥ वाहनानि विचित्राणि रथा आन्दोलिका अपि ॥ अलङ्क्रियन्तां राजेन्द्रपुरीं गन्तुं ससंभ्रमम् ॥८३॥ पक्षिराड्वचनं श्रुत्वा पक्षिवाहननन्दनः ॥ नियोजयामास ततो बलं देवगणस्य च ॥८४॥

गजानां च हयानां च वृषभाणां च मण्डलम्॥ पदातीनां च शूराणां मण्डलं समलङ्कृतम् ॥८५॥ शूराश्च कृतविद्याश्च धृतशस्त्रास्त्रपाणयः॥ पितामहं पुरस्कृत्य जग्मुर्नारायणान्तिकम् ॥८६॥ तं दृष्ट्वा सर्वदेवेशं भगवानाह भूपते ॥

गरुड़ बोले—हे ब्रह्मा! वस्त्रों और अलङ्कारोंसे सजकर, चन्द्रमाके समान प्रकाशवाले हंसपर चढ़, श्रेष्ठ राजाकी नगरीको चलनेके लिये पिताके पास शीघ्र चलिये। बड़े और अद्भुत बाजाओंको बजवाइये तथा बड़े भेरी (नगारा) को हाथीपर रखकर बजवाइये। अद्भुत वाहनों, रथों और आन्दोलिकाओं (डोलियों) को भी राजेन्द्रकी पुरीमें जानेके लिये शीघ्र सजवा दीजिये। गरुड़के वचनको सुनकर गरुड़वाहन हरिके पुत्र ब्रह्माने देवताओंकी सेना, हाथी, घोड़े और बैलों तथा पैदल शूरोंके सजे हुए मण्डलका संचालन किया। शस्त्रों और अस्त्रोंको हाथोंमें धारण किये हुए निपुण शूरगण ब्रह्माको आगे कर हरिके पास गये। हे राजन्! उनको देखकर श्रीनिवासने कहा ॥१८७॥

श्रीनिवास उवाच—

विलम्बः क्रियते कस्माद्गमनार्थं पितामह ॥८७॥ नियोजय बलं सर्वं राजधान्यै नृपस्य च॥ इत्थं हरेर्वचः श्रुत्वा वासुदेवात्मजोऽब्रवीत् ॥८८॥

श्रीनिवास बोले—हे ब्रह्मा! चलनेमें विलम्ब क्यों करते हो? राजाकी राजधानीमें चलनेके लिये सब सेनाओंको आज्ञा दो। श्रीनिवासके इस प्रकारके वचनको सुनकर ब्रह्मा बोले ॥१८८॥

ब्रह्मोवाच—

सज्जीकृतं बलं सर्वं धृतायुधमरिन्दम ॥ ॥ उत्तिष्ठ पुरुषश्रेष्ठ समारोह खगेश्वरम् ॥८९॥

ब्रह्मा बोले—हे शत्रुओंको दमन करनेवाले! आयुध धारण किये हुए सब सेनाएं साज दी गयी हैं। हे पुरुषश्रेष्ठ! उठिये और गरुड़पर चढ़िये ॥१८९॥

अथ वियद्राजपुरं प्रति सपरिकरश्रीनिवासगमनम्

स इत्थमुक्तो भगवान् गरुडस्कन्धमास्थितः ॥ ब्रह्माणमग्रतः

कृत्वा रुद्रं कृत्वा तु दक्षिणे ॥१९०॥ वामे वायुं ततः कृत्वा कुमारं पृष्ठतस्तथा ॥ रमामारोपयामास रथं काञ्चननिर्मितम् ॥ ९१ ॥ मातरं वकुलां राजन् विमानं सूर्यसन्निभम् ॥ समारोप्य महाराज भगवान् भक्तवत्सलः ॥९२॥ स्वयं तु गरुडारूढो जगाम च सतां गतिः ॥

### परिकरोंके साथ श्रीनिवासका आकाशराजके नगरको जाना

इस प्रकार कहे जानेपर श्रीनिवासने गरुड़पर चढ़कर, ब्रह्माको आगे, रुद्रको दाहिने, वायुको बायें और षण्मुखको पीछे करके लक्ष्मीको सोनेके बने हुए रथपर बैठाया और हे राजन्! माता वकुलाको सूर्यके समान प्रकाशवाले विमानपर बैठाकर भक्तोंको प्यार करनेवाले तथा सज्जनोंकी गति भगवान् स्वयं गरुड़पर चढ़कर गये ॥१९१॥

शेषो दधार राजेन्द्र श्वेतच्छत्रं शशिप्रभम् ॥९३॥ चामरे चन्द्रसङ्काशे वीजयामास मारुतः ॥ व्यजनेन विचित्रेण रत्नदण्डेन माधवम् ॥९४॥ वीजयामास राजेन्द्र विष्वक्सेनः प्रतापवान् ॥ भेरीदुन्दुभिनिर्घोषैर्वादित्राणां महास्वनैः ॥ ९५ ॥ नर्त्तकैर्नटनैश्चैव हाहाहूहूयुतोऽञ्जसा ॥ ययौ विभवमापन्नः सर्वात्मा सर्वतोमुखः ॥९६॥

हे राजेन्द्र! चन्द्रमाके समान प्रकाशवाले श्वेत छत्रको शेषने धारण किया। चन्द्रमाके समान प्रकाशवाले चामरको वायुदेव हिलाने लगे। हे राजेन्द्र! प्रतापवाले विष्वक्सेनने सुवर्णके दण्डवाले विचित्र पंखेसे माधवको हवा की एवं भेरी, दुन्दुभी इत्यादि बाजाओंके बड़े शब्दके साथ नाचनेवालों, नटों एवं हाहा हूहू इत्यादि गायकोंसे युक्त सब किसीको आत्मा श्रीनिवास सब ओरसे विभवयुक्त हो गये ॥१९६॥

गमने वासुदेवस्य देवानामपि भूमिप ॥ ऋषीणां पूर्वदेवानां गन्धर्वाणां तपस्विनाम् ॥ ९७ ॥ सम्मर्दः सम्बभूवात्र पशूनां मानुषात्मनाम् ॥ वनितानां च वृद्धानां बालानां रक्षसामपि ॥९८॥ अन्योऽन्यं कलहस्तत्र वनितानामभूत्तदा ॥ ऋषीणामृषिकन्यानां

देवस्त्रीणां च दैवतैः ॥ ९९ ॥ तत्राधना तु गच्छन्ती मार्गमध्ये
महीपते ॥ काचिद्भर्तारमालम्ब्य पुत्रमंसे निधाय च ॥ २०० ॥
भारमुद्धृत्य शिरसि पद्भ्यामेव स्म गच्छति ॥ तस्मिन्काले
महाराज रथस्थाः सुरयोषितः ॥ १ ॥ पन्थानमनुरुन्धन्त्योऽतर्जयं-
श्चाधनान् कृशान् ॥ तदा वियोगमापन्ना भर्त्रा सा भारपीडि-
ता ॥२॥ कूजन्ती नाथ हा नाथ वने न त्यक्तुमर्हसि ॥ एवमुक्त्वा
विप्रपत्नी सपुत्रा पतिता भुवि ॥३॥ रुदिताः शिशवस्तत्र प्रहृष्टा-
स्तत्र केचन ॥ केचित्पयः स्म काङ्क्षन्ति केचिदन्नं महीपते ॥
भुञ्जन्ति केचित्क्षीरान्नं केचिद्दध्योदनं नृप ॥ ४ ॥ हसन्ति
केचित्प्ररुदन्ति केचित्प्रयान्ति केचित्प्रलपन्ति केचित् ॥ पतन्त-
मन्ये करपल्लवेन समुद्धरन्ति स्म हसन्ति केचन ॥५॥

हे राजन्! वासुदेवके प्रस्थानके समय, वहांपर देवताओं, ऋषियों, असुरों, गन्धर्वों तपस्वियों, पशुओं, मनुष्यों, स्त्रियों, वृद्धों, बालकों और राक्षसोंकी बड़ी भीड़ हो गयी जहांपर स्त्रियोंका, ऋषियोंका, ऋषिकन्याओं-का, देवताओंकी स्त्रियोंका एवं देवताओंका आपसमें एक दूसरेके साथ झगड़ा हो गया। हे राजन! वहांपर कोई धनहीन स्त्री पतिका अवलम्ब लेकर, पुत्रको कन्धेपर रखकर, शिरपर बोझ लेकर मार्गमें पैदल ही जा रही थी। हे महाराज! उसी समय रास्ताको रोकती हुई रथस्थ हो चलती हुई देवताओंकी स्त्रियां उन दुबले धनहीनोंको झिड़कती थीं। तब वह भारसे दुःखी स्त्री—हा नाथ! हा नाथ! मुझे वनमें छोड़ना आपके लिये योग्य नहीं है—यह कहती हुई अपने पतिसे बिछुड़ गयी और पुत्रके साथ पृथ्वीपर गिर पड़ी। वहांपर बच्चे रोते थे, और कोई आनन्दित होते थे। हे राजन! कोई तो दूधही दूध चाहते, कोई अन्न ही चाहते थे; और कोई खीर तो कोई, हे राजन! दही और भात ही खाते थे, और कोई हंसते, कोई रोते, कोई चलते, कोई प्रलाप (बकना) करते, कोई गिरते हुएको उठाते और कोई कोई हंसते थे ॥२०५॥

सुराङ्गनाश्च राजेन्द्र तथा वैखानसाङ्गनाः ॥६॥ ऋष्यङ्गनाश्च गन्ध-
र्ववनिताश्चारुलोचनाः ॥ अवारोहन् गिरेश्चैव श्रीनिवासपरायणाः
॥७॥ शेषाचलं समारभ्य नारायणपुरावधि ॥ तिलमात्रावकाशः
स्म मार्गमध्ये न दृश्यते ॥८॥ मध्ये कृत्वा पद्मतीर्थं गता सा
वाहिनी हरेः ॥

हे राजन्! श्रीनिवासके भक्त सुन्दर नेत्रवाली देवताओं, वैखानसों, ऋषियों एवं गन्धर्वोंकी स्त्रियोंके पहाड़से उतरते हुए शेषाचलसे लेकर नारायणपुरतक जानेसे मार्गमें तिलमात्र भी जगह खाली नहीं दिखलायी देती थी। वे भगवानकी सवारी पद्मतीर्थको मध्यमें करके गयीं ॥२०८॥

ऋग्यजुस्सामाथर्वाद्यैर्गीयमानो जगद्गुरुः ॥९॥ श्रीपतिः पद्मतीर्थाख्यं महातीर्थं महीपते ॥ आससाद जगद्योनिः सच्चिदानन्दविग्रहः ॥२१०॥ ससुरासुरगन्धर्वसिद्धसाध्यमरुद्गणः ॥ प्राप्तं गरुडमारूढं कृष्णद्वैपायनात्मजः ॥ ११ ॥ साष्टाङ्गन्यसने राजन् प्रणिपत्य शुकोऽब्रवीत् ॥

ऋग्वेद, यजुर्वेद सामवेद और अथर्व वेदसे गाये गये, संसारके गुरु, श्रीपति, जगद्योनि, सच्चिदानन्दके स्वरूप, पद्मतीर्थ नामक श्रीनिवास देवता, असुर, गन्धर्व, सिद्ध, साध्य, एवं मरुद्गणके साथ महातीर्थमें पहुंचे और हे राजन्! श्रीशुकदेवमुनि गरुड़पर चढ़कर आये हुए श्रीकृष्णको साष्टाङ्ग प्रणाम करके बोले ॥२१२॥

अथ भगवन्तं प्रति शुकमुनिकृतोपचारक्रमः

तपश्च सफलं मन्ये कृतं मे पुरुषोत्तम ॥१२॥ यो भवान् ब्रह्मरुद्राद्यैरगम्यो वेदगोचरः ॥ तं भवन्तं प्रपश्यामि नेत्राभ्यां पुरुषोत्तम ॥ १३ ॥ सपुत्रमित्राखिललोकपालं शेषेण लक्ष्म्या च युतं यतोऽहम् ॥ पश्यामि भाग्योदयशालिदृग्भ्यां त्वत्पादपूजा सफला ततो मे ॥१४॥ विज्ञापनं मे शृणु देवराज प्रसादहेतोस्तव वासुदेव ॥ कृत्वा कृपां वेङ्कटशैलनाथ भुक्त्वा मदीयं फलकन्दमूलम् ॥१५॥ इत्युक्तो मुनिना तेन वासुदेवोऽभ्यभाषत ॥

शुकदेव मुनिके किये हुए श्रीनिवासके सत्कार

हे पुरुषोत्तम! मैं अपनी की हुई तपस्याको सफल मानता हूं जो हे पुरुषश्रेष्ठ! ब्रह्मा, रुद्र इत्यादिकोंको भी अज्ञेय तथा वेदसे ही ज्ञेय उस आपको मैं आंखोंसे देखता हूं। चूंकि मैं पुत्र, मित्र, सब लोकपालों, शेष और लक्ष्मीके साथ आपको अपनी भाग्यशाली आँखोंसे देखता हूं इसलिये मेरा आपके चरणोंकी पूजा करना सफल है। हे देवताओंके राजा! अपने प्रसादके निमित्त मेरी प्रार्थनाको सुनें। हे

वासुदेव ! हे वेङ्कटाचलके स्वामी ! कृपा करके मेरे द्वारा दिये गये कन्द, मूल एवं फलको भोजन कीजिये। उस मुनिसे इतना कहे जानेपर श्रीनिवासने कहा ॥ २१६ ॥

श्रीभगवानुवाच—

शृणु तापसशार्दूल वचनं साधुसम्मतम् ॥१७॥ भवान् कृशो विरागी च ब्रह्मचारी दृढव्रतः ॥ वयं संसारनिरता बहवश्चात्र भूसुर ॥१७॥ अद्यैव नगरीं गत्वा राज्ञस्तस्य महात्मनः ॥ तत्रैव भोजनं कुर्म इति मे वर्तते मनः ॥१८॥ वदत्येवं हृषीकेशे व्यासपुत्रोऽभ्यभाषत ॥

श्रीनिवास बोले—हे तपस्वियोंमें श्रेष्ठ ! साधु पुरुष-सम्मत इस वचनको सुनिये। आप दुबले, विरागी, ब्रह्मचारी एवं दृढ़ व्रतवाले हैं; और हे ब्राह्मण ! संसारमें लगे हुए हम लोग यहाँपर बहुतसे हैं। आज ही उस महात्मा राजाकी नगरीमें जाकर वहीं भोजन करूंगा—ऐसा मेरा मन है। श्रीनिवासके ऐसा कहनेपर व्यासके पुत्र शुकदेवजी बोले ॥ २१९ ॥

श्रीशुक उवाच—

निष्किञ्चनोऽहं गोविन्द निष्किञ्चनजनप्रिय ॥ १९ ॥ त्वयि भुक्ते जगद्भुक्तं नात्र कार्या विचारणा ॥ वदत्येवं शुके कृष्णं वकुला वाक्यमब्रवीत् ॥२२०॥

श्रीशुकदेवजी बोले—हे गोविन्द ! मैं दरिद्र हूं और आप दरिद्रोंको प्यार करनेवाले हैं। आपके भोजन करनेसे संसारने ही भोजन कर लिया, इसमें विचार नहीं करना चाहिये। श्रीशुकदेवजीके श्रीनिवाससे इस प्रकार कहनेपर वकुला बोली ॥ २२० ॥

वकुलोवाच —

शृणु तद्वचनं कृष्ण त्वद्विवाहे रमापते ॥ यत्नं बहुविधं चक्रे राजानं स हि बोधयन् ॥२१॥ इति मातुर्वचः श्रुत्वा माधवः शुकमब्रवीत् ॥

वकुला बोली—हे कृष्ण ! इनके वचनको सुनो। राजाको समझाते हुए इन्होंने आपके विवाहमें बहुत ही यत्न किया है। माताके इस वचनको सुनकर श्रीनिवास शुकदेवजीसे बोले ॥ २२२ ॥

*श्रीनिवास उवाच—*

त्वद्वाक्यामृतपानेन तृप्तिर्मेऽभून्मुनीश्वर ॥२२॥ किमन्येन प्राकृतेन फलेनाल्परसेन मे ॥ तथापि तव वाक्येन करिष्ये भोजनं मुने ॥२३॥ सान्त्वयित्वा मुनिवरं गरुडादवरुह्य सः ॥ कुटीरं सम्प्रविश्याथ सपुत्रः सपरिग्रहः ॥२४॥ मुञ्जैः कृतासने रम्ये संस्थितः परमेश्वरः ॥ शुकः स्नात्वा पद्मतीर्थे कृत्वान्नं भक्तिसंयुतः ॥२५॥ अमृतावीजनिचयं मुष्टिभिः प्रविहत्य च ॥ तत्तण्डुलैर्महाराज कृतवानन्नमुत्तमम् ॥२६॥ वृहतीफलसंयुक्तं तिन्त्रिणीरससंयुतम् ॥ स्वान्तरस्थस्य यज्ञोऽयं पूजासाधनमेव च ॥२७॥ तेनैव बाह्यमूर्तेस्तु पूजनं साधुसम्मतम् ॥ इति मत्वार्थतत्त्वज्ञः कृत्वा पादावनेजनम् ॥ २८ ॥ पद्मपात्राणि चास्तीर्य तत्रान्नं रससंयुतम् ॥ विनिःक्षिप्य विशेषेण कृतसाष्टाङ्गसन्नतिः ॥ २९ ॥ भोजनं कुरु गोविन्द सादापूर्णमनोरथ ॥

श्रीनिवास बोले—हे मुनीश्वर! आपके वचन रूपी अमृतके पीनेसे मुझे तृप्ति हो गयी। और अन्य प्राकृत फल और रसोंसे मुझको क्या? तथापि हे मुनि! आपके वचनको मान भोजन करूंगा। इस प्रकार मुनिको सान्त्वना देकर, गरुड़से उतरकर, पुत्र और स्त्रीके साथ कुटीमें प्रवेश करके कुशासे बने हुए सुन्दर आसन पर बैठ गये। श्रीशुकदेवजी पद्मतीर्थमें स्नान कर, भक्तिपूर्वक अन्नोंको बनाकर, अमृता (गुरुची) के बीजकी राशिको मुट्ठियोंसे कूटकर, हे महाराज! उसी चावलको तेंतुलके रसके साथ मिला कर वृहती (बैगन) के फलोंके साथ उत्तम अन्न बनाया। सबके अन्तर्यामी आत्माकी तृप्तिके लिये यही यज्ञ तथा पूजा सामग्री भी है। ऐसे ही बाहरकी मूर्तिकी पूजा करना साधु-सम्मत है। ऐसा मानकर अर्थके तत्वको जाननेवाले शुकदेवजीने उनके चरणोंको धोकर, कमलके पत्तोंको बिछाकर, उसपर रसके साथ अन्नको परसकर, विशेषतासे साष्टाङ्ग प्रणाम करके कहा—हे सदा पूरे मनोरथवाले गोविन्द! भोजन कीजिये ॥ २३० ॥

एवं सम्प्रार्थितो देवः शुकेन परमर्षिणा ॥ ३० ॥ तद्भक्तिपारवश्येन भगवानात्मभूः स्वयम् ॥ ऋषीणामुचिताहारान् बुभुजे

वासुदेव ! हे वेङ्कटाचलके स्वामी ! कृपा करके मेरे द्वारा दिये गये कन्द, मूल एवं फलको भोजन कीजिये। उस मुनिसे इतना कहे जानेपर श्रीनिवासने कहा ॥ २१६ ॥

*श्रीभगवानुवाच—*

शृणु तापसशार्दूल वचनं साधुसम्मतम् ॥१७॥ भवान् कृशो विरागी च ब्रह्मचारी दृढव्रतः ॥ वयं संसारनिरता बहवश्चात्र भूसुर ॥१७॥ अद्यैव नगरीं गत्वा राज्ञस्तस्य महात्मनः ॥ तत्रैव भोजनं कुर्म इति मे वर्तते मनः ॥१८॥ वदत्येवं हृषीकेशे व्यासपुत्रोऽभ्यभाषत ॥

श्रीनिवास बोले—हे तपस्वियोंमें श्रेष्ठ ! साधु पुरुष-सम्मत इस वचनको सुनिये। आप दुबले, विरागी, ब्रह्मचारी एवं दृढ़ व्रतवाले हैं; और हे ब्राह्मण ! संसारमें लगे हुए हम लोग यहाँपर बहुतसे हैं। आज ही उस महात्मा राजाकी नगरीमें जाकर वहीं भोजन करूंगा—ऐसा मेरा मन है। श्रीनिवासके ऐसा कहनेपर व्यासके पुत्र शुकदेवजी बोले ॥ २१९ ॥

*श्रीशुक उवाच—*

निष्किञ्चनोऽहं गोविन्द निष्किञ्चनजनप्रिय ॥ १९ ॥ त्वयि भुक्ते जगद्भुक्तं नात्र कार्या विचारणा ॥ वदत्येवं शुके कृष्णं वकुला वाक्यमब्रवीत् ॥२२०॥

श्रीशुकदेवजी बोले—हे गोविन्द ! मैं दरिद्र हूं और आप दरिद्रोंको प्यार करनेवाले हैं। आपके भोजन करनेसे संसारने ही भोजन कर लिया, इसमें विचार नहीं करना चाहिये। श्रीशुकदेवजीके श्रीनिवाससे इस प्रकार कहनेपर वकुला बोली ॥ २२० ॥

*वकुलोवाच —*

शृणु तद्वचनं कृष्ण त्वद्विवाहे रमापते ॥ यत्नं बहुविधं चक्रे राजानं स हि बोधयन् ॥२१॥ इति मातुर्वचः श्रुत्वा माधवः शुकमब्रवीत् ॥

वकुला बोली—हे कृष्ण ! इनके वचनको सुनो। राजाको समझाते हुए इन्होंने आपके विवाहमें बहुत ही यत्न किया है। माताके इस वचनको सुनकर श्रीनिवास शुकदेवजीसे बोले ॥ २२२ ॥

*श्रीनिवास उवाच—*

त्वद्वाक्यामृतपानेन तृप्तिर्मेऽभून्मुनीश्वर ॥२२॥ किमन्येन प्राकृतेन फलेनाल्परसेन मे ॥ तथापि तव वाक्येन करिष्ये भोजनं मुने ॥२३॥ सान्त्वयित्वा मुनिवरं गरुडादवरुह्य सः ॥ कुटीरं सम्प्रविश्याथ सपुत्रः सपरिग्रहः ॥२४॥ मुञ्जैः कृतासने रम्ये संस्थितः परमेश्वरः ॥ शुकः स्नात्वा पद्मतीर्थे कृत्वान्नं भक्तिसंयुतः ॥२५॥ अमृताबीजनिचयं मुष्टिभिः प्रविहृत्य च ॥ तत्तण्डुलैर्महाराज कृतवानन्नमुत्तमम् ॥२६॥ बृहतीफलसंयुक्तं तिन्त्रिणीरससंयुतम् ॥ स्वान्तरस्थस्य यज्ञोऽयं पूजासाधनमेव च ॥२७॥ तेनैव बाह्यमूर्तेस्तु पूजनं साधुसम्मतम् ॥ इति मत्वार्थतत्त्वज्ञः कृत्वा पादावनेजनम् ॥ २८ ॥ पद्मपात्राणि चास्तीर्य तत्रान्नं रससंयुतम् ॥ विनिःक्षिप्य विशेषेण कृतसाष्टाङ्गसन्नतिः ॥ २९ ॥ भोजनं कुरु गोविन्द सादापूर्णमनोरथ ॥

श्रीनिवास बोले—हे मुनीश्वर! आपके वचन रूपी अमृतके पीनेसे मुझे तृप्ति हो गयी। और अन्य प्राकृत फल और रसोंसे मुझको क्या? तथापि हे मुनि! आपके वचनको मान भोजन करूंगा। इस प्रकार मुनिको सान्त्वना देकर, गरुड़से उतरकर, पुत्र और स्त्रीके साथ कुटीमें प्रवेश करके कुशासे बने हुए सुन्दर आसन पर बैठ गये। श्रीशुकदेवजी पद्मतीर्थमें स्नान कर, भक्तिपूर्वक अन्नोंको बनाकर, अमृता (गुरुची) के बीजकी राशिको मुट्ठियोंसे कूटकर, हे महाराज! उसी चावलको तेंतुलके रसके साथ मिला कर बृहती (बैगन) के फलोंके साथ उत्तम अन्न बनाया। सबके अन्तर्यामी आत्माकी तृप्तिके लिये यही यज्ञ तथा पूजा सामग्री भी है। ऐसे ही बाहरकी मूर्तिकी पूजा करना साधु-सम्मत है। ऐसा मानकर अर्थके तत्वको जाननेवाले शुकदेवजीने उनके चरणोंको धोकर, कमलके पत्तोंको बिछाकर, उसपर रसके साथ अन्नको परसकर, विशेषतासे साष्टाङ्ग प्रणाम करके कहा—हे सदा पूरे मनोरथवाले गोविन्द! भोजन कीजिये ॥ २३० ॥

एवं सम्प्रार्थितो देवः शुकेन परमर्षिणा ॥ ३० ॥ तद्भक्तिपारवश्येन भगवानात्मभूः स्वयम् ॥ ऋषीणामुचिताहारान् बुभुजे

सर्वभोजनः ॥२३१॥ लक्ष्मीस्तस्याज्ञया माता सार्धं वकुलमालया ॥
बुभुजे मुनिना दत्तं तदन्नममृतप्रभम् ॥२३२॥

श्रेष्ठ मुनि शुकदेवजीसे इस प्रकार प्रार्थना किये जानेपर स्वयं उत्पन्न होनेवाले तथा सब कुछ भोजन करनेवाले भगवान्, श्रीनिवासदेवने उनकी भक्तिके वशमें होकर ऋषियोंके योग्य आहारको भोजन किया। उनकी आज्ञासे माता वकुलाके साथ लक्ष्मीने मुनि द्वारा दिये गये अमृतके तुल्य अन्नको भोजन किया ॥ २३२ ॥

तस्मिन् भुक्तवति श्रीश ऋषयः कोपपूरिताः ॥ तदा शुकं भी-
षयन्तः समुत्तस्थुर्वरासनात् ॥ २३३ ॥ शापानुग्रहसामर्थ्यसाधना-
श्च तपोधनाः ॥ तेषां मतं तु विज्ञाय भगवान् वहिरागतः ॥२३४॥
फूत्कारं कृतवान् कृष्णः सर्वेषां तृप्तिहेतवे ॥ तन्मुखाम्भोजसम्भू
तवायुना तृप्तिहेतुना ॥२३५॥ सुरधेन्वा यथा तृप्तास्तदैव मुनिपुङ्ग-
वाः ॥ शुकं सन्तोषयामासुर्वचनैः स्तोत्रमिश्रितैः ॥२३६॥

लक्ष्मीपतिके भोजन करनेपर शाप और कृपा करनेमें सामर्थ्य एवं सामग्रीवाले तपोधन ऋषिगण क्रोधसे भरकर शुकदेवजीको डराते हुए श्रेष्ठ आसनसे उठ गये। उनके मतको जानकर श्रीनिवास बाहर आये और सब किसीकी तृप्तिके लिये कृष्णने "फू" ऐसा शब्द किया। उनके कमल जैसे मुखसे निकले हुए, तृप्तिके कारणवाले वायुसे ही उसी समय कामधेनुसे जैसे तृप्त हो मुनिगणोंने स्तोत्रयुक्त वचनोंसे शुकदेवजीको शीघ्र ही सन्तुष्ट किया ॥ २३६ ॥

अथ श्रीनिवासाभिमुखतया स्वपुरात्सपरिकरवियन्नृपागमनम्

कृत्वाष्टम्यां तत्र वासं नवम्यां गुरुवासरे ॥ प्रभातसमये प्राप्ते
श्रीनिवासस्त्वरान्वितः ॥२३७॥ पुनर्गरुडमारुह्य गुरुवारे जगद्गुरुः ॥
चतुरङ्गबलाध्यक्षं ब्रह्माणं च पितामहम् ॥ २३८ ॥ निधाय पुरतो
राजञ्जगाम जगदीश्वरः ॥

परिकरोंके साथ आकाशराजका श्रीनिवासके सम्मुख आना

हे राजन्! अष्टमीको वहीं निवास कर नवमी गुरुवारके प्रातःकाल होनेपर संसारके गुरु श्रीनिवास पुनः गरुड़पर चढ़कर, चतुरंगिणी सेनाके स्वामी पितामह ब्रह्माको आगे रखकर शीघ्रतासे चलने लगे ॥ २३८ ॥

आकाशराजा तथा भगवान्‌का नगर द्वारमें मिलना [ पृष्ठ ४६७ ]



गजमारुह्य तरसा पुर्वां पुनीाद्धते रत ।
गरुडस्कन्धमारूढ श्वनन्दनादिभिर्युतम् ।
राजा ददर्श गोविन्द शनैरेण परिदर्शितम ॥

अस्ताद्रिं प्रस्थिते भानौ तस्मिन् काले महीपते ॥३९॥ अ-
ष्टवर्गं स्वयं कृत्वा कृतकौतुकमङ्गलः ॥ पद्मावतीं स्नापयित्वा गन्ध
तैलेन भूमिपः ॥२४०॥ अलङ्कृत्य वरां कन्यामलङ्कारैर्महीपतिः ॥
गजमारोप्य तरसा पुत्रीं पुत्रीहिते रतः ॥ ४१ ॥ आकाशराजो ध-
र्मात्मा पुत्रेण सह संयुतः ॥ पुरोहितेन शक्रेण तोण्डमानेन नि-
र्ययौ ॥४२॥

हे राजन् ! सूर्यके अस्ताचल चले जानेपर उसी समय रक्षाबन्धन कर, पुत्र, पुरोहित, शक्र (इन्द्र) एवं तोंडमानके साथ पुत्रीके हितमें लगे हुए वह धर्मात्मा आकाशराजा स्वयं अष्टवर्ग करके, गंध, एवं तैल-पूर्वक कन्या पद्मावतीको स्नान कराकर, उनको अलंकारोंसे सजाकर तथा हाथीपर शीघ्र चढ़ाकर संसारकी उत्पत्तिके स्थान श्रीनिवासको देखनेके लिये इच्छुक हो बाहर आये ॥ २४२ ॥

श्रीनिवासं जगद्योनिं द्रष्टुकामो रमापतिम् ॥ चतुरङ्गबलैः
सर्वैर्गजाश्वरथसंयुतैः ॥४३॥ ध्वजैश्चैव पताकाभिश्चामरैर्व्यजनैर-
पि ॥ भेरीदुन्दुभिनिर्घोषैर्वादित्राणां महास्वनैः ॥ ४४ ॥ नर्तकैर्न
टकैश्चैव सूतमागधवन्दिभिः ॥ स्तूयमानो महाराजः सैन्यमध्ये
व्यराजत ॥४५॥ यथाकाशे चन्द्रबिम्बं नक्षत्रगणमण्डले ॥

वह चतुरंगिणी सेनाओं, हाथी, घोड़ों, रथों, ध्वजाओं, पताकाओं, चामरों, तथा पर्खो, भेरी, दुंदुभी प्रभृत बाजाओंके शब्द, नाचनेवालों नटोंके साथ सूत और मागधसे स्तुति किये गये सेनाओंके बीचमें शोभते थे जैसे आकाशमें नक्षत्रोंके मण्डलमे चन्द्रमा शोभते हैं ॥ २४६ ॥

अथ श्रीनिवासवियन्नृपपद्मावतीनां परस्परावलोकनम्

राजा ददर्श गोविन्दं शक्रेण परिदर्शितम् ॥४६॥ गरुडस्कन्ध-
मारूढं श्वेतच्छत्रादिभिर्युतम् ॥ सुकुमारं युवानं च सुन्दरं सुन्द-
राननम् ॥ ४७ ॥ श्रीनिवासं जगद्योनिं सच्चिदानन्दविग्रहम् ॥
दृष्ट्वा सन्तुष्टमनसा स रथादवरुह्य च ॥४८॥ पद्मावतीं स्वपुत्रीं

च निधाय परतो नृपः ॥ पुरोहितं पुरस्कृत्य चेदं वचनमब्र-
वीत् ॥४९॥

### श्रीनिवास, आकाशराज और पद्मावतीका परस्पर देखना

इन्द्रसे दिखाये गये गोविन्दको राजाने देखा और उस गरुड़के कन्धेपर चढ़े हुए, श्वेतच्छत्रादिकोंसे युक्त, सुन्दर मुखवाले, सुन्दर एवं सुकुमार युवक, सच्चिदानन्दके स्वरूप, संसारके उत्पत्तिस्थान श्रीनिवासको देखकर सन्तुष्ट मनसे वह राजा रथसे उतरकर, अपनी पुत्री पद्मावतीको सामने रखकर, पुरोहितको प्रणाम करके यह वचन बोले ॥ २४९ ॥

*आकाशराज उवाच—*

धन्योऽहं कृतकृत्योऽहं स्वर्गमार्गं समास्थितः ॥ एवं वदन्तं
तत्काले श्रीनिवासः सतां गतिः ॥२५०॥ ददर्श राजशार्दूलं नार-
देन प्रदर्शितम् ॥

आकाशराज बोले—मैं धन्य हूं, मैं कृतार्थ हो गया हूं और मैंने स्वर्ग मार्गको प्राप्त किया है—ऐसा बोलते हुए तथा नारदद्वारा दिखलाये गये श्रेष्ठ राजाको सज्जनोंकी गति श्रीनिवासने उसी समय देखा ॥२५१॥

*श्रीनारद उवाच*

दीर्घश्मश्रुं दीर्घबाहुं सर्वदा दीर्घदर्शनम् ॥५१॥ श्वशुरं तव
गोविन्द पश्य माधव भूमिपम् ॥

नारद बोले—हे गोविन्द ! लम्बी दाढ़ी, लम्बी बाहुवाले तथा लम्बे आकारवाले अपने श्वसुर राजाको देखिये ॥२५२॥

*श्रीनिवास उवाच—*

धन्यं नारद मज्जन्म यदाकाशोऽद्य बान्धवः ॥५२॥ सम्बन्धस्ते-
न सम्प्राप्तः किं मयाचरितं पुरा ॥ वदत्येवं हृषीकेशे राजा सत्य-
पराक्रमः ॥५३॥ द्वारतोरणमासाद्य श्रीनिवासं ददर्श ह ॥ पूज-
यामास गोविन्दं वसनाभरणादिभिः ॥५४॥ गन्धतैलेन राजेन्द्र
जामातरमपूजयत् ॥ सा ददर्श वरारोहा पतिं परमपावनम् ॥५५॥

पद्मावती विशालाक्षी लज्जया परिमोहिता ॥ तां ददर्श जगद्यो-
निः कमलाक्षीं महीपते ॥५६॥ पद्मावतीश्रीनिवासौ वाहनादवरु-
ह्य च ॥ अन्योन्यालोकनं राजंश्चक्राते संस्थितौ ततः ॥५७॥
वासुदेवस्य ये भक्तास्तेऽन्योन्यं परिरेभिरे ॥

श्रीनिवास बोले हे नारद ! मेरा जन्म धन्य है; क्योंकि आज आकाशराज मेरे बांधव हुए और उनके साथ मेरा सम्बन्ध हो गया। मैंने पहले कौनसा पुण्य किया था ? श्रीनिवासके ऐसा कहते समय सत्यपराक्रमी राजाने तोरणयुक्त द्वारपर आकर श्रीनिवास गोविन्दको देखा और वस्त्रों और कपड़ों एवं, हे राजेन्द्र ! गन्ध तैलसे जामाता श्रीनिवासकी पूजा की। लज्जासे मोहित, बड़े-बड़े नेत्रवाली तथा सुन्दरी पद्मावतीने अपने परम पवित्र पतिको देखा। हे राजन् ! जगद्योनि श्रीनिवासने भी उस कमल-नयनी पद्मावतीको देखा। हे राजन् ! इसी प्रकार पद्मावती और श्रीनिवास वाहनोंसे उतरकर, ठहरकर एक दूसरेको देखने लगे। श्रीनिवासके जो भक्त थे उन्होंने एक दूसरेको आलिङ्गन किया ॥२५८॥

अथ श्रीनिवासस्य पद्मावत्या सह दुर्गादर्शनपूर्वकं पुरप्रवेशः

नगरद्वारनिलयां दुर्गामासाद्य भक्तितः ॥५८॥ पद्मावत्यनुगो
मायी देवीं नत्वा विशेषतः ॥ वरं ययाचे गोविन्दः कुरु भार्या-
मिमामिति ॥५९॥ पद्मावती विशालाक्षी सावित्रीं वरमुत्तमम् ॥
पतिं कुरु रमानाथं श्रीनिवासं जगन्मयम् ॥२६०॥ इति वृत्वा च सा
देवीं नत्वैरावतमाश्रिता ॥ गरुडस्कन्धमारूढो भगवान् भक्त-
वत्सलः ॥६१॥

पद्मावतीके साथ दुर्गाजीके दर्शन कर नगरमें श्रीनिवासका प्रवेश करना

नगरके द्वारमें रहनेवाली दुर्गाके समीप आकर, भक्तिपूर्वक, पद्मावतीके पीछे-पीछे चलनेवाले मायावी गोविन्दने देवीको अच्छी तरह प्रणाम करके यह वर मांगा कि इसको मेरी भार्या बनाओ। बड़ी-बड़ी आंखों-वाली सावित्रीस्वरूपा पद्मावती "लक्ष्मीके स्वामी जगन्मय उत्तम वर श्रीनिवास को मेरा पति बनाओ" ऐसा वर मांग, प्रणाम कर ऐरावतपर चढ़ी और भक्तप्रेमी भगवान् भी गरुड़के कन्धेपर चढ़े ॥२६१॥

दीपकैस्तैलसंसिक्तैः ॥ सहस्रायुतसंख्यकैः लाजान् पुष्पाण्य-
क्षतांश्च विकिरद्भिरितस्ततः ॥६२॥ स्तुवद्भिर्वन्दिवृन्दैश्च ससू-

तैर्मागधैरपि ॥ आशीर्वादं प्रकुर्वद्भिर्वेदघोषपुरस्सरम् ॥६३॥ ब्रह्मा·
दिभिः सुरश्रेष्ठैर्भूसुरैः शुकपूर्वकैः ॥ श्रीनिवासं प्रपश्यद्भिः पौरै·
र्नारीनरैर्वृतः ॥६४॥ वीणावेणुमृदङ्गांश्च पणवानकदुन्दुभीन् ॥ वाद-
यद्भिर्जनैश्चान्यैर्वारनारीगणैस्तथा ॥६५॥ गन्धर्वैर्गाननिपुणैः सुता·
मात्यैश्च संयुतः ॥ आकाशराजो धर्मात्मा श्रीनिवासपरायणः ॥६६॥
पद्मावत्या समेतं च श्रीनिवासं ससम्भ्रमम् ॥ सञ्चारयन् समन्ता·
च्च नारायणपुरे शनैः ॥६७॥ रम्भास्तम्भैरिक्षुदण्डैः पूगीपोतैर·
लङ्कृतम् ॥ रसालपल्लवयुतैः पूर्णकुम्भैरलङ्कृतम् ॥६८॥ मुक्ता
जालवृतैश्चान्यैः पद्मरागविराजितैः ॥ वज्रवैडूर्यखचितैरिन्द्रनी·
लसमप्रभैः ॥६९॥ तथा मरकतप्रख्यैस्तोरणैरुपशोभितम् ॥ कु·
ङ्कुमोदकसम्पूर्णकनत्कनकभाजनैः ॥ ७० ॥ स्त्रीभिर्नीराजयन्ती·
भी राजमानचतुष्पथम् ॥ वेदित्रयं परिक्रम्य वासुदेवालयं य·
यौ ॥७१॥ प्रवेशयामास वरं सुमन्दिरं श्रीवेङ्कटेशं बहुरत्नसम्मि·
तम् ॥ तद्बन्धुखण्डं मुनिवर्यगुप्तं बलं ययौ नाथनिकेत·
नेषु ॥२७२॥

तेलसे भरे हुए हजारों अयुत ( दश हजार ) दीपकों, लावा, पुष्प और अक्षतोंको इधर उधर बिखेरनेवालों, स्तुति करते हुए बन्दिगण, सूत और मागधों, वेदध्वनिके साथ आशीर्वाद करते हुए शुकप्रमुख ब्रह्मा इत्यादि श्रेष्ठ देवताओं, वीणा, वेणु, मृदङ्ग, पणव एवं आनकदुन्दुभीको बजानेवाले मनुष्यों, वारस्त्री ( वेश्या ), गानमें चतुर गन्धर्वों तथा पुत्र और मन्त्रियोंके साथ श्रीनिवासको देखते हुए नगरके स्त्री-पुरुषोंसे घिरे धर्मात्मा श्रीनिवासके भक्त आकाशराज पद्मावती सहित उस श्रीनिवासको नारायणपुरमें चारों ओर धीरे धीरे घुमाते हुए—केलेके स्तम्भों, ईख (गन्ना) के दण्डों, पानके पत्तों एवं आम्रपल्लवसे युक्त, भरे हुए घटोंसे सजे हुए, मोतीके जालके घेरेसे शोभते हुए, पद्मरागसे जड़े हुए, इन्द्रनीलके समान प्रभावाले, वज्र और वैदूर्य जटित मरकतके समान प्रभावाले तोरणोंसे शोभित, कुंकुम और जलसे भरे हुए, चमचमाते हुए सोनेके भाजनोंसे एवं आरती करती हुई स्त्रियोंसे शोभते हुए चौराहे और तीन वेदियोंकी परिक्रमा करके वासुदेवके घरको गये और वर श्रीवेंकटेशको अनेक रत्नोंसे शोभायमान सुन्दर मन्दिरमें प्रवेश कराया और उनके बन्धु-वर्ग तथा मुनिवर्य अगस्त्यसे सुरक्षित सेना राजाके एक एक घरमें गयी ॥२७२॥

अथ श्रीनिवासाज्ञया तोण्डमाननृपकृतं दिव्यान्नसज्जीकरणम्

रात्रिस्तु पञ्चघटिका समभूच्च तदा ततः ॥ जगाम भवनं राजन् स्वकीयं राजवल्लभः ॥ तदाऽऽगतो महाराज तोण्डमानो महीपते ॥ तमाह करुणं श्रीमाञ्छ्रीनिवासः क्षुधाऽर्दितः ॥७४॥

श्रीनिवासकी आज्ञासे तोण्डमान राजाके द्वारा अलौकिक अन्नोंकी तैयारी

हे राजन्! जब रात्रि पांच घड़ी बीत गयी तब राजाके प्रिय श्रीनिवास अपने घर गये। हे महाराज! तब वहांपर तोण्डमान आये और भूखसे पीड़ित श्रीनिवास उनसे करुणा करके बोले ॥२७४॥

*श्रीनिवास उवाच—*

वैवाहिकजनाः सर्वे उपवासपरायणाः ॥ अहं च मम पुत्रश्च मम माता सुरादयः ॥ ७५ ॥ भार्या पतिव्रता लक्ष्मीः क्षुधया परिमोहिता ॥ तेषामन्नं महाराज भक्ष्याणि विविधानि च ॥७६॥ कुरु राजन् सत्वरस्त्वमृषीणामूर्ध्वरेतसाम् ॥ पाकस्त्वत्र विशेषेण कर्त्तव्यो जातवेदसा ॥७७॥ ममापि च प्रेषणीयं पक्वान्नं राजसत्तम ॥ वासुदेववचः श्रुत्वा वसुधेशोऽब्रवीद्धरिम् ॥७८॥

श्रीनिवास बोले—वर-पक्षका मैं, मेरे पुत्र, मेरी माता, मेरी पतिव्रता पत्नी लक्ष्मी सब उपवासपरायण हैं, अतएव क्षुधासे सब पीड़ित हैं। हे महाराज! उनके लिये अन्न और नाना प्रकारके भक्ष्य पदार्थ शीघ्र बनवाइये और ऊर्ध्वरेता मुनियोंका पाक विशेषतावे यहींपर अग्निसे बनवाना चाहिये। हे राजसत्तम! मुझको भी पक्वान्न ही भेजना चाहिये। श्रीनिवासके वचनको सुनकर राजा उनसे बोले ॥२७८॥

*तोण्डमान उवाच—*

इदं शरीरं जगदीश राज्यं त्वदीयमेतद्धि मुकुन्दमूर्ते ॥ नरो यथा लोकगतिं प्रपन्नस्तथा ममान्नं प्रति मुह्यसि त्वम् ॥ ॥७९ ॥ एवमुक्त्वा महाराजो जगाम भवनं स्वकम् ॥ क्षणेन कारयामास पाकं राजा हविर्भुजा ॥२८०॥ ऋषीणां वेदविदुषां सुराणां सुरयो-

षिताम् ॥ राजाऽन्नमर्पयामास विप्राणां चान्नकाङ्क्षिणाम् ॥८१॥ भोजनं कृतवन्तस्ते भक्ष्यान्नरससंयुतम् ॥ वासुदेवाय राजेन्द्रः प्रेषयामास सादरः ॥८२॥ अन्नं बहुविधं भक्ष्यं समाषं मधुसंयुतम् ॥ स्वयं समेत्य राजेन्द्रोऽकल्पयद्भोजनं हरेः ॥ ८३ ॥ बुभुजे पुरुषश्रेष्ठो लक्ष्म्या च परमेष्ठिना ॥ मात्रा च सहितो राजन् सशेषो गरुडान्वितः ॥ ८४ ॥ दत्त्वा वस्त्राणि दिव्यानि जामातुः श्रीपतेर्नृप ॥ जगाम भवनं राजा वासुदेवाज्ञया तदा ॥८५॥

तोण्डमान बोले—हे जगदीश, मुकुन्द मूर्ति! यह शरीर और राज्य सभी आपहीका है। आप मेरे अन्नके लिये सांसारिक मनुष्यके जैसा मोहित होते हैं। हे महाराज! ऐसा कहकर वह राजा अपने घर गया और देवताओंके पाकको क्षणभरमें बनवाया और ऋषियों, वेदके विद्वानों, देवताओं, देवताओंकी स्त्रियों एवं अन्न चाहनेवाले ब्राह्मणोंको अन्न ही दिया। उन लोगोंने स्वयं ही बनाकर भक्ष्य अन्न, और रससे युक्त भोजन किया। श्रीनिवासके लिये तो राजेन्द्रने आदरके साथ बहुत प्रकारके अन्न और उरद एवं मधुके साथ भक्ष्य पदार्थ भेजा और उस श्रेष्ठ राजाने स्वयं आकर श्रीनिवासके भोजनको प्रस्तुत किया। तत्पश्चात् उस पुरुषश्रेष्ठ श्रीनिवासने परमप्रिय लक्ष्मी, माता बकुला, शेष और गरुड़के साथ भोजन किया और हे राजन्! जामाता लक्ष्मीपति श्रीनिवासको अलौकिक वस्त्र देकर वह राजा अपने घर श्रीनिवासकी आज्ञासे गया ॥२८५॥

गते राज्ञि महाराज श्रीनिवासस्त्वरान्वितः ॥ निद्रां चकार विधिवन्निर्दोषोऽपि सुखासने ॥८६॥ एवं गता च सा रात्रिः प्रभातसमयोऽभवत् ॥ पूर्वदेवगुरोर्वारः सम्प्राप्तो दशमीदिने ॥८७॥ समुत्थितो वासुदेवः कृतमङ्गलमज्जनः ॥ वसिष्ठमब्रवीद्राजन् भगवान् वेङ्कटेश्वरः ॥८८॥

हे महाराज! राजाके चले जानेपर शीघ्रतासे, बिना दोषवाले श्रीनिवास विधिपूर्वक सुखप्रद आसनपर सो गये। इस प्रकार वह रात्रि बीत गयी और प्रभातका समय हुआ। हे देव! दशमीको शुक्रवार प्राप्त हुआ। हे राजन्! मङ्गल स्नान किये हुए श्रीवेङ्कटेश वासुदेव श्रीनिवास उठकर वसिष्ठसे बोले ॥२८८॥

*श्रीभगवानुवाच—*

सहैव भोजनं कार्यं लक्ष्म्या च परमेष्ठिना ॥ मात्रा पुरोहिते-

नापि वयं पञ्चान्नवर्जिताः ॥८९॥ राजस्तु भवने राजा राजपत्नी पतिव्रता ॥ कन्या पुरोहितो भ्राता तेऽपि पञ्चान्नवर्जिताः ॥२९०॥ एवमुक्त्वा वसिष्ठं तु पुरोहितमरिन्दम् ॥ कुबेरमब्रवीद्राजन् श्रीनिवासः सतां गतिः ॥ ९१ ॥

श्रीनिवास बोले—परमप्रिया लक्ष्मी, माता और पुरोहितके साथ आप और हम पांचों साथ ही भोजन करें, क्योंकि हम पांचों ही विना अन्नके हैं। राजाके घरमें तुम, राजा, पतिव्रता राजमहिषी, कन्या, पुरोहित और भ्राता ये पांचों अन्नसे रहित हैं। हे राजन्! शत्रुओंको दमन करनेवाले एवं सज्जनोंकी गति श्रीनिवास पुरोहित वसिष्ठसे इस प्रकार कहकर, कुबेरसे बोले ॥२९१॥

*श्रीनिवास उवाच—*

गच्छ यक्षगणाध्यक्ष राजानं विप्रकारणात् ॥ इति तद्वचनं श्रुत्वा यक्षराड्राजसत्तमम् ॥९२॥ गत्वाऽऽह भारतीं पुण्यां श्रीनिवासेन भाषिताम् ॥

श्रीनिवास बोले—हे यक्षोंके स्वामी कुबेर! ब्राह्मणके कार्यसे राजाके पास जाओ। हे राजाओंमें श्रेष्ठ! उनके इस वचनको सुनकर कुबेरने वहां जाकर श्रीनिवासकी कही हुई पवित्र वाणी सुनायी ॥२९३॥

*कुबेर उवाच—*

भोजनं त्वृषिमुख्यानां कर्तव्यं पूर्वमेव हि ॥९३॥ मुहूर्तकालो रात्रौ तु नाडिकाः स्युस्त्रयोदश ॥ तदाऽसाध्यं महाराज रात्र्यां ब्राह्मणभोजनम् ॥९४॥ इति सन्दिश्य राजानं कुबेरः पुनरागतः ॥ तथा चकार राजर्षिर्भोजनं ब्रह्मवादिनाम् ॥९५॥ ददौ च दक्षिणां निष्कं ताम्बूलं च द्विजन्मनाम् ॥

कुबेर बोले—मुख्य ऋषियोंका भोजन पूर्व ही करवाना चाहिये। क्योंकि रात्रिमें तेरह नाड़ी (दण्ड) मुहूर्तका समय है, इसलिये रात्रिमें ब्राह्मण-भोजन असाध्य है। राजाको इस प्रकार समझाकर कुबेर लौट आये। राजाने भी ब्राह्मणोंको भोजन उसी प्रकार करवाया और ब्राह्मणोंको एक निष्क दक्षिणा और ताम्बूल दिया ॥२९६॥

अथ विवाहार्थं श्रीनिवासानयनाय तन्मन्दिरं प्रति नृपागमनम्

एवं भूते महीपाल कल्याणदिवसे हरेः ॥९६॥ शुक्रवारे दश-
म्याञ्च सायङ्काले वियन्नृपः ॥ चतुरङ्गबलं सर्वं निधाय पुरतः
सुतम् ॥९७॥ वसुदानं महारज तोण्डमानं च सोदरम् ॥
पुरोहितं पुरस्कृत्य सह सम्बन्धिबान्धवैः ॥ ९८ ॥ ऐरावतं
महानागं रत्नकम्बलभूषितम् ॥ मेघराड्वर्णसंयुक्तं बद्धघण्टाकु-
लान्वितम् ॥९९॥ रक्तदन्तं महारावं कर्णबद्धसुचामरम् ॥ पुरन्दरं
पुरस्कृत्य गजमैरावतं तथा ॥२००॥ आह्वानकारणात्प्रासः श्रीनि-
वासालयं तदा ॥

विवाहके लिये श्रीनिवासको लानेके लिये राजाका उनके मन्दिरमें जाना

हे राजन् ! इस प्रकारके भगवान्के कल्याण दिवस दशमी शुक्रवारको सायंकाल अपनी चतुरङ्गिनी सेनाओं; पुत्र वसुदान; सहोदर तोण्डमान;—रत्नोंके झूलसे शोभित, मेघका वर्णवाला, घण्टा बँधा हुआ, लाल दाँतवाला, गम्भीर शब्दवाला, कर्णोंमें सुन्दर चामर बँधा हुआ एवं रत्नमय कम्बलसे सुशोभित ऐरावत नामका महानाग; पुरोहित इन्द्र और ऐरावत हाथीको आगे कर बन्धु मित्रादि परिवारके साथ आकाशराजा बुलानेके लिये श्रीनिवासके घर आये ॥२००॥

तस्मिन् महागृहे राजन्नयुतस्तम्भशोभिताम् ॥१॥ सभां चकार
रत्नाढ्यां विश्वकर्मा विभोः प्रियाम् ॥ तत्रासीना महाभागा ब्रह्मा-
द्याः सर्वदेवताः ॥२॥ विश्वामित्रो भरद्वाजो वसिष्ठो गौतमस्त-
था ॥ भृगुरत्रिः पुलस्त्यश्च वाल्मीकिर्मिथिलेश्वर ॥ ३ ॥ वैखान-
सश्च दुर्वासा मार्कण्डेयोऽथ गालवः ॥ दधीचिश्च्यवनो राजन् सन-
कश्च सनन्दनः ॥४॥ एते श्रेष्ठतमा लोके मुनयो वीतकल्मषाः ॥
जटामुकुटभूषाङ्गा ज्वलत्कृष्णाजिनाम्बराः ॥ ५ ॥ कश्यपन्तु
पुरस्कृत्य समासीनाः सभान्तरे ॥ तन्मध्ये वासुदेवस्तु रत्न-
कम्बलसंयुतः ॥६॥ कृताञ्जलिपुटस्तस्थौ ब्रह्मा लोकपितामहः ॥

तत्सभाद्वारमासाद्य राजा सत्यपराक्रमः ॥७॥ पुरोहितं पुरस्कृत्य सम्प्राप्तो हरिसन्निधिम् ॥ समुत्तस्थौ वासुदेवो दृष्ट्वा राजानमागतम् ॥८॥ परिरम्भणमासाद्य भगवान् वाक्यमब्रवीत् ॥

हे राजन! उस बड़े घरमें विश्वकर्माने दश हजार स्तम्भोंसे शोभित, रत्नोंसे पूरित तथा भगवान्‌को प्रिय एक सभा रची। हे राजा जनक! वहाँपर बड़े भाग्यवाले ब्रह्मादि सब देवता, विश्वामित्र, भरद्वाज, वसिष्ठ, गौतम, भृगु, अत्रि, पुलस्त्य, वाल्मीकि, वैखानस, दुर्वासा, मार्कण्डेय, गालव, दधीचि, च्यवन, सनक और सनन्दन इत्यादि सब बिना पापवाले, जटाके मुकुटसे शोभित शरीरवाले, काले मृगचर्मवाले, तेजसे प्रकाशमानवाले, संसारमें सर्वश्रेष्ठ मुनिगण कश्यपको आगे कर सभाके मध्यमें, बैठे हुए थे। उनके मध्यमें स्वर्णमय वस्त्रोंसे संयुक्त श्रीनिवास एवं अञ्जलि बाँधे हुए संसारके पितामह ब्रह्मा बैठे हुए थे। उस सभाके द्वारपर आकर, सत्यपराक्रम राजा पुरोहितको आगे कर श्रीनिवासके पास आये। आये हुए राजाको देखकर श्रीनिवास उठे और आलिङ्गन करके वचन बोले ॥३०९॥

*श्रीनिवास उ —*

भवाञ्छ्रेष्ठतमोऽत्यन्तं वृद्धोऽसि नृपसत्तम ॥ ९ ॥ किमर्थमागतोऽसि त्वं मद्गृहं राजसत्तम ॥ वसुदानं तु राजेन्द्र समाह्वाने नियोजय ॥३१०॥ वदत्येवं श्रीनिवासे पुरोहितमभाषत ॥

श्रीनिवास बोले—हे राजाओंमें श्रेष्ठ! आप सबसे श्रेष्ठ और वृद्ध हैं, आप हमारे घर किसलिये आये? हे महाराज! बुलानेके लिये वसुदानको नियुक्त कीजिये। श्रीनिवासके ऐसा कहते समय राजा पुरोहितसे बोले ॥३११॥

अथ विलम्बनृपोक्त्या वसिष्ठप्रेरितधरणीकृतश्रीनिवासोपचारः

*राजोवाच—*

विलम्बः क्रियते कस्मात्पूजां कुरु रमापतेः ॥११॥ स राजवचनं श्रुत्वा धरणीं वाक्यमब्रवीत् ॥

आकाशराजके वचनसे धरणीदेवी द्वारा श्रीनिवासका पूजन

राजा बोले—विलम्ब क्यों होता है? श्रीनिवासकी पूजा कीजिये। वसिष्ठने राजाका वचन सुनकर धरणीसे कहा॥ ३१२ ॥

वसिष्ठ उवाच—

अरुन्धतीं पुरस्कृत्य कुरु पूजां रमापतेः ॥ १२ ॥ सा सम्भ्रमात्समुत्थाय बाष्पसन्दिग्धलोचना ॥ मुखं विलोक्य राजेन्द्र कृष्णस्य नृपवल्लभा ॥१३॥ मत्वा कृतार्थमात्मानमानन्दपरिपूरिता ॥ सलज्जा पूजयामास सच्चिदानन्दविग्रहम् ॥ १४ ॥ तां दृष्ट्वा योषितः सर्वा विस्मयाकुलमानसाः ॥ प्राहुः प्रहृष्टहृदया धरणीं राजवल्लभाम् ॥१५॥

वसिष्ठ बोले – अरुन्धतीको आगे करके श्रीनिवासकी पूजा करो। हे राजेन्द्र ! राजाकी प्यारी उस धरणीदेवीने आंसुओंसे भरी हुई आंखोंवाली हो, शीघ्र उठकर, कृष्णके मुखको देखकर, आनन्दसे भरी हुई अपनेको कृतकृत्य मानकर, लज्जाके साथ सच्चिदानन्दकी मूर्तिका पूजन किया। उसको देखकर सब स्त्रियां आश्चर्यसे घबड़ायी हुईं एवं प्रसन्नमनसे राजाकी प्यारी धरणीसे बोलीं ॥३१५॥

योषित ऊचुः—

किं त्वया चरितं पुण्यं पूर्वजन्मनि हे धरे ॥ वासुदेवार्चनविधौ निर्मिता परमेष्ठिना ॥१६॥ या त्वमित्थं पूजयसि साक्षान्नारायणं स्वयम् ॥ इत्येवं संस्तुता देवी धरणी राजवल्लभा ॥ १७ ॥ तैलकर्पूरगन्धेन चन्दनेन सुगन्धिना ॥ अर्चयामास कल्याणी श्रीनिवासं सुरेश्वरम् ॥ १८ ॥ वस्त्रैर्नानाविधै रत्नैर्मुक्तानिर्मितभूषणैः ॥

स्त्रियां बोलीं—हे धरणी ! तुमने पूर्वजन्ममें क्या किया था ? क्या ब्रह्माने तुमको वासुदेवके पूजनके निमित्त ही बनाया था, जो तुम इस प्रकार साक्षात् नारायण भगवानका पूजन करती हो ? इस प्रकार प्रशंसित राजाकी प्यारी कल्याणी धरणीदेवीने कर्पूरके गंधवाले तैल, चन्दन, सुगंध एवं नाना प्रकारके वस्त्र, रत्न और मोतीके आभूषणोंसे देवताओंके देवता श्रीनिवासकी पूजा की ॥ ३१६ ॥

### अथ दिव्यालङ्कारालङ्कृतश्रीनिवासस्य सपरिकरनृपमन्दिरप्रवेशः

ततः पुरोहिताज्ञप्तः पुराणपुरुषोत्तमम् ॥ १९ ॥ गजमारोप-

यद्राजा जामातरमनामयम् ॥ सहितो वासुदेवस्तु ब्रह्मणा शम्भुना तथा ॥३२०॥ कुबेरेणाहिराजेन गरुडेनाग्निना तथा ॥ वायुना वरुणेनापि यमेन मरुतां गणैः ॥२१॥ वसिष्ठादिमुनिश्रेष्ठैः सदारैः ससुतैस्तथा ॥ जगाम राजभवनं रत्नतोरणमण्डितम् ॥२२॥ नानाजनसमाकीर्णं नानालङ्कारमण्डितम् ॥ महावाद्यस्वनैर्युक्तं दीपायुतविदीपितम् ॥२३॥

### श्रीनिवासका अपने परिकरोंके साथ राजाके मंदिरमें प्रवेश

तब पुरोहितसे आज्ञा किये जानेपर बिना दोषके पुराण पुरुषोत्तम जामाताको राजाने हाथीपर बैठाया और श्रीनिवास भी ब्रह्मा, शिव, कुबेर, शेष, गरुड़, अग्नि, वायु, वरुण, यम, मरुत्, वसिष्ठादि श्रेष्ठ मुनि, स्त्री और पुत्रके साथ, रत्नोंके तोरणसे शोभित, बहुत मनुष्योंसे भरा हुआ, बहुत अलङ्कारोंसे शोभित, बड़े-बड़े बाजाओंके शब्दोंसे पूरित, एवं दश हजार दीपसे प्रकाशित राजाके भवनको गये ॥३२३ ॥

जामातृसहितो राजा द्वारतोरणसन्निधौ ॥ चतुरङ्गबलं मुक्त्वा गृहान्तर्गन्तुमुद्यतः ॥२४॥ तत्रान्तरे श्रीनिवासं नीराजयितुमागता ॥ तोण्डमान्नृपतेर्भार्या कुङ्कुमोदकभाजनम् ॥२५॥ समादायाशु कल्याणी वासुदेवमपूजयत् ॥ ततः पश्चाच्छ्रीनिवासः प्राविशद्राजमन्दिरम् ॥२६॥

चतुरंगिणी सेनाको द्वारके तोरणके पास छोड़कर आकाशराजा जामाताके साथ घरके भीतर जानेको उद्यत ( तैयार ) थे, इसी बीच श्रीनिवासकी आरती उतारनेके लिये आयी हुई राजा तोण्डमानकी कल्याणी पत्नीने कुंकुम और जलके पात्रको लेकर श्रीनिवासकी पूजा की। उसके बाद श्रीनिवासने राजमंदिरमें प्रवेश किया ॥ ३२६ ॥

द्वाराण्यतीत्याथ बहूनि माधवो राज्ञा समेतो भवनं प्रविश्य ॥
रत्नासने राजविनिर्मिते हरी रराज राजीवसमाननेत्रः ॥ २७ ॥
चतुःस्तम्भां रत्नवेदीमधिष्ठाप्य खगध्वजम् ॥ परिवार्य च तस्थुस्ते मुनयो वीतकल्मषाः ॥२८॥ ब्रह्माणमग्रतः कृत्वा सर्वे देवा यथा-

सुखम् ॥ स्वर्णासने समासीनाः पश्यन्तो नयनोत्सवम् ॥२६॥ ततः स राजा धर्मात्मा चक्रे मङ्गलमज्जनम् ॥ सापि स्नात्वा महाराज तैलेन च सुगन्धिना ॥ ३३० ॥ अलञ्चकारालङ्कारैः स्वात्मानं राजवल्लभा ॥

राजाके साथ श्रीनिवास बहुतसे द्वारोंको पारकर तथा भवनमें प्रवेशकर राजाके बनाये हुए सोनेके आसनपर कमलदल नयन हरि विराजमान हुए। चार स्तंभवाली सोनेकी वेदीपर श्रीनिवासको बैठाकर वे पापरहित मुनिगण उनको घेरकर बैठ गये। ब्रह्माको आगे करके नयनके आनन्दको देखते हुए सब देवता सुखसे सोनेके आसनपर बैठ गये। तब उस धर्मात्मा राजाने मङ्गलस्नान किया और हे महाराज! उस राजाकी प्यारीने भी सुगंध तैलके साथ स्नान करके अपनेको अलङ्कारोंसे सज दिया ॥ ३३१ ॥

अथ वियन्नृपकृतवरपादाम्बुजप्रक्षालनम्

स्वामिपुष्करिणीतोयं हेमकुम्भप्रपूरितम् ॥३१॥ समानीय ब्राह्मणैश्च हरिपादावनेजनम् ॥ सङ्कल्पं विधिवच्चक्रे कन्यादानस्य सादरम् ॥३२॥ ततश्चकार राजेन्द्र मधुपर्कं पुरोहितः ॥ पुरोहितोक्तमन्त्रेण तस्य पादावनेजनम् ॥ ३३ ॥ सहस्रशीर्षा पुरुष इति मन्त्रं समुच्चरन् ॥ धरण्या स्राविते: कृत्वा स्वामितीर्थजलैः शुभैः ॥३४॥ हरिपादोदकं पुण्यं दधार शिरसा नृपः ॥ भार्यां पुत्रं भ्रातरं च भवनं कोशमेव च ॥३५॥ गजागारं रथागारं वस्त्रागारं च तज्जलैः ॥ मार्जयामास राजेन्द्रः श्रीनिवासपरायणः ॥३६॥

आकाशराज द्वारा वरका चरणकमल धोया जाना

सोनेके घड़ेमें भरे हुए स्वामी पुष्करिणीके जलको ब्राह्मणोंसे मंगवा कर राजाने श्रीनिवासका पाद प्रक्षालन तथा आदरके साथ विधिपूर्वक कन्यादानका संकल्प किया। हे राजेन्द्र! तब पुरोहितने मधुपर्क किया। पुरोहितके कहे हुए मन्त्रका उच्चारण करते हुए राजाने धरणी द्वारा गिराये गये स्वामीतीर्थके शुभ जलसे श्रीनिवासका पाद प्रक्षालन करके भगवान्‌के पवित्र चरणामृतको शिरपर धारण किया और श्रीनिवासके भक्त उस राजाने भार्या, पुत्र, भ्राता, भवन, कोष, हाथीशाला, रथशाला, वस्त्रभंडार इत्यादि पर उसे छिड़का ॥ ३३६ ॥

श्रीनिवासजी तथा पद्मावतीका विवाह [ पृष्ठ २६४ ]



*राजोवाच—*

**अद्य मे सफलं जन्म जीवितं च सुजीवितम् ॥ अद्य मे पितर-स्तुष्टा वासुदेवपदोदकात् ॥ ३७ ॥ एवमुक्त्वा महाराजः कन्यां कमललोचनाम् ॥ अलञ्चक्रे विचित्रैस्तामलङ्कारैर्महीपते ॥३८॥ ततस्तु घण्टिकाघोषं कृतवान् दैवचिन्तकः ॥ सुमुहूर्ते तदा प्राप्ते मङ्गलाष्टकमब्रुवन् ॥ ३९ ॥**

राजा बोले—आज मेरा जन्म सफल है, जीवन भी सुन्दर जीवन है। श्रीनिवासके चरणोदकसे मेरे पितर भी आज प्रसन्न हैं। ऐसा कहकर उस राजाने कमलनयनी कन्याको विचित्र अलङ्कारोंसे सजा दिया। तब सुन्दर मुहूर्तके आनेपर मंगलाष्टक बोलते हुए ज्योतिषियोंने घंटीका शब्द किया ॥ ३३९ ॥

अथ वराय वियन्नृपदत्तवैवाहिकभूषणादिकम्

**कन्याप्रदानसमये दक्षिणां राजसत्तमः ॥ कोटिसङ्ख्यान्नि-ष्कपुञ्जान्दत्तवान् वेङ्कटेशितुः ॥ ३४० ॥ तं दृष्ट्वा धनराशिं तु भगवानाह भूमिपम् ॥**

वरको आकाशराजका दिया विवाहके आभूषण

कन्या प्रदानके समयमें उस श्रेष्ठ राजाने करोड़ों निष्क दहेजमें श्रीनिवास वेङ्कटेशको दिया। उस धन-की ढेरीको देखकर श्रीनिवासने राजासे कहा ॥ ३४१ ॥

*श्रीनिवास उवाच—*

**दातव्यं किं त्वया राजन् पुत्रस्य तव भूपते ॥ ४१॥ विवाह-कर्मनिपुणो भवान् दानपरायणः ॥ ददस्व भूषणान्यङ्ग बहुरत्ना-न्वितानि च ॥४२॥ इत्युक्तो वासुदेवेन भूषणानि ददौ नृपः ॥ किरीटं शतभारं तु कण्ठिकामपि तावतीम् ॥४३॥ पुनरेकां तद-र्धं च तदर्धं चैव कण्ठिकाम् ॥ पदकानि ददौ सप्तानर्घ्याण्यथ नृपोत्तमः ॥४४॥ मालिका मौक्तिकानां च भुजभूषणयुग्मकम् ॥**

कर्णभूषौ मौक्तिकाढ्यावंसपर्यन्तलम्बिनौ ॥४५॥ कङ्कणे रत्नमाणिक्यवज्रवैडूर्यनिर्मिते ॥ द्वात्रिंशद्भारसंयुक्ते अनर्घे दत्तवान्नृपः ॥४६॥ नागभूषणयुग्मं च बाहुपूरादिकांस्तथा ॥ भूषणान्यङ्गुलीयाञ्श्च दशानां वीरमुद्रिकाम् ॥४७॥ कटिसूत्रं स्वर्णमयं वरवज्रसमन्वितम् ॥ एकादशशतीभारं बहुरत्नसमन्वितम् ॥४८॥ पादुके च ततो राजा दत्तवान् मधुघातिने ॥ ददौ भोजनपात्रं च षष्टिभारयुतं प्रभोः ॥४९॥ लघुपात्रसमोपेतं बृहत्पात्रमपां तथा ॥ कम्बलानां चतुःषष्टिं दत्तवान् राजसत्तमः ॥३५०॥ भूषणैर्भूषिताङ्गस्य कन्यादानमथाकरोत् ॥ कन्याप्रवरमूचेऽथ गुरुः साक्षाद् बृहस्पतिः ॥५१॥

श्रीनिवास बोले—हे राजन ! अपने पुत्रको आपसे क्या दिया जाना चाहिये । विवाह कर्ममें निपुण एवं दानी आप अनेकों रत्नोंसे जटित शरीरके भूषणोंको दीजिये । श्रीनिवासके इस प्रकार कहने पर राजाने उनको भूषण दिया । सौ भारका किरीट, उतने ही की कण्ठी, पुनः उसके आधेके भारकी एक और कण्ठी एवं सात अनुपम पदक राजाने दिये । मोतियोंकी माला, भुजाके उत्तम भूषण, कन्धेतक लटकते हुए मोतियोंसे युक्त कानोंके भूषण, एवं रत्न, माणिक्य, वज्र तथा वैडूर्य्यसे बने हुए बत्तीस भारके अनुपम कङ्कण राजाने दिया । एक जोड़ा नागभूषण ( बिजायठ ) और बाहुपुर इत्यादि, तथा दसों अंगुलियोंका भूषण वीर मुद्रिका, अनेक रत्नों एवं श्रेष्ठ वज्रसे युक्त ग्यारह सौ भारके सोनेके कटिसूत्र एवं पादुका ( खड़ाऊं ) राजाने श्रीनिवासको दिया । श्रीनिवासको साठ भारका भोजन पात्र दिया । उस श्रेष्ठ राजाने जलके छोटे पात्रके सहित बड़े पात्र और चौंसठ कम्बल दिये । इसके अनन्तर भूषणोंसे शोभित अंगवाले श्रीनिवासजीको कन्यादान किया । कन्याके प्रवरको साक्षात् बृहस्पति गुरु बोल रहे थे ॥ ३५१ ॥

बृहस्पतिरुवाच —

अत्रिगोत्रसमुद्भूतां सुवीरस्य प्रपौत्रिकाम् ॥ सुधर्मणस्तु पौत्रीं च पुत्रीमाकाशभूपतेः ॥५२॥ त्वमङ्गीकुरु गोविन्द कन्यां कमललोचनाम् ॥ एवमुक्ते महाराजो मुदा रत्नाम्बरं ददौ ॥५३॥

बृहस्पति बोले — हे गोविन्द ! अत्रि गोत्रमें उत्पन्न, सुवीरकी प्रपौत्री, सुधर्मकी पौत्री, आकाशराजकी पुत्री कमल-नयनी कन्याको ग्रहण कीजिये । इतना कहनेपर राजाने आनन्दसे रत्नों सहित वस्त्र दिया ॥३५३॥

*वसिष्ठ उवाच—*

प्रपौत्रस्य ययातेस्तु पौत्रस्यामिततेजसः ॥ शूरसेनस्य राजेन्द्र वसुदेवस्य भूपतेः ॥५४॥ पुत्रस्य वेङ्कटेशस्य गोत्रे वासिष्ठसंज्ञके ॥ जातस्यात्रिकुलोत्पन्नां कन्यां कनकभूषिताम् ॥५५॥ ग्रहीष्यामो वयं राजंस्तव पुत्रीं नृपोत्तम ॥ कन्यावरप्रवरयोरित्युच्चारितयोरथ ॥ ५६ ॥ धरण्या सह राजेन्द्रः कन्यादानपरायणः ॥ प्रहृष्टहृदयः प्राह श्रीनिवासं परात्परम् ॥५७॥

वसिष्ठ बोले—हे राजन्! ययातिके प्रपौत्र अतुल तेजवाले शूरसेनके पौत्र राजा वसुदेवके पुत्र, वसिष्ठी गोत्रमें उत्पन्न श्रीवेङ्कटेशके लिये कमलनयनी स्वर्णाभरण भूषित कन्या—अत्रिगोत्रमें उत्पन्न आपकी पुत्री हमलोग ग्रहण करते हैं। कन्या और वरके प्रवरके इस प्रकार कहे जानेपर धरणीके साथ कन्यादानमें लगे हुए राजाने प्रफुल्ल मनसे परात्पर श्रीनिवाससे कहा ॥५७॥

अथ श्रीनिवासस्य वसिष्ठादिकारितपद्मावतीपाणिग्रहणोत्सवः

*आकाशराज उवाच—*

कन्यामिमां प्रदास्यामि गृहाण पुरुषोत्तम ॥ इत्युक्त्वा प्राचिपद्राजा धरण्या स्त्राविता तदा ॥५८॥ मन्त्रपूतां स्वामितीर्थधारां सकनकां करे ॥ दक्षिणे श्रीनिवासस्य ददौ पद्मावतीं ततः ॥५९॥ विधानं च ततश्चक्रे राजेन्द्रः सपुरोहितः ॥ पूजयित्वा जगन्नाथं गन्धवस्त्रानुलेपनैः ॥३६०॥ कङ्कणं बन्धयामास वासुदेवकराम्बुजे ॥ पद्मावत्याः कराम्भोजेऽबन्धयत्कङ्कणं गुरुः ॥ ६१ ॥ तथा माङ्गल्यसूत्रस्य बन्धं वैवाहिकं तदा ॥ श्रीनिवासेन देवेनाकारयत्स पुरोहितः ॥६२॥

पद्मावतीका पाणिग्रहण

आकाशराज बोले—हे पुरुषोत्तम! यह कन्या मैं देता हूं, इसको ग्रहण कीजिये—ऐसा कहकर जब राजाने धरणीसे गिरायी हुई, मन्त्रसे शुद्ध, स्वामी तीर्थकी धारा सोनेके साथ श्रीनिवासके दाहने हाथमें गिराया

और पद्मावतीको भी दिया। तत्पश्चात् उस श्रेष्ठराजाने पुरोहितके साथ सब विधिको किया। श्रीनिवासकी पूजा, वस्त्र, गन्ध और अनुलेपन (चन्दन) से करके श्रीनिवासके कमलके समान हाथोंमें कङ्कण बाँध दिया और पद्मावतीके हस्तकमलमें बृहस्पतिने कङ्कण बांधा एवं माङ्गल्य सूत्रका वैवाहिक बन्धन श्रीनिवासके द्वारा पुरोहित वसिष्ठने करवाया ॥१६२॥

सुकन्या ऊचुः—

सावित्रीव च कल्याणि बहुपुत्रवती भव ॥ सर्वलोकस्य जननी भव मङ्गलदायिनी ॥ ६३ ॥ इत्थं सुमङ्गलीस्त्रीषु गायन्तीषु शुभाशिषः ॥ ब्राह्मणानां करस्पर्शाद्राज्ञश्चापि महात्मनः ॥६४॥ बबन्ध पूतं माङ्गल्यसूत्रं मन्त्राभिमन्त्रितम् ॥ कण्ठे पद्मावतीदेव्याः श्रीनिवासो जगत्पतिः ॥६५॥ मुनिभिः सह विद्वद्भिर्लाजैर्होमं पुरोहितः ॥ वसिष्ठोऽकारयत्पद्मावत्यञ्जल्यर्पितैस्ततः ॥६६॥ यजुःशाखाक्रमेणैव जुहावाग्नौ यथाविधि ॥ सर्वं वैवाहिकविधिं वासिष्ठोऽथ समापयत् ॥६७॥ ततः पुरोहितो राज्ञः स्वस्तिवाचनपूर्वकम्॥ मुनीनामञ्जलिपुटे नवरत्नाक्षतान्ददौ ॥६८॥ ते वेदमन्त्रैर्जगदीशमूर्ध्नि रत्नाक्षतान्वेदविदः प्रचिक्षिपुः ॥ तदा नृणां तत्र महोत्सवोऽभूदाकाशराजस्य पुरीनिवासिनाम् ॥६९॥

*सुन्दरियाँ बोलीं—हे कल्याणी ! सावित्रीके जैसी तुम भी बहुत पुत्रवाली एवं सब लोकको माता मंगलकी* देनेवाली होओ। मांगलिक स्त्रियोंके इस प्रकार आशीर्वाद कहे जाते हुए, ब्राह्मणों और महात्मा राजाके कर स्पर्शसे पवित्र एवं मन्त्रोंसे अभिमन्त्रित माङ्गल्य सूत्र, संसारके स्वामी श्रीनिवासने पद्मावतीदेवीके कण्ठमें बाँध दिया। मुनियों और विद्वानोंके साथ श्रीपुरोहित वसिष्ठजीने पद्मावतीके अञ्जलियोंसे समर्पित लावा तथा यजुर्वेदके शाखाक्रमसे यथाविधि अग्निमें होम किया। तदनन्तर वसिष्ठजीने सब वैवाहिक विधिको पूरा किया। तब राजाके पुरोहितने स्वस्ति वाचन पूर्वक मुनियोंकी अञ्जलीमें नवरत्नोंका अक्षत दिया। वेदके विद्वानोंने वेदके मन्त्रोंसे रत्नोंके अक्षतोंको राजाके शिरपर छोड़ दिया। तब आकाशराजके पुरीमें रहनेवाले मनुष्योंको वहाँपर अत्यन्त आनन्द हुआ ॥२६९॥

तस्मिन् काले महाराजो दक्षिणां ब्रह्मवादिनाम् ॥ दापयामास सन्तुष्टो विप्रैस्ताम्बूलपूर्वकम् ॥३७०॥ गवां कोटिसहस्राणि

चाश्वानामयुतं तथा ॥ वस्त्राणां निचयं राजन्विप्रेभ्यो दत्तवान्विभुः ॥७१॥ एवं महोत्सवस्तत्र समभूद्दशमीदिने ॥ वधूवरौ प्रतिष्ठाप्य भोजयास वै ततः ॥७२॥ अन्नं वहुविधं सूपरसभक्ष्यसमन्वितम् ॥ परमान्नं च सघृतं सक्षीरं शर्करायुतम् ॥७३॥ पुरोहितेन सहितो भोजनं कृतवान् हरिः ॥ माता लक्ष्म्या च सहितः पुत्रेण सहितस्तथा ॥७४॥ आकाशराजो धर्मात्मा भुक्तवान् कृष्णसन्निधौ ॥ लक्ष्म्या समेता धरणी तथा बकुलमालया ॥७५॥ अभुङ्क्तान्नं रसैर्युक्तं पतिपुत्रसमन्विता ॥

उस समय राजाने प्रसन्न होकर ताम्बूल सहित ब्राह्मणोंकी दक्षिणा ब्राह्मणोंको दिलवायी। हे राजन् ! सौ करोड़ गौ, दश हजार घोड़े और वस्त्रोंका समूह राजाने ब्राह्मणोंको दिया। इस प्रकारका महोत्सव वहांपर दशमीके दिन हुआ। तब वधू और वरकी प्रतिष्ठा करके अनेक प्रकारके अन्न, दाल, रस और भक्ष्यसे समन्वित, एवं घी, दूध और शर्करासे युक्त सपायस भोजन करवाया। पुरोहित, माता बकुला, लक्ष्मी और पुत्रके साथ श्रीनिवासने भोजन किया। धर्मात्मा आकाशराजने भी श्रीनिवासके पास बैठकर भोजन किया; लक्ष्मी, बकुला, और पति एवं पुत्रके साथ धरणीदेवीने रसके साथ अन्नका भोजन किया ॥३७६॥

ततः प्रभाते राजेन्द्र सुवासिन्यः सुरेशितुः ॥ ७६ ॥ मज्जनं कारयामासुर्गन्धतैलैः सुनिर्मलैः ॥ अन्योन्यमज्जनं तत्र चान्योन्योद्वर्तनं तथा ॥७७॥ हरिपद्मावतीदेव्योस्ताः सहासमकारयन् ॥ स राजा विप्रमुख्यानां सुराणां वहुभोजनम् ॥ ७८ ॥ स्त्रीणां च पुरुषाणां च वहुमानपुरस्सरम् ॥ यथेष्टं दापयामास हृष्ट आकाशभूमिपः ॥ ७९ ॥ अपूपान् विविधांश्चक्रे सूपशाकादिकांस्तथा ॥ घृतकुल्यां क्षीरकुल्यां दधिकुल्यां ततः परम् ॥३८० ॥ तत उद्धृत्य निःश्वसं वहिर्भुक्तवतां नृणाम् ॥ उच्छिष्टपत्रजालं च पुष्कलान्नादिसंयुतम् ॥८१॥ सारमेयगणैः कीर्णं राक्षसानां गणैस्तथा ॥ एवं कोलाहलं चक्रे दिवसांश्चतुरस्तथा ॥८२॥ हासस्तत्र विनोदेन नित्यमासीच्च मज्जनम् ॥

हे राजेन्द्र ! तब प्रभातमें श्रीनिवास और पद्मावतीके परस्पर एक दूसरेको मज्जन और उद्वर्तन (उबटन) हंसीके साथ करवाते हुए सुन्दरियोंने स्वच्छ सुगन्ध तैलसे श्रीनिवासको स्नान करवाया। उस आकाशराजने आनन्दित होकर मुख्य ब्राह्मणों, देवताओं, स्त्रियों एवं पुरुषोंको आदरसे बहुतसा भोजन दिया। उसके बाद घृतकुल्ली ( कुआं ), क्षीरकुल्ली (कुआं) एवं दधिकुल्ली (कुआं) में नाना प्रकारके अपूप, दाल एवं शाक इत्यादि बनाया। मनुष्योंके भोजन किये हुए बहुत अन्नसे संयुक्त उठाकर बाहर फेंके हुए उच्छिष्ट पत्रजाल (पतरी) कुत्तों और राक्षसोंसे घिरे हुए थे। इस प्रकार चार दिनतक कोलाहल हुआ। वहां पर विनोद और हंसीसे नित्य स्नान होता था ॥३८३॥

दिवसे पञ्चमे प्राप्ते कृत्वा नाकबलिं तथा ॥८३॥ कलशांश्चतुरो न्यस्य दीपज्वालाविराजितम् । वधूवरौ प्रतिष्ठाप्य रत्नसिंहासने नृप ॥ ८४ ॥ पूजयामास गोविन्दं जामातरमनामयम् ॥ आकाशराजो धर्मात्मा क्षीरपात्रं करे दधत् ॥८५॥

पांचवे दिन नागवल्ली कर, दीपज्वालासे शोभित चार कलशोंका स्थापन कर, रत्नोंके सिंहासनपर वरवधूको बैठाकर, क्षीर पात्रको हाथमें लेकर, धर्मात्मा आकाशराजने निर्दोष जामाताकी पूजा की ॥३८५॥

मातरं वासुदेवस्य नाम्ना वकुलमालिकाम् ॥ पूजयित्वा विधानेन वस्त्रालङ्कारभूषणैः ॥ ८६ ॥ नाभिं क्षीरेण संमृज्य पुत्रीं पद्मावतीं तदा ॥ अर्पयामास दुःखेन ब्रह्मण्यो राजसत्तमः ॥८७॥ महालक्ष्या नाभिमूलं सघृतक्षीरसेचनम् ॥ कृत्वार्पयामास पुत्रीं रुदन् गद्गदकण्ठवान् ॥८८॥

वकुलमाला नामक श्रीनिवासकी माताकी वस्त्र, अलङ्कार और भूषणोंसे विधिपूर्वक पूजा कर, नाभीको दूधसे धोकर उस ब्रह्मण्य श्रेष्ठ राजाने पुत्री पद्मावतीको दुःखसे अर्पण कर दिया। महालक्ष्मीके नाभीको घीके साथ दूधसे धोकर गद्गदकण्ठवाले राजाने रोती हुई पुत्रीको अर्पण किया ॥३८८॥

अथ श्रीनिवासेन सह शेषाचलं प्रति पद्मावतीप्रेषणम्

श्रीनिवासस्य कृष्णस्य शेषाचलनिवासिनः ॥ राजभार्या महाभागा रुदन्ती कुररीव च ॥८९॥ पुत्रीहस्तं प्रदायाथ हस्ते राजकुलाङ्गना ॥ क्षीरं संयोज्य कृष्णस्य नाभिमूलेऽतिदुःखिता ॥३९०॥

भृशं रुदन्ती मन्त्रेण दुःखसंदिग्धलोचना ॥ अर्पयामास कृच्छ्रेण पुत्रीं पद्मावतीं ततः ॥ ९१ ॥ प्रोवाच च श्रीनिवासं रुदती राजवल्लभा ॥

श्रीनिवासके साथ पद्मावतीको शेषाचलपर भेजना

कुररीके जैसी रोती हुई, बड़े भाग्यवाली, कुलकी अंगना, राजाकी प्यारी भाया पुत्रीके हाथको शेषाचलके रहनेवाले कृष्ण श्रीनिवासके हाथमें देकर, उनके नाभीमें चीर देकर, बहुत दुःखी एवं आखोंमें दुःख की हुई, दुःखसे बहुत रोती हुई पुत्री पद्मावतीको मन्त्रोंसे अर्पण किया और अत्यन्त रोती हुई श्रीनिवाससे बोली ॥३९२॥

*धरण्युवाच—*

पालितां लालितां पुत्रीं नवमासधृतां मया ॥९२ ॥ त्वदधीनां जगन्नाथ करिष्ये मम नन्दिनीम् ॥ इत्येवमर्पयन्त्यां तु धरण्यां राजसत्तमः ॥९३॥ स तस्या रोदनं दृष्ट्वा राजा दुःखपरायणः ॥ रुरोद दीनवदनः पुत्रीमालिङ्ग्य भूपतिः ॥९४॥

धरणी बोली —हे जगन्नाथ ! लालन पालन एवं नव मास ( पेटमें ) धारण की हुई मैं अपनी पुत्रीको तुम्हारे आधीन करती हूं । धरणीके इस प्रकार अर्पण करते समयके रोदनको देखकर दुःखी दीन मुखवाला राजा भी पुत्रीको आलिङ्गन करके रोने लगा ॥३९४॥

*राजोवाच—*

हा पुत्रि मन्दभाग्योऽहं त्वद्वियोगेन केवलम् ॥ जीवनं मम कल्याणि न स्थिरं च भविष्यति ॥९५॥

राजा बोले—हा पुत्री ! केवल तेरे वियोगसे मैं मन्द भाग्यवाला हूं; हे कल्याणी ! मेरा जीवन भी स्थिर नहीं रहेगा ॥३९५॥

क्रीडागृहे राजपुत्री तथा भोजन सद्मनि ॥ भ्राता तव कथं क्रीडां भोजनं वा करिष्यति ॥९६॥

हे राजपुत्री ! क्रीडा और भोजनके गृहमें तुम्हारा भाई कैसे क्रीडा और भोजन करेगा ॥३९६॥

एवं रुदन्तमालोक्य भ्रातरं दीनचेतसम् ॥ तोण्डमानो नृप·
श्रेष्ठो दुःखितो वाक्यमब्रवीत् ॥९७॥

इस प्रकार रोते एवं दुःखी मनवाले भाईको देखकर श्रेष्ठ राजा तोण्डमान दुःखी होकर वचन बोला ॥३९७॥

*तोण्डमान उवाच—*

वयं दरिद्रा निर्भाग्याः कृपणा दीनचेतसः ॥ वयं मरणमापन्ना
नात्र कार्या विचारणा ॥९८॥ एतादृशी च कल्याणी नैव लब्धा
कलौ युगे ॥ इत्थं वयं निश्चिनुमो वियोगभृशदुःखिता ॥९९॥
एवं तान् रुदतो दृष्ट्वा वसुदानोऽतिदुःखितः ॥ भगिनीं दीनव
दनामालिङ्ग्याह रुदन्मुहुः ॥४००॥

तोण्डमान बोले—हमलोग दरिद्र, अभागे, कृपण एवं दुःखी मनवाले हैं; इसमें सन्देह नहीं। हमलोग इस समय मृतप्राय हो गये हैं। इस प्रकारकी कल्याणी कलियुगमें नहीं मिलनेवाली है। हमलोग इसके वियोगसे बहुत दुःखी हो रहे हैं। इस प्रकार उनको रोते हुए देखकर अत्यन्त दुःखी वसुदान दुखित मुखवाली भगिनीको आलिङ्गन कर रोता हुआ धीरेसे बोला ॥४००॥

*वसुदान उवाच—*

मातरं बालकं त्यक्त्वा यथा लोके धनार्जकः ॥ गच्छन्तथा
मां भगिनि त्यक्त्वा त्वं क नु गच्छसि ॥१॥ एवं प्रसङ्गात्तत्रासी·
द्देवानामपि भूमिप ॥ ऋषीणां कश्यपादीनां दुःखमत्यन्तदारुण·
म् ॥२॥ रुदन्तं नृपतिं दृष्ट्वा श्रीनिवासः सतां गतिः ॥ स्वयं रुरोद
गोविन्द भगिनीं पार्थवल्लभाम् ॥ ३ ॥ स्मृत्वा श्रीदेवकीपुत्रस्त·
दद्भुतमिवाभवत् ॥

वसुदान बोला—संसारमें धन कमानेवाले माता और बालकको छोड़कर चले जाते हैं, हे भगिनी! उसी प्रकार तू हमको छोड़कर कहां जाती हो? हे राजन्! इस प्रसंगने वहांपर कश्यपादि ऋषियों और देवताओं-को भी अत्यन्त कठिन दुःख हुआ। रोते हुए राजाको देखकर सज्जनोंकी गति देवकीके पुत्र स्वयं गोविन्द श्रीनिवास भी, अर्जुनकी प्यारी अपनी भगिनीको स्मरण कर रोने लगे—यह सबको अद्भुत मालूम हुआ ॥४०४॥

आकाशराजाका श्रीनिवासजीको दहेज देना [ पृष्ठ ४८७ ]



गरुडस्कन्धमारूढं पत्न्या पद्मावतीमपि।
आरोपयत् वरारोहाम् यो य परिरभ्य च।
तदा ददौ महाराजः परिबर्हं प्रियव्रत ॥

इत्थं कृत्वा लोकरीतिमैरावतमुपास्थितः ॥४॥ पद्मावत्या तया सार्धं सर्ववाद्यसमन्वितः ॥ ग्रामं प्रदक्षिणीकृत्य रमया सहितो हरिः ॥ ५ ॥ स्वनिवेशगृहं भेजे पद्मासनभवादिकैः ॥

इस प्रकार लोकरीति समाप्त कर श्रीनिवास ऐरावतके पास आये और सब बाजाओं सहित उस पद्मावती, लक्ष्मी, एवं ब्रह्मा और शिवके साथ ग्रामकी प्रदक्षिणा कर अपने घर आये ॥ ४०६ ॥

ततो हरिः श्रीनिवासः स्वस्थानं गन्तुमैहत ॥६॥ गरुडस्कन्धमारूढः पत्नीं पद्मावतीमपि ॥ आरोपयन्वरारोहामन्योन्यं परिरभ्य च ॥७॥ गरुडस्कन्धमारूढो गन्तुं स्वस्थानमुत्सुकः ॥ हरिरामन्त्रणार्थं तु श्वश्रूश्वशुरयोस्तदा ॥८॥ पुनर्गृहं सम्प्रविश्य गमनेच्छुरभूदथ ॥ श्वशुरो पर्यपृच्छच्च साष्टाङ्गं प्रणिपत्य वै ॥९॥ आशीर्वादं ततश्चक्रे स्वजामातुरनामयम् ॥ आकाशराजः श्वशुरः स्वश्रूश्च धरया सह ॥४१०॥

तब गरुडके कंधेपर स्वयं चढ़कर सुन्दरी पत्नी पद्मावतीको भी चढ़ाया और एक दूसरेका आलिङ्गन कर श्रीनिवासने अपने स्थानको जानेकी इच्छा की। गरुडके कंधेपर चढ़कर अपने स्थानको जानेके लिये उत्सुक हो श्रीनिवासने श्वश्रू (सास) और श्वसुरको आमंत्रण करनेके लिये पुनः घरमें प्रवेश कर चलनेकी इच्छा करते हुए साष्टांग प्रणाम कर उनसे पूछा। तब श्वसुर आकाशराजाने श्वश्रू धरणीके साथ अपने निर्दोष जामाताको आशीर्वाद दिया ॥ ४१० ॥

आकाशराज उवाच—

दीर्घायुर्भव गोविन्द सर्वलोकधुरन्धर ॥ इत्याशिषाऽभिनन्द्याथ वासुदेवमभाषत ॥११॥

आकाशराज बोले—हे सब लोकोंके धुरको धारण करनेवाले गोविन्द! आप दीर्घायु (बहुत दिन जीनेवाले) होओ। इस प्रकार आशीर्वादसे अभिनन्दन कर श्रीनिवाससे बोले ॥ ४११ ॥

राजोवाच—

मासान्ते गच्छ गोविन्द वध्वा सह वयोगतम् ॥ श्वशुरं मां

च ते श्वश्रूं मानयस्व महामते ॥ १२ ॥ इति तस्य वचः श्रुत्वा वासुदेवोऽब्रवीन्नृपम् ॥

राजा बोले—हे गोविन्द ! वधूके साथ महीनेके अन्तमें जाइये । मुझ वृद्ध श्वसुर एवं अपनी श्वश्रूका कहना मानिये । उनके इस वचनको सुनकर श्रीनिवास राजासे बोले ॥ ४१३ ॥

*श्रीनिवास उवाच —*

नृप वाक्यं शृणु मम कार्यस्य महती त्वरा ॥१३॥ तस्मादाज्ञां च मे देहि राजंस्ते स्यात्कृपा मयि ॥ इत्युक्त्वा वासुदेवस्तु गरुडस्कन्धमास्थितः ॥ १४ ॥ जगाम भगवान् साक्षात् सर्वदेवसमन्वितः ॥ आकुला व्याकुलाः सर्वे नगरस्था जनास्तदा ॥१५॥ प्राकारगोपुरारूढाः पश्यन्तः स्वदृशाऽवदन् ॥

श्रीनिवास बोले—हे राजन् ! मेरी बात सुनिये । कार्यकी बहुत शीघ्रता है; इसलिये मुझको आज्ञा दीजिये । हे राजन् ! आपकी कृपा मेरे ऊपर रहे । इतना कहकर गरुड़के कंधेपर चढ़े हुए साक्षात् भगवान् श्रीनिवासने सब देवताओंके साथ प्रस्थान किया । तब नगरके रहनेवाले सब मनुष्य दुःखी और व्याकुल हो, प्राकार और गोपुरपर चढ़कर अपनी आंखोंसे देखते हुए बोले ॥ ४१६ ॥

*जना ऊ :—*

धन्या राजकुलोत्पन्ना पद्मा कमललोचना ॥१६॥ अनुगच्छति गोविन्दं पश्यतेति परस्परम् ॥ तदा ददौ महाराजः पारिबर्हं श्रियः पतेः ॥१७॥

मनुष्य बोले—राजकुलमें उत्पन्न कमलनयनी पद्मा धन्य है जो गोविन्दके पीछे-पीछे परस्पर देखती हुई जाती है । तब राजाने श्रीनिवासको दायज दिया ॥ ४१७ ॥

अथ पद्मावतीश्रीनिवासयोर्वियन्नृपप्रेषितपारिबर्हादिवर्णनम्

तण्डुलाञ्छालिसम्भूतान् वृषभाणां रथोपरि ॥ आरोप्य प्रेषयामास शतं खारीर्वियन्नृपः ॥१८॥ मुद्गान् गोस्वामिसंरूढांस्त्रिंशत्

खारीर्ददौ हरेः ॥ गुडभारं महान्तं च तिन्तिणीभारमेव
च ॥१९॥ पयोघटसहस्राणि दधिभाण्डशतानि च ॥ सहस्रार्ध-
घृतापूर्णचर्मपात्राणि सर्षपान् ॥४२०॥ मेथिकान् हिङ्गुलवणरीति-
पात्राणि चैव हि ॥ तदा शर्करया पूर्णघटांस्तु द्वे शते तथा ॥२१॥
वार्त्ताकं चूतकदलीफलजम्बीरकाणि च ॥ कूष्माण्डकन्दमूलानि
मरीचामलकानि च ॥२२॥ मधुभाण्डशते द्वे च रम्भाकाष्ठचयां
स्तथा ॥ रम्भात्वचश्च राजेन्द्र पत्राणां निचयं तथा ॥२३॥ अ-
श्वानामयुतं दत्त्वा गजानां च सहस्रकम् ॥ धेनूनां पञ्चसाहस्रम-
विकानां शतं तथा ॥२४॥ दासीनां द्वे शते राजन्दासानां त्रिशतं
तथा ॥ वस्त्राणि विविधान्याशु पर्यङ्कं रत्नभूषितम् ॥२५॥ उपबर्हं
रत्नयुतं पारिबर्हेण संयुतम् ॥ एवमादीनि वस्तूनि गृहीत्वा
नृपसत्तमः ॥२६॥ पुत्रेण सहितो राजा श्रीनिवासपरायणः ॥
आकाशराजो धर्मज्ञः श्रीनिवासस्य सन्निधिम् ॥ २७ ॥ आगतः
श्वशुरं दृष्ट्वा चोत्तस्थौ जगदीश्वरः ॥

आकाशराजका भेजा हुआ पद्मावती और श्रीनिवासको पारिबर्ह [ दायज ]

आकाशराजने सौखारी धानका चावल बैलगाड़ीपर रखकर भेजा। बैलोंपर लदा हुआ तीस खारी मूंग श्रीनिवासको दिया। हे राजेन्द्र! अनेकों भार गुड़ तथा तिंतिणी, हजारों घड़ा दूध सैकड़ों दहीके भंडे, घीसे भरे हुए पाँच सौ चर्मपात्र, सर्षप, मेथी, हींग, लवण, तेलके पात्र, शर्करासे भरे हुए दो सौ घड़े, वार्ताक (बैंगन), आम, केला, जम्बीरीके फल, कुष्माण्ड, कन्द, मूल, मरीच और आमला, मधुके दो सौ वर्तन, रम्भा (केला) स्तम्भका समूह, रम्भाकी त्वचा ( चमरा ), पत्रोंका समूह, दश हजार घोड़े, एक हजार हाथी, पांच हजार गौ, एक सौ अविका, दो सौ दासियां, तीन सौ दास, अनेकों वस्त्र, रत्नसे सजा हुआ पलंग, रत्नोंसे शोभित उपबर्ह ( तकिया ) इस पारिबर्ह ( दायज ) के साथ और और वस्तुओंको लेकर वह भगवद्भक्त, श्रेष्ठ, धर्मात्मा राजा आकाशराज पुत्रके साथ श्रीनिवासके पास आये; तब श्वशुरको देखकर जगदीश्वर श्रीनिवास उठे ॥४२८॥

## अथ वियन्नृपस्य श्रीनिवासदत्तस्वभक्तिनैरन्तर्यरूपवरप्राप्तिः

*श्रीनिवास उवाच—*

दूराध्वानं महाराज किमर्थं त्वं समागतः ॥२८॥ दातव्यं किं नृपश्रेष्ठ तव पुत्रस्य मेऽनघ ॥ कन्या दत्ता सुतः प्राप्तः सुकृतं किं कृतं त्वया ॥२९॥ सन्तोषश्चातुलः प्राप्तो मम तात न संशयः ॥ किं ते मनोगतं राजंस्तन्ममाचक्ष्व भूपते ॥४३०॥ सन्देहं मा कुरुष्वात्र दानादाने महीपते ॥ वासुदेववचः श्रुत्वा वासुदेवमभाषत ॥३१॥

### आकाशराजका श्रीनिवासके दिये हुए अपने निरन्तर भक्तिरूप वरका पाया जाना

श्रीनिवास बोले—हे महाराज ! रास्तेमे इतनी दूर आप किस लिये आये हैं ? हे नृपश्रेष्ठ, अनघ ! मुझ अपने पुत्रको क्या देना चाहिये ? कन्या दी गयी और पुत्र प्राप्त हुआ, आपने कौनसी सुकृति की थी ? हे तात ! मुझको बहुत सन्तोष हुआ है, इसमे सन्देह नहीं है । हे राजन ! आपके मनमें क्या है सो मुझसे कहिये । हे राजन् ! यहांपर लेनेदेनेमे सन्देह मत कीजिये । श्रीनिवासके इस वचनको सुनकर आकाशराज उनसे बोले ॥४३१॥

*राजोवाच—*

सर्वमङ्गलमस्माकं त्वत्प्रसादेन केशव ॥ नान्यथाप्ये जगन्नाथ तव पादसरोरुहे ॥३२॥ भक्तिं देह्यचलां कृष्ण सकुटुम्बस्य मेऽनघ ॥ तत् श्रुत्वा वचनं तस्य श्वशुरस्य महात्मनः ॥ ३३ ॥ दत्त्वास्य सायुज्यमाकाशनृपतेस्तदा ॥ श्यालकस्य ददौ वस्त्रं स्वाङ्गस्थं मधुसूदनः ॥३४॥

राजा बोले—हे केशव ! आपकी प्रसन्नतामें हमलोगोंका सब मङ्गल है, मैं दूसरा कुछ नहीं चाहता हूँ । हे कृष्ण, अनघ ! सकुटुम्ब मुझको अपने चरण कमलकी अचल भक्ति दीजिये । अपने महात्मा श्वशुरके उस वचनको सुनकर श्रीनिवासने उस आकाशराजको "सायुज्य" दिया और अपने अंगका वस्त्र शालक (वसुदान) को दिया ॥३३४॥

जामात्रा च समाज्ञप्तः पुत्रीभवनमभ्यगात् ॥ पुत्रि गच्छामि नगरं विहरस्व हरिप्रिये ॥३५॥ शयने श्रीनिवासस्य शयनं कुरु मङ्गले ॥ इति राजा सान्त्वयित्वा पुत्रीं कमललोचनाम् ॥३६॥ शशास सा स्वपित्रोक्तं शीघ्रं माधवमभ्यगात् ॥ रुदन् गद्गद-कण्ठेन जगाम नगरं नृपः ॥३७॥

तब जामातासे कहे जानेपर राजा पुत्रीके भवनमें गये। हे पुत्री, श्रीनिवासकी प्यारी ! मैं अपने नगरको जाता हूं, तुम आनन्दसे रहो। हे मङ्गला ! श्रीनिवासके शयन करनेपर शयन करो—इस प्रकार राजा अपने कमलनयनी पुत्रीको समझाकर गद्गदकण्ठ हो रोते हुए अपने नगरको आये। वह अपने पितासे कही जानेपर शीघ्र ही श्रीनिवासके पास आयी ॥४३७॥

अथ भगवत्कृतपण्मासावधिकागस्त्याश्रमवासप्रतिज्ञा

पद्मावत्यनुगो देवो ब्रह्मरुद्रादिकैर्युतः ॥ सुवर्णमुखरीं प्राप्य तत्र वासमकल्पयत् ॥३८॥ षण्मासावधि लक्ष्मीशो दीक्षितोऽयं महामते ॥ न शैलराजमारोहमिति निश्चित्य देवराट् ॥३९॥ अगस्त्य-भवनं गत्वा तत्र वासमकल्पयत् ॥

श्रीनिवासकी की हुई अगस्त्याश्रममें छः मास रहनेकी प्रतिज्ञा

पद्मावतीके पीछे-पीछे चलते हुए श्रीनिवासने ब्रह्मा, शिव इत्यादिके साथ सुवर्णमुखरीको पहुंचकर वहांपर रहना ठीक किया। दीक्षा लिये हुए देवताओंके राजा श्रीनिवास हरि "छः मासतक पर्वतराजपर न चढ़ूंगा"—ऐसा निश्चय करके अगस्त्यके घर आकर वहा रहने लगे।

अथ स्वावासं प्रति भगवत्कृतदेवादिप्रेषणम्

देवान् सम्प्रेषयामास स्वधामानि वृषाकपिः ॥४४०॥ ब्रह्मादीनां सुराणां च मुनीनामूर्ध्वरेतसाम् ॥ ददौ वस्त्रं यथायोग्यं भगवान् भक्तवत्सलः ॥४१॥ तेनाज्ञप्ता जगद्धात्रा जग्मुर्लोकं स्वकं सुराः ॥ ऋषयश्च तपोऽरण्यं जग्मुर्नारायणाज्ञया ॥ ४२ ॥ लक्ष्मीर्जगाम

राजेन्द्र करवीरपुरं तदा ॥४३॥ महोत्सवं तं त्वनुभूय देवता ब्रह्मे-
शपूर्वाः समहर्षिसत्तमाः ॥ जग्मुः स्वकं धाम महानुभावा राजे-
न्द्रपूज्यं प्रशशंसुरादरात् ॥४४॥ गते देवगणे तत्र स्वगस्त्यनि-
लयं गतः ॥ भुञ्जानो भोगमतुलं तत्रास्ते भगवान् हरिः ॥४५॥

### श्रीनिवासका देवताओंको अपने-अपने घर भेजना

श्रीनिवासने देवताओंको अपने-अपने घरको भेज दिया। भक्तप्रिय श्रीनिवासने ब्रह्मा इत्यादि देवताओंको और ऊर्ध्वरेता मुनियोंको यथायोग्य वस्त्र दिया। उस श्रीनिवाससे आज्ञा पाये हुए देवतागण अपने-अपने घर गये। उन्हींकी आज्ञासे ऋषिगण तपोवनको गये। हे राजेन्द्र! तब लक्ष्मी करवीरपुरमें गयी। उस महोत्सवको देखकर ब्रह्मा इत्यादि देवता एवं बड़े-बड़े ऋषिगण अपने-अपने घर गये। वे महानुभाव आकाशराजसे पूजित श्रीनिवासकी प्रशंसा आदरसे करते थे। देवताओंके चले जानेपर हरि अगस्त्यके आश्रममें गये और अतुल भोगोंका भोग करते हुए वहांपर रहने लगे ॥४४७॥

### अथ विवाहाध्यायफलश्रुतिः

*शतानन्द उवाच—*

विवाहाध्यायमाहात्म्यं ये शृण्वन्ति जनेश्वर ॥ ४६ ॥ तेषां
भाग्योदयं वक्ष्ये शृणु राजन् सविस्तरम् ॥ कोटिकन्याप्रदानेन
यावद्भूमिप्रदानतः ॥४७॥ यत्फलं लभते देही तत्फलं श्रवणादरात् ॥
य उत्सवं कारयन्ति वैवाहं वेङ्कटेशितुः ॥४८॥ तस्योत्सवो भवे-
द्राजन् वेङ्कटेशप्रसादतः ॥

### विवाहका अध्याय सुननेका फल

शतानन्द बोले— हे जनेश्वर! हे राजन्! इस विवाहके अध्यायके महत्व (माहात्म्य) को जो सुनते हैं, उनके भाग्यका उदय विस्तारके साथ कहता हूँ; सुनिये। करोड़ों कन्या एवं सम्पूर्ण पृथ्वीदानसे जो फल मनुष्यको मिलता है वह फल इसको आदरपूर्वक सुननेसे मिलता है। हे राजन्! जो श्रीवेङ्कटेशके विवाहका उत्सव करवाता है, उसको श्रीवेङ्कटेशका प्रसन्नतासे उत्सव ही होता है ॥४४९॥

इति ते कथितं राजन् विवाहचरितं हरेः ॥४९॥ शृणुयाच्छ्र-

वयेद्वाऽपि सर्वाभीष्टमवाप्नुयात् ॥ शुभदं शृण्वतां चैव सर्वेषां मङ्गलप्रदम् ॥४५०॥

इति श्रीभविष्योत्तरपुराणे श्रीवेङ्कटाचलमाहात्म्ये श्रीनिवासविवाहदिवर्णनं नामैकादशोऽध्यायः ॥ ११ ॥

हे राजन्! मैंने श्रीनिवासका विवाह चरित तुमसे कहा है। इसको जो कोई सुनता और दूसरेको सुनाता है उसके सब मनोरथ पूरे होते हैं; सब सुननेवालोंको यह शुभ देनेवाला और मङ्गल देनेवाला है ॥४५०॥

इत्येकादशोऽध्यायः ॥११॥

## द्वादशोऽध्यायः ॥१२॥

समाचार नभराजका, दूतकथन प्रभुपास ।
ऋषि अगस्त्यको साथले, देखन जाना खास ॥१॥
मरन समय नभ देखप्रभु, दुखित-मृत्यु आकाश ।
अन्त्येष्टी वसुदानसे, वसु-तोण्ड रण राश ॥२॥
प्रभु पत्नीसलाहसे, वसुदान बलदान ।
ईश तोण्ड संग्राम पुनि, वसु सह तोण्ड मिलान ॥३॥

अथ श्रीनिवासं प्रति वियन्नृपोदन्तज्ञापकदूतागमनम्

जनक उवाच—

ततः किमकरोत्कृष्णो राज्येऽस्मिन्पार्थसारथिः ॥ तन्ममाचक्ष्व विप्रेन्द्र यत्कृतं चक्रपाणिना ॥

## श्रीनिवासके प्रति आकाशराजके समाचार बतानेवाले दूतका आना

जनक बोले—तब इस राज्यमें अर्जुनके सारथी कृष्णने क्या किया ? हे ब्रह्मन् ! चक्रपाणिसे जो किया गया वह मुझसे कहिये ॥ १ ॥

*शतानन्द उवाच—*

**एवं काले गते तस्मिन् षण्मासाश्च समत्ययुः ॥ नारायणपुराद् दूत आगतो वेङ्कटेश्वरम् ॥२॥ दूतं दृष्ट्वाऽब्जजाता सा सुवर्ण-मुखरीजले ॥ स्नातुकामाऽरविन्दाक्षी दूतं वचनमब्रवीत् ॥ ३॥**

शतानन्द बोले—इस प्रकार छः मास समय बीत गया । बाद नारायणपुरसे श्रीवेङ्कटेश्वरके पास एक दूत आया, और सुवर्णमुखरीके जलमें स्नान करनेकी इच्छावाली वह कमलनयनी पद्मावती दूतको देखकर उससे वचन बोली ॥ ३ ॥

*पद्मावत्युवाच—*

**किमर्थमागतो दूत केन त्वं प्रेषितस्त्विह ॥ राज्ञा वा राजपु-त्रेण तोण्डमानेन वा पुनः ॥४॥ पप्रच्छ कुशलं तत्र राज्ञस्तस्य पितुस्तथा ॥ कुशली वर्तते चाऽऽ जनको जननी मम ॥५॥ तो-ण्डमान् राजशार्दूलः कुशली वर्तते बली ॥ राज्ञः प्रकृतयः सर्वा वर्तन्ते क्षेमसंयुताः ॥६॥ एवमुक्तस्तदा दूतो दुःखसन्दिग्धलोच-नः ॥ उवाच दीनया वाचा राजपुत्रीं निदेशतः ॥७॥**

पद्मावती बोली—हे दूत ! तुम किस लिये आये हो ? राजा वा राजपुत्र वा तोंडमान किसने तुमको भेजा है और अपने पिता आकाशराजका कुशल भी उससे पूछा । हे दूत ! मेरे माता और पिता कुशलसे हैं ? राजाओंमें श्रेष्ठ और बलवान वह तोण्डमान तो कुशलसे हैं ? राजाकी सब प्रकृतियां ( प्रजाएं ) कुशलसे हैं ? ऐसा कहे जानेपर दुःखसे भरे हुए नेत्रवाला वह दूत राजपुत्रीकी आज्ञासे कारुणिक वचन बोला ॥ ७ ॥

*दूत उवाच—*

**किं वदिष्यामि हे मातः पितुस्ते काल आगतः ॥ मरणाभि-मुखो भूत्वा किञ्चिज्जीवसमन्वितः ॥८॥ त्वां द्रष्टुकामो राजेन्द्रः श्रीनिवासं सुहृद्वृतम् ॥ नय शीघ्रं पतिं भद्रे राजधानीं पितुस्तु**

श्रीनिवासजीका रोना [ पृष्ठ ४६६ ]



अङ्कऽङ्कं ददौ तस्य श्वशुरस्य महात्मन ।
हा तात ! नाथ क्व गतोऽसि च त्वं सत्यज्य देहं ससुतं सपुत्रीम् ॥

ते ॥९॥ साऽपि दूतवचः श्रुत्वा पपात गतचेतना ॥ अगस्त्यभार्या तां बालामुत्थाप्य कमलालयाम् ॥ १० ॥ श्रीनिवासान्तिकं निन्ये राजपुत्रीं पितृप्रियाम् ॥ तद्वार्तामवदद्देवी श्रीनिवासाय विष्णवे ॥११॥ तच्छ्रुत्वा वासुदेवस्तु रुरोद नरसत्तम ॥

दूत बोला—हे माता! क्या कहूं, तुम्हारे पिताका काल आ गया है; मरनेके निकट होकर, कुछ प्राणों सहित वह राजा तुमको और सुहृदोंसे युक्त श्रीनिवासको देखनेकी इच्छा करते हैं। हे भद्रे! अपने पतिको पिताकी राजधानीको ले चलो। इस दूतके वचनको सुनकर वह पद्मावती बेहोश होकर गिर पड़ी, अगस्त्यकी स्त्री लोपामुद्रा उस बाला, पिताकी प्यारी, राजाकी पुत्री पद्मावतीको उठाकर श्रीनिवासके पास ले आयी और उसने उसकी (पद्मावतीकी) वार्ता श्रीनिवाससे कही। उसको सुनकर, हे नरश्रेष्ठ! श्रीनिवास रोने लगे ॥१२॥

*श्रीनिवास उवाच—*

अहो बत महत्कष्टं सम्प्राप्तं मम भामिनि ॥१२॥ किं करोमि क्व गच्छामि ब्रूहि त्वं पद्मसम्भवे ॥ इत्येवमुक्त्वा तां देवीमब्रवीत्कुम्भसम्भवम् ॥१३॥

श्रीनिवास बोले—हे मेरी प्यारी! मुझको बहुत ही कष्ट प्राप्त हुआ। मैं क्या करूं, कहां जाऊं, हे पद्मावती, तुम कहो। उस देवीसे ऐसा कहकर अगस्त्यसे बोले ॥ १३ ॥

अथ वियन्नृपविलोकनाय अगस्त्येन सह श्रीनिवासगमनम्

*श्रीभगवानुवाच—*

अगस्त्य मुनिशार्दूल गच्छामि नगरं प्रति ॥ पद्मावत्या सहाद्यैव सार्धं वकुलमालया ॥१४॥ इत्युक्त्वा प्रययौ राजन् भगवान् भक्तवत्सलः ॥ अगस्त्येनापि सहितस्त्वरयैव महर्षिणा ॥१५॥ आदित्येऽस्तं गते राजन्नगरद्वारमागतः ॥ पप्रच्छ द्वारपालांश्च राजक्षेमं सुरेश्वरः ॥१६॥ राजमार्गे महाराज भगवान् प्रियया सह ॥ अन्तर्निकेतनं प्राप्य राजानं पृथिवीपते ॥१७॥ शयानं दर्शयामास विनिःश्वाससमन्वितम् ॥ पपातास्य महाराज काये कमललोचनः ॥१८॥

## आकाशराजको देखनेके लिये अगस्त्यके साथ श्रीनिवासका जाना

श्रीभगवान् बोले—हे मुनिश्रेष्ठ अगस्त्य! पद्मावती और वकुलाके साथ मैं आज ही नगरको जाता हूं। हे राजन्! ऐसा कहकर भक्तवत्सल, देवताओंके स्वामी भगवान् महर्षि अगस्त्यके साथ शीघ्रतासे गये और सूर्यके अस्त होनेपर, हे राजन्! नगरके द्वारपर आकर द्वारपालोंसे राजाका कुशल पूछा। हे महाराज! हे पृथ्वीपति! प्रियाके साथ राजमार्गसे भगवान्‌ने अन्तःपुरमें पहुंचकर ऊंचे श्वासके साथ सोये हुए राजाको देखा। हे महाराज! कमलनयन श्रीनिवास इनके शरीरपर पड़ गये॥ १८॥

अथ मरणोद्युक्तं वियन्नृपमुद्दिश्य श्रीनिवासादिकृतनिर्वेदनम्

मुखे मुखं विनिःक्षिप्य ललाटं च ललाटके॥ उदरे चोदरं बद्ध्वा नेत्रं नेत्रे समर्पयत्॥ अङ्गसङ्गं ददौ तस्य श्वशुरस्य महात्मनः॥१९॥ हा तात नाथ क्व गतोऽसि च त्वं सन्त्यज्य देहं स्वसुतं स्वपुत्रीम्॥ स्वभ्रातरं सूक्ष्ममतिं सराष्ट्रकं राज्यं त्वदीयं क्व विसृज्य गच्छसि॥ २०॥ मातापितृविहीनानामस्माकं जनको भवान्॥ २१॥ कथं पश्यामि नेत्राभ्यां त्वन्मुखाम्भोजमुत्तमम्॥ उत्थापय सुतां राजन् रुदन्तीं तनयं तथा॥२२॥ वसुदानं शिशुं राजन् पितृहीनं च मां नृप॥ कस्त्राता त्वां विना राजन्नस्माकं गुरुर्भविष्यसि॥ अनाथान् नाथ नः पाहि प्रजाः पाहि प्रजापते॥ प्रलपन् पुनरप्याह लोकानित्थं विडम्बयन्॥ २४॥ कलेवरं कथं दास्याम्यग्नये लोकमोहनम्॥ एतदर्थं स्वपुत्रीं मे दत्त्वा मृतिमवाप्स्यसि॥२५॥ श्रीनिवास न गच्छेति पूर्वमेव त्वयोदितम्॥ उक्तं हितं मया तात न श्रुतं ते महीपते॥२६॥ न तृप्तं नेत्रयुगलं दृष्ट्वा त्वन्मुखपङ्कजम्॥ तोण्डमान् मण्डलाधीशो वसुधायां महामते॥२७॥ का गतिर्मम राजेन्द्र का वार्ता क्व भविष्यति॥ विलोकय महाराज मां च पद्मावतीं तथा॥२८॥

मरनेको तैयार आकाशराजको उद्देश्य करके श्रीनिवासका दुःख प्रगट करना

मुखके ऊपर मुख, ललाटके ऊपर ललाट, पेटके ऊपर पेट तथा नेत्रके ऊपर नेत्र रख उन्होंने उस महात्मा श्वसुरके अङ्गका साथ दिया तथा संसारको मोहित करते और विलाप करते हुए कि "हा तात! हा नाथ! अपनी देह, पुत्र और पुत्रीको छोड़कर आप कहां चले? राज्यके साथ सूक्ष्म बुद्धिवाले अपने भाईको छोड़कर कहा जाते हो? माता और पितासे हीन मेरे आप ही पिता हैं। अपनी आखोंसे आपका उत्तम मुखकमल कैसे देखूंगा? हे राजन! रोती हुई पुत्री और पुत्रको उठाओ। हे राजन्! वसुदान शिशु और पितृहीन मुझको आपके बिना कौन बचानेवाला होगा? हे नाथ! हम अनाथोंकी रक्षा कीजिये। हे प्रजाके स्वामी! प्रजाओंकी भी रक्षा करो", इस प्रकार बोलने लगे—"ऐसे लोक सुन्दर शरीरको अग्निमें कैसे दूंगा? इसीलिये अपनी पुत्री मुझे देकर मृत्युको प्राप्त होते हो? 'श्रीनिवास मत जाओ'—ऐसा पहले आपने कहा था, हे तात! हे राजन्! आपका प्रिय वचन मैंने नहीं सुना आपके मुखकमलको देखकर मेरे दोनों नेत्र तृप्त नहीं हुए हैं। हे महामति! पृथ्वीपर तोण्डमान मण्डलके स्वामी होंगे, हे राजेन्द्र! मेरी क्या गति अर्थात् कौन बात कहांपर होगी? हे महाराज! मुझको और पद्मावतीको देखो" ॥२८॥

*मुनिरुवाच—*

**जामाताऽयं समायातः पद्मावत्या समन्वितः ॥ बहिर्गच्छ पुरेव त्वं समानयनकारणात् ॥२९॥ भोजनं दीयतां तस्य जामातुः परितोषकम् ॥ गजानश्वान्महाराज वस्त्राणीच्छति ते सुतः ॥३०॥ तान्ददस्व महाराज प्रीतये मधुघातिनः ॥**

मुनि बोले—पद्मावतीके साथ जामाता आये हुए हैं, पहलेकी तरह उनको लानेके लिये आप बाहर निकलिये और उस जामाताको रुचिकर भोजन दीजिये। हे महाराज! आपके पुत्र घोड़े, हाथी और वस्त्र चाहते हैं। हे महाराज! उस मधुसूदन श्रीनिवासकी प्रसन्नताके हेतु यह सब दीजिये ॥ ३१ ॥

**इत्यगस्त्येन वै राज्ञि बोधितेऽप्यप्रबोधिनि ॥ विललाप महाराज भगवाँल्लौकिकैः समः ॥३१॥ तदद्भुतं कर्म चकार देवो विडम्बयन् सर्वजनं जगत्पतिः ॥ यथा कुरूणां रणरङ्गमध्ये कर्णे हते धर्मराजश्चकार ॥३२॥ एवं रुदति गोविन्दे राजाऽऽकाशश्च सन्तृप ॥३३॥ किञ्चित्संज्ञायुतो भूत्वा वासुदेवमभाषत ॥**

हे महाराज ! इस प्रकार अगस्त्यसे समझाये जानेपर भी राजाके नहीं समझनेपर, लौकिक मनुष्योंके समान ही संसारके स्वामी सब मनुष्योंको मोहते हुए विलाप करने लगे और उन्होंने वह अद्भुत कर्म किया जो कौरवोंके रणक्षेत्रमें कर्णके मारे जानेपर धर्मराज युधिष्ठिरने किया था। श्रीनिवासके इस प्रकार रोते समय वह श्रेष्ठ आकाशराजा कुछ होशमें आकर श्रीनिवाससे बोले ॥ ३४ ॥

राजोवाच—

पुत्रं सभ्रातरं त्राहि श्रीनिवास निरामय ॥ ३४ ॥ इत्युक्त्वा भूपती राजन् करे कृष्णस्य तौ ददौ ॥ भार्यां सन्देशयामास स्वलोकगमनाय च ॥३५॥

राजा बोले—हे निर्दोष श्रीनिवास ! भ्राताके साथ पुत्रकी रक्षा कीजिये। हे राजन् ! ऐसा कहकर उन दोनोंको श्रीनिवासके हाथमें दे दिया, और स्वर्गलोक जानेके लिये भार्याको संदेश दिया ॥३५॥

अथ मृताय वियन्नृपाय वसुदानकृतचरमकृत्यक्रमः

इत्यादिश्य त्यजन् प्राणान् सत्यलोकं जनाधिपः ॥ दिव्यं विमानमारूढो जगाम स नृपोत्तमः ॥३६॥ साऽपि तेन जगामाशु धरणी राजसत्तम ॥ ततश्चितां समारोप्य राजानं सपरिग्रहम् ॥३७॥

मरे हुए आकाशराजकी वसुदानकी की हुई अन्त्येष्टिक्रिया

यह आज्ञा देकर राजा प्राणको छोड़ते ही स्वर्गीय विमानपर चढ़कर सत्यलोक चले गये। वह धरणी भी उन्हींके साथ शीघ्र चली गयी ॥ ३७ ॥

वसिष्ठो गौतमोऽत्रिश्च भरद्वाजोऽतिविश्रुतः ॥ वहन्तो राजशार्दूलं श्रीनिवासप्रियं नृप ॥३८॥ जुहुवुर्ब्रह्ममेधेन मन्त्रैश्च विधिपूर्वकम् ॥ ततः कृतानि सर्वाणि प्रेतकार्याणि भूपतेः ॥३९॥ षोडशे दिवसे प्राप्ते मासिकान्यकरोत्सुतः ॥ निमन्त्रिताश्चारुपुण्या ब्राह्मणा वेदपारगाः ॥४०॥ कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः ॥ वामदेवः पुलस्त्योऽथ वाल्मीकिर्वसुधाधिप ॥४१॥ ज-

श्रीनिवासजीका तोण्डमानको चक्र देना [ पृष्ठ ५०२ ]



पद्मावतीवचः श्रुत्वा शालकस्यैव साह्यकृत् ।
तोण्डमाननृपतेर्दिव्ये शङ्खचक्रे ददौ हरिः ॥

मदग्निर्भृगुः श्रीमान् सनन्दश्च पराशरः ॥ याज्ञवल्क्यश्च जाबालिः शुनःशेपोऽथ काहलः ॥४२॥ एते महर्षयो राजन् राजार्थे ब्राह्मणोत्तमाः ॥ अभुञ्जतान्नसारं च वसुदाननिमन्त्रिताः ॥४३॥ समाप्य सर्वकार्याणि हरिः स्वस्थानमाश्रितः ॥ पद्मावतीं पुरस्कृत्य पुराणपुरुषोत्तमः ॥४४॥ अगस्त्यालयमासाद्य सुखमास्ते सुरेश्वरः ॥

हे राजन्! तब वसिष्ठ, गौतम, अत्रि, और प्रसिद्ध भरद्वाजने स्त्री सहित राजाको ले जाकर चितापर चढ़ाकर विधिपूर्वक ब्रह्ममेधके मंत्रोंसे दग्ध किया। हे राजन्! तब राजाके सब प्रेतकार्य किये गये। दिन बीतनेपर पुत्रने मासिक पिण्डदान किया तथा वेदके जाननेवाले सुन्दर पवित्र ब्राह्मणोंको निमंत्रित किया। राजाके लिये, वसुदानसे निमंत्रित किये गये कश्यप, अत्रि, भरद्वाज, विश्वामित्र, गौतम, वामदेव, पुलस्त्य वाल्मीकि, जमदग्नि, भृगु, श्रीमान् सनन्दन, पराशर, याज्ञवल्क्य, जाबालि, शुनःशेप और काहल महर्षि आदि और उत्तम ब्राह्मण हे राजन्! उत्तम अन्न भोजन किये। सब कार्मोंको समाप्त कर अपने स्थानपर आये हुए पुराण पुरुषोत्तम श्रीनिवास पद्मावतीको आगे कर अगस्त्यके घरपर आ, सुखसे रहने लगे ॥४५॥

अथ तोण्डमानवसुदानयो राज्यमुद्दिश्य कलहप्रवृत्तिः

मृते राज्ञि गते कृष्णे कलहः प्रत्यपद्यत ॥४५॥ तोण्डमानपतेस्तस्य विष्वक्सेनस्य भूमिप ॥

राज्यके उद्देश्यसे तोंडमान और वसुदानमें झगड़ा

राजाके मर जाने तथा श्रीनिवासके चले जानेपर राजा तोण्डमान एवं वसुदानमें झगड़ा उत्पन्न हो गया ॥ ४६॥

ज्येष्ठे मृते कनिष्ठस्य राज्यमेतद्विदो विदुः॥४६॥ परम्परार्जितं हीति तोण्डमानब्रवीत्सुतम् ॥ पराक्रम्यार्जितं राज्यं पित्रा मम नृपोत्तम ॥४७॥ ममैव स्यादिदं हीति तोण्डमानं सुतोऽब्रवीत् ॥ एवं विवादमापन्नौ तोण्डमान्नृपपुत्रकौ ॥४८॥ राजशार्दूल राज्यार्थमुभावपि महाबलौ ॥ अन्तरं कृतवन्तौ तौ युद्धे यस्य जयो

भवेत् ॥४९॥ तस्य राज्यमिदं सर्वमन्यथा यो व्रजेदिति ॥ कृत्वा समयमारब्धौ सङ्गरं जयकाङ्क्षिणौ ॥५०॥

तोण्डमानने पुत्र वसुदानसे कहा—ज्येष्ठके मर जानेपर परम्पराका उपार्जन किया हुआ राज्य कनिष्ठका होता है। हे राजा! वसुदान तोण्डमानसे बोला—मेरे पिताके पराक्रमसे उपार्जन किया हुआ यह राज्य मेरा ही है। इस प्रकार तोण्डमान और राजपुत्रके बीचमें राज्यके लिये झगड़ा खड़ा हो गया; उन दोनों बड़े बलवानों-ने यह निश्चय किया कि युद्धमें जिसकी जीत हो उसीका यह राज्य होगा; जो नहीं जीतेगा वह चला जायगा। ऐसा निश्चय करके जीतके इच्छुक दोनोंने युद्ध आरम्भ किया ॥ ५० ॥

नानादेशकिरातांश्च क्षत्रियान्युद्धदुर्मदान् ॥ आवाहयच्च राजेन्द्र तोण्डमान्युद्धदुर्मदः ॥५१॥ अक्षौहिणीद्वयं तेन सैन्यं संवादितं नृप ॥ तावद्राजकुमारेण मिलितं सैन्यमव्ययम् ॥५२॥

हे राजेन्द्र! युद्धमें मत्त तोण्डमानने अनेक देशोंके किरातों एवं क्षत्रियोंका आह्वान किया। हे राजा! उसने दो अक्षौहिणी सेना इकट्ठी की और उतनी ही अक्षय सेना राजकुमारने भी इकट्ठी की ॥ ५२ ॥

अथ साह्याशया श्रीनिवासं प्रति तोण्डमानवसुदानागमनम्

नारायणपुरप्रान्ते दक्षिणे रणमेदिनीम् ॥ कृत्वा साह्याशया राजं-स्तोण्डमान्राजनन्दनौ ॥ सम्प्राप्तौ वासुदेवस्य चरणौ शरणं गतौ ॥५३॥ तावागतौ राजकुमारराजौ दृष्ट्वाऽतिवेगेन स चालिलिङ्ग ॥ संभाष्य दत्त्वाऽपि च रत्नपीठे प्रीत्याऽतिहृष्टो वचनं बभाषे ॥५४॥

श्रीनिवासके समीप एक ही आशयसे तोंडमान और वसुदानका आना

नारायणपुरके बाहर दक्षिणमें पास ही युद्धभूमि बनाकर तोण्डमान और वसुदान सहायताकी इच्छासे श्रीनिवासके पास आये और उनकी शरणमें गये। उन दोनों आये हुए राजकुमारोंको देखकर श्रीनिवास बहुत जल्द आलिङ्गन कर, रत्नोंकी पीठ (पीढ़ा) भी देकर प्रीतिसे आनन्दपूर्वक वचन बोले ॥ ५४ ॥

श्रीनिवास उवाच—

किमर्थमागतस्तात तन्ममाचक्ष्व भूमिप ॥५५॥ श्रीनिवासवचः श्रुत्वा शालकस्तमभाषत ॥

श्रीनिवास बोले—हे राजन्! आपका आना किस लिये हुआ, सो मुझसे कहिये। श्रीनिवासके वचन सुनकर शालक ( वसुदान ) उनसे बोला ॥ ५६ ॥

शालक उवाच—

**युद्धं प्रसक्तं गोविन्द कनिष्ठजनकेन मे ॥५६॥ राज्यार्थं मम साहाय्यं कुरु वारिजलोचन ॥ बालोऽस्मि पितृहीनोऽहमसहायोऽस्मि देवराट् ॥५७॥ शालकस्य वचः श्रुत्वा राजा तं वाक्यमब्रवीत् ॥**

वसुदान बोला—हे गोविन्द! मेरे और मेरे कनिष्ठ पिताके बीचमें राज्यके लिये युद्ध ठन गया है; हे कमलनयन! मेरी सहायता कीजिये। हे देवताओंके राजा! मैं बालक, पितृहीन और असहाय हूं। शालकके इस वचनको सुन लेनेपर राजा उनसे वचन बोला ॥५७॥

राजोवाच—

**श्रीनिवासारविन्दाक्ष कुरु कार्यं पुनः स्थितः ॥५८॥**

राजा बोला—हे कमलनयन श्रीनिवास! कुछ ठहर कर काम कीजिये ॥ ५८ ॥

श्रीनिवास उवाच—

**एकोऽहं कस्य साहाय्यं करिष्ये नृपसत्तम ॥ तमेवमुक्त्वा भगवानन्तर्भवनमभ्यगात् ॥ ५९ ॥ पद्मावतीं विशालाक्षीं पद्मनाभोऽभ्यभाषत ॥**

श्रीनिवास बोले—हे राजन्! मैं एक हूं; किसकी सहायता मैं करूं? उनसे इस प्रकार कहकर श्रीनिवास अन्तर्भवनमें आये और दीर्घ नेत्रवाली पद्मावतीसे बोले ॥६०॥

अथ पद्मावत्युक्त्या वसुदानसाह्यकरणाय श्रीनिवासागमनम्

श्रीनिवास उवाच—

**कल्याणि कार्यमापन्नं महत्कष्टतरं मम ॥६०॥ तव भ्राता वरारोहे कनिष्ठजनकस्तव ॥ राज्यार्थं कलहं कृत्वा मम साहाय्यकाङ्क्षिणौ ॥६१॥ छिन्धि सन्देहमधुना कस्य साह्यं विधीयताम् ॥ नियोजयस्व मां देवि युक्तमालोच्य विस्तरात् ॥६२॥**

### पद्मावतीके कहनेसे वसुदानकी सहायताके लिये श्रीनिवासका जाना

श्रीनिवास बोले —हे कल्याणी ! मुझपर बहुत कठिन कार्य आ पड़ा है। हे सुन्दरी ! तुम्हारे भाई और कनिष्ठ पिता राज्यके लिये झगड़ा करके दोनों मेरी सहायताकी इच्छा करते हैं। अब मेरे सन्देहको दूर करो कि किसकी सहायता करनी चाहिये; हे देवी ! विशद रूपसे उचित विचार कर मुझको नियुक्त करो ॥ ६२ ॥

पद्मोवाच—

धर्माधर्मौ मनुष्याणां सर्वदा संस्थितौ हरे ॥ धर्ममेव प्रशंसन्ति सर्वदा ब्रह्मवादिनः ॥६३॥ धर्म एव त्वया कार्यो धर्माधारो भवानिह ॥ बालकः पितृहीनश्च मातृहीनोऽधनः कृशः ॥ ६४ ॥ तस्यापि रक्षणं पुण्यं पुराणपुरुषोत्तम ॥ स राजा बहुवित्ताढ्यो राज्याकङ्क्षी पितुर्मम ॥६५॥ स एव सर्वधर्मज्ञस्तोण्डमान्नृपसत्तमः ॥ सर्वधर्मस्य वै तत्त्वमालोचयितुमर्हति ॥६६॥

पद्मावती बोली—हे हरि ! मनुष्योंके धर्म और अधर्म सदा ही निश्चित रहते हैं। ब्रह्मको जाननेवाले सर्वदा धर्मकी ही बड़ाई करते हैं। तुमसे भी धर्म ही किया जाना चाहिये, क्योंकि आप ही यहांपर धर्मके आधार हैं। वह बालक पितृहीन, मातृहीन, बिना धनका और दुर्बल है। हे पुराण पुरुषोत्तम ! उसीकी रक्षा करना पुण्य है। वह राजा बहुत धनी और मेरे पिताका राज्य चाहनेवाला है, वह राजाओंमें श्रेष्ठ तोण्डमान सब धर्मोंका जाननेवाला है; वही सब धर्मों एवं तत्वको देखनेमें समर्थ है ॥६६॥

पद्मावतीवचः श्रुत्वा शालकस्यैव साह्यकृत् ॥ तोण्डमान्नृपतेर्दिव्ये शङ्खचक्रे ददौ हरिः ॥ ६७ ॥ उच्चैःश्रवस्समं चाश्वं समारुह्य खगध्वजः ॥ जगाम युद्धकुशलः शालकेनाथ सङ्गतः ॥६८॥

शालककी ही सहायता करनेवाली पद्मावतीके वचनको सुनकर श्रीनिवासने तोण्डमान राजाको अपना अलौकिक शंख और चक्र दिया, और उच्चैःश्रवाके समान घोड़ेपर चढ़कर युद्धमें चतुर श्रीनिवास शालकके साथ गये ॥६८॥

अथ श्रीनिवासतोण्डमानवसुदानयुद्धप्रकारः

चैत्रशुक्लत्रयोदश्यां युद्धं परमदारुणम् ॥ कुरूणां पाण्डवानां

रणभूमिमें पड़े श्रीनिवासजीको सान्त्वना [ पृष्ठ ५०७ ]



समाधान कर्तुकामा सम्प्राप्तैषा रणांगणे ।
शोचन्ती तव दुःखेन भ्रातुश्च मरणं मनि ॥

च यथा युद्धं तथाऽभवत् ॥६९॥ रणस्तम्भे महाघोरे हते पशुगणे ततः ॥ शूराणां रणधीराणां सम्मर्दस्तु बभौ तदा ॥७०॥ सिंहनादः शङ्खनादस्तथा दुन्दुभिनिःस्वनः ॥ शस्त्राणामस्त्रमुख्यानां गजानां च महास्वनः ॥ ७१ ॥ हयानां वृषभाणां च रथानां च परस्परम् ॥ पद्मगृध्रव्यूहकारी तयोर्मध्ये जगत्पतिः ॥७२॥ रराज भगवान् साक्षाद्रणमण्डलमभ्यगात् ॥

### श्रीनिवास तोंडमान एवं वसुदानका युद्ध

चैत्रशुक्ल त्रयोदशीको वह अत्यन्त कठिन युद्ध, जैसा कौरवों और पाण्डवोंमें हुआ था, हुआ। उस अत्यन्त घोर युद्धरूप यूपस्तम्भ सेनामें पशुओंके मारे जानेपर शूरों और रणधीरोंका मर्दन हुआ। सिंह गर्जन, शंखध्वनि, दुंदुभी, शस्त्रों, मुख्य अस्त्रों, हाथियों, घोड़ों, वृषभों एवं रथोंका गम्भीर शब्द परस्पर पक्षमें हुआ। पद्म और गृध्र व्यूह बनाकर इनके मध्यमें शोभायमान साक्षात् भगवान रणमण्डलमें आये ॥७२॥

विष्वक्सेनस्तोण्डमानं दशभिः सायकैर्नृप ॥७३॥ ताडयामास राजेन्द्रमर्धचन्द्रैरजिह्मगैः ॥ श्रीनिवासस्तोण्डमानराजपुत्रोऽति बालकः ॥ ७४ ॥ शराणां पञ्चसाहस्रैः श्रीनिवासं च वक्षसि ॥ ताडयामास वेगेन सर्वान्विस्मापयञ्जनान् ॥ तोण्डमानोऽपि राजर्षिर्विष्वक्सेनं च माधवम् ॥ वासुदेवो राजपुत्रं बाणैर्दशभिरेव च ॥७६॥ जघान तरसा बालं तदद्भुतमिवाभवत् ॥ चतुर्भिश्चतुरो वाहान् बाणेनैकेन सारथिम् ॥ छत्रमेकेन राजेन्द्र रथं पञ्चेषुभिस्तथा ॥७७॥ रथादवप्लुत्य महानुभावः स राजपुत्रस्त्रिदलं च चक्रम् ॥ चिक्षेप कृष्णं च हयोत्तमं च वक्षःस्थले वासववज्रकल्पम् ॥७८॥

हे राजन्! वसुदानने सीधे जानेवाले अर्द्धचन्द्राकार दश बाणोंसे राजेन्द्र तोण्डमानको मारा। श्रीनिवास-नामक तोण्डमान राजाके बालक पुत्रने पचास हजार बाण श्रीनिवासके हृदयमें, सब मनुष्योंको आश्चर्यान्वित करते हुए, जोरसे मारा। राजर्षि तोण्डमानने भी वसुदान और माधवको मारा, श्रीनिवासने दश बाणोंसे बालक

राजपुत्रको मारा—वह चकित हो गया। हे राजेन्द्र! चार बाणोंसे चारों घोड़ों, एक बाणसे सारथी एवं छत्र, तथा पाँच बाणोंसे रथको मारा। वह महानुभाव राजपुत्र रथसे उतर कर इन्द्रके वज्रके तुल्य तीन धारवाले चक्रको लेकर कृष्ण और घोड़ेके हृदयमें मारा ॥७८॥

अथ रणरङ्गे मूर्छितं श्रीनिवासं दृष्ट्वा पद्मावत्यनुशोचनम्

तेनातिविद्धो निपपात भूमौ चक्रेण चक्राङ्कितबाहुदण्डः ॥ शेषाचलेशो रणरङ्गगामी मनुष्यभावेन विडम्बयञ्जनान् ॥ ७९ ॥ मूर्छामुपागम्य हयोत्तमाद्धरिर्यथा मनुष्यो रणरङ्गमध्यतः ॥ तथा ह्यसौ देवगणस्य मध्ये सविस्मयोत्फुल्लविलोचनस्य ॥८०॥ तदा प्राकारमारूढा राजपुत्री हरिप्रिया ॥ ८१ ॥ अगस्त्यमब्रवीद्राजंश्चक्रपाणेर्निपातनम् ॥

रणभूमिमें मूर्छित श्रीनिवासको देखकर पद्मावतीका सोचना

शेषाचलके स्वामी, रणभूमिमें जानेवाले तथा चक्रसे चिह्नित बाहुदण्डवाले श्रीनिवास उस चक्रसे बिंधे जाने पर, मनुष्य भावसे लोगोंको मोहित करते हुए, मूर्छित हो उत्तम घोड़ेपरसे, जैसे मनुष्य रणभूमिके मध्यमें गिरता है, विस्मयसे भरे हुए नेत्रवाले देवगणोंके बीचमें वैसेही पृथ्वीपर गिर पड़े। तब प्राकार (छत) पर चढ़ी हुई श्रीनिवासकी प्रिया राजपुत्री चक्रपाणिके गिरजानेकी बात अगस्त्यसे कही ॥८२॥

पद्मावत्युवाच—

अगस्त्य पश्य गोविन्दं पतितं रणमण्डले ॥ ८२ ॥ अवस्था किमियं प्राप्ता रणे कृष्णेन दृश्यताम् ॥ मूर्छां गतो वा किमयं मनो मे भ्रमते मुने ॥८३॥ किमत्र कार्यं योगीन्द्र तन्ममाचक्ष्व कुम्भज ॥ पद्मावतीवचः श्रुत्वा पद्मनाभं च संस्मरन् ॥ ८४ ॥ उवाच वचनं श्लाघ्यं राजन् कालोचितं मुनिः ॥

पद्मावती बोली—हे अगस्त्य! रणमंडलमें गिरे हुए श्रीनिवासको देखिए। रणमें श्रीनिवासको क्या अवस्था हो गई सो देखिए। हे मुनि! क्या ये मूर्छित हो गये? मेरा मन घूम रहा है। हे योगीन्द्र अगस्त्य! यहां पर क्या करना चाहिए, सो मुझसे कहिए। हे राजन्! पद्मावतीके वचनको सुनकर श्रीनिवासको स्मरण करते हुए मुनि समयके उपयुक्त और प्रशंसाके योग्य वचन बोले ॥८५॥

अगस्त्य उवाच—

देशकालावतिक्रम्य यः कर्म कुरुते नरः ॥८५॥ न स गच्छेत्कर्मफलं न सुखं विन्दते नरः ॥ सर्वे स्वकार्यनिपुणाः परकार्ये न कश्चन ॥८६॥ नालोकयाति को वापि स्वपतिं पतितं रणे ॥ क्षत्रियाणां शरीराणि रणरङ्गगतानि च ॥८७॥ विकसत्सङ्गरोत्साहकौतुकान्युत्तरोत्तरम् ॥ जीवन्ति कुसुमायन्ते सजीवानि सतां प्रिये ॥८८॥ निर्जीवानि तु तान्येव वीक्षते नैव कश्चन ॥ आजीवमेव शूरेभ्यः कार्यं ग्रहेत राजभिः ॥ ८९ ॥ तस्मात्त्वद्दुःखभदर्शी न कोऽप्यत्रानुशोचति ॥ तस्मात्त्वमस्य भद्रेच्छुर्निवर्तय पतिं रणात् ॥९०॥ स्त्रीणां तु परमो धर्मः पतिभक्तिः पतिप्रिये ॥ भद्रं ते भ्रातुरेवं स्यात्कनिष्ठपितुरेव वा ॥९१॥ एवं मत्वा महाभागे कुरु त्वं स्वपतेर्हितम् ॥ मनसो मम कल्याणि सन्धियत्नः प्रशस्यते ॥९२॥ तावुभौ राज्यकर्त्तारौ पितापुत्रौ न संशयः ॥ इत्युक्ता मुनिना तेन राजपुत्री समुत्थिता ॥९३॥ प्राकारान् मुनिना सार्धं सङ्ग्रामधरणीं ययौ ॥ आन्दोलिकां महाराज हेमदण्डविभूषिताम् ॥९४॥ आरुह्य राजतनया श्रीनिवासपरायणा ॥ गरुडध्वजमालोक्य पतितं पृथिवीतले ॥९५॥ रणाग्रे स्वपतिं कृष्णं श्रीनिवासं सुरेश्वरम् ॥ सखड्गं वर्मसहितं समुत्थाप्य रणाङ्गणे ॥९६॥ सशीतलोदकामोदैर्व्यजनैः साध्वमार्जयत् ॥ पद्मावत्यब्रवीच्चापि शोचन्ती तं पतिव्रता ॥९७॥

अगस्त्य बोले—जो मनुष्य देश और कालको लाँघकर काम करता है वह न तो कामके फलको पाता है और न सुख ही पाता है। अपने-अपने कार्यमें सब चतुर होते हैं, दूसरेके कार्यमें कोई नहीं। तुम्हारे पतिको रणमें गिरे कौन नहीं देखता है ? रणमें लगे हुए क्षत्रियोंके सजीव शरीर युद्धमें उत्साह और कौतुकको उत्तरोत्तर बढ़ाने और जीते हुए फूलके समान होते हैं। हे सज्जनोंकी प्रिया ! वाद निर्जीव होनेपर उसको कोई भी नहीं देखता।

शूरोंसे राजागण केवल जीवन पर्यन्त कार्य लेते हैं; इसलिये तुम्हारे पतिकी दशाको यहांपर कोई नहीं सोचता है; अतएव इनकी कुशल चाहनेवाली तुम अपने पतिको रणसे लौटा लो! हे पतिकी प्यारी! स्त्रियोंका परमधर्म पतिभक्ति ही है; तुम्हारा भला हो, वह तुम्हारा भाई है और वे तुम्हारे कनिष्ठ पिता हैं, ऐसा मानकर, हे महाभाग्यवाली! अपने सम्बन्धियोंकी भलाई करो। हे कल्याणी मेरा मन तो सन्धिके उपायकी प्रशंसा करता है। इसमें सन्देह नहीं, वे दोनों राज्य करनेवाले पिता और पुत्र हैं। मुनिसे इतना कहे जानेपर राजपुत्री उठी। हे महाराज! स्वर्णके दण्डसे शोभित आंदोलिका (डोली) पर चढ़कर, मुनिके साथ, श्रीनिवासमें लगी हुई वह राजपुत्री प्राकारसे रणभूमिको गयी। रणके आगे पृथ्वीपर पड़े हुए देवताओंके स्वामी, गरुड़के ध्वजावाले अपने पति, श्रीनिवास कृष्णको देखकर खड्ग और कवचके सहित उनको रणभूमिसे उठाकर ठंढे जलके साथ सुगन्ध एवं व्यजनसे उनका मार्जन किया और वह पतिव्रता पद्मावती सोचती हुई बोली ॥९७॥

### अथ कुपितं श्रीनिवासं प्रत्यगस्त्यकृतपद्मावत्याशयज्ञापनम्

पद्मावत्युवाच—

उत्तिष्ठ रणभूम्यास्त्वं त्यक्त्वा मूर्छां खगध्वज ॥९८॥ इति विज्ञापितो देव्या पद्मावत्या तदा नृप ॥ मुहूर्तमात्रं गोविन्दो नरलोकं विडम्बयन् ॥ ॥९९॥ मूर्छां गत इव स्थित्वा प्रबुद्ध इव चोत्थितः ॥ उत्थाय रणभूम्यां स पश्यन्दश दिशो हरिः ॥१००॥ ददर्श स्वप्रियां राजन् स्थितां पद्मावतीं विभुः ॥ भ्रुकुटीयुतनेत्रं तु गर्हयन्वाक्यमब्रवीत् ॥ ॥१०१॥

### क्रोधित श्रीनिवाससे अगस्त्यका पद्मावतीके आशयका कहना

पद्मावती बोली—हे गरुड़ध्वज! मूर्च्छाको छोड़कर आप रणभूमिसे उठिये। इस प्रकार पद्मावती देवीसे कहे जानेपर मनुष्य लोकको मोहित करते हुए श्रीनिवास मूर्च्छित होनेके समान एक मुहूर्त तक ठहरकर जागे हुएके जैसा उठे। हे राजन्! उठकर दशों दिशाओंमें देखते हुए श्रीनिवास प्रभुने बैठी हुई पद्मावतीको देखा और उसको झिड़कते हुए भौंहे टेढीकर वचन बोले ॥ १०१ ॥

श्रीनिवास उवाच—

अस्मिन् रणाजिरे घोरे वनितानां प्रयोजनम् ॥ किमस्ति मुनिशार्दूल द्रुतमेपाद्य गच्छतु ॥२॥ इत्युक्तो भगवता पद्मावत्या सहागतः ॥ अगस्त्यः श्रीनिवासं तं प्रत्यभाषत तापसः ॥३॥

तोण्डमान तथा वसुदानका सन्धि कराना [पृष्ठ ५६०]



इति विज्ञापितस्ताभ्यामुभाभ्यां वेङ्कटेश्वरः ।
सन्धिं चकार राजेन्द्र श्रीनिवासस्तयोस्तदा ॥

श्रीनिवास बोले—हे मुनियोंमें श्रेष्ठ! इस घोर रणभूमिमें स्त्रियोंकी क्या आवश्यकता है? यह शीघ्र ही चली जाय। भगवान्‌से इस प्रकार कहे जानेपर पद्मावतीके साथ आये हुए वह तपस्वी अगस्त्य उन श्रीनिवाससे बोले ॥ १०३ ॥

*अगस्त्य उवाच—*

सन्धिपत्रं प्रकर्त्तव्यं श्रीनिवास सतां गते ॥ उत्तिष्ठ शालकं बालं समानय नृपोत्तमम् ॥ ४ ॥ तोण्डमानं महाराजं तत्सुतं तं महाबलम् ॥ श्रीनिवासाभिधानं च तत्र रोषाकरं हरे ॥ ५ ॥ समाधानं कर्तुकामा सम्प्राप्तैषा रणाङ्गणे ॥ शोचन्ती तव दुःखेन भ्रातुश्च मरणं प्रति ॥६॥

अगस्त्य बोले—हे सज्जनोंकी गति श्रीनिवास! यहां पर संधि करनी चाहिये, उठिये और बालक शालक एवं श्रेष्ठ महाराज तोण्डमान और श्रीनिवास नामक, आपके क्रोधका पात्र, उसके महाबली पुत्रको ले आइये। आपके क्रोधके समूहको समाधान करनेकी इच्छावाली यह आपके दुःख एवं भाईके भावी मरणका सोच करती हुई आयी है ॥ १०६ ॥

अगस्त्यवचनं श्रुत्वा किञ्चित्क्रोधसमन्वितः ॥ भर्त्सयन् पद्मनयनां संग्रामस्थलमागताम् ॥ ७ ॥ अयुक्तं योषितां धीमन् संग्रामागमनं मुने ॥ अथाहं तोण्डमानस्य शिरः कायाद्धराम्यहम् ॥ ८ ॥ तत्सुतं तं महाभागं श्रीनिवासं महाबलम् ॥ हत्वा राज्यं प्रदास्यामि विष्वक्सेनाय धीमते ॥ ९॥ वासुदेववचः श्रुत्वा साष्टाङ्गं प्रणिपत्य सा ॥ कृताञ्जलिपुटा भूत्वा देवं वाक्यमभाषत ॥११०॥

अगस्त्यके वचनको सुन, कुछ क्रोधसे युक्त हो रणभूमिमें आयी हुई कमलनयनीको झिड़कते हुए श्रीनिवास बोले—हे धीमान् मुनि! स्त्रियोंका संग्राममें आना ठीक नहीं है। अब मैं तोण्डमानके शिरको उसके शरीरसे अलग करूंगा और उसके महा बलवान् तथा महाभाग्यवान् पुत्र श्रीनिवासको मारकर बुद्धिमान् वसुदानको राज्य दूंगा। श्रीनिवासके इस वचनको सुनकर, साष्टाङ्ग प्रणाम कर, हाथोंकी अञ्जलि बनाकर वह श्रीनिवाससे बोली ॥ ११० ॥

अथ पद्मावतीप्रार्थनया श्रीनिवासकृततोण्डमानवसुदानसन्धिकमः

श्रीपद्मावत्युवाच—

स्वामिन्नाथारविन्दाक्ष श्रीनिवास कृपानिधे ॥ दयां कुरु दयासिन्धो भक्तानामभयं कुरु ॥११॥ किमनेन जगन्नाथ लोकनाशनकारिणा ॥ उभौ राज्यस्य कर्तारौ भवतां राजसत्तमौ ॥ १२ ॥ विभज्य राज्यं सर्वं च कोशं देहि रमापते ॥ स्वस्त्यस्तु सर्वलोकेभ्यः पित्रे चापि कनीयसे ॥ १३ ॥ प्रसादात्तव गोविन्द निवर्तस्व रणाङ्गणात् ॥ इति प्रियावचः श्रुत्वा श्रीनिवास उवाच ताम् ॥१४॥

पद्मावतीकी प्रार्थनासे श्रीनिवासके द्वारा तोण्डमान और वसुदानके मध्यमें सन्धि

पद्मावती बोली—हे कमलनयन, स्वामी, कृपानिधि, दयासिन्धु, श्रीनिवास ! दया कीजिये। भक्तोंको अभय कीजिये। हे संसारके नाश करनेवाले जगन्नाथ ! इस क्रोधसे क्या ? ये दोनों श्रेष्ठ राजा राज्यकर्त्ता ही हैं; राज्य, कोश इत्यादि सभी बाँट दीजिये। हे लक्ष्मीपति ! आपकी कृपासे सब लोगोंका एवं पिताका भी कुशल हो; रणभूमिसे लौटिये। प्रियाके इस वचनको सुनकर श्रीनिवास उससे बोले ॥११४॥

श्रीनिवास उवाच—

क्षत्रधर्मं न जानासि त्वं गच्छाद्य रणाङ्गणात् ॥ अथाहं तोण्डमानस्य सपुत्रस्य रणे शिरः ॥१५॥ पातयिष्ये महासंख्ये पश्यतां सर्वदेहिनाम्॥ शालकार्थं म्रिये चापि नात्र कार्या विचारणा ॥१६॥ इत्युक्ता सा कम्पमाना मुनिमाह कृपानिधिम् ॥

श्रीनिवास बोले—तुम क्षत्रियोंके धर्मको नहीं जानती हो। अब मैं पुत्रके साथ तोण्डमानके शिरको इस महासंग्राममें सबके देखते ही-देखते गिरा दूंगा। शालकके लिये मैं मर भी जाऊंगा, इसमें विचार नहीं करना चाहिये। ऐसा कहे जानेपर काँपती हुई वह दयानिधि मुनिसे बोली ॥ ११७ ॥

पद्मावत्युवाच—

निवर्तय रणात्त्वं वा वेङ्कटेशं मुनीश्वर ॥१७॥ इति विज्ञापि-

तो देव्या लोपामुद्रापतिस्तदा ॥ मुनिः प्रोवाच राजेन्द्र श्रीनि-
वासं रणप्रियम् ॥१८॥ सान्त्वयित्वा श्रीनिवासं विष्वक्सेनं मही-
पतिम् ॥ विभक्तं कुरु गोविन्द राज्यं कोशं तयोरिति ॥१९॥ अ-
गस्त्यवचनं श्रुत्वा तोण्डमानं नृपात्मजम् ॥ समाहूयाह वचनं
सन्धिकारो जनार्दनः ॥१२०॥ किं ते मनोगतं राजन्नित्युक्तो वाक्य-
मब्रवीत् ॥

पद्मावती बोली—हे मुनीश्वर ! श्रीवेङ्कटेश्वरको रणसे आप लौटाइये । हे राजेन्द्र ! पद्मावतीसे इस प्रकार कहे जानेपर लोपमुद्राके पति मुनि अगस्त्यजीने युद्धप्रिय श्रीनिवाससे कहा कि हे गोविन्द ! श्रीनिवास ( तोण्डमानका पुत्र ), वसुदान एवं तोण्डमानको शान्त करके उनका राज्य और कोश बांट दीजिये । अगस्त्यके इस वचनको सुनकर श्रीनिवासने राजाके पुत्र और तोण्डमानको बुलाकर अधिकारपूर्वक कहा कि हे राजन् ! तुम्हारे मनकी इच्छा क्या है ? ऐसा कहे जानेपर वह बोला ॥ १२१ ॥

*तोण्डमान उवाच—*

त्वमेव गतिरस्माकं त्वय्येव रमते मनः ॥२१॥ तत् श्रुत्वा तं
समाहूय शालकं वाक्यमब्रवीत् ॥

तोण्डमान बोला—तुम्हीं हमारी गति हो; तुम्हींमें मेरा मन लगता है । यह सुनकर शालकको बुलाकर उससे बोले ॥ १२२ ॥

*श्रीभगवानुवाच—*

भगिनी तव कल्याणी सन्धिं शालक वाञ्छति ॥ २२ ॥ हृद्गतं
तव यद् ब्रूहि सत्यं तत्पृथिवीपते ॥वासुदेववचः श्रुत्वा विष्वक्से-
नोऽभ्यभाषत ॥२३॥

श्रीनिवास बोले—हे शालक ! हे पृथ्वीपति ! तुम्हारी कल्याणी भगिनी संधि कराना चाहती है, इसलिये तुम्हारे हृदयमें जो हो वह सत्य कहो । वासुदेवके इस वचनको सुनकर वसुदान बोला ॥ १२३ ॥

*राजपुत्र उवाच—*

शासने तव गोविन्द स्थितोऽहं सर्वदा हरे ॥ यथैवेच्छा तव

हरे तथैव कुरु केशव ॥२४॥ इति विज्ञापितस्ताभ्यामुभाभ्यां वेङ्क-
टेश्वरः ॥ सन्धिं चकार राजेन्द्र श्रीनिवासस्तयोस्तदा ॥२५॥

राजपुत्र बोला—हे हरि ! हे गोविन्द ! आपकी आज्ञामें ही मैं सदा रहता हूं; हे हरि ! आपकी जैसी इच्छा हो, वैसा ही कीजिये। हे राजेन्द्र ! इस प्रकार उन दोनोंसे कहे जानेपर श्रीनिवास वेङ्कटेश्वरने उन दोनोंमें संधि करवायी ॥ १२५ ॥

तदा राज्यं विभज्याथ हस्त्यश्वरथसंयुतम् ॥ धनं कोशं तथा
ग्रामान् दुर्गाणि नगराणि च ॥२६॥ विविच्य सर्वराज्यं च वस्त्र-
मास्तीर्य देवराट् ॥ ययाचे षोडशं भागं राजानं राजनन्द-
म् ॥२७॥ भवद्भिस्तु रणं कृत्वा वृथा मरणमिच्छतः ॥ दातव्यो
राज्यभागस्तु मम वा दुहितुस्तु वा ॥२८॥

तब हाथी, घोड़े और रथके साथ राज्य एवं कोश और ग्राम, नगर इत्यादिको बाँटकर, सब राज्योंका विचार कर, वस्त्र फैलाके श्रीनिवासने राजा और राजपुत्रसे सोलहवाँ भाग मांगा और कहा कि आप रण करके व्यर्थ ही मरना चाहनेवालोंको मुझे वा दुहिताको भी राज्यका भाग देना चाहिये ॥१२८॥

इत्येवं श्रीनिवासेन पृष्टौ राजनृपात्मजौ ॥ ददतुस्तौ महाराज
ग्रामान् द्वात्रिंशतं हरेः ॥२९॥ तोण्डमानं प्रतिष्ठाप्य तोण्डराज्ये
तदा हरिः ॥ विष्वक्सेनं प्रतिष्ठाप्य नारायणपुरे नृप ॥ १३० ॥
तद्गृहे भोजनं कृत्वा शालकस्य गृहे तथा ॥ भुक्त्वा स्वयं भो-
जयित्वा पद्मावत्यनुगो ययौ ॥ ३१ ॥ अगस्त्यनिलयं राजन्
श्रीनिवासः सतां गतिः ॥ मुमुदे रमया सार्धं भगवाञ्छुभदर्श-
नः ॥३२॥ य इदं पुण्यमाख्यानं शृणुयाच्छ्रावयेच्च यः ॥ श्रीनि-
वासप्रसादात्स सर्वमङ्गलवान् भवेत् ॥३३॥

इति श्रीभविष्योत्तरपुराणे श्रीवेङ्कटाचलमाहात्म्ये तोण्डमानवसुदानयुद्धसन्धि-
प्रशंसनं नाम द्वादशोऽध्यायः ॥ १२ ॥

## श्रीनिवासजीका तोण्डमानसे अपना निवासस्थान बतलाना ( पृष्ठ २१५ )



निवेशं दर्शयामास वाराहानुमतेन च । स्वामिपुष्करिणीतीरे दक्षिणे पश्चिमाद्भुवः ॥
अत्रैव कार्यं राजेन्द्र चैत्यं पूर्वमुखं शुभम् । गोपुरद्वयसंयुक्तं प्राकारत्रयमन्वयम् ॥

श्रीनिवाससे इस प्रकार कहे जानेपर वे दोनों राजा एवं राजाके लड़कोंने, हे महाराज! उनको ३२ ग्राम दिये। हे राजन्! तब तोण्डमानको तोण्ड एवं वसुदानको नारायणपुरके राज्यपर रख, श्रीनिवास उसके और शालकके घरमें भोजन करके और स्वयं उन दोनोंको भोजन करवा पद्मावतीके पीछे पीछे अगस्त्यजीके घर गये और हे राजन्! सन्तोंकी गति, शुभदर्शनवाले श्रीनिवास लक्ष्मीरूप पद्मावतीके साथ विहार करने लगे। इस पवित्र आख्यानको जो सुनता और सुनाता है वह श्रीनिवासकी कृपासे सब मङ्गलसे युक्त होता है ॥१३३॥

इति द्वादशोऽध्यायः ॥१२॥

# अथ त्रयोदशोऽध्यायः ॥१३॥

तोण्डमान नृपराजको, दिव्य स्वरूपज्ञान।
नम्र स्तुति भगवानकी, प्रभु मन्दिर निर्मान ॥१॥
पूर्वजन्म वृत्तान्त कहि, प्रभुका अन्तर्धान।
तेरहवें अध्यायमें, वर्णित विविध विधान ॥२॥

अथ तोण्डमान्कृतदिव्यस्वरूपज्ञानपूर्वक श्रीनिवासस्तुतिः

*जनक उवाच—*

**ततः किमकरोत्कृष्णः शतानन्द नृपश्च वा ॥ तन्ममाचक्ष्व योगीन्द्र राज्ञस्तच्चरितं महत् ॥१॥**

तोण्डमानका श्रीनिवासकी स्तुति करना

जनक बोले—हे शतानन्द! तब श्रीनिवास वा राजाने क्या किया, सो हे योगीन्द्र! उस राजाके बड़े चरितको कहिये ॥१॥

*शतानन्द उवाच—*

**कदाचिद्वेङ्कटेशस्य दर्शनार्थं नराधिपः ॥ एक एवाधिगम्यार्थे**

ननाम चरणौ हरेः ॥२॥ तं दृष्ट्वा राजशार्दूलमालिङ्ग्याह वचो हरिः ॥

शतानन्द बोले—किसी समय श्रीवेङ्कटेशके दर्शनके लिये राजा अकेला ही आकर उनके चरणोंमें प्रणाम किया। श्रीनिवास उस श्रेष्ठ राजाको देख और आलिङ्गन करके वचन बोले ॥३॥

*श्रीनिवास उवाच—*

किमागमनकार्यं ते तन्ममाचक्ष्व भूपते ॥३॥ स देववचनं श्रुत्वा वासुदेवमभाषत ॥

श्रीनिवास बोले—हे राजन्! आपके आनेका क्या कारण है सो मुझसे कहिये। वह श्रीनिवासके वाक्यको सुनकर उनसे बोले ॥४॥

*राजोवाच—*

दर्शनात्तव गोविन्द नाधिकं वर्तते हरे ॥४॥ त्वां वदन्ति सुराध्यक्षं वेदवेद्यं पुरातनम् ॥ मुनयो मनुजश्रेष्ठास्तच्छ्रुत्वाहमिहागतः ॥ ५ ॥

राजा बोले—हे गोविन्द! हे हरि! आपके दर्शनसे अधिक और कुछ नहीं है। मुनिजन और श्रेष्ठ मनुष्यगण आपको देवताओंका स्वामी, वेदोंसे ही ज्ञेय और पुरातन कहते हैं, सो सुनकर मैं यहां आया हूं ॥५॥

स्वामिन्नच्युत गोविन्द पुराणपुरुषोत्तम ॥ अप्राकृतशरीरोऽसि लीलामानुषविग्रहः ॥६॥ त्वामेव सृष्टिकरणे पालने हरणे हरे ॥ कारणं प्रकृतेर्योनिं वदन्ति च मनीषिणः ॥ ७ ॥ जगदेकार्णवं कृत्वा भवानेकत्वमाप्य च ॥ जीवकोटिघनं देव जठरे परिपूरयन् ॥८॥ क्रीडते रमया सार्धं रमणीयाङ्गविश्रमः ॥ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥ ९॥ त्वन्मुखाद्विप्रनिचयो बाहुभ्यां क्षत्रमण्डलम् ॥ ऊरुभ्यामभवन्वैश्याः पद्भ्यां शूद्राः प्रकीर्ति-

तः ॥१०॥ प्रभुस्त्वं सर्वलोकानां देवानामपि योगिनाम् ॥ अन्तः सृष्टिकरस्त्वं हि बहिः सृष्टिकरो भवान् ॥११॥

हे स्वामिन्, अच्युत, गोविन्द, पुराण पुरुषोत्तम! आप लीलाके लिये मनुष्य शरीर धारण करनेवाले एवं प्रकृति द्वारा नहीं बनाये गये शरीरवाले हैं। विद्वानगण आपहीको सृष्टि, स्थिति और नाशका कारण एवं प्रकृतिका उत्पत्ति स्थान बतलाते हैं। हे देव! संसारको जलमग्न कर, अकेला हो, करोड़ों जीवरूपी धनसे अपने उदरको भरते हुए, हजारों शिर, हजारों नेत्र एवं हजारों पैरवाले पुरुषरूप तथा सुन्दर शरीरवाले होकर लक्ष्मीके साथ रमण करते हो। आपके मुखसे ब्राह्मण, बाहुसे क्षत्रिय, जंघाओंसे वैश्य एवं पैरसे शूद्र पैदा हुए हैं ऐसा कहा जाता है। आप ही सब लोकों, योगियों और देवताओंके भी स्वामी हैं। अंतः और बहिः सृष्टि करनेवाले भी आप ही हैं ॥११॥

नमः श्रीवेङ्कटेशाय नमो ब्रह्मोदराय च ॥ नमो नाथाय कान्ताय रमायाः पुण्यमूर्तये ॥१२॥ नमः शान्ताय कृष्णाय नमस्तेऽद्भुतकर्मणे ॥ अप्राकृतशरीराय श्रीनिवासाय ते नमः ॥१३॥ अनन्तमूर्तये नित्यमनन्तशिरसे नमः॥ अनन्तबाहवे श्रीमन्ननन्ताय नमो नमः ॥१४॥ सरीसृपगिरीशाय परब्रह्मन्नमो नमः ॥

श्रीवेङ्कटेशको प्रणाम है। ब्रह्माको उदरमें रखनेवालेको प्रणाम है। लक्ष्मीके स्वामी और पुण्यमूर्तिको प्रणाम है। शान्त श्रीकृष्णको प्रणाम है। अद्भुत कर्मवालेको प्रणाम है। प्रकृतिके नहीं बनाये हुए शरीरवाले आप श्रीनिवासको प्रणाम है। अनन्तमूर्तिको सदा प्रणाम है। अनन्त शिरवालेको प्रणाम है। अनन्त बाहुवाले श्रीमान् अनन्तको प्रणाम है। शेषाचलके स्वामी परब्रह्मको प्रणाम है ॥१५॥

इति स्तुत्वा श्रीनिवासं कमनीयकलेवरम् ॥ १५ ॥ विरराम महाराज राजेन्द्रो रणकोविदः ॥ स्तोत्रेणानेन सुप्रीतस्तोण्डमानकृतेन च ॥१६॥ सन्तुष्टः प्राह गोविन्दः श्रीमन्तं राजसत्तमम् ॥

इस प्रकार सुन्दर शरीरवाले श्रीनिवासकी स्तुति करके, हे महाराज! रणमें चतुर वह राजेन्द्र ठहर गया। तोण्डमानके किये स्तोत्रके द्वारा प्रसन्न हुए श्रीनिवास सन्तुष्ट होकर श्रीमान् श्रेष्ठ राजासे बोले ॥१७॥

*श्रीनिवास उवाच—*

राजन्नलमलं स्तोत्रं कृतं परमपावनम् ॥१७॥ अनेन स्तवराजेन

मामर्चन्ति च ये जनाः ॥ तेषां तु मम सालोक्यं भविष्यति न संशयः ॥१८॥ आकाशराजो धर्मात्मा प्राणो मुक्तिपदं नृप ॥ तेन राज्ञा प्रसिद्धोऽहं भूलोके भूमिपालक ॥१९॥ कृत्वा विवाहविभवं दृष्ट्वा मामागतं गृहम् ॥ सन्तोषमतुलं लेभे राजा परमधार्मिकः ॥२०॥ दैवमेव परं मन्ये मम भाग्यफलोदयम् ॥ कृतं कर्म सुखं दुःखमनुभोक्तव्यमञ्जसा ॥२१॥ का गतिः पुरतो राजन्विना राज्ञा महात्मना ॥ श्रीधरस्य वचः श्रुत्वा तोण्डमानाह माधवम् ॥२२॥

श्रीनिवास बोले—हे राजन्! बस, बस, आपने बहुत पवित्र स्तुति की। इस स्तवराजसे जो मनुष्य मेरी पूजा करते हैं—उनको मेरी सलोकता प्राप्त होती है, इसमें सन्देह नहीं। हे पृथ्वीका पालन करनेवाले राजा! धर्मात्मा आकाशराज मेरे प्राणस्वरूप तथा मुक्तिके स्थान भी थे; उन्हीं राजासे मैं लोकमें प्रसिद्ध हुआ हूँ। परम धर्मात्मा राजाने विवाहका उत्सव कर, तथा मुझे आया हुआ देखकर अतुल सन्तोष लाभ किया। उन्हें भाग्यफलको उदय करनेवाला मैं दूसरा ही दैव समझता हूँ। किये हुए कर्मके अनुसार सुख और दुःखका भोग अवश्य ही करना होगा। हे राजन्! उस महात्मा राजाके बिना आगे क्या गति होगी? श्रीनिवासके इस वचनको सुनकर तोण्डमान उनसे बोले ॥२२॥

*तोण्डमान उवाच—*

प्रारब्धकर्मणः पुंसः कथं सौख्यं भवेद्धरे ॥ किमर्थं रोदिषि भृशं हृतं बन्धुं स्मरन् हरे ॥२३॥ मा शोकं कुरु गोविन्द राजानं स्वर्गगं प्रति ॥ पश्य मां पुण्डरीकाक्ष विष्वक्सेनं च बालकम् ॥२४॥ सान्त्वितस्तेन राज्ञेत्थं श्रीनिवासः सतां गतिः ॥ प्राह वाणीं जगन्नाथस्तोण्डमानं प्रजापतिम् ॥२५॥

तोण्डमान बोले—हे हरि! प्रारब्ध कर्मवाले पुरुषको किस प्रकार सुख होगा? हे हरि! मरे हुए बन्धुको स्मरण कर व्यर्थ क्यों रोते हो? हे गोविन्द! स्वर्गमें गये हुए राजाके प्रति सोच मत कीजिये। हे कमलनयन! मुझे और बालक वसुदानको देखिये। उस राजासे इस प्रकार सान्त्वना किये जानेपर सन्तोंकी गति श्रीनिवास जगन्नाथ प्रजाओंके स्वामी तोण्डमानसे बोले ॥२५॥

### अथ तोण्डमानं प्रति दिव्यालयकरणाय श्रीनिवासचोदना

*श्रीनिवास उवाच—*

कुटुम्बं स्थापितं तेन राज्ञा भ्रात्रा गरीयसा॥ नास्ति मे भवनं तात वासार्थं दुहितुस्तव ॥२६॥ वियन्नृपस्य जामाता वर्तते परमन्दिरे ॥ एषा कीर्तिर्ममानन्तदुःखदा दुःखनाशन ॥२७॥ पारतन्त्र्यं महत्कष्टं मनुष्याणां तु का कथा ॥ तस्मान्मे भवनं कार्यं त्वया राजकुलोद्भव ॥२८॥ त्वां विना राजशार्दूल कीर्तिं स्थापयितुं स्थिराम् ॥ कः समर्थो धरापृष्ठे नाके नागालयेऽपि वा ॥२९॥ वदत्येवं वासुदेवे तथास्त्वित्यवदन्नृपः ॥

### तोण्डमानद्वारा दिव्य विमान बनवानेके लिये श्रीनिवासकी प्रेरणा

श्रीनिवास बोले—तुम्हारे ज्येष्ठ भाई राजासे मेरा कुटुम्ब स्थापन किया गया है; हे तात ! मेरे और तुम्हारे दुहिताके रहनेके लिये घर नहीं है ! आकाशराजके दामाद ( जामाता ) दूसरेके घरमें हैं। हे दुःखके नाश करनेवाले ! ऐसी कीर्ति मुझको अनन्त दुःख देनेवाली है। परतन्त्रता अत्यन्त दुःखद है, उसमें भी मनुष्योंकी तो बात ही क्या ? हे राजकुलमें उत्पन्न ! इसलिये तुमको मेरा घर बनवाना चाहिये । हे श्रेष्ठ राजा ! आपके बिना स्थिर कीर्तिका स्थापन करनेवाला पृथ्वीपर, स्वर्ग या नागलोकमें भी कौन समर्थ है ? श्रीनिवासके ऐसा कहते समय राजाने कहा—"ऐसा ही होगा" ॥३०॥

सुमुहूर्ते सुलग्ने च सुनक्षत्रे शुभे तिथौ ॥३०॥ भोगिराजगिरिं राजन्नारुरोह खगध्वजः ॥ सहितः कमलादेव्या राजयुक्तः स देवराट् ॥ ३१ ॥ निवेशं दर्शयामास वाराहानुमतेन च ॥ स्वामिपुष्करिणीतीरे दक्षिणे पक्षिवाहनः ॥ ३२ ॥ अत्रैव कार्यं राजेन्द्र चैत्यं पूर्वमुखं शुभम् ॥ गोपुरद्वयसंयुक्तं प्राकारत्रयमव्ययम् ॥३३॥ सप्तद्वारवरोपेतं देहलीतोरणान्वितम् ॥ ध्वजस्तम्भवरोपेतं सर्वलक्षणसंयुतम् ॥३४॥ आस्थानमण्डपं दिव्यमद्भुतं यागमण्डपम् ॥ गोशालां धान्यभवनं ततो मालाकरं गृहम् ॥३५॥ वस्त्रगेहं तैल-

शालां घृतार्थं भवनं पृथक् ॥ भक्ष्यशालां विशालां च भूषणानां गृहं तथा ॥ ३६ ॥ कर्पूरगन्धमार्जालतैलकस्तूरिकागृहम् ॥ कल्पयाशु च राजेन्द्र गजाश्वभवनं पृथक् ॥३७॥ ताम्रपत्रैः सुसम्बद्धं स्वर्णालङ्कारमण्डितम् ॥ श्रीतीर्थमन्नशालाग्रे भूतीर्थं भूमिपालक ॥३८॥ त्वया विनिर्मितं पूर्वं तोण्डमान महीपते ॥ तदद्य कुरु शोभाढ्यं शिलाबन्धनपूर्वकम् ॥ ३९ ॥ इत्युक्तो वासुदेवेन राजा वचनमब्रवीत् ॥

हे राजन्! कमलादेवी और राजाके साथ देवताओंके राजा गरुड़ध्वज शुभ मुहूर्त, शुभ लग्न, शुभ नक्षत्र एवं शुभ तिथिमें शेषाचलपर चढ़ गये और वाराहकी अनुमतिसे स्वामिपुष्करिणीके दक्षिण तीरपर उन्होंने अपना घर दिखलाया और कहा कि हे राजेन्द्र! यहींपर शुभ पूर्व मुखका, दो गोपुर (फाटक) वाला, बड़े बड़े तीन प्राकार (छत) वाला, सात श्रेष्ठ द्वारवाला, देहली और तोरणसे युक्त, श्रेष्ठ ध्वजा-स्तम्भसे शोभित और सब लक्षणोंसे युक्त चैत्य (आलय) बनवाना चाहिये, और अलौकिक सभामंडप, अद्भुत यज्ञशाला, गोशाला, भाण्डारघर, उसके बाद माला बनानेवालेका घर, कपड़ोंका घर, तेलशाला, घीके लिये पृथक् घर, भोजनका बड़ा घर, भूषणका घर, कपूर, गन्ध मार्जारतैल और कस्तुरीका घर और पृथक्-पृथक् हाथियों और घोड़ोंका घर, हे राजेन्द्र! शीघ्र बनाइये। हे पृथ्वीके पालन करनेवाले! ताम्रपत्रसे अच्छी तरह बन्धा हुआ और स्वर्णके अलङ्कारसे शोभित श्रीतीर्थ एवं अन्नशालाके आगे भूतीर्थ, पूर्वमें आपसे ही बना था। हे राजा तोण्डमान! उसका आज धूमधामसे शिलान्यास कीजिये। श्रीनिवाससे इस प्रकार कहे जानेपर राजा वचन बोले ॥४०॥

### अथ भगवत्कथिततोण्डमाननृपपूर्वोदन्तः

*तोण्डमान उवाच—*

कथं पूर्वं मया कूपः कृतस्ते केन जन्मना ॥ ४० ॥ कोऽहं पूर्वं च का जातिस्तन्ममाचक्ष्व विस्तरात् ॥ राज्ञेत्युक्तोऽब्रवीद्राजन् श्रीनिवासः सतां गतिः ॥४१॥

### श्रीनिवासका कहा हुआ तोंडमानका पूर्वजन्म वृत्तान्त

तोण्डमान बोले—आपका कूप मुझसे किस जन्ममें, कैसे बनाया गया, मैं कौन था, मेरी जाति क्या थी,

सो मुझसे विस्तारपूर्वक कहिये। हे राजन्! राजासे इस प्रकार कहे जानेपर सन्तोंकी गति श्रीनिवास बोले ॥४१॥

*श्रीनिवास उवाच—*

पुरा वैखानसो नाम ऋषिरत्यन्तशुद्धधीः ॥ भाविकृष्णावतारस्य कथां श्रुत्वा पुरातनीम् ॥ ४२ ॥ कालानां कर्मणां चैव शरीराणां च न स्थितिः ॥ जनानामिति निश्चित्य तपस्तप्तुं प्रचक्रमे ॥४३॥ द्राविडे चोलदेशे तु प्रकृष्टे कुशविस्तृते ॥ कृष्णरूपं प्रपश्यामि निराहारो जितेन्द्रियः ॥४४॥ तपसा दुष्करेणेति सुदृढं कृतनिश्चयः ॥ तपसा तप्यमानस्य तस्य वै भक्तवत्सलः ॥ ४५ ॥ प्रादुर्बभूव भगवान् पुरा गोपालवेषभाक् ॥ प्रादुर्भूतं हरिं दृष्ट्वा तुष्टाव स मुनिस्तदा ॥४६॥

श्रीनिवास बोले—पहले वैखानस नामके अत्यन्त शुद्ध विचारवाले ऋषि कृष्णावतारकी पुरानी कथाको सुनकर,—मनुष्योंके शरीर, काल एवं कर्मकी स्थिरता नहीं है—ऐसा विचारकर, उत्तम कुश फैले हुए द्राविड़के चोल देशमें निराहार और जितेन्द्रिय होकर,—कठिन तपस्यासे कृष्णके रूपको देखूंगा—ऐसा दृढ़ निश्चय कर तपस्या करने लगे। उस तपस्या करनेवालेके आगे भक्तवत्सल भगवान् गोपालका रूप धारण कर सामने प्रगट हुए। तब साक्षात् हरिको देखकर वह मुनि उनकी स्तुति करने लगे ॥४६॥

*श्रीवैखानस उवाच—*

पूजां करोमि पुरुषोत्तम पुण्यमूर्ते गोपाल देव करुणाकर देवदेव ॥ इत्थं समीरित उवाच मुनीश्वरं तं तस्योचितं वचनमेष महानुभावः ॥४७॥

वैखानस बोले –हे पुरुषोत्तम! हे देव-देव! हे करुणाकर देव! हे गोपाल! हे पुण्यमूर्ति! मैं पूजा करता हूं। इस प्रकार कहे जानेपर महानुभावने अपने उचित वचनको उन मुनीश्वरसे कहा ॥४७॥

*श्रीकृष्ण उवाच—*

त्वया ध्येयः श्रीनिवासो नाहं ध्येयो मुनीश्वर ॥ गच्छ शेष-

गिरिं तत्र वल्मीके वर्तते शुभा ॥४८॥ प्रतिमा श्रीनिवासस्य तत्पू-
जां कुरु सन्ततम् ॥ सङ्गमिष्यति ते मार्गे शूद्रः श्रीरङ्गदास-
कः ॥४९॥ पूजकस्य भवेच्छूद्रः सेवकस्ते महामुने ॥

श्रीकृष्ण बोले—हे मुनीश्वर ! आपकी आराधनाके योग्य श्रीनिवास ही हैं; मैं नहीं हूं। शेषाचलको जाइये। वहां श्रीनिवासकी शुभ प्रतिमा वल्मीकमें है; उन्हींकी सदा पूजा कीजिये। आपके मार्गमें श्रीरंगदास नामक एक शूद्र मिलेगा, आप पूजा करनेवालेका वह सेवक होगा ॥५०॥

एवमुक्तोऽथ हरिणा सम्प्राप्तो वेङ्कटाचलम् ॥५०॥ सङ्गमस्तु
बभूवास्य मुनेः शूद्रेण वर्त्मनि ॥ ततस्तु तेन सहितो गत्वा श्री-
वेङ्कटाचलम् ॥५१॥ वल्मीकस्थं हरिं दृष्ट्वा पूजयामास वै मुनिः ॥
पुष्पाण्याहारयामास रङ्गदासो महायशाः ॥५२॥ अकस्माद्दैवयो-
गेन गन्धर्वः कुण्डलाह्वयः ॥ स्नानार्थमागमच्छीघ्रं स्वाभिः स्त्री-
भिर्जलाशयम् ॥५३॥ वसन्ते विजने तत्र स्वामिपुष्करिणीजले ॥
जलक्रीडापरास्तत्र दृष्ट्वा ता रङ्गदासकः ॥५४॥ मुदोद्रिक्तमना भू-
त्वा रेतोऽस्याच्चीद्धरातले ॥ पुनः स्नात्वा शुचिर्भूत्वा पश्चात्तापेन
निन्दितः ॥५५॥ बद्धं मालाकुलं सर्वं परित्यज्य पुनस्तदा ॥ पुन-
राहृत्य पुष्पाणि शीघ्रमादाय पादजः ॥५६॥ देवागारं समासाद्य
स्थितवानग्रतो हरेः ॥ रङ्गदासं मुनिर्दृष्ट्वाऽगर्हयद्रजसा मुहुः॥५७॥
पूजाकालो ह्यतिक्रान्तश्चक्रपाणेर्महात्मनः ॥ किमर्थं कृतवान् बाल
विलम्बं शूद्रनन्दन ॥५८॥ निन्दित्वा मुनिशार्दूले शूद्रं पूजाविलोपि-
नम् ॥ तूष्णीं स्थिते तु विप्रेन्द्रे स्थिते तूष्णीं च पादजे ॥ ५९ ॥
शङ्खचक्रधरः शूद्रमुवाच परया गिरा ॥

हरिसे इस प्रकार कहे जानेपर वह श्रीवेङ्कटाचलपर आये। रास्तेमें इनसे उस शूद्रसे भेंट हुई। उसीके साथ श्रीवेङ्कटाचल जाकर, वल्मीकमें ठहरे हुए हरिको देखकर मुनिने उनकी पूजा की; और वह श्रीरंगदास फूल तोड़ लाया। अकस्मात् दैवयोगसे कुण्डल नामका गन्धर्व अपनी स्त्रियोंके साथ जलाशयमें स्नान करनेके लिये शीघ्र आया। वसन्तकालमें, बिना मनुष्यके उस स्थानमें स्वामिपुष्करिणीमें जलक्रीड़ा करते हुए

उनको रंगदासने देखा। आनन्दसे विह्वल हो उसने पृथ्वीतलपर वीर्यपात कर दिया और पुनः स्नान कर पवित्र हो, पश्चात्तापसे दुखित हो, सब मालाओंको छोड़, पुनः फूलोंको तोड़कर, शीघ्र उनको लेकर तथा देवालयको पहुंचकर वह शूद्र श्रीहरिके आगे खड़ा हुआ। मुनि रंगदासको देखकर कोधसे धीरे-धीरे झिड़कने लगे—हे शूद्रनन्दन बालक ! महात्मा चक्रपाणिकी पूजाका समय बीत गया, तूने किस लिये देर की ? शूद्रद्वारा पूजामें बाधाकी निन्दा कर, मुनि और शूद्रके चुप खड़े हो जानेपर शङ्खचक्र धारण करनेवाले शूद्रसे उत्तम वचन बोले ॥६०॥

*श्रीनिवास उवाच—*

**मा भैषीः पुत्र भद्रं ते रङ्गदास महामते ॥६०॥ मायया मोहितं विश्वं ससुरासुरमानुषम् ॥ तत्रापि तव बुद्धिस्तु पश्चात्तापेन योजिता ॥ ६१ ॥ तस्मात्त्वमशुभः शूद्र सन्त्यजाऽतः कलेवरम् ॥ स्वामिपुष्करिणीतीरे सर्वपापनिवारणे ॥ ६२ ॥ मरणात्पुण्यदेशेऽस्मिञ्छुद्धो जन्मान्तरे पुनः ॥ सुधर्मतनयो भूत्वा तोण्डदेशाधिपो भव ॥६३॥ तोण्डमानिति विख्यातो लोके कीर्तिं गमिष्यसि ॥ शतस्त्रीवल्लभो भूत्वा मम भक्तश्च केवलम् ॥६४॥ ततस्त्वं सार्वभौमः सन् राज्यभोगमुपैष्यसि ॥ कन्यादानप्रसङ्गश्च भविष्यति न संशयः ॥६५॥ तस्माद्देहं त्यजात्रैव निराहारोऽतिनिर्मलः ॥ सुधर्मराजतनयो राजाऽऽकाशानुजो भव ॥६६॥ इत्युक्तो वासुदेवेन तनुं तत्रैव सोऽत्यजत् ॥ स त्वमद्याकाशराजानुजोऽभूर्धार्मिको नृपः ॥६७॥ तदा त्वया कृतस्त्वेष कूप आरामकारणात् ॥ इति ते कथितं पूर्वजन्मकर्मसमुद्भवम् ॥६८॥**

श्रीनिवास बोले—हे पुत्र रंगदास ! मत डरो ! तुम्हारा भला हो। हे महामति ! देवता, राक्षस और मनुष्योंके साथ यह सारा संसार मायासे मोहित है; तथापि तुम्हारा मन पश्चात्तापसे युक्त है; इसलिये इन सब पापोंको छुड़ानेवाली श्रीस्वामिपुष्करिणीके तीरपर अपने अशुभ शूद्र शरीरको छोड़ दो। इस पुण्य देशमें मरनेसे शुद्ध होकर पुनः दूसरे जन्ममें सुधर्मका पुत्र होकर तोण्डदेशका स्वामी होओ। तोण्डमान नामक विख्यात होकर संसारमें कीर्ति लाभ करोगे, सौ स्त्रियोंका स्वामी होकर केवल मेरा भक्त होगे। तब तुम सार्वभौम (सम्पूर्ण पृथ्वीका अधिपति) राजा होकर भोग पाओगे। कन्यादानका प्रसंग भी होगा इसमें सन्देह नहीं।

इसलिये यहींपर निराहारसे निर्मल होकर शरीर छोड़ो; सुधर्मराजके पुत्र आकाशराजका छोटा भाई होओ; हरिसे ऐसा कहे जानेपर उसने अपने शरीरको वहींपर छोड़ दिया। वही तुम आकाशराजका छोटा भाई धार्मिक राजा हुए हो। तभी तुमसे यह कूप बगीचेके लिए बनाया गया था। यह मैंने तुम्हारे पूर्व जन्मके कर्मोंकी उत्पत्ति कही ॥ ६८ ॥

अथ तोण्डमान्नृपप्रार्थनया भगवत्कृतनवीनमन्दिरप्रवेशः

गोविन्दवचनं श्रुत्वा तोण्डमान् राजसत्तमः ॥ कूपं संशोधया-
मास स्वकृतं पूर्वजन्मनि ॥६९॥ विमानं कारयामास रत्नचित्रं
महोन्नतम् ॥ चतुर्मूर्तिवरोपेतं वैनतेयविभूषितम् ॥७०॥ कल-
शेन समोपेतं सौवर्णेनाद्भुतेन वै ॥ आगतानां जनानां च समा-
रोहावरोहयोः ॥७१॥ मार्गं योजनविस्तीर्णं ससोपानं चकार ह ॥
मध्ये मध्ये मण्डपानि प्रपाकूपांश्चकार च ॥७२॥ श्रीनिवासं
समागम्य तोण्डमानब्रवीत्ततः ॥

राजा तोण्डमानकी प्रार्थनासे श्रीनिवासका मन्दिरमें प्रवेश

श्रीनिवासके वचनको सुनकर श्रेष्ठ राजा तोण्डमानने अपने पूर्व जन्ममें बनाये हुए कूपका जीर्णोद्धार किया; रत्नोंसे चित्रित, बहुत ऊंचा, चार श्रेष्ठ मूर्तियोंसे शोभित, गरुडसे विभूषित तथा सुवर्ण कलशसे शोभित विमान भी बनवाया; आये हुए मनुष्योंके चढ़ने और उतरनेका मार्ग एक योजनतक फैली सीढ़ियोंके साथ बनाया; बीच-बीचमें मण्डप और कूप भी उसने बनवाया और श्रीनिवासके पास आकर वचन बोला ॥७३॥

राजोवाच —

त्वया नियमितं देव सर्वं सम्पूर्णतां गतम् ॥७३॥ आगच्छाद्य
जगन्नाथ चैत्यं तव जनार्दन ॥ इति राजवचः श्रुत्वा भगवाना-
ह भूपतिम् ॥७४॥ अवश्यमनुगच्छामि तव भक्त्या प्रतोषितः ॥
इत्युक्त्वा प्रस्थितं देवं देवैश्चेन्द्रपुरोगमैः ॥७५॥ वैखानसश्च ऋषिश्रे-
ष्ठैर्ब्राह्मणैर्ब्रह्मवित्तमैः ॥ ऋक्सामगायकैश्चैव मन्त्रैश्च विधिपूर्व-

कम् ॥७६॥ वादित्रैर्वाद्यमानैश्च घोषयद्भिर्दिशो दश ॥ देवैर्ब्रह्म-
पुरोगैश्च स्तुवद्भिः स्तुतिभिर्हरिम् ॥ ७७ ॥ प्रवेशयामास वरं
सुमन्दिरं श्री श्रीनिवासं पुरुषं पुराणम् ॥ पद्मावतीं चापि मुदा
महीपतिः समस्तलोकैर्मुनिभिर्महोत्सवैः ॥७८॥

राजा बोले—हे देव! आपसे निश्चय किया गया सब कुछ सम्पूर्ण हो गया। हे जगन्नाथ, जनार्दन! अपने मन्दिरमें आइये। राजाके इस वचनको सुनकर श्रीनिवास उनसे बोले—आपकी भक्तिसे सन्तुष्ट मैं अवश्य पीछे-पीछे आऊंगा। ऐसा कहकर इन्द्रादि देवताओं, ऋषिश्रेष्ठ वैखानसों, ब्रह्मके जाननेवाले श्रेष्ठ ब्राह्मणों, ऋग्वेद और सामवेदके मंत्रोंको विधिपूर्वक गानेवालों, दशों दिशाओंको शब्दसे पूर्ण करनेवाले बजते हुए बाजाओं और भगवान्की स्तुति करते हुए ब्रह्मा इत्यादि देवताओंके साथ आनन्दयुक्त राजाने सब लोगों, मुनियोंके साथ पुराण पुरुष श्रीनिवास और पद्मावतीको धूमधामके साथ श्रेष्ठ सुन्दर मंदिरमें प्रवेश कराया॥ ७८॥

पुष्पाण्यवर्षंश्च सुरासुराद्याः सयक्षगन्धर्वनरोरगाश्च ॥ देवस्य
मूर्ध्न्याशु विमानवर्ये तं पूजयन्तस्त्वृषयश्च हर्षात् ॥७९॥ तत
आनन्दनिलये तोण्डमान्नृपनिर्मिते ॥ विमानाग्रे श्रीनिवासो
रराज भगवान् हरिः ॥८०॥ आनन्दजनकत्वात्तमानन्दनिलयं
विदुः ॥

यक्ष, गंधर्व, मनुष्य और उरग के साथ देवता, राक्षस इत्यादि और मुनिगण श्रीनिवासके मस्तकपर श्रेष्ठ विमानसे आनन्दपूर्वक फूल वर्षा रहे थे। तोण्डमान राजाके बनवाये हुए आनन्द-धाममें विमानके आगे श्रीनिवास शोभित हुए। आनन्दको देनेवाला होनेके कारण, इसको आनन्दधाम कहते हैं॥ ८१॥

वरपद्मासने सुस्थां विधाय कमलालयाम्॥ ८१ ॥ पद्मावतीं
विशालाक्षीं भगवानात्मवक्षसि ॥ अरिशङ्खविहीनोऽसौ कटिन्य-
स्तकरोत्तमः ॥८२॥ दर्शयन् पाणिनैकेन दक्षिणेन वृषाकपिः ॥
पदपद्मं सुराराध्यं गतिं च परमां नृणाम् ॥८३॥ कटिन्यस्तकरे-
णापि निजपादाब्जगामिनाम् ॥ नृणां भवपयोराशिं कटिदघ्नं प्र-
दर्शयन् ॥८४॥ विराजते वेङ्कटेशः सम्पत्स्वपि रमापतिः ॥ इति

ते कथितं राजन् माहात्म्यं वेङ्कटेशितुः ॥८५॥ पवित्रं परमं पुण्यं मङ्गलानां च मङ्गलम् ॥८६॥

इति श्रीभविष्योत्तरपुराणे श्रीवेङ्कटाचलमाहात्म्ये श्रीभगवत्कृततोण्डमान्नृपतिनिर्मित-नवीनमन्दिरप्रवेशादिवर्णनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

श्रेष्ठ कमलासनपर लक्ष्मीको स्थिर करके, विशाल नेत्रवाली पद्मावतीको अपने हृदयसे लगाकर, चक्र और शंखसे हीन हो अपनी कमरपर हाथ रखे हुए, एक दाहिने हाथसे देवताओंसे आराध्य तथा मनुष्योंकी उत्तम गति अपने चरण कमलोंको दिखलाते हुए, एवं कमरपर रखे हुए हाथसे अपने चरणोंके सेवकोंके लिये यह संसारका समुद्र कमरपर्यन्त है, ऐसा दिखलाते श्रीवेङ्कटेश रमापति सम्पत्तियों सहित विराजते हैं। हे राजा! इस प्रकार श्रीवेङ्कटेशका माहात्म्य मैंने तुमसे कहा। यह पवित्र, परम पुण्य और मंगलका भी मंगल है॥

इति त्रयोदशोऽध्यायः ॥१३॥

## चतुर्दशोऽध्यायः ॥१४॥



प्रभु दीपोत्सव नित्यता, ब्रह्म परीक्षा वेद।
देव मूर्ति निर्मान विधि, प्रभु उत्सव बहु भेद ॥१॥
कथा कूर्म द्विजराजकी, स्त्री सुत जीवनदान।
देश गमन उस विप्रका, भीम कुम्भार बयान ॥२॥
दर्शन भीम कुमार प्रभु, विनय करन नैवेद्य।
दम्पति प्राप्ति परम गति, यही यहां सुनिवेद्य ॥३॥

अथ ब्रह्मकारितदीपारोपेण भगवदुत्सवप्रशंसा

शतानन्द उवाच—

सर्वाभ्युदयकामोऽथ भूतानां हितकाम्यया ॥ तदा वै भगवान्

ब्रह्मा दीपद्वयमकल्पयत् ॥१॥ प्रार्थयामास गोविन्दं वरमेकम-
नामयम् ॥ यावत्कलियुगं तिष्ठेत्तावद्दीपोऽभिवर्धताम् ॥ २ ॥
यदा विमानपतनं यदा दीपविनाशनम् ॥ तदाऽवतारः सम्पूर्ण
इति मे निश्चितोऽवधिः ॥ ३ ॥ इति तस्मै वरं दत्त्वा ब्रह्माणमव
दद्धरिः ॥

### भगवान्के दीपोत्सवकी प्रशंसा

शतानन्द बोले—सब अभ्युदयकी इच्छावाले ब्रह्माने जीवोंके हितकी इच्छासे दो दीपकी कल्पना की और निर्दोष गोविन्दसे एक वरके लिये प्रार्थना की कि जबतक कलियुग रहे तबतक ये दीप बढ़ें। जब गिरना हो, जब दीपका नाश हो, तब आपका अवतार पूरा हो—मेरा यह निश्चय किया हुआ समय है । ब्रह्माको यह वर देकर श्रीनिवास उनसे बोले ॥ ४ ॥

*श्रीनिवास उवाच—*

श्रूयतां वचनं तात भुजमुद्धृत्य चोच्यते ॥३॥ उत्सवं कुरु मे
पुण्यं ब्रह्मँल्लोकपितामह ॥ ध्वजारोहणमारभ्य रथान्तं च सवा-
हनम् ॥५॥ नैवेद्यं बहुचित्रं च ब्राह्मणैर्वेदपारगैः ॥ कर्त्तव्यं मम
कल्याणं त्रिकालं भयभक्तितः ॥६॥ तदेतद्वचनं श्रुत्वा पितुः स
च पितामहः ॥ तोण्डमानं समाहूय वचनं व्याहरत्तदा ॥७॥

श्रीनिवास बोले—हे तात ! मेरे वचनको सुनो, मैं भुजाको उठाकर कहता हूं। हे लोकपितामह ब्रह्मा ! ध्वजारोहनसे लेकर रथकी सवारीतक मेरा उत्सव करो। वेदके जाननेवाले ब्राह्मणोंसे अनेक प्रकारके कल्याणकारी नैवेद्य तीनों समय भय और भक्तिसे कराना चाहिये। उस अपने पिताके इस वचनको सुनकर ब्रह्मा तोण्डमानको बुलाकर उनसे बोले ॥ ७ ॥

*ब्रह्मोवाच—*

वाहनानि विचित्राणि कुरु शीघ्रं रमापतेः ॥ रथो दारुमयस्तात
बहुचित्रविचित्रितः ॥ ८ ॥ अतन्द्रेण महीपाल कर्त्तव्यो विश्वक-
र्मणा ॥ छत्राणि चामरे पुण्ये व्यजनं राजसत्तम ॥९॥ इत्युक्त्वा

विश्वकर्माणमाहूय नृपतेर्वशम् ॥ विधाता विदधे सोपि यथाराजा-
नुशासनम् ॥१०॥ वाहनानि रथच्छत्रचामरव्यजनानि च ॥ कृत-
वान् क्षणमात्रेण प्रीतये मधुघातिनः ॥११॥

ब्रह्मा बोले—हे तात ! लक्ष्मीपतिके लिये नाना प्रकारके वाहन और बहुत चित्रोंसे सजा हुआ लकड़ीका रथ शीघ्र बनवाइये । हे श्रेष्ठ राजा ! हे महिपाल ! छत्र, चमर और पंखा विश्वकर्मासे शीघ्र बनवाना होगा। ऐसा कहकर ब्रह्माने विश्वकर्माको बुलाकर उसे राजाका वशवर्ती बनाया। उसने भी जैसी राजाकी आज्ञा थी वैसा ही वाहन, रथ, छत्र, पंखा, चमर इत्यादि श्रीनिवासकी प्रसन्नताके लिये क्षणमात्रमें बना दिया॥ ११ ॥

अथ महोत्सवार्थं वेङ्कटाद्रिं प्रति नानादेशीयनृपागमनम्

उवाच वचनं देवो राजानं सपितामहम् ॥ सर्वदेशजनाकीर्ण-
मुत्सवं चोत्तमं विदुः ॥१२॥ आनयस्व नृपान् सर्वान्नानादेशगता-
निति ॥ शासितो वासुदेवेन भृत्यान् सम्प्रेषयन्नृपः ॥१३॥ अङ्गवङ्ग-
कलिङ्गाद्याः पौगण्डाः काशिकास्ततः ॥ काम्बोजाः केरलद्वीपा
विराटकुरुजाङ्गलाः ॥१४॥ बर्बराः पाण्ड्यदेशीयाश्चैद्या मत्स्याः ससै-
न्धवाः ॥ आगतास्ते महीपालाः सकुटुम्बाः सवाहनाः ॥ १५ ॥
केचिद्यानगताः केचिद्गजस्थाः केचिदश्वगाः ॥ केचिच्च शिविका-
रूढाः केचित्पद्भ्यां समाययुः ॥१६॥ छत्रैः सचामरैर्दिव्यैर्मयूर-
शुकपिच्छकैः ॥ आराधनं प्रकुर्वाणा विप्राणां चैव भोजनैः ॥१७॥
ब्रह्मक्षत्रियविट्छूद्रा ये चान्ये नवजातिजाः ॥ चण्डालयवनां-
स्त्यक्त्वा सर्व एव समागताः ॥१८॥

महोत्सवके लिये नाना देशके राजाओंका श्रीवेङ्कटाचलपर आना

ब्रह्माके साथ राजासे श्रीनिवासने कहा—सब देशोंके मनुष्योंसे भरा हुआ उत्सव ही उत्तम कहा जाता है। अनेक देशके राजाओंको ले आओ। इस प्रकारकी आज्ञा श्रीनिवाससे पाकर राजाने नौकरोंको भेजा। तब अंग, बंग, कलिंग, पौगंड, काशिक, काम्बोज, केरल द्वीप, विराट, कुरु, जांगल, बर्बर, पाण्ड्य, चैद्य, मत्स्य, सिन्ध इत्यादि देशोंके राजा कुटुम्ब और वाहनोंके साथ आये। कोई सवारीपर, कोई हाथीपर,

कोई घोड़ेपर, कोई शिविका ( डोली ) पर, तो कोई पैरोंहीसे आये। छत्र, मयूर एवं शुकके पुच्छसे बने हुए अलौकिक चामरसे सेवा एवं भोजनके द्वारा ब्राह्मणोंकी आराधना करते हुए ब्राह्मण, क्षत्रिय, वैश्य, शूद्र एवं अन्य भी छोटी जातियां चाण्डाल और यवनोंको छोड़कर आ गयीं ॥ १८ ॥

समागमे मार्गमध्ये सङ्कीर्णजनमण्डले ॥ अश्नन्तः केचिदाया-
न्ति केचिदन्नविवर्जिताः ॥१९॥ केचित्क्षीरप्रपानाश्च केचिद्धारण-
पारणैः ॥ सर्वेऽभवन् हरेर्भक्ताः श्रीनिवासस्य भूमिप ॥ २० ॥ ध-
नानि वस्त्राणि च भूषणानि कायान्ससजीवानि सुखानि सर्वे ॥
श्रीवेङ्कटेशस्य पदार्पितानि चक्रुर्जना भागवताः कलौ युगे ॥२१॥
तत्राहूय मुनीन्सर्वान् महीपालान्यथाक्रमम् ॥ कन्यामासं गते
भानौ द्वितीयायां जगत्पतेः ॥२२॥ ध्वजारोहणमाधाय साङ्कुरा-
र्पणमेव च ॥ वैखानसमुनिश्रेष्ठैः पूजा मन्त्रैः प्रकल्पिता ॥२३॥
नरयानं रत्नमयं निधाय पुरतो हरेः ॥ वासुदेवं बभाषेऽथ ब्रह्मा
लोकपितामहः ॥२४॥ नरयानं समारुह्य कुरु चैत्यप्रदक्षिणम् ॥
एवमुक्तः प्रत्युवाच श्रीनिवासः पितामहम् ॥२५॥

मार्गमें सबके मिल जानेके कारण मनुष्योंकी भीड़ हो जानेसे कोई भोजन करते, कोई बिना अन्नके, कोई दूध पीते तो और कोई पारन करते थे। हे राजन्! ये सभी श्रीनिवासके भक्त हो गये। कलियुगमें श्रीभगवद्भक्तोंने धन, वस्त्र, भूषण, सजीव शरीर और सुख यह सब श्रीवेङ्कटेशके चरणकमलमें अर्पण कर दिया। वहांपर मुनियों और सब राजाओंको यथाक्रम बुलाकर सूर्यके कन्याराशिमें होनेपर द्वितीयाको जगत्पति श्रीनिवास-का ध्वजारोहण, अंकुरार्पण आदि करके वैखानस मुनिश्रेष्ठोंसे मन्त्र द्वारा पूजा करवायी, और रत्नोंकी बनी हुई मनुष्योंकी सवारी श्रीनिवासके सामने रखकर लोक पितामह ब्रह्मा उनसे बोले, नरयानपर चढ़कर देवालय-की प्रदक्षिणा कीजिये। ऐसा कहे जानेपर श्रीनिवासने ब्रह्मासे कहा ॥ २५ ॥

अथ भगवदाज्ञया ब्रह्मकृतमनुजन्मूर्तिचतुष्टयनिर्माणप्रकारः

*श्रीनिवास उवाच—*

भोः पुत्र बालभावोऽसि शासितो वेदनिर्णयः ॥ स चाद्य वि-
स्मृतस्तात परीक्षा दीयतां मम ॥ २६ ॥ स तद्वचनमाकर्ण्य कि-

श्चिच्चिन्तासमाकुलः ॥ परीक्षां च ददौ विष्णोर्वेदानां वेदवि-
त्तमः ॥२७॥ स्खालित्यमभवत्किञ्चित्परीक्षायां विधेस्तदा ॥ ततोऽ-
ववोधितः सम्यग्वेधा वेदानुशासनम् ॥२८॥ निर्ममे क्षणमात्रेण
श्रीनिवासात्मिकाः शुभाः ॥ मूर्तीश्चतस्रो मन्त्रैस्तु चतुर्वेदसमुद्भ-
वैः ॥२९॥ पृथङ्नामानि तासां वै चकार स महामतिः ॥ उत्सव-
श्रीनिवासाख्या त्वाद्यान्या चोग्रनामिका ॥ ३० ॥ सर्वाधिक-
समाख्यान्या लेखकाख्या तदापरा ॥ मूलमूर्तिरभूत्तासां मूर्तीनां
चतुरात्मनाम् ॥३१॥ स्वयं श्रीवेङ्कटाधीशः सर्वात्मा जगदीश्वरः
देवानां कल्पयामास तत्तन्मूर्त्यभिमानिनाम् ॥३२॥ असङ्कीर्णा-
नि कार्याणि तानि तानि विधिस्ततः॥ पञ्चानामपि देवानां
तत्तन्मूर्त्यभिमानिनाम् ॥३३॥ चतुर्मुखेषु चतुरो मनस्येकं विधि-
स्तदा ॥ अनुदध्यौ तदा तेन सर्वकर्ममहोत्सवे ॥ ३४ ॥ उत्सवे
श्रीनिवासस्य यात्राकर्मणि दीक्षितः ॥ तेन निर्वर्तयामास या-
त्राकर्मोत्सवं विधिः ॥३५॥

### श्रीनिवासकी आज्ञासे ब्रह्माद्वारा भगवान्‌की चार मूर्तियोंका बनाया जाना

श्रीनिवास बोले—हे पुत्र ! तू बालपनमें हो; जो तुम्हारे लिये वेदोंका निर्णय बताया गया था, वह आज भूल गये हो। हे तात ! मुझे परीक्षा दो। उनके वचन सुनकर कुछ चिन्तासे घबड़ाये हुए वेदके जाननेवाले ब्रह्माने वेदोंकी परीक्षा विष्णुको दी। परीक्षामें ब्रह्माको कुछ अनुत्तीर्णता हुई। तब वेदोंका अनुशासन अच्छी तरह समझाये गये ब्रह्माने क्षणमात्रमें श्रीनिवासकी शुभ चार मूर्तियाँ चारों वेदोंके मंत्रोंसे बनायीं। उस महाबुद्धिमानने उनका अलग अलग नाम रखा; पहला उत्सव श्रीनिवास, दूसरा उग्र श्रीनिवास, तीसरा सर्वाधिक श्रीनिवास और चौथा लेखक श्रीनिवास * इन चारों मूर्तियोंमें मूलमूर्ति श्रीनिवास हुए। स्वयं श्रीवेङ्कटाचलके स्वामी सर्वात्मा जगदीश्वरने उन-उन मूर्तियोंके अभिमानी (मान्य) देवताओंके उन-उन असंकीर्ण कार्योंकी कल्पना की और तब ब्रह्माने उन-उन पाँचमूर्ति देवोंमें चार देवताओंको अपने चार मुखोंमें तथा एक श्रीवेङ्कटेश देवको अपने मनमें,

* उक्त चार मूर्तियाँ जो आज भी श्रीवेङ्कटाचलमें विद्यमान हैं, उनमेंसे श्रीलेखक श्रीनिवासके सामने आज भी अन्यान्य उत्सवादिके साथ आय व्ययका हिसाब नित्य निवेदन किया जाता है।

तोण्डमानके पास ब्राह्मणका अपने परिवारको रखना [ पृष्ठ २६५ ]





वासिष्ठोऽहं वीरशर्मा सामवेदी नृपोत्तम।
भार्या च गर्भिणी चेयं सुशीला च पतिव्रता॥
संस्थाप्यैनां तव गृहे व्रतं निर्वर्तयाम्यहम्।

सब कामके महोत्सवस्वरूप श्रीनिवासकी महोत्सव-यात्रामें दीक्षित होकर ध्यान किया । इसी प्रकार ब्रह्माने यात्राकर्मके उत्सवका सम्पादन किया ॥३५॥

नैवेद्यं बहुधा चित्रं चक्रे ब्रह्मोत्सवे शुभे ॥ गुडौदनं तिलान्नं च परमान्नं पयः शृतम् ॥३६॥ मुद्गान्नं माषकान्नं च दध्योदनमतः परम् ॥ षड्विधान्नं च सापूपं सपायससुशर्करम् ॥३७॥ गुडापूपांस्तिलापूपान्माषापूपान्मनोहरान् ॥ मोदकांश्च शतच्छिद्रप्रमुखान् कारयन् विधिः ॥३८॥ अर्पयामास देवाय श्रीनिवासाय विष्णवे ॥

अनेक प्रकारका नैवेद्य शुभ महोत्सवमें बनाया; गुड़का ओदन, तिलान्न, दूधमें बना हुआ पायस, मूंगका अन्न, माषका अन्न, दही, ओदन ( भात ), अच्छी तरहसे शक्कर दिये हुए दूध और पूपके साथ छः प्रकारके अन्न, सुस्वादु गुड़का पूप, तिलका पूप, माषका पूप और सौ छिद्रवाला मोदक भी ब्रह्माने बनवाकर श्रीनिवास विष्णुको समर्पण किया ॥३९॥

### अथ ब्रह्मकारितश्रीनिवासमहोत्सववैभवप्रकारवर्णनम्

उत्सवं श्रीनिवासस्य विधिर्यात्रां महोत्सवे ॥ ३९ ॥ कारयामास वै वेधा ध्वजारोहणपूर्वकम् ॥ सायङ्काले च पूर्वेद्युर्ध्वजारोहणवासरात् ॥ ४० ॥ अनन्तगरुडाद्याश्च ब्रह्माद्याश्च तथाऽमराः ॥ सर्वे चान्ये महर्ष्याद्या विष्वक्सेनपुरःसराः ॥४१॥ वल्मीकादिभवां मृत्स्नां पवित्रां नगराद्बहिः ॥ खानितां विधिवन्मन्त्रैर्हस्तिमस्तकरोपिताम् ॥४२॥ सर्वमङ्गलवाद्यैश्च सह सर्वपरिच्छदैः ॥ ससंभ्रमं समानीय प्रादक्षिण्येन वीथिषु ॥ ४३ ॥ अङ्कुरार्पणमातेनुः सहर्षपुलकाङ्कुराः ॥

### ब्रह्माके किये हुए श्रीनिवासके महोत्सवकी तैयारीका वर्णन

श्रीनिवासके उस महोत्सवमें ध्वजारोहणके साथ यात्रा और उत्सवको ब्रह्माने करवाया । ध्वजारोहणके दिनसे पहले दिन सायंकालको शेषनाग, गरुड़, ब्रह्मा इत्यादि देवता, वसुदान इत्यादि और सब महर्षियोंने नगरसे

विधिपूर्वक मन्त्रोंसे खोदी हुई वल्मीक इत्यादिकी पवित्र मट्टी हाथीके मस्तकपर रखकर सब मङ्गलके बाजाओं एवं सब परिकरोंके साथ गलियोंमें प्रदक्षिणा करके शीघ्र लाकर, हर्षित और पुलकित हो, अङ्कुरार्पण किया ॥४४॥

ततोऽपरेद्युरुषसि ध्वजारोहमहोत्सवम् ॥ ४४ ॥ आरभ्यावभृथान्तं च पुष्पयागान्तमेव च ॥ उत्सवं श्रीनिवासस्य चकार विधिवद्विधिः ॥४५॥

उसके दूसरे दिन प्रभातमें ध्वजारोहण महोत्सव हुआ। आरम्भसे लेकर अवभृत तथा पुष्पयागके अन्ततक श्रीनिवासके उत्सवको विधिपूर्वक ब्रह्माने किया ॥४५॥

तस्मिन् महोत्सवे विष्णोर्ध्वजारोहणवासरे ॥ प्रथमे प्रथमं यानं मनुष्यान्दोलिकाऽभवत् ॥४६॥ द्वितीयं च तथा रात्रावभवच्छेषवाहनम् ॥ शेषे शयनशीलस्य शेषाचलनिवासिनः ॥ ४७ ॥ सदा शेषप्रियस्यास्य श्रीनिवासस्य शार्ङ्गिणः ॥ द्वितीयदिवसे चाद्यं भूयोऽभूच्छेषवाहनम् ॥४८॥ द्वितीयं च तथा रात्रावभवद्धंसवाहनम् ॥ तृतीयदिवसे चाद्यमभवत्सिंहवाहनम् ॥ ४९ ॥ द्वितीयं च तथा यानं रात्रौ मौक्तिकमण्डपम् ॥ चतुर्थदिवसे यानमादिमं कल्पभूरुहः ॥५०॥ द्वितीयमभवद्रात्रौ सर्वभूपालवाहनम् ॥ पञ्चमे दिवसे चाद्यं यानमान्दोलिकाऽभवत् ॥५१॥ हरेरमृतसन्दायिमोहिनीवेषधारिणः ॥ द्वितीयं रजनौ यानं वेदवेद्यस्य वै हरेः ॥५२॥ बभूव च स्वयं साक्षाच्छन्दोमूर्तिः खगेश्वरः ॥आद्यं यानं षष्ठदिने हनूमानभवद्धरेः ॥॥५३॥ द्वितीयं मङ्गलगिरिः सायं यानमभूद्धरेः ॥ महिषीसंयुतस्यास्य वसन्तोत्सवरागिणः ॥ ५४ ॥ तृतीयं रजनौ यानमासीदैरावतो गजः ॥ सप्तमेऽभूद्दिने यानमाद्यं भास्करमण्डलम् ॥५५॥ द्वितीयं मङ्गलगिरिः सायमासीद्रमापतेः ॥ रमणीयतमोद्यानविहारोत्सवरागिणः ॥५६ ॥ कुसुमापचयव्यग्रम-

हिषीजनशालिनः ॥ तृतीयं रजनौ यानमभवच्चन्द्रमण्डल-
म् ॥५७॥ अष्टमे दिवसे चायमभवद्वाहनं हरेः ॥ नानाविधैरल-
ङ्कारैर्मण्डितः सुमहान् रथः ॥५८॥ द्वितीयं रजनौ यानमभूदुच्चैः
श्रवा हयः ॥ नवमे दिवसे चायं यानमान्दोलिकाऽभवत् ॥५९॥
द्वितीयं मङ्गलगिरिर्यानमासीद्रमापतेः ॥ हारिद्रैः पिङ्गलैश्चूर्णैर-
भिषिक्तस्य मङ्गले ॥ ६० ॥ समुद्युक्तस्यावभृथस्नानमाङ्गलि-
कोत्सवे ॥

विष्णुके इस महोत्सवमें ध्वजारोहणके पहले दिन प्रथम सवारी मनुष्योंकी आन्दोलिका हुई; शेषपर शयन करनेवाले शेषाचलनिवासीकी दूसरी सवारी रातमें शेष हुए; सदा शेष-प्रिय शार्ङ्गधारी इस श्रीनिवासकी दूसरे दिन प्रथम सवारी पुनः शेषनाग हुए; एवं रात्रिमें दूसरी सवारी हंस हुआ। तीसरे दिन प्रथम सवारी सिंह हुआ; रात्रिमें दूसरी सवारी मोतीका मंडप हुआ। चौथे दिन प्रथम सवारी कल्पवृक्ष और रात्रिमें दूसरी सवारी सब राजा हुए। पांचवें दिन अमृत देनेवाले तथा मोहिनी रूप धारण करनेवाले भगवान्की प्रथम सवारी आन्दोलिका हुई; रात्रिमें वेदसे ज्ञात होनेवाले भगवान्की दूसरी सवारी साक्षात् वेदमूर्ति गरुड़ हुए। छठे दिन भगवान्की प्रथम सवारी हनुमान हुए, रात्रिमें दूसरी सवारी मंगलगिरि हुआ। स्त्रीके साथ इस वसन्तोत्सवके प्रेमीकी रात्रिमें तीसरी सवारी ऐरावत हाथी हुआ। सातवें दिन प्रथम सवारी सूर्यका मण्डल हुआ; सर्व सुन्दर उद्यानमें विहार करनेवाले और उत्सवके प्रेमी लक्ष्मीपतिकी दूसरी सवारी मंगलगिरि हुआ, रात्रिको फूल भोग करनेवाली स्त्रियोंसे युक्त हरिकी तीसरी सवारी चन्द्रमण्डल हुआ। आठवें दिन प्रथम सवारी अनेक प्रकारके अलङ्कारोंसे सजा हुआ बहुत बड़ा रथ हुआ, रात्रिमें दूसरी सवारी उच्चैःश्रवा घोड़ा हुआ, नवें दिन प्रथम सवारी आन्दोलिका हुई। मांगलिक हरिद्राके पीले चूर्णसे अभिषिक्त, अवभृत स्नान एवं मांगलिक उत्सवमें तैयार हुए भगवान् लक्ष्मी-पतिकी दूसरी सवारी मंगलगिरि हुआ ॥६१॥

स इत्थं मङ्गलैश्चूर्णैर्हारिद्रैरभिषेचितः ॥६१॥ सुन्दरं मङ्गल-
गिरिं समारुह्य सतां गतिः ॥ चैत्यं प्रदक्षिणीकृत्य सह सर्वैर्महा-
जनैः ॥६२॥ जपद्भिर्वैदिकान्मन्त्रान् सहितश्च द्विजोत्तमैः ॥ चका-
रावभृथस्नानं भगवानादिपुरुषः ॥६३॥ स्वामिपुष्करिणीतीर्थे सर्व-
लोकैकपावने ॥ अवतारदिने तस्मिन्नक्षत्रे श्रवणे प्रगे ॥६४॥

इस प्रकार हरिद्राके मंगल चूर्णसे अभिषेक किये हुए आदिपुरुष, सन्तोंकी गति भगवान्ने सब

महाजनोंके साथ सुन्दर मलयाचलपर चढ़कर, चैत्यकी प्रदक्षिणा करके, वेदिक मन्त्रोंको जपते हुए ब्राह्मणोंके साथ सब लोकोंमें पवित्र स्वामिपुष्करिणी तीर्थमें अवतारके दिन श्रवण नक्षत्रमें स्नान किया ॥६४॥

तृतीयं मङ्गलगिरिर्यानं रात्रावभूत्ततः ॥ ध्वजावरोहणाभिख्य उत्सवोऽभूत्तदा हरेः ॥६५॥ ततोऽपरेद्युरभवत्पुष्पयागमहोत्सवः ॥ देशान्तरादागतानां सपर्यासीत्ततो नृणाम् ॥६६॥

रात्रिमें तीसरी सवारी मंगल गिरि हुआ। तब भगवान्का ध्वजावरोहण नामक उत्सव हुआ। तब दूसरे दिन पुष्पयाग* महोत्सव हुआ। तब देशान्तरोंसे आये हुए मनुष्योंकी सपर्य्या (पूजा) हुई ॥ ६६ ॥

देवा जग्मुः स्वकं धाम राजानो राजसत्तम ॥ जग्मुः स्वनगरं दिव्यं दृष्ट्वा देवमहोत्सवम् ॥६७॥ ब्रह्मा जगाम स्वं लोकं नत्वा वेङ्कटवल्लभम् ॥ समाप्य चोत्सवं सर्वं स राजा तोण्डमान्नृपः ॥६८॥ वासुदेवं नमस्कृत्य चाज्ञामादाय मौलिना ॥ स्वपुरं प्राप्य धर्मात्मा कृत्वार्चां वेङ्कटेशितुः ॥६९॥ संस्थाप्य पूजयामास स्वपुरे निजमन्दिरे ॥ राज्यं चकार धर्मात्मा सत्येन पृथिवीपतिः ॥७०॥ गोब्राह्मणहितार्थाय चातिथीनां हिताय च ॥ सद्धर्मनिरतः शान्तो जितमन्युर्जितेन्द्रियः ॥ ७१ ॥ नित्यमाराधयन् कृष्णं बिलमार्गेण चागतः ॥

हे राजसत्तम ! भगवान्के महोत्सवको देखकर देवतागण अपने-अपने धामको गये; राजा लोग अपने अपने उत्तम नगरको गये। श्रीवेङ्कटेशको प्रणाम करके ब्रह्मा अपने लोकको गये। वह धर्मात्मा तोण्डमान राजा सब उत्सवको समाप्त कर, श्रीनिवासको प्रणाम कर, शिरपर आज्ञा लेकर, अपने नगरमें पहुँचकर, श्रीवेङ्कटेशकी पूजा कर, उनकी स्थापना अपने नगरके अपने मंदिरमें कर, गौ, ब्राह्मणों और अतिथियोंके हितके लिये सद्धर्ममें लगा हुआ, क्रोध एवं इन्द्रियोंको जीता हुआ, कृष्णकी नित्य आराधना करता हुआ तथा बिलमार्गसे अपने स्थानसे वेङ्कटेशजी पर्यन्त आता जाता सत्यसे राज करने लगा ॥७२॥

अथ गङ्गास्नानगन्तृकूर्माख्यद्विजवृत्तान्तः

इत्थं कुर्वति राजेन्द्र राजराजकुलोद्भवे ॥७२॥ कार्तिके मासि

* इस पुष्पयाग महोत्सवको अभी वेङ्कटाचलमें "पहंगी" उत्सव कहते हैं।

सम्प्राप्ते दैवयोगेन भूपते ॥ समाययौ द्विजश्रेष्ठः कूर्मो
वासिष्ठगोत्रजः ॥७३॥ पितुरस्थि समादाय गङ्गास्नानसमु-
त्सुकः ॥ अकस्माद्राजनगरं विप्रक्षत्रियसङ्कुलम् ॥ ७४ ॥
समन्ततः समाकर्ण्य तोण्डमान्कीर्तिसम्भ्रमम् ॥ राघवाख्यसु-
तेनैव महालक्ष्म्याख्यभार्यया ॥७५॥ पुराद्बहिर्विनिःक्षिप्य भार्यां
पुत्रं च स द्विजः ॥ समासदद्राजगृहं राजदर्शनलालसः ॥७६॥ सिं-
हासनगतः कान्तं विद्वन्मण्डलमण्डितम् ॥ तमाशीर्भिर्विशेषेण
संस्तुत्य पृथिवीपतिम् ॥७७॥ राजानमब्रवीद्विप्रः कूर्मो वेदान्त-
पारगः ॥

गङ्गास्नानको जानेवाले कूर्म नामक ब्राह्मणका वृत्तान्त

राजवंशोद्भव तोण्डमानके इस प्रकार राज्य करते करते, हे राजन्! गङ्गास्नान करनेकी इच्छासे पिताकी अस्थि लेकर, वसिष्ट गोत्रका कूर्म नामका ब्राह्मण-श्रेष्ठ राघव नामका पुत्र और लक्ष्मी नामकी भार्याके साथ ब्राह्मण क्षत्रियोंसे भरे हुए राजनगरमें कार्तिक मासके आनेपर दैवयोगसे आया। तोण्डमानकी कीर्तिको चारों ओर सुनकर, ग्रामसे बाहर स्त्री और पुत्रको छोड़कर, राजाके दर्शनकी इच्छासे राजाके घर वह ब्राह्मण-श्रेष्ठ आया और सिंहासनके पास उपस्थित होकर वेदान्तको जाननेवाला कूर्म ब्राह्मण विद्वान्की मण्डलीसे-शोभित उस प्रिय राजाकी, आशीर्वादके साथ विशेष स्तुति करके उनसे बोला ॥७८॥

*कूर्म उवाच—*

श्रुता बहुमुखात्कीर्तिस्तव भूप विशाम्पते ॥७८॥ तत् श्रुत्वा-
द्य समीपं ते सम्प्राप्तोऽहं नृपोत्तम ॥ इति विप्रवचः श्रुत्वा पूज-
यामास स द्विजम् ॥७९॥

कूर्म बोले—हे विशांपति! राजा! आपकी कीर्ति मैंने अनेकों मुखसे सुनी है, हे श्रेष्ठराजा! इसीको सुनकर मैं आज आपके पास आया हूं। ब्राह्मणके वचनको सुनकर राजाने उस विप्रकी पूजा की ॥७९॥

*तोण्डमानुवाच—*

किमागमनकार्यं ते तन्ममाचक्ष्व भो द्विज ॥ इत्थमुक्तोऽब्रवी-
द्राजन् कूर्मो वेदविदां वरः ॥८०॥

तोण्डमानबोले—हे ब्राह्मण ! आपके आनेका क्या कारण है सो कहिये। हे राजन् ! ऐसा कहे जानेपर उस वेद जाननेवालोंमें श्रेष्ठ कूमने कहा ॥ ८० ॥

कूर्म उवाच—

सत्पिता प्रेततां प्राप्तः कालेन पृथिवीपते ॥ तस्यास्थिनिचयं नीत्वा गङ्गामज्जनहेतवे ॥८१॥ काशीं गच्छामि राजेन्द्र मनसा कृतनिश्चयः ॥ दैवाच्च गर्भिणी जाता मम भार्या पतिव्रता ॥८२॥ पञ्चवर्षश्च मे पुत्रो न शक्तो गन्तुमात्मना ॥ तस्मात्त्वया महाराज रक्षणीयौ च तावुभौ॥८३॥ अशक्तोऽहं तया गन्तुं गर्भिण्या तु द्विजप्रिय॥ स्त्रीणां पत्युर्गृहे वासो नियतश्चोदितोऽन्यथा ॥८४॥ पित्रोः समीपे वासस्तु तदभावे श्वसुर्गृहे ॥ अथवा मातुलगृहे त्वथवा राजमन्दिरे ॥८५॥ षडेते पितरः स्त्रीणामिति जानामि तत्स्थितिम् ॥ तस्मात्त्वं रक्ष राजेन्द्र सुतं भार्यां च गर्भिणीम् ॥८६॥

कूर्म बोला—हे पृथ्वीपति ! कालसे मेरे पिताने प्रेतत्वको प्राप्त किया है; हे राजेन्द्र ! उन्हींकी अस्थियों-को लेकर गंगास्नानको लिये निश्चय कर काशीको जाता हूं। दैवयोगसे मेरी पतिव्रता स्त्री गर्भिणी हो गयी है। मेरा पांच वर्षका पुत्र स्वयं चल नहीं सकता है, हे महाराज ! इसलिये ये दोनों आपके रक्षा करने योग्य हैं। हे ब्राह्मणोंके प्रिय ! उस गर्भिणीको साथ ले जानेमें असमर्थ हूं। पतिके घरमें स्त्रियोंका रहना नियत (ठीक) है, नहीं तो पिताके पास, उसके अभावमें श्वसुरके घरमें, मातुल (मामा) के घरमें, अथवा राजाके मंदिरमें। स्त्रियोंके लिये ये छः पिता हैं; यही मैं उनके विषयमें जानता हूं। हे राजेन्द्र ! इस लिये पुत्र और गर्भिणी स्त्रीकी रक्षा आप करें ॥ ८६ ॥

इत्येवमुक्तो विप्रेण कूर्मसंज्ञेन तोण्डमान् ॥ बाढमित्युक्तवान् राजंस्तस्य दत्त्वा धनं बहु ॥८७॥ तत्र संस्थाप्य तौ विप्रो बाष्पसन्दिग्धलोचनः ॥ अब्रवीत्स सुतं पत्नीं बाष्पपर्याकुलेक्षणाम् ॥८८॥ गच्छाम्यहं वरारोहे गङ्गां भागीरथीं प्रिये ॥ मा रोदीस्त्वं वरारोहे पश्य पुत्रं भयाकुलम् ॥८९॥

कूर्म नामक ब्राह्मणके इस प्रकार कहनेपर तोण्डमानने "अच्छा" कहा; और हे राजन्! उसको बहुत धन दिया। आँसुओंसे भरे हुए नेत्रवाले उस ब्राह्मणने उन दोनोंको वहाँपर रखकर पुत्र और आँसुओंसे भरे हुए नेत्र-वाली तथा घबड़ायी हुई उस पतिव्रता पत्नीसे कहा—हे सुन्दरी! हे प्रिया! भागीरथी—गंगाको मैं जाता हूं। हे सुन्दरी! मत रोओ; डरे हुए पुत्रको देखो॥ ८९॥

इत्येवमुक्ता सा विप्रपत्नी भर्त्तारमब्रवीत्॥ निजनाथस्य वदनं पश्यन्ती दुःखभागिनी॥ ९०॥ शीघ्रमागच्छ भो स्वामिन् कृत्वा गङ्गावगाहनम्॥ पुत्रोऽपि ते महाप्राज्ञस्त्वामेवमनुमन्यते॥९१॥ इत्थं वदन्तीं स्वां भार्यां पश्यन्नालिङ्ग्य चात्मजम्॥ जगाम विप्रो राजेन्द्र पश्यन्वै पृष्ठतः पुनः॥ ९२॥ सा जगाम गृहं राज्ञः पश्यन्ती पतिमात्मनः॥ परिमृज्याक्षिजं तोयं सान्त्वयित्वा सुतं तथा॥९३॥ राजपत्नीं समासाद्य पुत्रेण सहिता स्थिता॥

इस तरह कही गयी वह दुःख भोगनेवाली ब्राह्मणकी स्त्री अपने स्वामीके मुखको देखती हुई अपने पतिसे बोली। हे स्वामी! गंगास्नान करके शीघ्र आ जाना; हे महाप्राज्ञ! आपका पुत्र भी आपको विदाई देता है। हे राजेन्द्र! इस प्रकार कहती हुई अपनी स्त्रीको देखता हुआ तथा अपने पुत्रका आलिङ्गन कर फिर पीछे देखता हुआ वह ब्राह्मण चला गया। वह भी अपने पतिको देखती हुई राजाके घर चली गयी और आँखोंके आँसुको पोंछकर, अपने पुत्रको सान्त्वना देकर तथा राजाकी स्त्रीके पास आकर पुत्रके साथ रहने लगी॥९४॥

गते विप्रे स राजर्षिस्तस्य भार्यां च सुन्दरीम्॥ ९४॥ दृष्ट्वा चिन्ताकुलो भूत्वा मनसीत्थमचिन्तयत्॥ त्रिविधाः पुरुषाः प्रोक्ता धियस्तेषां पृथग्विधाः॥ ९५॥ तस्मान्मयाऽतियत्नेन स्थापनीया द्विजप्रिया॥ इति सञ्चिन्त्य धर्मात्मा तोण्डमान्राजसत्तमः॥९६॥ एकान्ते भवनं कृत्वा स्थापयामास तत्र ताम्॥ अन्नं षण्मासप र्याप्तं सकृत्सोपस्करं ददौ॥९७॥ तण्डुलाद्यैश्च काष्ठान्तैः स-र्वोपकरणैः समम्॥ तद्गृहं शृङ्खलैर्बद्ध्वा स राजा तोण्डमान्नृ-पः॥९८॥ दूतान्विधाय वै दूरे चार्धक्रोशायते निजे॥ गृहे एव

क्वचित्कोणे निगूढं तां तदा न्यधात् ॥ ९९ ॥ धूर्तानां तु यथा सेयं न गच्छेद्गोचरं दृशाम् ॥

ब्राह्मणके चले जानेपर वह राजर्षि उसकी सुन्दरी स्त्रीको देख एवं चिन्तासे घबड़ाकर मनमें सोचने लगा—तीन प्रकारके पुरुष कहे जाते हैं। उनकी बुद्धि अलग अलग होती है। इसलिये वह ब्राह्मणकी स्त्री मुझसे अत्यन्त यत्नसे रखी जानी चाहिये। ऐसा विचारकर उस श्रेष्ठ धर्मात्मा राजाने एक भवन बनवाकर उस ( विप्र-स्त्री ) को वहांपर रखा। चावलसे लेकर लकड़ीतक सब सामग्रियोंके साथ एक ही बार छः मासके लिये पर्याप्त अन्न उसका दे दिया। उसके घरको शृंखला ( जंजीर ) से बाँधकर तथा आध कोसकी दूरीपर दूतोंको रखकर उनको घरके किसी कोनेमें गुप्त रखा, जिससे वह धूर्तोंकी दृष्टिमें न आवे ॥ १०० ॥

ततो राज्ये समासक्तो राजा कार्यवशं गतः ॥१००॥ राज्यभारेण राजेन्द्र व्यस्मरद् ब्राह्मणप्रियाम् ॥ द्विवत्सरान्ते विप्रेन्द्रः कृत्वा गङ्गावगाहनम् ॥१॥ गयां गत्वा गयाश्राद्धं कृत्वा निजपितुस्तथा ॥ गङ्गाया विमलं चोद्वा स्कन्धदेशे द्विजोत्तमः ॥२॥ तोण्डमानपुरं प्राप्य प्रविवेश नृपालयम् ॥ राजानमब्रवीद्राजन्नाशीर्भिरभिनन्द्य च ॥३॥ दीर्घायुर्भव राजेन्द्र पुत्रवान् ज्ञानवान् भव ॥ त्वत्प्रसादेन राजेन्द्र कृतं गङ्गावगाहनम् ॥४॥ गङ्गावगाहनं राजन् कुरुष्वैतज्जलैः शुभैः ॥

हे राजेन्द्र ! राज्यकार्यमें लगा हुआ राजा कार्यभारसे ब्राह्मणकी स्त्रीको भूल गया। वह ब्राह्मण गंगा स्नान कर गयाजी पहुंचा। वहां अपने पिताका गया-श्राद्ध कर अपने कन्धोंपर गंगाके विमल जलको लेकर दो वर्षके बाद तोण्डमानके नगरमें आकर राज-महलमें प्रवेश किया, और हे राजन्! आशीर्वादोंसे अभिनन्दन कर वह राजासे बोला। हे राजेन्द्र! आप दीर्घायु हों। पुत्रवान और ज्ञानवान हों। हे राजेन्द्र! आपकीही कृपासे मैंने गङ्गास्नान किया है। हे राजन्! इस शुभ जलसे आप भी गङ्गास्नान कीजिये ॥१०४॥

एवमुक्तः स राजर्षिर्विस्मृतां ब्राह्मणीं स्मरन् ॥ ५ ॥ स्तब्धो बभूव चाकस्माद्दण्डाहत इवोरगः ॥ पद्मव्यूहे षड्रथिकैर्द्रोणकर्णपुरोगमैः ॥६॥ निरुद्धानां सैन्धवेन बालमर्जुननन्दनम् ॥ निहतं पश्यतां राजन् पाण्डवानां महात्मनाम् ॥७॥ वासुदेवमुखाच्छ्रुत्वा

## अस्थि तीर्थमें सपुत्र ब्राह्मणीका पुनर्जीवन लाभ [ पृष्ठ २६५ ]





त्वगास्थिरूपा सा चापि ताभि क्षिप्ता सरोवरे ।
प्राप्ता जीवं यथापूर्वं सुव्यञ्जितशरीरजा ॥
प्राप्ता च ब्राह्मणं प्रीता भर्तारं पुनरागतम् ।

चार्जुनस्य मनो यथा ॥ रामबाणेन विद्धस्य रावणस्य मनो यथा ॥ ८ ॥ तथैव तोण्डमानस्य हृदयं पर्यकम्पत ॥ धैर्येण मनसः स्वास्थ्यं प्राप्तवान् स प्रजापतिः ॥९॥

ऐसा कहे जानेपर वह राजर्षि भूली हुई ब्राह्मणोको स्मरण करते हुए दण्डसे मरा हुआ सांप जैसा स्तब्ध (चुप) हो गया; जिस प्रकार पद्मव्यूहमें द्रोण, कर्ण इत्यादि छः महारथियोंसे घिरा हुआ अर्जुनके पुत्र बालक अभिमन्युका, रुके हुए महात्मा पाण्डवोंके देखते हुए ही, मारा जाना कृष्णके मुखसे सुनकर अर्जुनका मन हुआ था; अथवा रामचन्द्रजीके बाणोंसे विधा हुआ रावणका मन हुआ था, उसी प्रकार तोण्डमानका हृदय भी कांपने लगा। तब मनमें धैर्य धारणकर वह राजा सुस्थिर हुआ ॥ १०९ ॥

तदाह भारतीं विप्रः किञ्चिद् दुःखसमन्वितः ॥ राजानं राजशार्दूलं पप्रच्छ कुशलं तदा ॥११०॥ भार्या मे गर्भिणी पूर्वं प्रसूता किं सुतं सुताम् ॥ न श्रूयते तयोर्वार्ता मम चित्तप्रतोषिणी ॥११॥ पुत्रो मे निर्गुणो राजन् सर्वदा क्रीडने रतः ॥ तटाके पुष्करिण्यां वा कूपे वा विपुलाम्भसि ॥ १२ ॥ तस्मान्मे मनसो दुःखं सदा भावि विशाम्पते ॥ भार्या मे राजशार्दूल मम दर्शनकारणात् ॥१३॥ न चागता वरारोहा कुतो मे भ्रमते मनः ॥ सुतं भार्यां चिन्तयामि दिवा नक्तं च गर्भिणीम् ॥ १४ ॥ तस्य विप्रस्य स श्रुत्वा राजा धैर्येण भारतीम् ॥ व्याहरत्तोण्डमानोऽपि यथा धीरो ह्यवर्त्तत ॥१५॥

तब कुछ दुःखी होकर वह ब्राह्मण वचन बोला और उस श्रेष्ठ राजासे कुशल पूछा। मेरी स्त्री पूर्वमें गर्भिणी थी, उसने पुत्र वा कन्या क्या जना है ? मैं अपने चित्तको संतोष देनेवाली उनकी वार्ता नहीं सुनता हूं। हे राजन्! मेरा पुत्र निर्गुण (बिना गुणका) है एवं तड़ाग, पुष्करिणी अथवा बहुत जलमें सदा खेलनेमें लगा रहता है। हे विशांपति स्वामी! इसलिये मेरे मनमें सदा चिन्ता रहती है। हे श्रेष्ठ राजा! मेरी सुन्दरी स्त्री मेरे दर्शनके लिये क्यों नहीं आयी। मेरा मन घूम रहा है। पुत्र और गर्भिणी स्त्रीकी सदा चिन्ता करता हूं। उस ब्राह्मणके कथनको धीरतापूर्वक सुनकर तोण्डमान बोला और धीर मनुष्यके समान स्थिर रहा ॥ ११५ ॥

तोण्डमान उवाच—

भो भूसुरकुलोत्पन्न मा भैषीः पुत्रकारणात् ॥ क्षेमं प्रसूता ते भार्या पुत्र्या पुत्रेण तिष्ठति ॥१६॥ बहवो योषितो विप्र मया दृष्टा इतः पुरा ॥ न सुतो न च ते भार्या मम दृष्टिपथं गता ॥१७॥

तोण्डमान बोले—हे ब्राह्मणकुलमे उत्पन्न ! पुत्रके कारण आप मत डरिये; आपकी भार्या सुखसे प्रसव करके पुत्री और पुत्रके साथ है । हे ब्राह्मण ! इसके पहले मैंने बहुतसी स्त्रियोंको देखा; किन्तु न तो आपका पुत्र ही और न आपकी स्त्री ही देख पड़ी ॥११७॥

अथ तद्वृत्तमखिलं श्रूयतां भूसुरोत्तम ॥ पूर्वेद्युर्गुरोर्वारः सम्प्राप्तस्तु गते दिने ॥१८॥ तद्दिने वेङ्कटेशस्य प्रसक्तमभिषेचनम् ॥ तद्दर्शनार्थं मे कन्याः सर्वा जग्मुर्महीसुर ॥ १९ ॥ ताभिः समेता ते भार्या पुत्रीपुत्रसमन्विता ॥ जगाम वेङ्कटं शैलं देवदर्शनकारणात् ॥१२०॥ अद्य श्वो वा परश्वो वा साऽऽगमिष्यति तेऽन्तिकम् ॥

हे ब्राह्मण ! अब उसके सब वृत्तान्तको सुनिये —पहले दिन शुक्रवार प्राप्त हुआ, उस दिन श्रीवेङ्कटेशका अभिषेक हो रहा था; हे ब्राह्मण ! उसके दर्शनके लिये मेरी सब कन्याएं गयीं । उन्हींके साथ आपकी स्त्री भी पुत्री और पुत्रके साथ भगवान्‌के दर्शनके लिये श्रीवेङ्कटाचलको गयी । आज, कल वा परसों वह आपके पास आ जायगी ॥१२१॥

इति तं सान्त्वयित्वा स गूढं पुत्रमभाषत ॥ २१ ॥ गच्छाद्य पुत्र भवनं विप्रपत्न्यास्तु शोभनम् ॥ अव्ययः शृङ्खलां छिन्धि प्रविश्यान्तर्गृहं पुनः ॥२२॥ तां दृष्ट्वा पुत्रसहितां शीघ्रमानय भूसुरीम् ॥

इस प्रकार ब्राह्मणको सान्त्वना देकर वह अपने पुत्रसे गुप्त रूपसे बोले—हे पुत्र ! अब धैर्य धारण कर उस ब्राह्मणकी स्त्रीके सुन्दर घरमें जाओ । उस शृङ्खलाको तोड़ दो और पुनः भीतर घरमें प्रवेश करके उस ब्राह्मणीको पुत्रके साथ शीघ्र ले आओ ॥१२३॥

स च गत्वाऽतिवेगेन कृतवाञ्जनकेरितम् ॥२३॥ ददर्श तत्रा-
स्थिमात्रं रुदन् गद्गदकण्ठवान् ॥ ध्रुवं नो वंशनालं तु छिन्नमूलं भ-
विष्यति ॥२४॥ इति सञ्चिन्तयन्नेत्य पितरं वाक्यमब्रवीत् ॥ भो
स्तात राजवंशस्य नाशकालः समागतः ॥२५॥ यतः सा ब्राह्मणी
पूर्णगर्भा सहसुता मृता ॥ अस्थिभूता निजे गेहे तदन्नाद्यविचा-
रणात् ॥२६॥

वह बहुत तेजीसे गया और पिताके कहे अनुसार सब कुछ किया, वहां केवल अस्थि मात्रको देखकर रोता तथा गद्गदकंठ हो यह सोचता हुआ कि—"अवश्य ही मेरे वंशका मूल नष्ट होगा"—पिताके पास आकर वचन बोला—"हे तात ! राजवंशके नाशका समय आ गया, क्योंकि वह पूर्ण गर्भवाली ब्राह्मणी पुत्रके साथ अन्न इत्यादिके अभावसे मरकर अपने घरमें अस्थि हो गयी है ॥१२४॥

अथ तोण्डमानप्रार्थनया भगवत्कृतकूर्मद्विजपुत्राद्युज्जीवनक्रमः

इत्युक्तो विप्रवर्याय पाकार्थं तण्डुलादिकम् ॥ ददौ धैर्येण रा-
जेन्द्रः स जगाम बिलान्तिकम् ॥२७॥

तोण्डमानकी प्रार्थनासे भगवानका कूर्म ब्राह्मणके पुत्रको जीवित करना

ऐसा कहे जानेपर उस राजाने धीरतासे पाकके लिये विप्रश्रेष्ठको चावल इत्यादि दिया और स्वयं बिलमार्गके पास गया ॥१२७॥

तस्मिन् गते विप्रमुख्ये राजा शेषाचलं ययौ ॥ पुत्रेण सहितो
राजा शरणार्थं रमापतेः ॥२८॥ पादद्वयं प्रपन्नस्तु रुदन्नासीत्
महीपतिः ॥ रुदन्तं च नृपं दृष्ट्वा श्रीनिवासस्तदाऽब्रवीत् ॥२९॥

उस श्रेष्ठ ब्राह्मणके चले जानेपर राजा शेषाचल लक्ष्मीपतिके शरणमें अपने पुत्रके साथ गये और दोनों चरणोंमें प्रणाम कर रोने लगे। रोते हुए उस राजाको देखकर श्रीनिवास बोले ॥१२९॥

श्रीभगवानुवाच—

अकाले च किमर्थं त्वमागतो नृपसत्तम ॥ राजराज किमर्थं

त्वं रोदनं कुरुषेऽधुना ॥१३०॥ धीरत्वं च धनुष्मत्त्वं प्रसिद्धं भूतले तव ॥ अद्य किं कारणं तात रोदने वद तन्मम ॥३१॥ इत्युक्तः श्रीनिवासेन नाब्रवीत्स च किञ्चन ॥ विदित्वा हृदयं तस्य जगाद वचनं ततः ॥३२॥

श्रीभगवान् बोले—हे नृपसत्तम ! इस समय आप किसलिये आये ? हे राजाओंके राजा ! आप रोते क्यों हैं ? आपकी धीरता और धनुषका धारण करना संसारमें प्रसिद्ध है; हे तात ! आज आपके रोनेका क्या कारण है, वो मुझसे बताइये । श्रीनिवासके इस प्रकार कहनेपर वह कुछ नहीं बोला; तब उसके हृदयकी सब बातोंको जानकर भगवान् पुनः बोले—॥१३२॥

श्रीभगवानुवाच—

विदितं हृदयं राजन्नातुरस्य तवाधुना ॥ त्वया कृतमिदं पापं मयैवाचरितं नृप ॥३३॥ निवर्तस्व च पापात्मन् किं करोमि नृपात्मज ॥ अकार्यं कर्म भूपाल त्वया कृतमरिन्दम ॥३४॥ अहं पापो दुराचारो नित्यदुःखसमन्वितः ॥ हाऽकाले कालमेष्यामि क्रूरं वा नरकं नृप ॥ ३५ ॥ आदातव्यं हि दौर्भाग्यं स्वभक्तस्य दुरात्मनः ॥ दरिद्रत्वं तथा भक्तस्यैवं धर्मविदो विदुः ॥३६॥ मयि ते भक्तिभावस्य लोपो नैव त्वया कृतः ॥ किं करोमि क्व गच्छामि क्रूरं पापं त्वया कृतम् ॥३७॥ तथाऽपि तव सौहार्दात्करिष्ये जीवितान् मृतान् ॥ कलौ वेङ्कटनाथेन नृपस्यास्य विमोचनम् ॥३८॥ कृतं महापातकिन इति कीर्तिर्भविष्यति ॥ पुत्रं प्रेषय भूपाल शापभीरुमरिन्दम् ॥३९॥ तेषां मृतानामानेतुं सर्वाण्यस्थीनि सम्प्रति ॥

श्रीभगवान बोले—हे राजन् ! आपके आतुर हृदयको मैंने जान लिया, तुमसे किया गया यह पाप मुझसे ही किया गया है । हे पापात्मा राजपुत्र ! लौट जाओ, मैं क्या करूं ? हे शत्रुओंको दमन करनेवाले ! हे पृथ्वीको पालन करनेवाले ! तुमसे यह अयोग्य कर्म किया गया है । मैं पापी हूं, दुराचारी हूं, सदा दुःखी हूं । हे राजन् ! हाय, मैं अकालहीमें कालको प्राप्त हूंगा अथवा कठिन नरकको । अपने खल भक्तकी

दुर्भाग्यता—दरिद्रता में ले देता हूं, ऐसा धर्मके जाननेवाले कहते हैं। मुझमें अपने भक्तिभावको तो तूने लोप नहीं किया है। क्या करूं, कहां जाऊं ? तूने कठिन पाप किया है तथापि तुम्हारी मित्रतासे उन मरे हुए जीवोंको जिलाऊंगा। कलियुगमें इस महापापी राजाकी मुक्ति श्रीवेङ्कटेशने की—ऐसी कीर्ति होगी। हे शत्रुदमन! हे राजा! उन मरे हुओंकी सब अस्थियोंको लानेके लिये शापसे डरे हुए अपने पुत्रको इसी समय भेजो ॥१४०॥

इति श्रीवेङ्कटपतेर्वाक्यं श्रुत्वा स चातुरः ॥१४० प्रेषयामास पुत्रं तान्यस्थीन्यानेतुमात्मनः ॥ स जगामातिवेगेन मृतानां भवनं नृप ॥४१॥ बद्ध्वा तदस्थिनिचयं वस्त्रेणाच्छाद्य भूपते ॥ नरयाने विनिःक्षिप्य स्वाच्छाद्य नृपनन्दनः ॥४२॥ तदा शेषगिरिं प्राप्य पितरं वाक्यमब्रवीत् ॥ तदस्थिमण्डलं तात सम्प्राप्तं विद्धि भूपते ॥४३॥ श्रीनिवासाय शान्ताय तदानीतं वदाधुना ॥ स पुत्रवचनं श्रुत्वा श्रीनिवासमभाषत ॥४४॥

श्रीवेङ्कटेशके इस वचनको सुनकर उस आतुर राजाने उन अस्थियोंको लानेके लिये अपने पुत्रको भेजा। वह भी मरे हुओंके घर बहुत वेगसे गया। हे राजन्! तब अस्थिसमूहको बांधकर, कपड़े से ढंककर, मनुष्योंकी सवारीपर अच्छी तरह ढंक कर वह राजपुत्र शेषाचलको पहुंचकर पितासे वचन बोला—हे तात! उस अस्थि-समूहको आया हुआ जानिये, हे राजन्! शान्त श्रीनिवास भगवान्‌को उसका आना कहिये। पुत्रके वचनको सुनकर राजा श्रीनिवाससे बोले ॥१४४॥

*राजोवाच—*

समानीतः पुत्रकेण मृतास्थिनिचयो हरे ॥ यथा ते जीवितं कृष्ण प्राप्नुवन्ति तथा कुरु ॥ ४५ ॥ एवमुक्तः श्रीनिवासस्तदस्थिनिचयं नृप ॥ कराभ्यां प्रतिगृह्याथ स्वोत्तरीये बबन्ध ह ॥४६॥ स्वामिपुष्करिणी यत्र तस्य पूर्वदिशि स्थितम् ॥ पाण्डुतीर्थं समासाद्य तस्य तीरमुपागतः ॥ ४७ ॥ तत्र किंचिद्देवखातमासाद्य मधुसूदनः ॥ तोण्डमानं च तत्पुत्रं त्यक्त्वा तीर्थमुपागतः ॥४८॥ आकण्ठजलमध्ये च निममज्ज जनार्दनः ॥ अस्थीनि तत्र निःक्षिप्य शिलायां तीर्थसन्निधौ ॥४९॥ प्रक्षाल्य विष्णुः

पस्पर्श स्वाञ्जलिक्षिप्तवारिणा ॥ जीवनं सन्निपतितं तदस्थिनिचये तदा ॥१५०॥ इति ते जीविता विष्णोः पाणिस्पर्शप्रभावतः ॥

राजा बोले--हे हरि! मेरे दुर्मोंकी अस्थिको पुत्र ले आया है; हे कृष्ण! जिस प्रकार वे जीवित हों सो कीजिये। हे राजन्! ऐसा कहे जानेपर श्रीनिवासने उस अस्थिसमूहको हाथसे ले अपने उत्तरीय (चादर) में बांध लिया और जहांपर स्वामिपुष्करिणी है उसके पूर्व दिशामें अवस्थित पाण्डुतीर्थको आकर, उसके तीरपर एक देवताओंका कुआं पाकर और तोण्डमान एवं उनके पुत्रको छोड़ कण्ठपर्यन्त जलमें स्नान किया। तीर्थके समीप ही शिलापर अस्थियोंको रखकर विष्णुने अपनी अञ्जलीमें रखे हुए जलसे उसको धोकर स्पर्श किया और तत्काल ही उस अस्थिसमूहमें जीवन आ गया, श्रीविष्णुके हाथके स्पर्शके प्रभावसे वे जी गये ॥१५१॥

ववृषुः पुष्पवर्षाणि तत्तीर्थे वासवादयः ॥ ५१ ॥ विस्मेरचित्ताः सर्वेऽपि दृष्टतत्तीर्थवैभवाः ॥ यदा तीर्थप्रभावेण जीविता मृतकाश्च ते ॥५२॥ तदा सर्वे सुरा राजन् ब्रह्मरुद्रेन्द्रपूर्वकाः ॥ अस्थितीर्थमिति ख्यातं तस्य नाम ददुर्मुदा ॥५३॥ येषामत्रास्थि निपतेन्नरके वसतामपि ॥ ते सर्वे स्वर्गमृच्छन्तु सद्य इत्यपि तेऽवदन् ॥५४॥ उज्जीवयन्स्सोऽथ मृतां सपुत्रां तां कूर्मभार्यां निजगर्भवासिताम् ॥ ददौ नृपायातिविमूढचेतसे दत्त्वाऽथ तं पार्थिवमाबभाषे ॥५५॥

इन्द्रादिकोंने उस तीर्थपर फूल बरसाये; सभी उस तीर्थके वैभवको देखकर विस्मय युक्त हुए। हे राजन्! जब उस तीर्थके प्रभावसे वे मरे हुए जी गये, तब ब्रह्मा, शिव, इन्द्र इत्यादिकोंने उसको प्रसिद्ध "अस्थि तीर्थ" नाम दिया और वे बोले—जिन नरकमें रहनेवालोंकी भी अस्थि यहांपर गिरे, वे सब साक्षात् स्वर्गको चले जायं। तत्पश्चात् उस हरिने पुत्रके साथ मरी हुई कूर्मकी स्त्री तथा उसके गर्भमें स्थित बच्चेको जिलाते हुए उस मूर्ख राजाको दे दिया और उस राजासे बोले ॥१५५॥

श्रीभगवानुवाच—

कृतोपकारस्य कृता ह्युपक्रिया शताधिका ते नृपते मयाधुना ॥ तवाग्रजस्यासतया कृता मया ह्युपक्रियेयं धरणीपते

तत्र ॥५६॥ इतः परं मौनमहं प्रपद्ये नात्यन्तमेकान्तिजनात्परेण ॥
केनापि कुर्वे सह वाग्विलासं साक्षात्कलावन्यमुखाद्धि भाषे ॥५७॥
गच्छ त्वदीयं पुरमद्य राजंस्तस्मै द्विजायाखिललोकसाक्षिणीम् ॥
भार्यां सपुत्रामतिभक्तियुक्तां प्रदाय राज्यं त्वमकण्टकं कुरु ॥५८॥

श्रीभगवान् बोले—हे नृपति ! आपके किये हुए उपकारका सौगुना उपकार ( बदला ) मैंने आज किया है; यह उपकार मैंने आपके बड़े भाईके प्रेमसे ही किया है; इसके बाद कलियुगमें मैं मौन ग्रहण करता हूं, अकेला होकर किसीके साथ भी मैं साक्षात् बातचीत नहीं करूंगा, दूसरेके मुखसे ही बोलूंगा। हे राजन् ! अब आप अपने नगरको जाइये; अत्यन्त भक्तियुक्त पुत्रके साथ उसकी भार्याको सब मनुष्योंके सामने उस ब्राह्मणको देकर आप अकण्टक राज्य कीजिये ॥१५८॥

अथ तोण्डमानाज्ञया स्वावासं प्रति सकुटुम्बकूर्मद्विजगमनम्

इत्युक्तो वासुदेवेन तत्पत्नीसहितो नृपः ॥ गत्वा च नगरं पुत्र-
सहितः कूर्ममब्रवीत् ॥५९॥ भूदेव तव भार्येयं सुपुत्री पुत्रसंयुता ॥
सम्प्राप्ता दैवयोगेन तां गृहाण द्विजोत्तम ॥१६०॥ इत्युक्त्वा ससुतां
पत्नीं स विप्राय न्यवेदयत् ॥

तोण्डमानकी आज्ञासे कुटुम्बके साथ कूर्म ब्राह्मणका घरको जाना

वासुदेवसे इस प्रकार कहे जानेपर पुत्रके साथ वह राजा ब्राह्मणकी पत्नीके साथ नगरको जाकर कूर्मसे बोले—"हे ब्राह्मण ! यह आपकी भार्या पुत्री और पुत्रके साथ दैवयोगसे मिल गयी है; हे ब्राह्मण ! इसको ग्रहण कीजिये। ऐसा कहकर पुत्री सहित पत्नीको उस ब्राह्मणको दिया ॥१६१॥

वृत्तान्तमखिलं ज्ञात्वा पत्न्या राजमुखाद् द्विजः ॥६१॥ राज्ञः
समक्षं पप्रच्छ पत्नीं शिशुसुतान्विताम् ॥ क्व गताऽसि महाभद्रे
यथावत्कथ्यतामिति ॥६२॥

पत्नी और राजाके मुखसे सब वृत्तान्त सुनकर उस ब्राह्मणने राजाके सामने ही पुत्र और पुत्रीके साथ उस पत्नीसे पूछा—हे महाभद्रे ! कहां गयी थी, सो ठीक-ठीक कहो ॥१६२॥

महालक्ष्मीरुवाच—

किं वदिष्यामि हे स्वामिन्देवमायां दुरत्ययाम्॥ सात्त्विका राजसाश्चैव तमःप्रकृतयस्तथा ॥६४॥

महालक्ष्मी बोली—हे स्वामी ! भगवानकी कष्टसे पार होनेकी मायाको क्या कहूं ? उसके उदरमें मैंने विचित्र ही लोकका विस्तार देखा, लोक एवं अलोक ( पर्वत ) को मैंने देखा और सात्विक, राजस और तामस प्रकृतिके ब्रह्मा इत्यादिको भी देखा ॥१६४॥

राघव उवाच—

ताताद्भुतं मया दृष्टं त्रिणेत्राणां गणस्तथा ॥

राघव बोला—हे तात ! मैंने अद्भुत तीन नेत्रवालोंके गणोंको देखा ॥१६५॥

शिशुरुवाच—

सागराः सप्त मे तात दृष्टिमार्गमुपागताः ॥६५॥ गुहागिर्यटवीवृक्षा देवदानवराक्षसाः ॥

शिशु बोला—हे तात ! सात समुद्र, गुहा, पर्वत, वन, वृक्ष, देवता, दानव और राक्षस इत्यादि मुझे दृष्टि-गोचर हुए ॥१६६॥

इत्युक्तो लज्जितोऽवादीत्पत्नीसुतशिशून्द्विजः ॥ धिङ्मे जन्मतपो घोरं धिग्वेदाध्ययनं तथा ॥६६॥ नारायणस्याखिललोकधाम्नो निवासभूतस्य चराचराणाम् ॥ दृष्टं भवद्भिर्जठरे विचित्रं भूगोलमुख्याखिललोकजालम् ॥६७॥ त्रिणेत्रमुख्यैः सह चीर्णपूर्णपुण्यैरपीदं मनुजैर्न लभ्यम् ॥६८॥ इत्येवं संस्तुवन्स्वीयान् पत्नीसुतशिशून्द्विजः ॥ राजानं चापि संस्तुत्य देशं गन्तुं प्रचक्रमे ॥६९॥

ऐसा कहे जानेपर वह ब्राह्मण लजाकर पत्नी, पुत्र और बच्चेसे बोला—मेरे जन्म और घोर तपस्याको धिक्कार है, और वेदके अध्ययनको भी धिक्कार है। चराचरके निवास भूत एवं सब लोकोंके धाम नारायणके उदरमें तुम लोगोंने भूगोल इत्यादि सारे लोकोंके जालको देखा है। पूर्ण पुण्यका आचरण किये हुए शिव इत्यादि

जीवराशिसे भी यह प्राप्य नहीं है। इस प्रकार अपनी पत्नी, पुत्र और बच्चेकी प्रशंसा करता हुआ वह ब्राह्मण राजाकी भी प्रशंसा करके देश जानेकी तैयारी करने लगा ॥१६८॥

*राजोवाच*—

अहो भाग्यमहो भाग्यं त्वत्पत्नीसुतयोः शिशोः ॥ यद् दृष्टं श्रीनिवासस्य जठरे सर्वमद्भुतम् ॥१७०॥ इत्युक्तो नृपवर्येण सहभार्यः सुतान्वितः ॥ जगाम विप्रमुख्योऽसौ रङ्गक्षेत्रं स्वकाश्रमम् ॥ ७१ ॥ श्रीनिवासप्रसादेन तोण्डमान्भक्तिसम्भ्रमात् ॥ स विप्रः सहितः पुत्रभार्याभ्यां भवनं ययौ ॥७२॥

राजा बोले—धन्य भाग्य है। आपकी पत्नी, पुत्र और बच्चेका धन्य भाग्य है जो उन्होंने श्रीनिवासके उदरमें सब अद्भुतको देखा है। उस श्रेष्ठ राजासे ऐसा कहे जानेपर भार्या और पुत्रके साथ वह ब्राह्मण अपने आश्रम रंगक्षेत्रको गया—श्रीनिवासकी प्रसन्नतासे तोण्डमानकी भक्तिके फल, पुत्र और भार्याके साथ वह ब्राह्मण अपने घरको गया ॥१७२॥

विसृज्य विप्रं भूपालः सकुटुम्बं सपुत्रकम् ॥ दध्यौ चित्रं हरेः कर्म निग्रहं तस्य चात्मनि ॥ ७३ ॥ व्यचिन्तयद्वेङ्कटनाथवैभवं तीर्थानुभावं द्विजदेवभक्तः ॥

कुटुम्ब और पुत्रके साथ उस ब्राह्मणको विदा करके ब्राह्मण और देवताओंके भक्त उस राजाने वेङ्कटेशके उस अद्भुत काम, उनसे दिये गये अपने दण्ड, श्रीवेङ्कटेशके विभव और तीर्थके प्रभावका विचार किया ॥१७४॥

करोमि किं वेङ्कटनाथतुष्टये दास्यामि किं तस्य हरेः प्रपत्तये ॥७४॥ इति चिन्तापरो भूत्वा विप्रान्वेदविदोऽब्रवीत् ॥७५॥

श्रीवेङ्कटेशजीकी प्रसन्नताके लिये मैं क्या करूं, उस हरिकी प्राप्तिके लिये मैं क्या दूं, इस प्रकारकी चिन्ता करते हुए वह राजा वेदके जाननेवाले ब्राह्मणोंसे बोले ॥१७६॥

अथाङ्गिरसोक्त्या श्रीनिवासाय तुलसीमर्पयन्तं तोण्डमानं प्रति भगवदुक्तिः

*तोण्डमान उवाच*—

भूदेव देवतुष्ट्यर्थं क उपायो ह्यनामयः ॥ कथं तुष्यति गोवि-

न्दो वद मे गुरुसत्तम ॥७६॥ राज्ञस्तु वचनं श्रुत्वा नृपमाङ्गिरसो गुरुः ॥ अब्रवीच्छ्रीनिवासस्य निग्रहाद्भीतमातुरम् ॥७७॥

## तुलसी अर्पण करते हुए तोण्डमानके प्रति श्रीनिवासका कहना

तोण्डमान बोले—हे ब्राह्मण ! भगवान्‌की प्रसन्नताके लिये कौनसा दोषरहित उपाय है ? हे श्रेष्ठ गुरु ! गोविन्द किससे प्रसन्न होते हैं, सो मुझसे कहिये । राजाके वचनको सुनकर गुरु आंगिरसने श्रीनिवासके निग्रहसे डरे और घबड़ाये हुए राजासे कहा ॥ १७७ ॥

गुरुरुवाच—

तदनुग्रहसिद्ध्यर्थं तत्पूजां कुरु भो नृप ॥ सहस्रनामभिर्दिव्यैः सहस्रैस्तुलसीदलैः ॥७८॥ तत्प्रीतिहेतुस्तुलसी तस्मात्त्वं पूजयाच्युतम् ॥ तेनापरोक्षमायाति तव वेङ्कटवल्लभः ॥७९॥

गुरु बोले—हे राजन् ! उसकी कृपाकी सिद्धिके लिये दिव्य सहस्र नामका जप तथा हजार तुलसीके दलसे पूजन करो । तुलसी उनकी प्रीतिका कारण हैं; इसलिये आप उनका ( भगवान् ) पूजन करें; उससे श्रीवेङ्कटेश आपके प्रत्यक्ष होंगे ॥ १७९ ॥

ततस्तद्वचनं श्रुत्वा तच्चकार तथा नृपः ॥ तुलसीदलसाहस्रं स्वर्णरत्नविनिर्मितम् ॥१८०॥ वेङ्कटेशात्मकैर्नामसहस्रैस्तत्पदेऽर्पयन् ॥ क्रमेण मासत्रितयं पूजां तस्य चकार सः ॥८१॥ एवं पूजां कृतवति भूपाले भूरिविक्रमे ॥ त्यक्तवान्न च वैमुख्यं नारायणगिरीश्वरः ॥८२॥ तदा स राजा दुःखेन सर्वज्ञं वाक्यमब्रवीत् ॥

तदनन्तर उनके वचनको सुनकर राजाने वैसा ही किया । स्वर्ण और रत्नसे बने हुए हजार तुलसीदलोंको क्रमसे श्रीवेङ्कटेशके सहस्र नामसे उनके चरणोंमें अर्पण करते हुए राजाने तीन मासतक उनकी पूजा की । इस प्रकार अत्यन्त पराक्रमी राजाके पूजा करनेपर भी नारायण पर्वतके स्वामीने वैमुख्य ( मौन ) नहीं छोड़ा । तब वह राजा सर्वज्ञ भगवानसे दुःखपूर्ण वचन बोले ॥ १८२ ॥

तोण्डमान उवाच—

भक्तानामपराधान्न गणयन्ति गुणाधिकाः ॥८३॥ क्षमस्व मम

दौरात्म्यं भक्तस्य पुरुषोत्तम ॥ वरदाने वासुदेव भवाञ्छ्रेष्ठतमो मतः ॥८४॥ दयां कुरु दयासिन्धो भक्तोपरि भयापह ॥

तोण्डमान बोले—अधिक गुणवाले पुरुष भक्तोंके अपराधोंको नहीं गिनते हैं। हे पुरुषोत्तम! मुझ भक्त की दुष्टताको आप क्षमा कीजिये। हे वासुदेव! वर देनेमें आप सबसे श्रेष्ठ माने जाते हैं। हे दयाके समुद्र, भयनाशन! भक्तके ऊपर दया कीजिये ॥१८५॥

इत्युक्तस्तोण्डमानेन भगवान् वेङ्कटेश्वरः ॥८५॥ तदाह भारतीं राजन्नाकाशपथमाश्रितः ॥ भक्ताश्च बहवः सन्ति नास्ति त्वत्सदृशो भुवि ॥८६॥ कर्म कृत्वा सुघोरं तु ब्रह्मस्त्रीपुत्रघातुकम् ॥ प्रपित्सासि कथं पारं दुःखाद्राजकुमारक ॥८७॥ त्वदग्रजोपकारेण जीवितं तु मया कृतम् ॥ एवमाकाशगां वाणीं श्रुतवान् राजसत्तमः ॥८८॥ तदाऽऽह देवदेवेशं राजा मोहवशं गतः ॥

हे राजन्! तोण्डमानके इस प्रकार कहनेपर श्रीवेङ्कटेश्वर आकाशमें होकर वचन बोले—पृथ्वीपर भक्त बहुत हैं, पर तुम्हारे समान कोई नहीं; तथापि ब्राह्मणकी स्त्री और पुत्रका घातरूप यह घोर कर्म करके, हे राजकुमार! दुःखसे किस प्रकार पार पाओगे? तुम्हारे बड़े भाईके उपकारके ही कारण मैंने उनको जिलाया है। इस प्रकारकी आकाशवाणी सुनकर राजा मोहके वशीभूत हो श्रीनिवाससे बोले ॥ १८६ ॥

राजोवाच—

कृतोपकाराः पुरुषा न वदन्ति कृतं हरे ॥ को वदेद्धि कृतां सेवां मूढोऽपि गुणवर्जितः ॥ मां विना न हि ते भक्तास्त्रिषु लोकेषु विद्यते ॥८९॥ को वा पुराणपुरुष त्वय्येकान्तरतः सदा ॥ भक्तानामग्रणीश्चाहं दयालूनां त्वमग्रणीः ॥१९०॥ एवं गर्वोक्तिमाकर्ण्य तूष्णीमासीद्रमापतिः ॥ ततो भूयोऽतिभक्त्याऽयं पूजयामास माधवम् ॥९१॥ सौवर्णरत्नखचिततुलसीकुसुमस्रजैः ॥

राजा बोले—हे हरि! उपकार करनेवाले पुरुष अपने किये हुए (उपकार) को स्वयं नहीं कहते; गुणसे रहित कौन मूर्ख अपनी की हुई सेवाको कहता है? मेरे समान आपका भक्त तीनों लोकमें नहीं है। हे पुराण पुरुष! आपमें सदा लगा हुआ मेरे अतिरिक्त दूसरा कौन है? भक्तोंमें आगे मैं हूं एवं दया करनेवालोंमें आगे

आप हैं। इस प्रकार अभिमानसे भरा हुआ वचन सुनकर लक्ष्मीपति चुप हो गये। पश्चात् अत्यन्त भक्तिसे इन्होंने पुनः रत्न जड़े हुए सुवर्णके तुलसीके फूलके समूहसे श्रीनिवासकी पूजा की ॥ १६२ ॥

अथ कुर्वग्रामस्थभीमाख्यकुलालोदन्तः

ततः कदाचिदद्राक्षीत्तोण्डमान्नृपसत्तमः ॥९२॥ सौवर्णरत्नखचिततुलसीकुसुमोपरि ॥ संस्थितां मृन्मयीं श्यामां तुलसीकुसुमावलिम् ॥९३॥ ततः कदाचिन्नृपतिर्निरस्तां च सुदूरतः ॥ सौवर्णरत्नखचिततुलसीकुसुमावलिम् ॥ ९४ ॥ ददर्श मृन्मयीं चैव सुलग्नां हरिपादयोः ॥ श्यामां सुरुचिरामार्द्रां तुलसीकुसुमावलिम् ॥९५॥ दृष्ट्वैवं श्रीपतेः स्वामिन्निग्रहं चिन्तयन्नृपः ॥ मुक्तकण्ठं रुदन्नूचे तोण्डमान् भृशदुःखितः ॥९६॥ भगवन् क्रूरपापं मामनाथं किमुपेक्षसे ॥ केन भक्ताग्रगण्येन स्वीकरोषि समर्पिताम् ॥९७॥ मृन्मयीमेव सम्प्रीत्या तुलसीकुसुमावलिम् ॥ इत्येवमुक्तो भगवांस्तोण्डमानेन वै हरिः ॥ ९८ ॥ राजानं रमणीयाङ्ग प्रत्यभाषत भूपते ॥

कुर्व नामक ग्रामके भीम नामक कुलालकी कथा

पश्चात् किसी समय उस श्रेष्ठ राजा तोण्डमानने रत्नजटित सुवर्णके तुलसीके पत्रोंपर मिट्टी लिपटी हुई काली तुलसीके फूलोंको देखा। तत्पश्चात् किसी समय, कुछ काल बीतनेपर रत्न जड़े हुए सुवर्णकी तुलसीको दूर हटायी एवं मिट्टी लिपटी हुई तथा सुन्दर भीगी हुई तुलसीको हरिके चरणोंपर चढ़ा हुई देखा। हे स्वामी! यह देखकर ही लक्ष्मीपतिके निग्रह ( दण्ड ) का विचार करते हुए वह राजा तोण्डमान बहुत दुःखी होकर रोते हुए मुक्तकंठसे बोले—हे भगवन्! क्रूर एवं पापी मुझ अनाथकी आप क्यों उपेक्षा करते हैं? किस श्रेष्ठ भक्तद्वारा समर्पण की हुई मिट्टी लिपटी हुई तुलसीको प्रीति पूर्वक आप स्वीकार करते हैं? हे राजन्! तोण्डमानसे इस प्रकार कहे जानेपर श्रीनिवास भगवान् सुन्दर अङ्गवाले राजासे बोले ॥१९९॥

अथ तोण्डमानं प्रति भगवज्ज्ञापितभीमाख्यकुलालोदन्तः

*श्रीभगवानुवाच —*

भक्ताश्च बहवः सन्ति त्रिगुणास्त्रिविधात्मकाः ॥९९॥ तेषां मध्ये

दरिद्रोऽस्ति कुलालो भीमनामकः ॥ अत्रैवोत्तरदिग्भागे राजन् योजनदूरतः ॥२००॥ स कुलालोऽतिभक्त्यैव भित्तिकाविलमध्यतः ॥ दारुभूतं च मां शूद्रः प्रत्यहं पूजयत्यसौ ॥ १ ॥ स्वस्थः शान्तः स्वकृत्यं परिसमाप्य हरिप्रियः ॥ स्नात्वा विधिवदात्मज्ञो मृन्मयैस्तुलसीसुमैः ॥२॥ तद्भक्त्या परितुष्टेन तदङ्गीक्रियते मया ॥ तत्र गत्वा प्रतिदिनं तं दृष्ट्वा तत्प्रियां तथा ॥३॥ राजन् बहुविधाः सन्ति मद्भक्ताश्च विरागिणः ॥ यदुक्तं तु त्वया पूर्वमेकोऽहं भक्तिमानिति ॥ तद्वचस्त्वदहङ्कारमहोच्छ्रायविजृम्भितम् ॥४॥

### भीम नामक कुलालका वृत्तान्त

श्रीनिवास बोले—तीन गुणवाले तीन प्रकारके भक्त बहुतसे हैं। हे राजन्! उनमें भीम नाम एक दरिद्र कुलाल यहांसे उत्तर दिशामें एक योजन दूरपर है। वह शूद्र कुलाल अपने कृत्यको समाप्त कर स्वस्थ,शान्त एवं आत्मज्ञानी होकर, विधिपूर्वक स्नान कर, अत्यन्त भक्तिसे मिट्टी लिपटी हुई तुलसीके फूलसे भित्तिके विलके द्वारा मुझ दारुरूपकी प्रति दिन पूजा करता है। उसकी भक्तिसे सन्तुष्ट होकर, वहां जाकर और उसकी प्रियाको देखकर मैं उसे अंगीकार करता हूं। हे राजन्! मेरे विरागी भक्त बहुत तरहके हैं; तुमने जो पहले यह कहा कि एक मैं ही भक्त हूं, यह वचन अहंकार और गर्वसे पूर्ण है ॥२०४॥

तदुक्तमाकर्ण्य विनम्रमस्तकः सन्त्यज्य चैत्यं तदनु प्रजापतिः॥
पद्भ्यां जगामोज्झितराजगौरवस्तदाऽस्य मार्गं प्रणमन्मुहुर्मुहुः॥५॥

उनके वचनको सुनकर राज्यके गौरवको छोड़े हुए वह राजा मस्तक नीचे कर धीरे-धीरे प्रणाम कर एवं चैत्यको छोड़कर उस मार्गसे बीच-बीचमें पीछे देखते हुए पैदल गये ॥ २०५ ॥

### अथ भीमाख्यकुलालनगरं प्रति तोण्डमानगमनम्

तं चक्रवर्तिनं दृष्ट्वा पद्भ्यां धावन्तमातुरम् ॥६॥ पृच्छन्तं तस्य भवनं परितो घटकारिणः ॥ प्राहुस्तं भगवद्भक्तं कुलालं मार्गवर्त्तिनः ॥७॥ वसत्यत्रैव राजन् स कुलालो भीमनामकः ॥ भक्तिर्यस्य हरौ कृष्णसेवां नित्यं करोति यः ॥८॥

## भीम नामक कुलालके नगरमें तोण्डमानका जाना

उस चक्रवर्ती राजाको, घबड़ाये, पैदल दौड़ते एवं उस कुलालके घरको चारों ओर पूछते हुए देखकर मार्गमें रहनेवालोंने भगवद्भक्त कुलालको बतलाया। हे राजन्! वह भीम नामक कुलाल जिसकी भक्ति भगवान्में है और जो सदा कृष्णकी सेवा करता है, यहींपर रहता है ॥२०८॥

एवमुक्तः स लोकैश्च पथिकैः पृथिवीपतिः ॥ जगाम तस्य भवनं तोण्डमान् राजसत्तमः ॥९॥ तद्गृहाद्बाहिरास्थाय स्तुतवांस्तद् गृहं नृपः॥ द्वारतोरणमासाद्य पपात गतविभ्रमः ॥२१०॥ ततः कुलालो भ्रमितो जनैर्विज्ञापितस्ततः ॥ ददर्श राजशार्दूलं पतितं प्राङ्गणे तदा ॥११॥

पथिकगणसे इस प्रकार कहे जानेपर वह श्रेष्ठ राजा तोण्डमान उसके घर गये। उसके घरके बाहर ठहरकर राजाने उसके घरकी स्तुति की और द्वारके तोरणके पास आकर वह राजा बेहोश होकर गिर पड़े। उस भ्रममें पड़े हुए उस कुलालने,लोगोंसे कहे जानेपर, उस श्रेष्ठ राजाको अपने आंगनमें गिरा हुआ देखा ॥२११॥

किमिदं भो महत्कष्टं राजाऽसौ पतितः कुतः ॥ ममापराधो नास्त्यत्र तथाऽपि यमदण्डने ॥१२॥ शक्तोऽसौ राजशार्दूलः सज्जोऽहं तस्य कर्मणि ॥ नैवेद्यार्थं हरेस्तस्य घटानां शतकं मम ॥१३॥ कथितं तेन भूपेन तदद्य प्रददामि तान् ॥ एवं शूद्रे चोक्तवति राजा संज्ञामुपेयिवान् ॥१४॥ कोऽसौ भीमो हरेर्भक्तः कुलालः कृष्ण तोषणः ॥ तत्पादयुगलं वन्दे सततं साधुसम्मतम् ॥१५॥

हाय! यह बड़ा भारी कष्ट क्या है? यह राजा क्यों गिरा? इसमें मेरा अपराध नहीं है; तथापि यह राजा यमके ऐसा भी दण्ड देनेमें समर्थ है। साक्षात् मैं ही भगवान्के नैवेद्यके लिये उस राजाके कहनेपर सौ घड़े उनको आज ही दूंगा। इस प्रकार शूद्रसे कहे जानेपर राजा सचेत हुए और बोले—भीम नामक कृष्णको प्रसन्न करनेवाला भगवान्का भक्त कुलाल कौन है? साधुसम्मत उसके चरणयुगलको सदा मैं प्रणाम करता हूं ॥२१५॥

अथ स्वपुरस्तात्प्रादुर्भूतं भगवन्तं प्रति कुलालस्तुतिः

एवं वदति राजर्षौ भगवान् भक्तवत्सलः ॥ आविर्बभूव पुरतः

कुलालस्य महात्मनः ॥१६॥ आविर्भूतं हरिं दृष्ट्वा कुलालो भक्ति-
संयुतः ॥ तुष्टाव हर्षपुष्टाङ्गः श्रीनिवासं निरामयम् ॥१७॥

आगे प्रगट हुए भगवान्‌की कुलालके द्वारा की हुई स्तुति

राजर्षिके इस प्रकार कहते ही भक्तवत्सल भगवान् महात्मा कुलालके सम्मुख प्रगट हुए । प्रगट हुए भग-
वानको देखकर, हर्षसे पुष्ट अङ्गवाला होकर कुलाल भक्तिपूर्वक निर्दोष श्रीनिवासकी स्तुति करने लगा ॥२१७॥

त्वद्धाम वैकुण्ठपुरं महात्मंस्त्वद्वल्लभा सागरनन्दिनी च ॥ त्वन्ना-
भिजातो हि पितामहोऽपि किं त्वां स्मरामीश कुलालजन्मा ॥१८॥
त्वत्पादसंभवा देवी साक्षाद्भागीरथी शुभा ॥ तव पुत्रीं वदति तां
चतुर्वेदमयो विधिः ॥ १९ ॥ तवासनं सदा देवा वदन्ति फणिनं
विभो ॥ सहस्रवदनं शेषं सुपर्णं वाहनं विदुः ॥ २२० ॥ नक्षत्र-
माला तव दन्तपङ्क्तिर्विद्युत्प्रकाशस्तव देहकान्तिः ॥ महीधरा
मेरुहिमाद्रिमुख्यास्त्वदस्थिभूताः पुरुषोत्तमाद्य ॥२१॥ तवाक्षिणी
भानुविधू च विष्णो विराट्पदं त्वां शरणं प्रपद्ये ॥ २२ ॥

हे महात्मन् ! आपका धाम श्रीवैकुण्ठ है, आपकी प्रिया समुद्रकी पुत्री लक्ष्मी हैं; और ब्रह्मा आपकी
नाभीसे पैदा हुए हैं; हे स्वामी ! कुलालके घरमें जन्म लेनेवाला मैं आपको क्या स्मरण करूं ? आपके चरणसे
साक्षात् शुभ भागीरथी उत्पन्न हुई हैं; चारों वेद रूप ब्रह्मा उसको आपकी पुत्री कहते हैं । हे प्रभु !
देवतागण हजार मुखवाले शेष (सर्प) को आपका सब समयका आसन और गरुड़को वाहन कहते हैं । हे सनातन !
हे पुरुषोत्तम ! नक्षत्रोंकी श्रेणियां आपकी दन्तश्रेणी हैं; विद्युतका प्रकाश आपके देहकी चमक है; मेरु और
हिमालय इत्यादि पर्वत आपके अस्थिभूत हैं । आपके नेत्र सूर्य और चन्द्रमा हैं । हे विष्णु ! विराट पद आपके
शरणमें आया हूं ॥२२२॥

एवं स्तुवति शूद्रे तं प्रसन्ना कमलालया ॥ जगद्धात्री जगा-
देवं पुरुषं परमेश्वरम् ॥२३॥ क्वायं कुलालः पुरुषोत्तमास्य कथं
बभूव त्वयि भक्तिरीदृक् ॥ का जातिरस्य क्व च सद्गुणास्ते किम-
द्भुतं भोः करुणाम्बुराशे ॥ २४ ॥ इत्युक्तस्तु जगद्धात्र्या गरुडं
प्रत्यभाषत ॥२५॥

उस शूद्रके इस प्रकार स्तुति करने पर जगद्धात्री श्रीलक्ष्मीजी प्रसन्न हुईं और परमेश्वर पुरुषसे इस प्रकार बोलीं—हे पुरुषोत्तम ! कहां तो यह कुलाल !! और इसकी भक्ति आपमें इस प्रकार—यह कैसे हुई । हे करुणासागर ! इसकी जाति क्या है ? इसके सद्गुण कहां हैं ? यह आश्चर्ययुक्त कौन है ? जगद्धात्री लक्ष्मीजीके इस प्रकार पूछे जानेपर भगवान्‌ने गरुड़से कहा ॥२२५॥

*श्रीभगवानुवाच—*

**तमानयातिवेगेन मत्समीपं कुलालजम् ॥**

*श्रीनिवास बोले—उस कुलाल पुत्रको मेरे पास बहुत शीघ्र ले आओ ॥२२६॥*

**इत्युक्तो गरुडो वेगादानिनाय च शूद्रजम् ॥२६॥ इत एही-
ति सम्भाष्य समीपं परमात्मनः ॥ स नत्वा शिरसा देवं प्रत्यभा-
षत माधवम् ॥२७॥**

इस प्रकार कहे जानेपर गरुड़ जल्दीसे उस शूद्रके पुत्रको—'यहाँ आओ'—ऐसा कहकर, ले आये । भगवान्‌के पास आकर वह कुलाल भगवान्‌को शिरसे प्रणाम कर उनसे बोला ॥२२७॥

*कुलाल उवाच—*

**किमर्थमागमो देव गृहं मे शूद्रजन्मनः ॥ न चाहं विदुरो दे-
वो न चाहं शबरी प्रभो ॥२८॥ न चाहं गजराजेन्द्रो न चोद्धव-
विभीषणौ ॥ किं देयमस्ति मद्गेहे त्वदर्थं पुरुषोत्तम ॥२९॥**

*कुलाल बोला—हे देव ! मुझ कुलाल जातिके घरमें आपका आना किसलिये हुआ ? हे देव ! न तो मैं विदुर हूं, न शबरी हूं, न गजेन्द्र हूं, और न उद्धव वा विभीषण ही हूं, हे पुरुषोत्तम ! आपको देनेके योग्य मेरे घरमें क्या है ? ॥२२९॥*

**वदत्येवं कुलाले तु तस्य पत्नी तमालिनी ॥ प्रासादयच्च गो-
विन्दं द्रौपदीव जनार्दनम् ॥२३०॥**

कुलालके इस प्रकार कहते ही उसकी पत्नी तमालिनी गोविन्दको प्रसन्न करने लगी, जैसे द्रौपदीने जनार्दन श्रीकृष्णको ॥२३०॥

*तमालिन्युवाच—*

**अनाथ नाथ गोविन्द बुद्धिस्त्वय्येव वर्तते ॥ न दानं मन्त्र-**

श्रीनिवासजीका कुलाल दंपतीको सायुज्य देना [ पृष्ठ ५६२ ]



विमानं प्राप्तमालोक्य श्रीनिवासः सतां गतिः ।
स्वाङ्गरूढं ददौ तस्य शङ्खचक्रं च कौस्तुभम् ।
रमाया भूषणं तावत्समालिङ्ग्याथ सन्ददौ ॥

• मार्गं तु न जाने कर्मनिर्णयम् ॥ ३१ ॥ अशौचकुलजातानां कुतो वेदः कुतस्तपः ॥ भक्त्या मे परितुष्टः सन्मद्भर्तुश्च विशेषतः ॥३२॥ मया पाचितमन्नं च यावनालकुलोद्भवम् ॥ यथेष्टं भुङ्क्ष्व मद्दत्तं सहामोदरसादरम् ॥३३॥

तमालिनी बोली—हे अनाथोंके नाथ ! हे गोविन्द ! मेरी बुद्धि आप ही में है; न तो मैं मंत्रके मार्गोंको जानती हूं और न कर्मोंका निर्णय ही जानती हूं। अछूत कुलमें उत्पन्न हुएको कहां वेद और कहां तप है। मेरी भक्ति एवं विशेषकर मेरे पतिकी भक्तिसे प्रसन्न होकर मेरे पकाये हुए अन्न एवं मेरे दिये हुए कमलनालके अन्नको जितना चाहिये उतना भर पेट आदरपूर्वक भोजन कीजिये ॥ ३३ ॥

अथ भगवत्कृतभीमाख्यभक्तोपचाराभ्युपगमः

इत्थमुक्तो जगद्योनिस्तया भक्त्या तमालया ॥ कमलामुखमालोक्य जहास जगदीश्वरः ॥ ३४ ॥ सुप्रसन्नोऽथ भगवांस्तामुवाच तमालिनीम् ॥ अवश्यमन्नं भोज्यं ते भक्त्या दत्तं तमालिनि ॥३५॥ इत्येवमुक्त्वा भगवान् भक्तवात्सल्यवारिधिः ॥३६॥ रमासमेतो रमणीयविग्रहः कुलालवर्येण कुलालजायया ॥ अभुङ्क्त दत्तं च तदन्नमुत्तमं भुक्त्वा तयोश्च प्रददौ पदं स्वकम् ॥३७॥

भगवान्का भीम नामक कुलालकी भक्तिके उपचारोंको ग्रहण करना

संसारकी उत्पत्तिके कारण भगवान श्रीनिवास उस भक्त तमालिनीसे इस प्रकार कहे जानेपर लक्ष्मीके मुखकी ओर देखकर हंसे। पश्चात अत्यन्त प्रसन्न होकर वह तमालिनीसे भगवान बोले—हे तमालिनी ! भक्तिसे दिये गये तुम्हारे अन्नको अवश्य मैं भोजन करूंगा। इतना कहकर भक्तवत्सलताके समुद्र तथा सुन्दरमूर्ति श्रीनिवासने कुलाल और उसकी स्त्रीसे दिये गये उस उत्तम अन्नको लक्ष्मीके साथ भोजन किया और उन दोनोंको अपना धाम दिया ॥ ३७ ॥

एतत्कौतुकमालोक्य ब्रह्मेशानपुरोगमाः ॥ ३८ ॥ तुष्टुवुर्हृष्टमनसः स्रष्टारं सर्वदेहिनाम् ॥ देवदुन्दुभयो नेदुः खात्पेतुः पुष्पवृष्टयः ॥३९॥ एतस्मिन्नेव समये विमानं प्राप्तमुत्तमम् ॥ विमानं

प्राप्तमालोक्य श्रीनिवासः सतां गतिः ॥२४० स्वकिरीटं ददौ तस्य शङ्खचक्रे च कौस्तुभम् ॥ पीताम्बरमलङ्कारं कुलालस्य महात्मनः ॥४१॥ रमाया भूषणं तावत्तमालायाश्च सन्ददौ ॥

इस कौतुकको देखकर ब्रह्मा, शिव इत्यादि प्रसन्न मनसे सब जीवोंके कर्त्ताकी स्तुति करने लगे और देवतागण दुंदुभी बजाकर आकाशसे फूल बरसाने लगे। इसी समय एक उत्तम विमान आया। विमानको आया हुआ देखकर सन्तोंकी गति श्रीनिवासने उस महात्मा कुलालको अपना किरीट, शंख, चक्र, कौस्तुभ, पीताम्बर और अलङ्कार दिया एवं आभूषणोंको लक्ष्मीके उस तमालिनीको दिया ॥२४२॥

अथ भगवदनुग्रहेण कुलालदम्पत्योः सारूप्यप्राप्तिः

दिव्यं विमानमारूढौ विष्णुना दत्तवैभवौ ॥ ४२ ॥ कुलालदम्पती भक्तौ पश्यतस्तस्य भूपतेः ॥ जग्मतुर्विष्णुभवनं सायुज्यपदवीं गतौ ॥ ४३ ॥ कुलालपदवीं दृष्ट्वा तोण्डमान्नृपसत्तमः ॥ व्रीडितः पुण्डरीकाक्षं श्रीनिवासमभाषत ॥४४॥

भगवान् द्वारा दी गयी कुलालदम्पतिकी सारूप्य-प्राप्ति

विभववाले कुलाल दम्पति विष्णु द्वारा दिये गये स्वर्गीय विमानपर चढ़कर उस राजाके देखते-देखते विष्णु-भवन चले गये और सायुज्यपदको प्राप्त हुए। कुलालके पदको देखकर श्रेष्ठ राजा तोण्डमान लज्जित हो कमलनयन श्रीनिवाससे बोले ॥२४४॥

अथ तोण्डमानस्य भगवद्दत्तसारूप्यप्राप्तिप्रकारः

मद्राष्ट्रगतशूद्रस्य सर्वदा पापकारिणः ॥ सद्गतिस्तु त्वया दत्ता का गतिर्मम बान्धव ॥४५॥

भगवान् द्वारा दी गयी तोण्डमानकी सारूप्य-प्राप्ति

हे बन्धु! मेरे राज्यमें रहनेवाले, सदा पाप करनेवाले शूद्रको आपने उत्तम गति दी; मेरी क्या गति है? ॥२४५॥

*श्रीनिवास उवाच—*

**एतद्देहं परित्यज्य चान्यं देहमुपाश्रय ॥ तत्राराध्य हृषीकेशं गच्छ सारूप्यमुत्तमम् ॥४६॥**

श्रीनिवास बोले—इस देहको छोड़कर दूसरा शरीर धारण करो; वहांपर हृषीकेश भगवान्‌की आराधना कर उत्तम सारूप्यको चले जाओ ॥२४६॥

*शतानन्द उवाच—*

**इत्युक्तो नृपतिः सद्यः स्नात्वा स्वामिसरोजलैः॥ कलेवरं परित्यज्य पुनर्देहान्तरं गतः ॥४७॥ तत्राराध्य हृषीकेशं श्रीनिवासं निरामयम् ॥ सारूप्यं गतवान् राजा स्वामिना पूर्वकल्पितम् ॥४८॥**

शतानन्द बोले—ऐसा कहे जानेपर राजाने साक्षात् स्वामिपुष्करिणीमें स्नान कर तथा शरीरको छोड़कर पुनः दूसरा शरीर धारण किया। वहांपर हृषीकेश तथा निर्दोष श्रीनिवासकी आराधना कर भगवान द्वारा पहले ठीक किये हुए सारूप्यको वह राजा प्राप्त हुए ॥२४८॥

**एवं हरिस्तत्र चरित्रमद्भुतं कुर्वञ्जगन्मातृसमन्वितो गिरौ ॥ आस्ते जगत्यां च सुरौघपूजितो ददद्यथेष्टं च मनोरथान्सताम् ॥४९॥**

देवताओंसे पूज्य श्रीनिवास भगवान् संसारमें इस प्रकारके अद्भुत चरित्र करते हुए एवं सन्तोंके मनोरथोंको पूर्ण करते हुए कलियुगमें उस पर्वतपर ठहरे हुए हैं ॥२४९॥

**इत्येवं कथितं राजन्माहात्म्यं वेङ्कटेशितुः ॥ यः शृणोतीदमाख्यानं मनोरथफलप्रदम् ॥२५०॥ इह लोके सुखं भुक्त्वा सोऽथ याति हरेः पदम् ॥५१॥**

इति श्रीभविष्योत्तरपुराणे श्रीवेङ्कटाचलमाहात्म्ये कुशलप्रशंसनं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

हे राजन् ! इस प्रकारसे श्रीवेङ्कटेशके इस माहात्म्यको जो सुनता है वह इस लोकमें सुख भोगकर अन्तमें श्रीहरिके धामको जाता है ॥२५१॥

इति श्रीभविष्योत्तरपुराण श्रीवेङ्कटाचलमाहात्म्ये चतुर्दशोऽध्यायः

श्रियः कान्ताय कल्याणनिधये निधयेऽर्थिनाम् ।
श्रीवेङ्कट निवासाय श्रीनिवासाय मङ्गलम् ॥१॥
श्रीवेङ्कटाद्रिनिलयः कमला कामुकः पुमान् ।
अभङ्गुरविभूतिर्नः तरङ्गयतु मङ्गलम् ॥२॥



॥ श्रीनिवासपरब्रह्मणे नमः ॥

श्रीभविष्योत्तरपुराणान्तर्गत

# श्रीवेङ्कटेशरहस्यम्

श्रियः कान्ताय कल्याणनिधये निधयेऽर्थिनाम् ॥
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ॥
श्रीवेङ्कटाद्रिनिलयः कमला कामुकः पुमान् ।
अभङ्गुरविभूतिर्नः तारङ्गयतु मङ्गलम् ॥

## प्रथमोऽध्यायः ॥१॥

श्रीवेङ्कटेश भगवानका, ज्ञान तत्व भण्डार।
पर अरु अपर पदार्थ सब, भावरूप संसार ॥१॥
अगम अनूप दुरूह अति, ज्ञान तत्व निर्माण ।
अघदल-कुञ्जर-केशरी, भगवत वचन प्रमाण ॥२॥

## श्रीवेङ्कटेशस्य परापरवस्तुत्वनिरूपणम्

श्रीसूत उवाच—

शृणुध्वं मुनयः सर्वे शौनकाद्यास्तपोधनाः ॥ तद्विष्णोर्वेङ्कटेशस्य रहस्यानुभवं परम् ॥१॥ ब्रह्माण्डे यानि तीर्थानि स्वयं व्यक्तानि यानि च ॥ चिरन्तनानि क्षेत्राणि पुण्यारण्यानि पर्वताः ॥२॥ पूर्वं श्रुतानि सर्वाणि पुराणानि द्विजोत्तमाः ॥ सामान्यानि च मुख्यानि रहस्यं मुख्यमुत्तमम् ॥३॥ अष्टादशपुराणानां सारं चान्ते मया श्रुतम् ॥ व्यासप्रसादात्कारुण्यात्परिप्रश्नेन सेवया ॥ ४ ॥ वैकुण्ठपदसायुज्यं परमानन्ददं परम् ॥

### श्रीवेङ्कटेशके परापर भावका निरूपण

श्रीसूतजी बोले—हे शौनक इत्यादि तपोधन मुनिगण ! उस विष्णु श्रीवेङ्कटेशके रहस्यकी श्रेष्ठ महत्ताको सुनिये । हे द्विजोत्तम ! पृथ्वीमें जितने तीर्थ एवं जितने स्वयं प्रगट पुराने क्षेत्र, पवित्र वन और पर्वत हैं, सो सब और सब सामान्य एवं मुख्य पुराणोंको आपने सुना है; और अन्तमें श्रीवैकुण्ठ पदका सायुज्य और उत्तम आनन्दको देनेवाला, अठारह पुराणोंका मुख्य और उत्तम सार रहस्यको बार-बार प्रश्न एवं सेवाके द्वारा व्यासजीकी प्रसन्नता और करुणासे मैंने सुना है ॥५॥

भविष्योत्तरसारांशः सर्ववेदान्तसङ्ग्रहः ॥ ५ ॥ तत्रापि चोत्तरे खण्डे साक्षात्संसारमोचकः ॥ उमामहेशसंवादे रहस्यानुभवो द्विजाः ॥६॥ आनन्दनिलयस्यैव क्षेत्रमाहात्म्यमुत्तमम् ॥ मन्त्राणां मन्त्ररत्ने द्वे द्विविधं ध्यानमुत्तमम् ॥ ७ ॥ शृणुध्वं परमानन्दपदावाप्त्यै च दुर्लभम् ॥ देवानामपि सिद्धानां महतां योगिनां नृणाम् ॥८॥

हे ब्राह्मणो ! उसमें भी उत्तर खण्डके पार्वती और शिवके संवादमें साक्षात् संसारसे मुक्त करनेवाला रहस्यका माहात्म्य और भविष्योत्तरका सारांश सब वेदान्तोंका संग्रह है । परमानन्द-पद पानेके लिये साक्षात् आनन्दधामके उत्तम क्षेत्रके माहात्म्य, मन्त्रोंमें दो रत्न, एवं देवताओं, बड़े सिद्धों तथा बड़े योगीजनोंको भी दुर्लभ दो प्रकारके उत्तम ध्यानको सुनो ॥८॥

 

अचिकित्स्यमहग्रस्तविकलाङ्गविरूपिणाम् ॥ रोगिणामचिकित्स्य-
नांदुष्कर्मपरिपाकिनाम् ॥९॥ आपद्भिरनिवार्याभिरावृतानां च दुः-
खिनाम् ॥ महापातकसम्भूतकुष्ठरोगकुरूपिणाम् ॥१०॥ काणान्ध-
बधिराणां च मूकानां पङ्गुकुब्जयोः ॥ प्रायश्चित्तविहीनानां पापि-
नां दुःखदुःखिनाम् ॥११॥ काप्यनिर्गतिकानां च सर्वदा क्रूरक-
र्मणाम् ॥ भवेत्प्रतिविधिः सद्यः प्रत्यक्षो वेङ्कटाचलात् ॥१२॥
भक्तानां भवततनां गतिश्चान्यत्र नास्ति भोः ॥ स परः सर्वलोका-
नां सर्वव्याधीन् कृपानिधिः ॥१३॥ निकृन्तन्नास्ति चक्रेण यत्र य-
स्माद्धि वेङ्कटात् ॥ तस्मात्स एव गन्तव्यो भोगमोक्षरतैर्ज-
नैः ॥१४॥ विशेषतः क्रूरकलौ नराणां पापाकराणां परिपीडिताना-
म् ॥ भूगोलमध्ये द्रविडे च पुण्ये श्रीवेङ्कटाद्रिर्गतिरेव ना-
न्या ॥१५॥ कलौ युगे मनुष्याणां सङ्कीर्णानां च रक्षिता ॥ श्री-
वेङ्कटेशान्नान्योऽस्ति सर्वानिष्टनिवारणात् ॥१६॥

जिसकी चिकित्सा न की जा सके ऐसे महसे ग्रस्तजनों, विकलांग और कुरूपों, असाध्य रोगियों, अपने बुरे कर्मोंके फल पानेवालों, जो न रोकी जा सकें इस प्रकारकी आपत्तियोंसे घिरे हुए दुःखियों, बड़े-बड़े पापोंद्वारा कुष्ठ रोगसे कुरूप हुए मनुष्यों, कानों, अन्धों, बहरों, गूंगों, लूलों, कुबड़ों, प्रायश्चित्त नहीं कर सकनेवाले पापियों, दुःखसे दुःखियों, अशरणों तथा सदा क्रूर कर्म करनेवालोंका भी शीघ्र और प्रत्यक्ष प्रतीकार इस श्रीवेङ्कटाचलसे होगा, जिसके अतिरिक्त संसारसे तपे हुए भक्तोंकी गति दूसरी जगह नहीं है और चूंकि वह दयालु भगवान् सब लोकोंकी सब व्याधियोंको चक्रसे काटते रहते हैं; इसलिये वहींपर भोग और मोक्षमें लगे हुए मनुष्योंको जाना चाहिये। विशेष करके इस कठिन कलियुगमें पापी और दुःखी मनुष्योंकी गति यह भूमण्डलभरमें पवित्र द्रविड़ देशस्थित श्रीवेङ्कटाचल ही है, दूसरा नहीं। कलियुगमें कष्टोंके निवारण करनेवाले श्रीवेङ्कटेशके अतिरिक्त नाना प्रकारके मनुष्योंकी रक्षा करनेवाला दूसरा और नहीं है ॥१६॥

यं दृष्ट्वा नापरं स्थानं यं दृष्ट्वा नापरो गिरिः ॥ यं दृष्ट्वा नापरं
तीर्थं यं दृष्ट्वा नापरं तपः ॥ १७ ॥ यं दृष्ट्वा नापरो देवो यं

दृष्ट्वा नापरो मनुः ॥ यं दृष्ट्वा नापरा भक्तिर्यं दृष्ट्वा नापरा
गतिः ॥ १८ ॥ यं दृष्ट्वा नापरं ज्ञानं यं दृष्ट्वा नापरं पदम् ॥
यं दृष्ट्वा नापरो लाभो यं दृष्ट्वा नापरः प्रियः ॥ १९ ॥ यं
दृष्ट्वा नापरं धाम साक्षादानन्दसान्द्रकम् ॥ यं दृष्ट्वा नापरं
ध्यानं समाधिरपि नापरः ॥ २० ॥ यं दृष्ट्वा नापरा मुक्तिः सर्वे-
न्द्रियमनोहरा ॥ यं दृष्ट्वा नापरो नित्यो यस्य कालभयं न
हि ॥ २१ ॥ यं दृष्ट्वा नापरो विष्णुर्भक्त्या सर्वजगन्मयः ॥ यं
दृष्ट्वा त्रिविधं कृत्यं कृतवान्नात्र संशयः ॥२२॥ यं दृष्ट्वा नापरो
दाता रमेशान्नास्ति कामदः ॥ यं दृष्ट्वा नापरं ब्रह्म सच्चिदान-
न्दविग्रहात् ॥२३॥ यं दृष्ट्वा नापरो योगः साष्टाङ्गः सर्वसिद्धि-
दात् ॥ यं दृष्ट्वा नापरः पूर्णः सर्वगो वेङ्कटेश्वरात् ॥२४॥

जिसको देखकर दूसरा स्थान नहीं है। जिसको देखकर दूसरा पर्वत नहीं है। जिसको देखकर दूसरा तीर्थ नहीं है। जिसको देखकर दूसरी तपस्या नहीं है। जिसको देखकर दूसरे देवता नहीं हैं। जिसको देखकर दूसरा मन्त्र नहीं है। जिसको देखकर दूसरी भक्ति नहीं है। जिसको देखकर दूसरी गति नहीं है। जिसको देखकर दूसरा ज्ञान नहीं है। जिसको देखकर दूसरा पद नहीं है। जिसको देखकर दूसरा लाभ नहीं है। जिसको देखकर दूसरा प्रिय नहीं है। जिसको देखकर साक्षात आनन्दका धाम दूसरा नहीं है। जिसको देखकर न दूसरा ध्यान है, और न दूसरी समाधि है। जिसको देखकर सब इन्द्रियोंका मोहकर दूसरी मुक्ति नहीं है। जिसको देखकर दूसरा नित्य ( सदा रहनेवाला ) नहीं है। जिसको देखकर कालका भी भय नहीं है। जिसको भक्तिसे देखनेपर सारे संसारमें दूसरे विष्णु नहीं हैं। जिसको देखकर ही तीनों प्रकारका कृत्य कर चुका, इसमें संशय नहीं है। जिस लक्ष्मीपतिको देखकर दूसरे कोई काम देनेवाले नहीं हैं। जिस सच्चिदानन्दकी मूर्तिको देखकर दूसरे ब्रह्म नहीं हैं। जिसको देखकर सब सिद्धियोंके देनेवाले दूसरे अष्टाङ्गयोग नहीं हैं। जिस श्रीवेङ्कटेशको देखकर दूसरा सर्वव्यापी पूर्ण नहीं है * ॥२४॥

न वेदान्तात्परं शास्त्रं न देवो वेङ्कटेश्वरात् ॥ न वैकुण्ठा-
त्परं धाम न गिरिर्वेङ्कटात्परः ॥२५॥ सत्यं सत्यं पुनः सत्यं न देवो
वेङ्कटेश्वरात् ॥ ब्रह्माण्डे नास्ति यत्किंचिन्न भूतं न भवि-

* इस धाराका अर्थ मूलके अनुसार रखनेसे स्पष्ट न हो सका है। पाठक इसका अर्थ 'जिसको देख लेनेके बाद कोई स्थान देखने योग्य शेष नहीं रह जाता' इत्यादि जैसा समझें।

ष्यति ॥२६॥ वेङ्कटेशसमो देवो नेति वेदान्तनिर्णयः ॥ तद्रहस्य-सुसंवादं स्वचित्तस्थमुमेशयोः ॥२७॥ श्रृणुत्वमवधानेन सिद्धान्तं मुनिपुङ्गवाः ॥

वेदान्तसा दूसरा शास्त्र नहीं है, श्रीवेङ्कटेशसा दूसरा देव नहीं है। वैकुण्ठसा दूसरा धाम नहीं है। यह सत्य है, सत्य है, बार बार सत्य है कि ब्रह्माण्डमें श्रीवेङ्कटेश्वर जैसा दूसरा देव नहीं है, जो कुछ भी हो, न कभी था, न होगा। श्रीवेङ्कटेशके समान देवता नहीं हैं, यह वेदान्तका निर्णय है। हे श्रेष्ठ मुनिगण! उनके रहस्य सम्बन्धी शिवपार्वतीके हृदयमें रहनेवाले संवाद और सिद्धान्तको मन लगाकर सुनो ॥२८॥

*श्रीसूत उवाच—*

कैलासेऽनन्तशिखरे पर्वते निर्मलोज्ज्वले ॥२८॥ ज्ञाननिर्मल-चित्ताढ्ययोगिमण्डलसेवितम् ॥ सुखासीनं महादेवं रत्नसिंहासनोत्तमे ॥२९॥ प्रणिपत्य कृपासिन्धुं पार्वती पर्यपृच्छत ॥

श्रीसूतजी बोले—अनन्त शिखरवाले निर्मल और उज्ज्वल कैलास पर्वतपर ज्ञानसे निर्मल चित्तवाले योगियोंके समूहसे सेवित, रत्नोंके उत्तम सिंहासनपर सुखसे बैठे हुए, कृपासमुद्र श्रीमहादेवजीको प्रणाम करके पार्वतीजीने उनसे पूछा ॥३०॥

*श्रीपार्वत्युवाच—*

देवदेव विरूपाक्ष त्रैलोक्यतिमिरापह ॥३०॥ तवान्तःकरणानन्द-रहस्यानुभवं परम् ॥ मुक्तिक्षेत्रेषु सिद्धानां मुक्तानां कर्मबन्धनात् ॥३१॥ तेषामानन्दसान्द्राब्धेरवाप्तिर्यत्र शङ्कर ॥ तद्धाम गोप्यं त्वद्ध्यानवैभवानन्दमीश्वर ॥३२॥ पूर्णानन्दकृपादृष्टिरस्ति चेत्तत्र मे वद ॥

श्रीपार्वतीजी बोलीं—हे देवताओंके देव! हे त्रिनयन! हे त्रिलोकके अन्धकारको नाश करनेवाले! मुक्तिक्षेत्रमें कर्मबन्धनसे मुक्त हुए सिद्धोंको जहाँपर पूर्ण आनन्दके समुद्रकी प्राप्ति हो, हे ईश्वर! आपके अन्तःकरणको आनन्द देनेवाला रहस्य जहाँपर प्रत्यक्ष है, और जहाँ आपके ध्यानके विभवका आनन्द हो रहा है, उस गुप्त धामको, हे शङ्कर! यदि आपकी पूर्ण आनन्द देनेवाली कृपादृष्टि है तो, मुझसे कहिये ॥३३॥

*ईश्वर उवाच—*

साधु पृष्टं त्वया देवि भक्तानां हितकाम्यया ॥३३॥ प्रियात्प्रियतरं मेऽस्ति तद्रहस्यं वदामि ते ॥ ब्रह्माण्डमण्डले पुण्यं द्रविडे वेङ्कटाचले ॥ ३४ ॥ रहस्यं सर्वलोकानां पावनं परमाद्भुतम् ॥ स्वामिपुष्करिणीतीर्थं भक्तिज्ञानसुखप्रदम् ॥३५॥ दर्शनात्सर्वजन्तूनामाश्चर्यं भुवि राजते ॥ आजन्मसञ्चितं पापं दर्शनादेव नश्यति ॥३६॥ तत्क्षणाज्ज्ञानसम्पन्ना मुक्ताः संसारबन्धनात् ॥ परानन्दपदे स्थित्वा मोदन्ते वेङ्कटाचले ॥३७॥ स्नानपानस्पर्शनैस्तु किमु वक्तव्यमीश्वरि ॥ स्वामिपुष्करिणीतीर्थमहिमा केन वर्ण्यते ॥३८॥ मया वक्तुं विरिञ्चाद्यैर्न शक्यो लोकदुर्लभः ॥ किं पुनः सिद्धयोगीन्द्रैः ससुरासुरमानवैः ॥३९॥

श्रीशिवजी बोले—हे देवि ! तुमने भक्तोंके हितकी इच्छासे अच्छा पूछा । अपने प्रियसे प्रिय उस रहस्यको मैं तुमसे कहता हूं । ब्रह्माण्ड मण्डलमें पवित्र द्रविड देशके श्रीवेङ्कटाचलपर सब लोकोंका परम पवित्र, अद्भुत रहस्य, दर्शनमात्रहीसे सब जीवोंको भक्ति, ज्ञान और सुखको देनेवाला, पृथ्वीपर आश्चर्य श्रीस्वामिपुष्करिणी नामक तीर्थ शोभित है । जन्मभरमें एकत्रित सभी पाप उसके दर्शनहीसे नष्ट होते तथा उसी क्षण ज्ञानसे युक्त होकर मनुष्य संसारके बन्धनोंसे छूट जाते और परम आनन्दके पदपर स्थित हो श्रीवेङ्कटाचलपर आनन्द करते हैं । हे ईश्वरि ! स्नान, पान और स्पर्शकी तो बात ही क्या कहना है ! स्वामिपुष्करिणी तीर्थकी महिमा कौन वर्णन कर सकता है ? यह लोकदुर्लभ मुझसे वा ब्रह्मा इत्यादिसे भी नहीं कहा जा सकता है, फिर सिद्ध, योगीन्द्र, देवता, राक्षस और मनुष्योंकी बात ही क्या ? ॥३९॥

सार्धत्रिकोटितीर्थानां पातकघ्नी सुपावनी ॥ वेङ्कटेश्वरसद्धाम्नः समन्ताद्योजनत्रयम् ॥४०॥ मुक्तिभूमिश्चिदानन्दघनसन्दोहमण्डलम् ॥ तत्र स्थितानां जन्तूनां भाग्यं भाग्यमहो नृणाम् ॥ ४१ ॥ यद्दर्शनं सदाह्लादि सच्चिदानन्दसम्भृतम् ॥ अहो चित्रमहो चित्रमस्मिन्वैकुण्ठमण्डले ॥४२॥ निद्रा समाधिसम्पत्तिर्निवासः केवलं तपः ॥ कृतकृत्यमभूज्जन्म शेषाचलनिवासिनः ॥४३॥ प्रार्थयामो

वयं नित्यं तं निवासं नृणां किमु ॥ तथापि भक्तिसंयुक्तं कर्माचारव्रतादिकम् ॥ ४४ ॥ मनःप्रसादनं शक्त्या स्वामिप्रीतिकरं चरेत् ॥

साढ़े तीन करोड़ तीर्थोंमें यह पाप नाश करनेवाली, सुन्दर, पवित्र, श्रीवेङ्कटेशके श्रेष्ठ धामके चारों ओर तीन योजनतक फैली हुई एवं चित्, आनन्द घनके समूहका मण्डलरूप मुक्तिकी भूमि है। यहांपर रहनेवाले जीवों एवं मनुष्योंका अत्य भाग्य है। उस सच्चिदानन्दका दर्शन सदा आनन्ददायक है। यह अद्भुत है! यह अद्भुत है! इस वैकुण्ठ मण्डलमें निद्रा ही समाधि-सम्पत्ति है, निवास करना ही तपस्या है, और शेषाचल निवासियोंका ही जन्म सफल है। हम लोग भी सदा वहां रहनेके लिये प्रार्थना करते हैं, मनुष्योंकी तो बात ही क्या? तथापि भक्तिके साथ मनको प्रसन्न करनेवाले, स्वामीके प्रीतिकारक व्रतादि कर्मोंका आचरण करे ॥४४॥

अन्नदानं महापूजोत्सववैभवमुत्तमम् ॥४५॥ स्वामिप्रासादिकैङ्कर्यमानन्त्यायोपकल्प्यते ॥ यत्किञ्चित्स्वर्णदानान्नपितृश्राद्धादि कर्म च ॥४६॥ अत्र स्थाने कृतं सर्वमनन्तफलदं स्मृतम् ॥ ज्ञानिनोऽज्ञानिनो वापि समानं भक्तिपूर्वकम् ॥४७॥ कालक्षेपार्थमुत्साहे कर्मणा बन्धनं न हि ॥ चिरन्तनेषु क्षेत्रेषु मुक्तिपात्रमुदाहृतम् ॥४८ ॥ सायुज्यमुक्तिरानन्दप्राप्तिः श्रीशैलमस्तके ॥ मुक्तिक्षेत्रेषु मुक्तानां स्वानन्दानुभवागमः ॥४९॥ तद्विष्णोर्वेङ्कटेशस्य परानन्दपदे स्थितिः ॥ एतद्विचित्रमत्रैव वेङ्कटेश्वरमण्डले ॥ ५० ॥ वस्तुस्वभाववैचित्र्यात्परमानन्दकारणम् ॥

अन्नदान, महा पूजा और उत्सवका उत्तम वैभव एवं स्वामीको प्रसन्न करनेवाला कैंकर्य्य अनन्त फलका देनेवाला होता है। स्वर्णदान, अन्नदान एवं पितृ श्राद्धादि जो कुछ भी कर्म यहांपर किये जाते हैं वे सब अनन्तफलको देनेवाले कहे गये हैं। ज्ञानियों और अज्ञानियोंको समान ही भक्तिपूर्वक कालक्षेप करनेको उत्साहित करता हूं; कर्मसे यहां बन्धन नहीं होता है, प्राचीन क्षेत्रोंमें यह मुक्तिका स्थान समझा जाता है। श्रीपर्वतके मस्तकपर सायुज्य-मुक्ति या आनन्दकी प्राप्ति होती है और मुक्ति क्षेत्रोंमें अपने आनन्दका ही अनुभव होता है। उस विष्णु वेङ्कटेशके परम आनन्दके इसी पदमें रहना होता है, यहांपर श्रीवेङ्कटेश्वरके मण्डलमें वस्तुके स्वभावकी विचित्रतासे ही यह परम आनन्दका कारण है ॥५१॥

मुक्तानां योगिनां मध्ये कश्चित्परमयोगिराट् ॥५१॥ एत-

त्परं रहस्यं तु लोके जानाति नापरः ॥ सर्ववेदान्तसिद्धान्तसार-स्यानुभवं प्रिये ॥५२॥ ब्रह्मानन्दपदप्राप्तिकारणत्वान्मम प्रियम् ॥ नैतद्रहस्यमाख्यानं वक्तव्यं यस्य कस्य चित् ॥ ५३ ॥ भक्तियुक्ताय शान्ताय वक्तव्यं वेङ्कटेश्वरे ॥ सच्चिदानन्दसंन्मूर्तेः कल्याणगुणवारिधेः ॥५४॥

हे प्रिया ! संसारमें मुक्त योगियोंके मध्यमें कोई परम योगी ही सब वेदान्तके सिद्धान्तोंके सारका अनुभव-रूप इस उत्तम रहस्यको जानते हैं, दूसरा नहीं। ब्रह्मानन्द पद देनेके कारण इस मेरे प्रिय रहस्याख्यानको जिस किसीसे नहीं कहना चाहिये, श्रीवेङ्कटेशमें भक्ति रखनेवाले शान्त पुरुषोंसे ही कहना चाहिये ॥५४॥

वेङ्कटेशहरेर्ध्यानवैभवं श्रृणु पार्वति ॥ अनन्तकल्पसञ्जातपाप-राशिविनाशनम् ॥५५॥ वाङ्मनःश्रवणानन्दमकरन्दफलप्रदम् ॥ ध्यानश्रवणमात्रेण ब्रह्मानन्दपदप्रदम् ॥५६॥ न शक्यते मया वक्तुं तद्धामध्यानजं फलम् ॥ तद्धाम स्वामिनश्चित्रमवाङ्मनस-गोचरम् ॥५७॥ किमु गीर्वाणसिद्धेन्द्रैर्ब्रह्माद्यैर्मुनिमण्डलैः ॥ अत एव रहस्याख्यो ध्यानानुभव उत्तमः ॥५८॥

हे पार्वती ! सच्चिदानन्दकी उत्तम मूर्ति, कल्याण और गुणके समुद्र श्रीवेङ्कटेश हरिके ध्यानकी, अनन्त कल्पोंमें किये गये पाप समूहको नाश करनेवाली, वचन, मन और श्रवणके आनन्दरूपी मकरन्दको देनेवाली एवं ध्यान और श्रवणमात्रहीसे ब्रह्मानन्दको देनेवाली महत्ताको सुनो; उस धामके ध्यानके फलको मैं भी नहीं कह सकता हूं; स्वामीका वह धाम विचित्र और वचन मनसे नहीं जानने योग्य है। गीर्वाण ( देव ), सिद्ध, इन्द्र, ब्रह्मा इत्यादि मुनियोंकी मण्डलीकी बात ही क्या ? अतएव रहस्यपूर्ण ध्यानकी महत्ता उत्तम है ॥५८॥

क्षेत्रे चादिवराहस्य साक्षाज्ज्ञानमये शुभे ॥ स्वामिपुष्करिणी-तीरे निर्मलात्मभिरीडिते ॥५९॥ सार्धत्रिकोटिसंस्थानैः पुण्यतीर्थैः समावृते पुण्यवृक्षलसत्पुष्पश्रीगन्धतरुवासिते ॥ ६० ॥ पारिजातवनोद्यानरत्नमण्डलमण्डिते ॥ नानाद्रुमलतारामपुष्पवाटीभिरावृते ॥६१॥ निर्झरीदेवतापक्षिमृगाणां ध्वनिपूरिते ॥ सम-

स्तदेवतासिद्धयोगिमण्डलसेविते ॥ ६२ ॥ रम्ये मनोहरानन्दे भक्तिसारमहोत्सवे ॥ वैकुण्ठे विरजानद्यास्तटे बाधाविवर्जिते ॥६३॥ नवरत्नमयोद्भूतसहस्रस्तम्भमण्डपे ॥ जाम्बूनदभराकूलसरत्नप्राकारभास्वरे ॥६४॥ रत्नप्रभालसद्धेमवैचित्र्यविविधोज्ज्वले ॥ चतुर्दिक्षु चतुर्धाम चतुर्मुक्तिफलप्रदम् ॥६५॥ अनन्तार्कतडिच्चन्द्रमण्डलोपरि मण्डलम् ॥ दुर्निरीक्षं दुराधर्षं दुःसहं देवतादृशाम् ॥६६॥ अचिन्त्यतेजसा व्याप्तमप्रमेयमगोचरम् ॥ छादितं मायया विष्णोर्ज्वलितं सर्वतोमुखम् ॥६७॥

ज्ञानमय एवं पवित्र आदि वाराह क्षेत्रमें, शुद्ध अन्तःकरणवालोंसे स्तुत, साढ़े तीन करोड़ तीर्थोंसे घिरे हुए, पवित्र वृक्षोंके सुन्दर पुष्पोंसे सुगन्धित, रत्नोंके मण्डलोंवाले, पारिजातके वन और उद्यानसे शोभित, अनेकों वृक्ष और लताओंके आराम और फुलवारियोंसे शोभित,झरना,दिव्य पक्षी और मृगोंके शब्दसे भरे हुए,सब देवता, सिद्ध और योगीके समूहसे सेवित, सुन्दर, मनोहर, आनन्दरूप, महोत्सवरूपी भक्तिके सार, वैकुण्ठस्वरूप सब बाधाओंसे वर्जित विरजा नदीके किनारेके समान, नव रत्नोंसे जटित हजार स्तम्भवाले मण्डपयुक्त, सोनासे पूर्ण, रत्नोंके प्राकारकी प्रभासे भरे हुए, रत्नोंकी प्रभासे शोभते हुए एवं सोनेकी विचित्रतासे अनेकों प्रकारसे उज्वल स्वर्णपुष्करिणी तीरपर चारों दिशाओंमें चारों प्रकारकी मुक्ति रूपी फलको देनेवाले चार धाम ( गृह ) हैं, जो अनेकों सूर्य, विद्युत ( बिजली ) एवं चन्द्रके मण्डलसे ऊंचे मण्डलवाले, दुर्निरीक्ष्य, कठिनतासे भी नहीं आक्रमण किये जाने योग्य, देवताओंके नेत्रोंको भी असह्य, नहीं चिन्ता करने योग्य, तेजसे भरे हुए, अज्ञेय, इन्द्रियोंसे नहीं जानने योग्य और विष्णुकी मायासे ढके हुए सब ओरसे जलते रहते हैं ॥६७॥

मध्ये तुरीयब्रह्माख्यं स्वप्रकाशं तदेव सत् ॥ स्वशक्तिगुणवैचित्र्याद्विसृजद्विश्वमव्ययम् ॥६८॥ उपादानं निमित्तं च कारणं जगतः सतः ॥

उनके मध्यमें जो तुरीय ( चतुर्थ ) ब्रह्म नामक स्वयं प्रकाशमान वस्तु है, वही सत्, अपनी शक्तिके गुणोंकी विचित्रतासे सारे संसारको उत्पन्न करनेवाला, अखण्ड एवं संसारका उपादान और निमित्त कारण है ॥६९॥

ऊर्णनाभेस्तन्तुनेव विहारस्तस्य मायया ॥६९॥ मूलप्रकृतिसञ्ज्ञाद्यात्कार्यत्वेनापि सङ्गतम् ॥ तत्तद्वारा वहिर्व्यक्तं ततस्तत त्रिविधं

कृतम् ॥७०॥ तत्तत्कर्मानुगुण्येन भाति स्थूलमहत्कृशम् ॥ विष-यग्रहणे पूर्वं दृश्यते हि तदेव सत् ॥७१॥

उसका विहार मकड़ीके जालेके समान मायाके साथ है। मूल प्रकृतिके संगसे उसके कार्यमें भी मिला हुआ वह उसी उसीके द्वारा बाहरमें प्रगट है। इसलिये वह तीन प्रकारका बना हुआ है। अर्थात् उन्हीं उन्हीं कर्मोंके अनुकूल गुणोंसे वह स्थूल, महत् और सूक्ष्म मालूम पड़ता है। विषय ग्रहणके पूर्वमें यही सत् दिखलायी पड़ता है ॥७१॥

विदुषामहमुल्लेखपरामर्शावभासकम् ॥ तदुपाधिस्थिरच्छिन्नं महत्स्थूलं तथा कृशम् ॥ ७२ ॥ स्थूलसूक्ष्मच्छिद्रघटाद्यथोद्गच्छति दीपभा ॥ तथैव ब्रह्मणस्तेजो भाति भिन्नमुपाधिभिः ॥७३॥ उ-पाधित्रयमेतत्तु च्छित्त्वा भक्तिमतां नृणाम् ॥ एकमेवाद्वितीयं तत् त्रिशून्यं भाति जृम्भितम् ७४ मेघच्छिद्राणि सञ्छिद्य भानुतेज इवोत्थितम् ॥ नानात्वकल्पनायुक्तं विश्वप्रकृतिवर्जितम् ॥७५॥ नेति नेतीति च श्रुत्या बोधितं यत्परं पदम् ॥ परिच्छेत्तुमश-क्यत्वात्स्वप्रकाशं तदेव सत् ॥७६॥

यही विद्वानोंके "अहं" ऐसे ज्ञानका प्रकाशक, उपाधियोंसे नहीं ढका हुआ, अहंभावरहित,महत्, स्थूल और सूक्ष्म मालूम पड़ता है। जिस प्रकार घड़ेमें रखे हुए दीपका प्रकाश स्थूल और सूक्ष्म छिद्रोंसे स्थूल और सूक्ष्म होकर बाहर आता है उसी प्रकार ब्रह्मका तेज भी भिन्न भिन्न उपाधियों द्वारा देख पड़ता है। भक्तिमान मनुष्योंको इन तीनों उपाधियोंके परे, तीनों गुणोंसे शून्य वही एक, अद्वितीय तथा शून्य ऐसा मालूम पड़ता है। सब तरहकी प्रकृतिसे रहित वह मेघके छिद्रोंके सङ्गमें उगे हुए सूर्यके तेजके जैसा नानात्व (अनेकत्व, एकसे बहुत) की कल्पनासे युक्त होता है, जो परम पद वेदोंके "यही है" ऐसा निश्चय पूर्वक कहनेमें समर्थ न हो सकनेके कारण "नेति नेति—यह नहीं, यह नहीं" ऐसा कहा गया है और जो स्वयं प्रकाश एवं सद्रूप है ॥७६॥

सत्यं ज्ञानमनाद्यन्तमानन्दममृतोत्थितम् ॥ नित्यशुद्धप्रबुद्धा-त्मस्वरूपं वागगोचरम् ॥ ७७ ॥ सर्वतो व्याप्तमात्मानं निर्मलं निष्कलं शिवम् ॥ शून्याशून्यफलं हित्वा प्रज्ञानं ब्रह्म जृम्भि-तम् ॥७८॥ भावाभावविनिर्मुक्तं द्वैताद्वैतविवर्जितम् ॥ सच्चिदा-

नन्दसान्द्राब्धिपरिपूर्णमनामयम् ॥७९॥ सत्यचिद्घनसूक्ष्माग्र्यम-
खण्डमकुतोभयम् ॥ कैवल्यपदसायुज्यपरानन्दपदप्रदम् ॥८०॥

जो आदि और अन्तसे रहित, आनन्दरूपी, अमृतका कारण, सत्य, ज्ञान, नित्य, शुद्ध, बुद्ध, आत्मस्वरूप, वचनसे नहीं जानने योग्य, सर्वत्र व्याप्त, निर्मल, निर्विकार, शुभ, शून्य और अशून्य फलको छोड़ कर सर्वव्यापी, विज्ञान, ब्रह्मरूप, भाव और अभावसे मुक्त, द्वैत और अद्वैतसे रहित, सत्-चित्-आनन्द-घन-समुद्रसे परिपूर्ण, निर्गुण, सत्य और चित् घन, सूक्ष्मसे सूक्ष्म, निर्भय, कैवल्य और सायुज्यके परम आनन्दपदको देनेवाला है ॥८०॥

निर्गुणं चेन्द्रियातीतं निराकारं निरञ्जनम् ॥ स्वभक्तदर्शनार्थाय
लोकानां रक्षणाय च ॥८१॥ कृपया सर्वदेवानां सिद्धानां योगिनां
हितम् ॥ कालप्रवाहगम्भीरमायावर्तभवाम्बुधेः ॥ ८२ ॥ तारणार्थं
वरं दातुं भक्तिज्ञानपुरस्सरम् ॥ भजतां वाञ्छतां सम्पदायुरारोग्य-
वर्धनम् ॥८३॥ अणिमाद्यष्टसिद्धिं च योगसिद्धिं च सन्दिशत् ॥
अष्टाङ्गयुक्तां सद्विद्यासिद्धिं च विजयान्विताम् ॥८४॥ मन्त्रयन्त्रम-
हातन्त्रदेवतासिद्धिकारणम् ॥ स्वांशावतारमूर्तीनां सर्वशक्तिफल-
प्रदम् ॥८५॥ त्रिकालयोग्यमुक्त्यर्थं स्वप्रसिध्यर्थकारणम् ॥ स्वी-
कुर्मस्स्वगुणं ब्रह्म मूर्तिमत्तदनामयम् ॥८६॥

जो निर्गुण, इन्द्रियोंसे परे, निराकार, निरंजन, कृपासे अपने भक्तोंके दर्शन देने और लोकोंकी रक्षा करनेमें तथा सब देवताओं, सिद्धों और योगियोंके लिये हितस्वरूप, कालरूपी गम्भीर प्रवाहवाले संसाररूपी सागरके मायारूपी भंवरको तरने,तथा भक्ति और ज्ञानके साथ हित वर पानेके लिये भजन करनेवालोंकी संपत्ति, आयु और आरोग्यको बढ़ानेवाला, अणिमादि अष्ट सिद्धियों, योग सिद्धियों तथा विजयसे युक्त अष्टाङ्ग सहित ब्रह्मविद्याको देनेवाला, मन्त्र, यन्त्र, महातन्त्र एवं देवताकी सिद्धिका कारण, अपने अंशावतारोंकी मूर्तियोंको सब शक्तिरूपी फलको देनेवाला, तीनों कालोंमें रहनेवाला, अनश्वर, अपनी प्रसिद्धिके लिये अपने गुणोंको स्वीकार करता हुआ, निरामय तथा मूर्तिमान ब्रह्म है ॥८६॥

वैकुण्ठेन सहागतं परमिदं श्रीवेङ्कटाद्रिस्थलं पूर्वं ज्ञानवराहमूर्ति-
हरिणा भूम्यां सहाधिष्ठितम् ॥ लक्ष्म्यालिङ्गितरूपमद्य सगुणं

कल्याणमास्ते दधच्छुद्धं ब्रह्म तदेव विश्वजननस्थेमव्ययानां प्रभुम् ॥ ८७ ॥

पहलेहीसे पृथ्वीके साथ ज्ञान वाराहकी मूर्तिके निवासस्थान वेङ्कटाचलके स्थानमें वैकुण्ठके साथ आया हु तथा लक्ष्मीको आलिंगन करता हुआ, संसारकी सृष्टि, स्थिति और नाशका स्वामी वही शुद्ध, ब्रह्म अन सगु एवं कल्याण रूप धारण करके रहता है ॥८७॥

सर्वाध्यक्षं महाविष्णुं सर्वलोकैकनायकम् ॥ कारुण्यानन्द-
बाहुल्यात्सर्वाश्चर्यमयं विभुम् ॥८८॥ आनन्दमूर्तिमानन्दमचिन्त्यै-
श्वर्यसंयुतम् ॥ कोटिबालार्कसङ्काशं तडित्कोटिसमप्रभम् ॥८९॥
चन्द्रकोटिप्रभं रत्नजाम्बूनदपरिष्कृतम् ॥ विमानदेवतामूर्तितेजो
मण्डलसंयुतम् ॥ ९० ॥ दिव्यं विमानमारूढं स्थितं परमशोभ-
नम् ॥ सर्वोत्तमं महाश्चर्यं सर्वालङ्कारभूषितम् ॥ ९१ ॥ नील-
जीमूतसङ्काशं पीताम्बरतडिद्वृतम् ॥ रत्नतोरणविद्योतमानद्वार-
प्रभान्वितम् ॥९२ ॥ पञ्चायुधवरैर्दिव्यैर्मूर्तिमद्भिरुपासितम् ॥
चण्डप्रचण्डप्रमुखैर्द्वारपालैरभिष्टुतम् ॥९३॥ सुनन्दनन्दप्रमुखैः पा-
रिषद्यैः समन्वितम् ॥ रविकोटिप्रकाशाढ्यं चन्द्रकोटिसुशीतलम् ॥
अनर्घरत्नखचितदिव्याभरणभूषितम् ॥ अच्युतानन्तगोविन्दप्र-
मुखानन्तविग्रहम् । पूर्णब्रह्मतनुप्रख्यकृष्णरामावतारकम् ॥ आद्य-
न्तरहितं सत्यज्ञानविज्ञानविग्रहम् ॥९६॥ निखिलोपनिषत्सारघन-
संवेद्यविग्रहम् ॥ श्रीभूमिसहितं श्यामं सुन्दरं वेङ्कटेश्वरम् ॥९७॥
अनेककोटिकन्दर्पलावण्यमथनोत्थितम् ॥ जगन्मोहनगोपाललीी-
लावैचित्र्यकारणम् ॥९८॥ नानागमरसाभिज्ञैर्वैखानसमहर्षिभिः ॥
ब्रह्मागस्त्यभरद्वाजसनकव्याससनन्दनैः ॥९९॥ वामदेवशतानन्द-
भृग्वाद्यैश्च प्रपूजितम् ॥ जनकाद्यैर्नृपश्रेष्ठैरर्चितं पुरुषोत्तम-
म् ॥१००॥ मयाप्यङ्गिरसा देवि लोकपालैः समार्चितम् ॥ बहुव-

र्षसहस्राणि स्वामिपुष्करिणीतटे ॥१॥ मत्कुमारतपोध्यानसमाधि-
कुसुमार्चितम् ॥ कुमारं परमानन्दपरं नित्याभिषेचितम् ॥ २ ॥
ममान्तःकरणानन्दस्वानुभूतिरसालयम् ॥ शङ्खचक्राभयोद्युक्त-
नितम्बस्थचतुर्भुजम् ॥३॥ दर्शनीयतमं लोके प्रसन्नवदनाम्बुजम्॥
आकर्णान्तविशालाक्षिकटाक्षाब्धितरङ्गितम् ॥४॥ मन्दस्मितं सुना-
साग्रं सुभ्रुवं फालशोभितम् ॥ जाम्बूनदेन्दुकस्तूरीकुङ्कुमाद्यूर्ध्वपु-
ण्ड्रकम् ॥५॥ पादनूपुरमारभ्य किरीटान्ते समर्चितम् ॥ वज्राङ्कुश-
ध्वजाब्जादिरेखापादललामयोः॥६॥ नखमण्डलचन्द्राणां ज्योत्स्नया
जितमाययोः ॥ विलसत्कुचकाठिन्यकुङ्कुमाङ्कितरेखयोः ॥७॥कम-
लाकरकाठिन्यभाविभ्रदिमशालिनोः ॥ ८ ॥ भजतां परमानन्दम
करन्दवदान्ययोः ॥ लसन्माणिक्यमञ्जीरविद्युत्पुञ्जप्रभाञ्जरैः ॥९॥
मणिकिङ्किणिकाजालघोषैर्वेदान्तरूपिभिः ॥ पादारविन्दसौन्द-
र्ययोग्यानर्घसुभूषणैः ॥११०॥चारुजानूरुलावण्यप्रभारञ्जितभूषणैः॥
नितम्बविलसत्पीतकौशेयाम्बरमेखलैः॥११॥अनर्घरत्नखचितैर्जाम्बू-
नदपरिष्कृतैः ॥ विचित्रतेजसां पुञ्जैः काञ्चीवैडूर्यमण्डलैः ॥ १२ ॥
नाभीपुटलसत्पीतपद्मकोशश्रियोज्ज्वलैः ॥ ऊर्ध्वरोमावलीभाभि-
र्जितेन्द्रमणिकान्तिभिः ॥ १३ ॥ मुक्तादामलसद्वक्षःस्थलपद्मा-
तडित्करैः ॥ ज्योतिर्मयैर्ब्रह्मसूत्रैस्तपनीयमयोज्ज्वलैः ॥ १४ ॥
कम्बुग्रीवालसत्कण्ठमालारत्नप्रभाङ्कुरैः ॥ पदकेषु लसन्नानामणि-
दीपावलीवरैः ॥ १५ ॥ सुरत्नाङ्गदकेयूरकङ्कणैरङ्गुलीयकैः ॥
इन्द्रनीलमणिश्यामरमणीयाहिभूषणैः ॥१६॥ शङ्खचक्राभयादि-
श्रीभूषितैश्च भुजोत्तमैः ॥ सुचारुचुबुकोल्लासिपल्लवाधरपाटलैः
॥१७॥ वज्रपङ्क्तिलसद्दन्तकान्तिचन्द्रातपस्मितैः ॥पूर्णचन्द्रमुखा-
म्भोजरम्यनासासमोन्नतैः ॥ १८ ॥ सुवर्णमकरप्रख्यकुण्डलाभ्यां

कपोलयोः ॥ जितबालार्कबिम्बाभ्यां सौन्दर्याकरसीमयोः ॥१९॥
दयाम्बुधिसुधास्नानकमलाविद्रयोत्सवैः॥ माणिचापलताचारुभ्रूलल-
सद्भालपट्टकैः॥१२०॥आनीलचिकुरान्तःस्थमुक्ताराजिविराजितैः॥
रमणीयसुकर्णाक्षिनिटिलालककुन्तलैः ॥ २१ ॥ राजत्किरीटसौ-
न्दर्यजितकन्दर्पकोटिभिः ॥ त्रितेजोऽधिकसङ्काशैर्नानारत्नैर्महा-
श्रयैः ॥ २२ ॥ तप्तहाटकसंलग्नैर्नानावैचित्र्यरश्मिभिः ॥ अल-
ङ्कृतं किरीटेन स्कन्ददत्तेन तेन च ॥ २३ ॥ राजमानं
दयाम्भोधिं सुधाधाराभिवर्षिणम् ॥ सर्वाङ्गभूषणैस्सर्वजगन्मो-
हनविग्रहम् ॥ रूपलावण्यसर्वाङ्गभूषणाद्यैरतिप्रियम् ॥ २४ ॥
आपादकेशविलसन्मणिमन्महार्हनेपथ्यजालमणिकान्तितडित्कुला
नाम् ॥ जाम्बूनदाम्रथखचितामलरम्यभासां सोपानपालिभिर-
तीव भृशाभिरामम् ॥ २५ ॥ तारागणेन्दुरविमण्डलमण्डितोद्य-
त्सौदामिनीत्रिपथगामहराशियुक्तम् ॥ तार्क्ष्योदयाद्रिकनकाचल-
शृङ्गनिष्ठं कालाभ्रवृन्दमिव कान्तिकुलाभिरामम् ॥२६॥ श्रीवेङ्क-
टेशमतिसुन्दरमोहनाङ्गं श्रीभूमिकान्तमरविन्ददलायताक्षम् ॥
प्राणप्रियं प्रविलसत्करुणाम्बुराशिं ब्रह्मेशवन्द्यममृतं वरदं भ-
जामि ॥२७॥

हे पार्वती ! सबोंके अध्यक्ष महाविष्णु, सब लोकोंके एक ही स्वामी, करुणा और आनन्दकी अधिकतासे सब किसीके लिये आश्चर्यमय, सर्वव्यापक, आनन्दकी मूर्ति, आनन्द अपरिमित ऐश्वर्यसे युक्त, करोड़ों तरुण सूर्यकी प्रभावाले, करोड़ों बिजलीकी चमकवाले, करोड़ों चन्द्रमाकी प्रभावाले, रत्नों और जाम्बूनद ( स्वर्ण ) से सुशोभित एवं विमानकी देवमूर्तियों के तेजमण्डलसे युक्त, दिव्य विमानपर आरूढ़, बहुत सुन्दरतासे बैठे हुए, सबसे उत्तम, बहुत प्रसिद्ध, सब अलङ्कारों से विभूषित, नीले जीमूत (मेघ)के समान वर्णवाले, पीताम्बररूपी बिजलीको पहने हुए, रत्नों के तोरणसे प्रकाशित द्वारकी प्रभासे युक्त, दिव्य श्रेष्ठ, मूर्तिमान, पांच आयुधों से उपासित,चण्ड-प्रचण्ड इत्यादि द्वारपालोंसे स्तुत, सुनन्द-नन्द इत्यादि पार्षदोंसे समन्वित, करोड़ों सूर्यके समान प्रकाशवालेको तथा करोड़ों चन्द्रमाके समान शीतल, अमूल्य रत्नोंसे जड़े हुए दिव्य आभरणोंसे विभूषित,

'अच्युत, अनन्त,' गोविन्द इत्यादि अनेकों मूर्तिवाले, पूर्ण ब्रह्म शरीरवाले, प्रसिद्ध कृष्ण और राम-अवतारवाले, आदि और अन्तसे रहित, सब उपनिषदोंके सारसे जानने योग्य शरीरवाले, श्री तथा भूमिदेवीसे युक्त, श्यामसुन्दर, वेङ्कटाचलाधीश्वर, अनेक करोड़ कामदेवोंकी शोभाको मथनेसे उत्पन्न, संसारको मोहित करनेवाले, गोपालकी विचित्र लीलाओंके कारण, अनेकों शास्त्रोंके रसोंको जाननेवाले, वखानस इत्यादि महर्षियों, ब्रह्मा, अगस्त्य, भरद्वाज, सनक, शुकदेव, वामदेव, शतानन्द, भृगु एवं जनक इत्यादि श्रेष्ठ राजाओंसे पूजित, पुरुषोत्तम, हे देवि पार्वती ! शुक्र, अंगिरा एवं लोकपालोंसे अनेकों हजार वर्ष स्वामिपुष्करिणीके तटपर पूजित, मेरे कुमार ( कार्तिकेय ) की तपस्या और ध्यानरूपी पुष्पसे पूजित, कुमार, परम, उत्तम, आनन्द, नित्यपूजित, मेरे अन्तःकरणके आनन्दके अनुभवरूप रसके भाण्डार, शंख, चक्र, अभयके साथ कटिदेशमें संलग्न चारों भुजावाले, संसारमें परम सुन्दर, कमलके ऐसे प्रसन्न मुखवाले, कानतक फैले हुए बड़े नेत्रोंके कटाक्षरूपी समुद्रकी तरंगवाले, मन्द हास्यवाले, सुन्दर नासिकाके अग्र भागवाले, सुन्दर भौंहोंवाले, सुन्दर ललाट वाले, जाम्बूनद, चन्द्रमणि, कस्तूरी एवं कुंकुम इत्यादिका ऊर्ध्वपुण्ड्र धारण किये हुए, चरणके नूपुरसे लेकर किरीटतक पूजित, वज्र, अंकुश, ध्वजा, कमल इत्यादि रेखाओंसे सुन्दर युगल चरण तथा नख-मण्डलरूपी चन्द्रमाकी ज्योतिसे जीती गयी मायावाले, स्तनोंकी कठिनताको अनुभव करनेसे कुंकुमकी रेखा लगे हुए, कमला ( लक्ष्मी ) के हाथको कठिन बनानेवाली, कोमलतावाले, एवं भजन करनेवालोंको परम आनन्द देनेवाले, हाथोंके माणिक्यके मंजीररूप बिजलीकी प्रभासे, मणिके किंकिणीजालके वेदान्तरूपी शब्दोंसे, चरणकमलों की शोभाके योग्य अमूल्य आभूषणोंसे, सुन्दर जानु और ऊरु ( जंघा ) की सुन्दरताकी प्रभासे शोभित भूषणोंसे, कटिदेशमें शोभते हुए पीत रेशमी वस्त्र तथा मेखलावाले, अमूल्य रत्नोंसे जड़े हुए, जाम्बूनदसे सुशोभित, विचित्र तेजकी राशिवाली काचीके वैडूर्यवाले, पद्मकोशकी सुन्दरतावाले उज्ज्वल शोभायुक्त, नाभीकी गम्भीरतासे उज्ज्वल, ऊपरकी रोमावलीकी चमकसे जीते हुए इन्द्रनील मणिकी कान्तिवाले मोतियोंकी मालासे शोभित छातीमें रहती हुई श्रीलक्ष्मीजीके प्रकाशकी किरणवाले, तपते हुए ज्योतिर्मय ब्रह्मसूत्रोंसे, कण्ठमें लगी हुई कण्ठीमालाके रत्नोंकी प्रभासे, पदकमें शोभती हुई दीपावली जैसे अनेकों मणियोंसे, सुन्दर रत्नोंके अंगद ( बाजू ), केयूर ( बाहुके आभूषण ), कंकण और अंगूठीसे, इन्द्रनील मणिके समान सुन्दर नागाभरणोंसे, शंख, चक्र, अभय इत्यादिकी शोभासे शोभित सुन्दर हाथोंसे, सुन्दर चिबुक (ठुड्डी) के साथ लहरदार ओष्ठसे, रत्नकी पंक्तिकी जैसी शोभती हुई दाँतोंकी पंक्तियोंसे, लजाये हुए चन्द्रमाकी ज्योति तथा पूर्ण चन्द्रके सदृश मुखकमलसे, रम्य नासातक समोन्नत ( नीचे ऊँचे करनेवाले ) हास्यसे, सौन्दर्यसिन्धुकी सीमा जैसे एवं मकरके आकारवाले सूर्यको जीत लिये हुए कपोलोंके स्वर्ण कुण्डलोंसे, दयारूपी अमृतके समुद्रमें स्नान किये लक्ष्मीके दोनों नेत्रोंके उत्सवसे (अर्थात् कटाक्षसे), मणिमय धनुषकी तरह सुन्दर भौंहोंसे शोभित ललाटसे, नील केशोंके बीचमें रखे हुए मोतियोंसे विराजमान सुन्दर कान, नेत्र एवं ललाटमें लग्न केशपाशसे, चमकते हुए किरीटके सौन्दर्यसे करोड़ों कामदेवोंकी शोभाको जीते हुए जाज्वल्यमान स्वर्णके बीचमें रखे हुए, अनेकों प्रकारके विचित्र किरणवाले तथा तीन तेजसे भी अधिक चमकवाले लोकोत्तम रत्नोंसे, एवं स्कन्दके दिये हुए किरीटसे अलंकृत—उससे ही शोभित, मधुकी धाराको बरसानेवाले,

शोभते हुए दयाके समुद्र, सब अंगोंके भूषणोंसे सारे संसारको मोहित करनेवाले, रूपकी सुन्दरता, सब अंगोंके भूषण इत्यादिमें विशेष करके प्रिय, चरणसे लेकर केशपर्य्यन्त अत्यन्त सुन्दर शोभते हुए जैसे श्रेष्ठ एवं बहुमूल्य मणियोंसे शोभित नेपथ्यजाल, बिजलीके जैसे चमकते हुए जाम्बूनद इत्यादिसे जड़े हुए निर्मल और सुन्दर प्रकाशोंके सोपानसे अधिक रम्य, तारागण, चन्द्र एवं रविमंडलसे शोभित, चमकती हुई बिजलीरूप गंगा एवं महराशिसे युक्त स्वर्णाचल रूप उदयाचलके शृङ्गमें रहते हुए श्यामघनके समूहकी चमकके जैसे सुन्दर, अत्यन्त सुन्दर और मोहक अंगवाले, लक्ष्मी और धरणी देवीके स्वामी, कमलदलके जैसे नेत्रवाले, प्राणके प्यारे, करुणाके समुद्र, ब्रह्मा एवं शिवसे वन्दित तथा अमृत और वरको देनेवाले श्रीवेङ्कटेशका भजन करता हूं ॥१२७॥

सततं हृदयाम्भोजमध्ये श्रीवेङ्कटेश्वरम् ॥ प्रणवार्थस्वरूपं तं त्रिमण्डलसुसंस्थितम् ॥ २८ ॥ चन्द्रसूर्याग्निबिम्बानां प्रकाशकरमच्युतम् ॥ ध्यानस्वरूपं देवेशं सर्वदानन्दनं मम ॥ २९ ॥ आपादमस्तकान्तं वै श्रीसद्भूषणभूषितम् ॥ चन्दनागरुकर्पूरकस्तूरीमृगलाञ्छनैः ॥ १३० ॥ कुङ्कुमैर्घनसौरभ्यसुवासितदिगन्तरैः ॥ मिश्रितैर्दिव्यगन्धैश्च सुलिप्ताङ्गं मनोहरैः ॥ ३१ ॥ नानावर्णलसत्पुष्पादिव्यसौरभ्यमालया ॥ हिमाम्बुसिक्तया दिव्यवैजयन्त्या विराजितम् ॥ ३२ ॥ कुमारस्वामिना नित्यं भक्त्या निर्मलचेतसा ॥ दिव्योरसैर्दिव्यरसप्रवाहामृतपायसैः ॥ ३३ ॥ दधिक्षीरघृतैर्दिव्यसूपान्नमधुशर्करैः ॥ दिव्यसौरभनैवेद्यैः षड्रसामृतपायसैः ॥ ३४ ॥ दिव्योपचारैः कल्याणवैभवैः षोडशाभिधैः ॥ दिव्यसौरभताम्बूलैर्मुक्ताचूर्णविमिश्रितैः ॥ ३५ ॥ कर्पूरवीटिकाभिश्च दिव्यभोगैः सुपूजितम् ॥ सर्वाङ्गभूषणाधिक्यलसत्कमलया सह ॥३६॥ धूपदीपमहादीपराजन्नीराजनोत्तमैः ॥ सुन्दरैश्चामरैश्छत्रैर्व्यजनैर्दर्पणोत्तमैः ॥३७॥ गीतवादित्रनृत्यैश्च मृदङ्गपटहानकैः ॥ वीणावेणुसुतालाद्यैर्गोमुखस्वरमण्डलैः ॥३८॥ तूर्यभेरीसुशङ्खेन्द्रदिव्यघोषैर्दिवौ-

कसाम् ॥ सिद्धकिन्नरगन्धर्वाप्सरैः किम्पुरुषव्रजैः ॥३९॥ सतुम्बुरुहाहाहूहूनारदादिसुरर्षिभिः ॥ गरुडोरगयक्षाणां विद्याधरविनोदिनाम् ॥ १४० ॥ सङ्गीतमधुरालापैः स्कन्दस्तोत्रैः प्रतोषितम् ॥ शुद्धसत्त्वमयाकारमपि स्वामिसरस्तटे ॥४१॥ रमन्तं रमया सार्धमानन्दैकरसायनम् ॥ वसन्तममलानन्दमारमारामं मुदान्वितम् ॥४२॥ समस्तदेवतावन्द्यं सार्वभौमशिखामणिम् ॥ कर्तारं सृष्टिकाले च भर्तारं पालने जगत् ॥४३॥ हर्तारं प्रलये काले वेङ्कटेश्वरमव्ययम् ॥ सर्वदेवनियन्तारं सर्वदेवेश्वरेश्वरम् ॥४४॥ चराचरात्मकं विश्वं रचितारं कृपानिधिम् ॥ किरीटाङ्गदसंराजद्दीर्घबाहुमरिन्दमम् ॥ ॥४५॥ सर्वाङ्गलक्षणानन्दं दर्शयन्तं पदाम्बुजम् ॥ सत्यं विशुद्धविज्ञानं घनप्रज्ञाप्रदं हरिम् ॥ ४६ ॥ कारुण्यविग्रहं देवं सर्वजीवदयापरम् ॥ उपास्महे वयं नित्यं हृदयेऽष्टदलाम्बुजे ॥४७॥

और प्रणवके अर्थ स्वरूप, तीनों मण्डलोंमें स्थित, चन्द्र, सूर्य इत्यादि बिम्बोंको प्रकाश करनेवाले, अच्युत, सर्वदा मेरे आनन्दको देनेवाले ध्यानस्वरूप देवेश, पादसे लेकर मस्तक-पर्य्यन्त श्रीमानोंके भूषणोंसे भूषित, अत्यन्त सुगन्धसे सब दिशाओंको सुगन्धित किये हुए एवं मिश्रित चन्दन, अगर, कपूर, कस्तूरी (मृगमद), कुंकुम इत्यादिका दिव्य तथा मनोहर लेप किये हुए, अनेक वर्णोंके सुगन्धियुक्त पुष्पोंकी अलौकिक मालासे शोभित, गंगेके जलसे सिंचे हुए वैजयन्तीकी मालासे शोभित, दिव्य वस्त्रसे, दिव्य रसके प्रवाहयुक्त अमृतके जैसे पायससे, दही, दूध, घी, स्वर्गीय सूपान्न, मधु एवं शर्करासे, स्वर्गीय गंधवाले नैवेद्यसे, षट् रसयुक्त अमृतके जैसे पायससे, कल्याणयुक्त विभवके षोडश प्रकारके उपचारोंसे, मुक्ताके चूर्ण मिले हुए अलौकिक गन्धवाले ताम्बूलसे, कर्पूरकी बीड़ी दिव्य भोगोंसे, धूप, दीप, महादीप उत्तम नीराजन ( आरती ) से, सब अङ्गोंके आभूषणकी अधिकतासे प्रकाशमान श्रीलक्ष्मीजीके साथ कुमारस्वामी द्वारा सदा भक्ति एवं निर्मल चित्तसे पूजित, सुन्दर चामर, छत्र, व्यजन ( पंखा ), उत्तम दर्पण ( आइना ), गीत, बाजा, नृत्य ( नाच ), मृदंग, पटह, नगाड़ा, वीणा, वेणु, सुन्दर ताल इत्यादिसे युक्त गोमुखके बाजाओंके समूह, तूर्य, भेरी, सुन्दर शंख, देवताओंके सुन्दर शब्दोंसे, सिद्ध, किन्नर, गन्धर्व, अप्सरा, किम्पुरुष, तुम्बुरु, हा हा, हू हू, नारद इत्यादि देवर्षि, गरुड़, सर्प, यक्ष, विनोदवाले विद्याधरके संगीतके मधुर आलाप एवं स्कन्दकी स्तुतिसे प्रसन्न

किये गये, शुद्ध सत्त्वगुणके आकारवाले, स्वामी सरोवरके तटपर लक्ष्मीके साथ रमण करते हुए, आनन्दित मनवाले, निर्मल आनन्दमें रहनेवाले, आत्माराम, आनन्दयुक्त, सब देवताओंसे नमस्कृत, सार्वभौम राजाओंकी शिखाकी मणि, सृष्टिके समय सृष्टि करनेवाले, स्थितिके समय पालन करनेवाले, प्रलयके समय नाश करनेवाले, नहीं नाश होनेवाले, अव्यय, श्रीवेङ्कटेश्वर, सब देवताओंके नियन्ता, सब देवताओंके स्वामीके स्वामी, चर और अचरमें व्याप्त, संसारकी रक्षा करनेवाले, दयाके समुद्र, किरीट एवं अंगद (बाजू) से शोभित लम्बी बाहुवाले, शत्रुओंको दमन करनेवाले, सब अंगोंके लक्षणोंसे आनन्दरूप चरणकमलोंको दिखलाते हुए, सत्य विशुद्ध विज्ञान परम बुद्धिको देनेवाले, करुणाकी मूर्ति तथा सब जीवोंपर उत्तम दया करनेवाले हरिकी हमलोग अपने हृदयके अष्टदल कमलमें उपासना करते हैं ॥१४६॥

अष्टाक्षरपदानन्दं रमेशं कर्णिकोपरि ॥ एवं ध्येयं पुरस्कृत्य पश्चाद्ध्यानमिदं वदेत् ॥ ४८ ॥ यन्नामश्रुतिसारसान्द्रजलधि-स्थाने लसत्कौस्तुभं स्वाज्ञानान्धतमिस्रदुःखहरणं मत्पुत्रसञ्जीव-नम् ॥ विश्वाभीष्टवरप्रदानफलदं भोगीन्द्रसद्भूषणं सर्वैश्वर्यनि-दानमात्मवरदं श्रीवेङ्कटेशं भजे ॥४९॥

आठ अक्षरके पदार्थ, आनन्दरूप, लक्ष्मीके पतिको हृदय कर्णिकाके ऊपर सत्कारपूर्वक धारण करके, पीछे यह ध्यानकरे कि जिनका नाम वेदोंके सार (वेदान्त) के गम्भीर समुद्रमें शोभता है, उन्हीं चमकती हुई कौस्तुभ मणिवाले अपने अज्ञानरूपी अन्धकारके दुःखोंको नाश करनेवाले, मेरे पुत्रके संजीवन, संसारके अभीष्टप्रदान रूपी फलको देनेवाले, सर्पोंके सुन्दर आभूषणों से युक्त, सब ऐश्वर्योंके निदान एवं आत्माको वर देनेवाले श्रीवेङ्कटेशका भजन करता हूं ॥१४६॥

सन्तोषो मम वेङ्कटेशनिकटे श्रीस्वर्णमुख्यास्तटे स्वावासो भवतीति दिव्यसरितः स्वर्गापवर्गप्रदे ॥ कैलासे विधिकुम्भसम्भ-वनुते श्रीकालहस्तिस्थले कैवल्यं वसतामनन्तमहिमा योगी-श्वरो दुर्लभः ॥१५०॥

श्रीवेङ्कटेशके निकट, गङ्गारूप श्रीसुवर्णमुखरीके स्वर्ग और मोक्षको देनेवाले तटपर मेरा निवास हो इससे मुझे सन्तोष है; ब्रह्मा और अगस्त्यसे प्रणाम किये गये श्रीकालहस्तिस्थलरूपी कैलाश एवं कैवल्यमें रहने वालोंके बीचमें अनन्त महिमावाले योगीश्वरके लिये भी यह दुर्लभ है ॥१५०॥

तारं नतिं समुद्धृत्य श्रीपूर्वं मन्त्रमुच्चरेत् ॥ नवाक्षरमिदं देवि

सर्वगोप्यं हृदि स्थितम् ॥ त्वयि स्नेहात्समाख्यातं परमानन्दपद-
प्रदम् ॥ ५१ ॥ नमः श्रीवेङ्कटेशाय शुद्धज्ञानस्वरूपिणे ॥ वासुदे-
वाय शान्ताय श्रीनिवासाय मङ्गलम् ॥ ५२ ॥ मन्त्रध्यानमिदं
कृत्वा पश्चान्मन्त्रमिदं वदेत् ॥ नमः श्रीवेङ्कटेशाय नमोन्तं वा
समुच्चरेत् ॥५३॥

वार ( ॐ ) को पहले कहकर पश्चात् नति ( नमः ) कहे; पुनः श्री और मन्त्रका उच्चारण करे; हे देवि ! यह नवाक्षर ( ॐ नमः श्रीवेङ्कटेशाय ) हृदयमें रखते हुए सबसे छिपाने योग्य है; इस उत्तम आनन्दके देनेवालेको तुम्हारे स्नेहसे प्रगट किया है। शुद्ध ज्ञानस्वरूप, वासुदेव, शान्त, "नमः श्रीवेङ्कटेशाय" इस मन्त्रका ध्यान करके पीछे इस मन्त्रको कहे—"नमः श्रीवेङ्कटेशाय" अथवा "नमः" अन्तमें उच्चारण करे ( श्रीवेङ्कटेशाय नमः ) ॥१५३॥

अष्टाक्षरमिदं ख्यातं भुक्तिमुक्तिफलप्रदम् ॥ रहस्यं सर्वमन्त्रा-
णां गोपनीयं प्रयत्नतः ॥ ५४॥ स्वामिपुष्करिणीस्नानं वेङ्कटेश्वरद-
र्शनम् ॥ महाप्रसादस्वीकारस्त्रयं त्रैलोक्यदुर्लभम् ॥ ५५ ॥ सर्वत्र
कीर्तयेत्प्राज्ञःस्वामिपुष्करिणीं पराम् ॥ सुवर्णमुखरीं दिव्यां वेङ्क-
टेश्वरमव्ययम् ॥५६॥ अज्ञानान्धतमःसूर्यं पापिनां तु न रोचते ॥
एतत्सूक्ष्मतरं पुण्यं योगिनामपि दुर्लभम् ॥५७॥

यह अष्टाक्षर मन्त्र प्रसिद्ध, भोग और मोक्षको देनेवाला, सब मन्त्रोंका रहस्य और यत्नपूर्वक गुप्त रखने योग्य है। (१) स्वामिपुष्करिणीका स्नान, (२) श्रीवेङ्कटेशके दर्शन, और (३) महाप्रसादको पाना—ये तीनों वस्तुएं तीनों लोकोंमें दुर्लभ हैं। बुद्धिमान उत्तम स्वामिपुष्करिणी, स्वर्गीय सुवर्णमुखरी एवं अव्यय श्रीवेङ्कटेशका सर्वत्र कीर्तन करे; यह अत्यन्त ही सूक्ष्म, पवित्र, योगियोंके लिये भी दुर्लभ, अज्ञानरूपी अन्धकारके लिये सूर्य और पापियोंको नहीं अच्छा लगनेवाला है ॥१५७॥

स्वामिपुष्करिणीं गङ्गां सुवर्णमुखरीं पराम् ॥ वेङ्कटेशं हरिं सेतुं
सर्वतीर्थेषु संस्मरन् ॥५८॥ महापातकसङ्घेभ्यो मुक्तः प्रज्ञानवान्
भवेत् ॥ एतत्स्थूलं महापुण्यं पापिनां तु न रोचते ॥५९॥

स्वामिपुष्करिणी, गङ्गा, उत्तम सुवर्णमुखरी, श्रीवेङ्कटेश हरि एवं सेतुको सब तीर्थोंमें स्मरण करनेवाला मनुष्य महापापके समूहसे मुक्त होकर बुद्धिमान हो जाता है। यह स्थूल, महापवित्र, पापियोंको नहीं अच्छा लगनेवाला है ॥१५६॥

स्वामिपुष्करिणीतीर्थं दिव्यौषधरसायनम् ॥ वैद्यः श्रीवेङ्कटेशोऽयं मृत्युरोगनिकृन्तनः ॥१६०॥ यावद्वेङ्कटनायकस्य शिखरिप्राप्तिर्न वै योगिनां तावज्जन्मजरादिदुःखनिलयः संसारकोलाहलः॥ ब्रह्माण्डान्तपरिभ्रमत्कृतमहापुण्यौघचन्द्रोदये सत्सङ्गामृतसेवनाद्धरिमये प्रीतिर्भवेद्वेङ्कटे ॥६१॥ यावन्नास्ति समस्तलोकरमणः श्रीवेङ्कटेशाभिधः स्वानन्दानुभवस्थिरोऽमलधियां योगीश्वराणां नृणाम् ॥ नानायोनिषु गर्भवासमसुखं विण्मूत्रशोकाकुलं सम्प्राप्याशु विनाशदुःखनरकांस्तावद्भवाब्धौ स्थितिः ॥६२॥

स्वामिपुष्करिणी तीर्थ ही दिव्य (स्वर्गीय) रासायनिक ओषधि है, मृत्युरोगको छुड़ानेवाले वैद्य यह श्रीवेङ्कटेश ही हैं। श्रीवेङ्कटाचलके शिखरपर जबतक योगियोंका आना नहीं होता तबतक, उनके—जन्म-जरा इत्यादि दुःखोंके घर संसारका कोलाहल रहता है। सम्पूर्ण ब्रह्माण्डमें घूमते हुए किये गये पुण्यरूपी चन्द्रोदयमें सत्सङ्गरूपी अमृतके सेवनसे श्रीहरि वेङ्कटेशमें प्रीति होती है। जबतक समस्त संसारके प्रिय श्रीवेङ्कटेश अपने आनन्दके अनुभवमें नहीं ठहरे हैं तबतक, निर्मल बुद्धिवाले योगीश्वरों एवं मनुष्योंको अनेक योनियोंमें विष्ठा, मूत्र और शोकसे आकुल गर्भवासका दुःख प्राप्तकर विनाशके दुःखरूपी नरक या संसारसागरमें रहना होता है ॥१६२॥

आख्यानं देवतागोप्यं ब्रह्मगोप्यं समासतः ॥ इदमेव ममानन्दं ध्यानं हृदयगोचरम् ॥६३॥

यह मेरा आनन्ददायक एवं हृदयसे जाननेयोग्य ध्यान और आख्यानपूर्ण रूपसे देवताओं और ब्रह्मासे गुप्त रखने योग्य है ॥१६३॥

अस्य श्रीवेङ्कटेशस्य सीमायां यात्रिके जने ॥ वाङ्मनःकायगर्वेण ये कुर्वन्ति नराधमाः ॥६४॥ उपद्रवं च घातं च द्रव्यं चापहरन्ति ते ॥ रौरवादिषु सर्वेषु नरकेषु च दारुणम् ॥६५॥

ब्रह्मकल्पसहस्रान्तं पच्यन्ते नात्र संशयः ॥ भक्त्या श्रीवेङ्कटेशस्य सीमारक्षां करोति यः ॥६६॥ स एव राज्यकर्ता स्याद्देहान्ते मुक्तिमाप्नुयात् ॥ परमानन्ददं ध्यानं कृत्वान्नं भुज्यते मया ॥६७॥ त्वया समो नैव नैव ध्येयो ब्रह्माण्डगोलके ॥ सत्यं श्रीवेङ्कटेशस्य समः कालत्रयेऽपि नो ॥६८॥

इस श्रीवेङ्कटेशकी सीमामें यात्रा करनेवाले मनुष्योंके साथ जो कोई दुष्ट मनुष्य वचन, मन और शरीर गर्वसे उपद्रव वा घात करते हैं अथवा द्रव्य हरण करते हैं, वे रौरव इत्यादि सब कठिन नरकोंमें ब्रह्माके हजार कल्पपर्यन्त यातना भोगते हैं—इसमें सन्देह नहीं है। जो वेङ्कटेशकी सीमाकी रक्षा भक्तिसे करता है वही राज्यका करनेवाला है और शरीरके अन्तमें मुक्ति पाता है। परम आनन्द देनेवाला ध्यान करके मैं तुम्हारे साथ अन्न भोजन करता हूं; हमलोगोंके ध्यान करने योग्य श्रीवेङ्कटेशके बराबर इस सम्पूर्ण ब्रह्माण्डमें कोई वस्तु नहीं है। नहीं है—यह सत्य है ॥१६८॥

एतं रहस्यमध्यायं श्रीवेङ्कटपतेः प्रियम् ॥ जपित्वा भुज्यते येन प्रत्यहं परमात्मनः ॥६९॥ नृत्यन्ति पितरः सर्वे सन्तुष्टास्तस्य वंशजाः ॥ देवाश्च ऋषयस्तृप्ताः प्रयान्ति परमं पदम् ॥७०॥

परमात्मा श्रीवेङ्कटेशके प्रिय इस रहस्यके अध्यायको प्रति दिन जो जपकर भोजन करता है, उसके वंशके सब पितर संतुष्ट हो आनन्दसे नाचते हैं, देवता और ऋषि तृप्त हो जाते हैं और अन्तमें वह परमपद पाता है ॥१७०॥

आश्चर्यमतुलं श्रुत्वा परमानन्दनिर्वृताः ॥ आनन्दाश्रुपरिक्लिन्ना रोमाञ्चितवपुर्धराः ॥ ७१ ॥ विस्मिताः शौनकाद्यास्तु भक्त्यानन्दं पुनर्गताः ॥ पुनर्ध्यानं समासाद्य पुनर्गद्गदया गिरा ॥७२॥ ऊचुः शनैर्महात्मानं सूतं पौराणिकोत्तमम् ॥ व्यासशिष्यं महाभागं शास्त्रसिद्धान्तकोविदम् ॥७३॥

इस अतुल आश्चर्यको सुन परम आनन्दित हो, आनन्दके आंसूसे भीगे हुए, पुलकित रोमयुक्त शरीरवाले तथा आश्चर्ययुक्त शौनक इत्यादिने पुनः भक्तिसे आनन्दको पाये हुए पुनः ध्यान करके गद्गद् वाणीसे उत्तम पौराणिक, व्यासके शिष्य, महाभाग तथा शास्त्रके सिद्धान्तको जाननेवाले सूतसे कहा ॥१७३॥

ऋषय ऊचुः—

अद्य श्रुतं श्रुतं मुख्यमद्यानन्दं गता वयम् ॥ अद्यैव जन्म सफलं साक्षात्संसारमोचकम् ॥ ७४ ॥ त्वत्प्रसादाद्गमिष्यामो वयं शेषाचलं प्रति ॥७५॥

ऋषि बोले—आज ही हमने मुख्य बात सुनी है। आज हमलोग आनन्दको प्राप्त हुए हैं। आज ही हमारे जन्म सफल हुए हैं। आपकी कृपासे हमलोग साक्षात् संसारको छुड़ानेवाले शेषाचलको जायँगे ॥१७५॥

श्रीसूत उवाच—

अष्टादशपुराणेतिहासानामुपधर्मिणाम् ॥ ७६ ॥ पुराणानां स्मृतीनां च सर्वेषां श्रुतिसारिणाम् ॥ अखिलोपनिषत्सारवेदान्तानां मुनीश्वराः ॥७७॥ श्रवणैश्च कृतैर्योगैर्भक्तिज्ञानाविशारदैः ॥ यज्ञदानतपःकर्मव्रतमन्त्रजपार्चनैः ॥७८॥ आजन्म नैमिशारण्यकृतपुण्यैरनेकशः ॥ भवतामागतं हस्ते साक्षात्संसारमोचकम् ॥७९॥

श्रीसूतजी बोले—हे मुनीश्वरो ! अष्टादश पुराण, इतिहास, उपपुराण, स्मृति और सब वेदोंके सार भूत समस्त उपनिषदोंका सार वेदान्तोंके सुनने, भक्ति ज्ञान और विरागके देनेवाले योगके करने, यज्ञ, दान, तप, कर्म, व्रत, मन्त्रजप, और पूजाके करने, तथा जन्मपर्यन्त नैमिषारण्यमें अनेक प्रकारके पुण्य करनेसे साक्षात् संसारको छुड़ानेवाला यह आपके हाथमें आया है ॥१८०॥

वैकुण्ठस्थानशेषाद्रिप्राप्तिरूपं महत्फलम् ॥ अहं गोप्यमिदं वेद्मि शुको वेत्ति न चापरः ॥१८०॥ मद्गुरोः कृपयाऽधीतमुक्तं च भवतां द्विजाः ॥ गच्छध्वं मुनयः सर्वे सस्त्रीवृद्धाः सबालकाः ॥८१॥ समाप्य सत्रं सकलं विलम्बो मास्तु शीघ्रतः ॥ तत्र गत्वोपवासेन स्नात्वा स्वामिसरोवरे ॥ ८२ ॥ नत्वाद्य भूमिवाराहं ज्ञानदेवनिवासिनम् ॥ दिव्यं विमानमाश्रयं नत्वा श्रीवेङ्कटेश्वरम् ॥८२॥ प्रदक्षिणनमस्कारैः स्तुत्वा स्तोत्रैः प्रणम्य च ॥ नैवेद्यदानधर्मैश्च

पूजां कृत्वा च भक्तितः ॥ ८४ ॥ मौनव्रतमथ त्यक्त्वा क्षमापूर्वं वरप्रदम् ॥ सम्प्रार्थ्य निवसामोऽत्र भूयात्तेऽनुग्रहो महान् ॥८५॥ इत्येवं कायवाक्चित्तैर्निवासं सत्यमीरितम् ॥ कुरुध्वं त्वरया भक्त्या यूयं वैकुण्ठवेङ्कटे ॥ ८६ ॥

वैकुण्ठका स्थान श्रीशेषाचलकी प्राप्तिरूपी, अतिगोप्य, इस बड़े फलको मैं जानता हूं, श्रीशुकदेव जानते हैं दूसरा नहीं जानता, हे ब्राह्मणो ! अपने गुरुकी कृपासे पढ़ा हुआ आपसे कह दिया। सब सत्र (यज्ञ) को शीघ्र ही समाप्त करके स्त्री, वृद्ध और बालकोंके साथ वहां जाकर, उपवासपूर्वक स्वामिसरोवरमें स्नानकर पहले ज्ञानक्षेत्रके निवासी भूमिवराह पश्चात् स्वर्गीय अद्भुत विमानको प्रणाम कर, प्रदक्षिणा एवं नमस्कार-पूर्वक स्तुति, नैवेद्य, दान तथा अन्यान्य समर्पणके धर्मोंके साथ भक्तिपूर्वक वरद श्रीवेङ्कटेश्वरकी पूजा करके, मौन व्रतको छोड़कर क्षमापूर्वक प्रार्थना करे—"आपका बहुत अनुग्रह हो हमलोग यहां रहेंगे"। इस प्रकार कर्म, मन और वचनसे सत्य कहा हुआ वहां (श्रीवेङ्कटाचलमें) शीघ्रता और भक्तिसे आपलोग निवास कीजिये ॥१८६॥

परमानन्दसान्द्राब्धौ क्रीडध्वं मुनिपुङ्गवाः ॥ समस्तदेवता-सिद्धसन्निधावारमवेङ्कटे ॥८७॥ स्वामिना क्षेत्रपालेन सुप्रसन्नेन रक्षिते ॥ निवासमपि निर्विघ्नं कुरुध्वमविशङ्कया ॥८८॥ तयोरनुग्रहेणैव वैकुण्ठक्षेत्रपालयोः ॥ भद्रं वो वसतां नित्यं शाश्वतं भवति द्विजाः ॥८९॥ अस्मिन् क्षेत्रे कृतानां च महतां पापकर्मणाम् ॥ क्षेत्रपालस्य शूलाग्रे यातना चक्रवद्भवेत् ॥१९०॥ युगान्तं क्षणमात्रेण तेषां कालस्तु गच्छति ॥ पापान्ते मुक्तिरस्त्येव वेङ्कटाद्रौ न संशयः ॥९१॥

हे मुनियोंमें श्रेष्ठ ! परम आनन्द-घनके समुद्रमें आपलोग क्रीड़ा कीजिये। समस्त देवता और सिद्धोंके समीप, अपने पापके नाश करनेवाले सुप्रसन्न स्वामी क्षेत्रपालसे रक्षित श्रीवेङ्कटेशके पास आपलोग निर्भय और निर्विघ्न निवास कीजिये। हे ब्राह्मणो ! उस विष्णु और क्षेत्रपालकी कृपासे आपके वहां रहने हुए नित्य कुशल होगा। इस क्षेत्रमें किये हुए पापकर्मोंकी यातना क्षेत्रपालके शूलके आगे भागमें चक्रके जैसी होती है। उनका समय क्षणमात्रमें युगान्त चला जाता है। और पापके अन्तमें श्रीवेङ्कटाचलपर ही मुक्ति होती है। इसमें सन्देह नहीं है ॥१९१॥

सत्यं सत्यं पुनः सत्यं सद्गुरोर्वचनं द्विजाः ॥ भवतां पुण्यशी-
लानां नैमिषारण्यवासिनाम् ॥ ६२ ॥ कृपयानुग्रहं लब्ध्वा काशीं
गत्वा प्रणम्य च ॥ सद्गुरोः पादमूलं च व्यासस्यामिततेजसः
॥६३॥ अनुज्ञया गमिष्यामि वेङ्कटाद्रिं द्विजोत्तमाः॥

हे ब्राह्मणो ! मेरे गुरुका वचन सत्य है ! सत्य है !! और पुनः सत्य है !!! नैमिषारण्यके वासी आप लोगोंकी कृपासे अनुग्रहको पाकर काशी जाकर अपने गुरुके चरणकमलको प्रणाम करके अति तेजस्वी व्यासके अनुग्रहसे श्रीवेङ्कटाचलको जाऊंगा ॥१९४॥

सूतवाक्यं तदा श्रुत्वा शौनकाद्या ऋषीश्वराः ॥ ९४ ॥
समाप्य सत्रमागत्य वेङ्कटाद्रिमनुत्य च ॥ सूतवाक्यप्रमाणेन
तत्रानन्दपदाम्बुधौ ॥९५॥ देहान्तं प्राप्य मोदन्ते ससूताः शौन-
कादयः ॥

सूतके वचनको सुनकर शौनक इत्यादि ऋषिगण यज्ञको समाप्त कर श्रीवेङ्कटाचल आकर, सूतके वचनको प्रमाण मानकर, वहां रहते हुए आनन्दके समुद्रमें सूतके साथ शौनक इत्यादि देहान्तको प्राप्त होकर आनन्द करते हैं ॥१९६॥

इमं पवित्रमध्यायं साक्षात्संसारमोचकम् ॥ ९६ ॥ सर्ववे-
दान्तसिद्धान्तं यः श्रावयति नित्यशः ॥ वेङ्कटेश्वरभक्तेभ्यो
ब्राह्मणेभ्यश्च योगिनाम् ॥ ९७ ॥ यः शृणोति सदा भक्त्या
रहस्यानुभवोत्तमम् ॥ यः स्थापयति लोकेऽस्मिन् सिद्धान्तमि-
ममद्भुतम् ॥९८॥ विद्यार्थी लभते विद्यां धनार्थी लभते धनम् ॥
पुत्रार्थी लभते पुत्रान् कन्यार्थी लभते वधूम् ॥ ९९ ॥ वश्यार्थी
वश्यमाप्नोति जयार्थी जयमाप्नुयात् ॥ मोक्षार्थी मोक्षमाप्नोति
ज्ञानार्थी ज्ञानमाप्नुयात् ॥ २०० ॥ यां यां कामयते सिद्धिं तां
तामाप्नोति स द्विजः ॥ वेङ्कटेशे परां प्रीतिं लभते सोऽतिभक्ति-
मान् ॥२०१॥

इति श्रीभविष्योत्तरपुराणे श्रीवेङ्कटाचलमाहात्म्ये उमामहेश्वरसंवादे सकलोपनिषत्सिद्धान्त-श्रीवेङ्कटेश्वररहस्यानुभवो नामाशीतितमोऽध्यायोऽत्र प्रथमोऽध्यायः ॥१५॥

साक्षात् संसारके छुड़ानेवाले सब वेदान्तोंके सिद्धान्तरूप इस पवित्र अध्यायको जो प्रतिदिन सुनाता है और जो सदा श्रीवेङ्कटेश्वरके भक्त ब्राह्मणोंसे योगियोंकेही अनुभव करने योग्य रहस्यको भक्तिपूर्वक सुनता है, और जो इस अद्भुत सिद्धान्तका संसारमें स्थापन करता है, वह विद्यार्थी विद्या, धनार्थी धन, पुत्रार्थी पुत्र, कन्यार्थी कन्या, वंश चाहनेवाला वंश, जय चाहनेवाला जय, मोक्षार्थी ( मोक्ष चाहनेवाले ) मोक्ष तथा ज्ञान चाहनेवाला ज्ञान पाता है। हे ब्राह्मणो ! वह जो जो सिद्धि चाहता है सो सो पाता है; और वह श्रीवेङ्कटेशकी उत्तम भक्ति भी पाता है ॥२०१॥

इति श्रीभविष्योत्तर पुराणके श्रीवेङ्कटाचल माहात्म्यमें शिव पार्वती सम्वादमें सब उपनिषदोंका सार श्रीवेङ्कटेश रहस्य नामक प्रथम अध्याय समाप्त ॥

कल्याणाद्भुतगात्राय कामितार्थ प्रदायिने ॥
श्रीमद्वेङ्कटनाथाय श्रीनिवासाय मङ्गलम् ॥



॥ श्रीनिवासपरब्रह्मणे नमः ॥

अथ ब्रह्माण्डपुराणान्तर्गत

# श्रीवेङ्कटाचलमाहात्म्यम्

श्रियः कान्ताय कल्याणनिधये निधयेऽर्थिनाम् ॥
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ॥
श्रीवेङ्कटाद्रिनिलयः कमला कामुकः पुमान् ॥
अभङ्गुरविभूतिर्नः तरङ्गयतु मङ्गलम् ॥

## प्रथमोऽध्यायः ॥१॥

विश्व-विदित ब्रह्माण्डमें, ग्यारहवां अध्याय ।
विविध कथा वृषभाद्रिकी, कही सविधि समझाय ॥१॥
शौनक अरु श्रीसूतजी, महत् पुराण ब्रह्माण्ड ।
नारद-भृगुने वह कथा, कही विचित्र प्रकाण्ड ॥२॥
विविध नाम शेषाद्रिके, परिचय नारद सिद्ध ।
क्षीरोदधिके देवका, वर्णन किया प्रसिद्ध ॥३॥
भूमि-रमण इच्छुक विभु, निज क्रीड़ास्थल प्रान्त ।
नारदोक्त सुन्दर कथा, कही सूत भगवन्त ॥४॥

ऋषय ऊचुः—

कथितानि महाभाग पुण्यक्षेत्राण्यनेकशः ॥ प्रशस्तानि च तीर्थानि तानि तानि महीतले ॥ १ ॥ तेभ्योऽधिकतमं क्षेत्रं तीर्थं पापविनाशनम् ॥ यच्चास्ति तादृशं तीर्थं तन्नो ब्रूहि सुनिश्चितम् ॥ २ ॥ यस्मिन् वसति सर्वात्मा माधवो भक्तवत्सलः ॥३॥ विहरन् मुदितो नित्यं श्रिया भूम्या च नीलया ॥ ४ ॥ यस्मिंश्च वसतिं प्राप्तो दुस्तरं भवसागरम् ॥ सुखेन जन्तुस्तरति प्राप्तवित्तः शुचं यथा ॥५॥ तस्य क्षेत्रस्य माहात्म्यं विस्तराद्वक्तुमर्हसि ॥ न च तेऽविदितं किञ्चित्पश्यामो भुवनत्रये ॥६॥

मुनिगण बोले—हे महाभाग सूतजी! आपने पृथ्वीपर अनेक पुण्यक्षेत्र और बहुतसे प्रसिद्ध तीर्थ भी बतलाये। अब आप कृपाकर यह बतलाइये कि सबसे बढ़कर कौन पापविनाशक सुनिश्चित तीर्थ है, जहां भक्तोंपर दयालु सर्वात्मा श्रीमाधव भूमि और नीलाके साथ विहार करते हुए निवास करते हैं। अपार भवसागरमे निमग्न प्राणिमात्र जहां निवास करते हुए अनायासही धन पाकर सब दुःखोंको पार कर जाते हैं, आप उस क्षेत्रका माहात्म्य विस्तारपूर्वक कहें। हम समझते हैं कि त्रिलोकमें कोई भी ऐसा स्थान नहीं जिसे आप न जानते हों ॥६॥

श्रीसूत उवाच—

स्मारितोऽस्मि महाभागाः साम्प्रतं वचनेन वः ॥ कथयिष्यामि मुनयः शृणुतैकाग्रमानसाः ॥७॥ अमुमेवाधिकृत्यार्थं पुरा नारायणात्मकम् ॥ अपृच्छं मुनिशार्दूलं व्यासं सत्यवतीसुतम् ॥८॥ अथ पृष्टो मया व्यासः प्राह सत्यवतीसुतः ॥

श्रीसूतजीने कहा—हे महाभाग! आपलोगोंकी इन बातोंसे मैं स्मरण दिलाया गया। अब मैं वह कहता हू, आप एकाग्र चित्तसे उसे सुनिये। मैंने इसी विषयको लेकर पूर्वकालमें नारायणस्वरूप मुनिशार्दूल तथा सत्यवतीके पुत्र श्रीव्यासजीसे प्रश्न किया था। मेरे पूछनेपर श्रीव्यासदेव सत्यवतीतनयने कहा ॥८॥

श्रीवेदव्यास उवाच—

शृणु सूत पुरावृत्तमाख्यानं कथयामि ते ॥ ९ ॥ कदाचित्पर्य-

टन् भूमिं नारदो मुनिसत्तमः॥ आजगामाश्रमं पुण्यं भृगोर्मुदि-
तमानसः ॥१०॥ शारदाभ्रनिभः श्रीमान् वीणां च महतीं दधत् ॥
उदतिष्ठद् भृगुः शिष्यैर्दृष्ट्वा देवर्षिमागतम् ॥ ११ ॥ पूजयित्वा
च तं हृष्टः पाद्यार्घ्यासनवन्दनैः ॥ पृष्ट्वा च कुशलं भूयः पप्र-
च्छ मुनिपुङ्गवम् ॥१२॥

श्रीवेदव्यास बोले—हे सूत ! हम तुमसे प्राचीन आख्यान कहते हैं, उसको सुनो। एक समय शरत्कालके मेघ जैसा स्वच्छ शरीरवाले महती नामक वीणाको धारण किये मुनिवर नारद प्रसन्नचित्त हो पृथ्वीपर भ्रमण करते-करते भृगुमुनिके आश्रममें पहुंचे। इन देवर्षिको आते देखकर भृगुऋषि शिष्यवर्गके साथ उठ खड़े हुए और प्रसन्न होकर पाद्य, अर्घ्य, आसन और नमस्कार आदिसे नारदजीकी पूजाकर कुशल-प्रश्नके बाद प्रश्न किये ॥१२॥

भृगुरुवाच—

जगत्पर्यटितं सर्वं भगवन्नारद त्वया ॥ तेन जानासि जगतां
वृत्तान्तमखिलं मुने ॥१३॥ क्षेत्राणामधिकं क्षेत्रं तीर्थानां तीर्थ-
मुत्तमम् ॥ यद्यस्ति भुवि विप्रेन्द्र तन्मे ब्रूहि तपोनिधे ॥ १४ ॥
अस्ति विष्णुरचिन्त्यात्मा विहरन् रमया सह ॥ यत्र साक्षात्कृ-
तो देवो वरदः सर्वदेहिनाम् ॥ १५ ॥ तपांसि यत्र सिध्यन्ति न
चिरेण तपस्विनाम् ॥ यस्मिंश्च निवसञ्जन्तुरञ्जसा मोक्षमाप्नु-
यात् ॥१६॥ एतदाचक्ष्व भगवन् विस्तरेण तपोनिधे ॥ ज्ञातुमर्थ-
मिमं ब्रह्मन्न त्वदन्योऽस्ति भूतले ॥१७॥

भृगुने कहा—हे भगवान नारद ! आपने सारे संसारमें भ्रमण किया है; इसलिये हे मुने ! आप बिलकु[ल] समाचार जानते हैं। हे तपोनिधे ! यदि पृथ्वीतलपर सभी क्षेत्रों और सभी तीर्थोंसे उत्तम तीर्थ कोई है, [तो] हमको बताइये, जहां अचिन्त्य स्वरूप श्रीविष्णु श्रीलक्ष्मीके साथ विहार करते हुए मनुष्योंको प्रत्यक्ष ही वरदा[न] देते हैं, जहां तपस्या करनेसे तपस्वियोंको शीघ्र सिद्धि मिलती है, और जहांपर वास करता हुआ मनुष्य मुक्ति पाता है। हे तपोनिधे ! उसका आप विस्तारपूर्वक वर्णन कीजिये, पृथ्वीपर इस अर्थको जाननेके लिये आपके सिवाय और कोई नहीं है ॥१७॥

## अथ वेङ्कटाचलस्यानेकनामानुवर्णनपूर्वकं माहात्म्यवर्णन

*श्रीनारद उवाच—*

श्रृणुष्वैकमना ब्रह्मन्मत्तः कथयतो मुने ॥ क्षेत्राणां क्षेत्रमुत्कृष्टं
तीर्थानां तीर्थमुत्तमम् ॥ १८ ॥ श्रीवेङ्कटगिरिर्नाम क्षेत्रं पुण्यं
महीतले ॥ सर्वपापप्रशमनं सर्वपुण्यविवर्धनम् ॥१९॥ वक्तुं न त-
स्य माहात्म्यं ब्रह्मणाऽपि सुरैरपि ॥ शक्यते वा तथा स्मर्तुं मन
सापि महामुने ॥२०॥ आराध्यः सर्वदेवानां माधवो भक्तवत्स-
लः ॥ विहाय स्वं परं धाम रमते रमया सह ॥२१॥

### वेङ्कटाद्रिके अनेक नाम और माहात्म्यका वर्णन

श्रीनारदजी बोले—हे ब्रह्मन् मुने ! मैं सब क्षेत्रों और सब तीर्थोंमें उत्तम क्षेत्र वा तीर्थ बतलाता हूं, आप एकाग्र मनसे सुनें। पृथ्वीपर वेङ्कटगिरि नामका वह सभी पापोंका विनष्टकारी और सकल पुण्यको बढ़ानेवाला पवित्र क्षेत्र है। उसके माहात्म्यका ब्रह्मादि देवता भी वर्णन वा मनसे स्मरण नहीं कर सकते। वहां सभी देवताओंके आराध्य भक्तवत्सल माधव वैकुण्ठको छोड़कर श्रीरमादेवीके साथ रमण करते हैं ॥२१॥

अञ्जनाद्रिर्वृषाद्रिश्च शेषाद्रिर्गरुडाचलः ॥ तीर्थाद्रिः श्रीनि-
वासाद्रिश्चिन्तामणिगिरिस्तथा ॥२२॥ वृषभाद्रिर्वराहाद्रिर्ज्ञानाद्रिः
कनकाचलः ॥ आनन्दाद्रिश्च नीलाद्रिः सुमेरुशिखराचलः ॥२३॥
वैकुण्ठाद्रिः पुष्कराद्रिरिति नामानि विंशतिः ॥ ब्राह्मणः क्षत्रियो
वैश्यः शूद्रश्चेतरजातयः ॥२४॥ तन्नामानि पठेयुर्ये मुच्यन्ते तेऽ-
घबन्धनात् ॥ वेङ्कटाद्रिसमं स्थानं ब्रह्माण्डे नास्ति किञ्च-
न ॥२५॥ वेङ्कटेशसमो देवो न भूतो न भविष्यति ॥

उसके अञ्जनाद्रि, शेषाद्रि, गरुड़ाद्रि, तीर्थाद्रि, श्रीनिवासाद्रि, चिन्तामणिगिरि, वृषभाचल, वाराहाचल, ज्ञानाचल, कनकाचल, आनन्दाचल, नीलाचल, सुमेरुशिखराचल, वैकुण्ठाद्रि और पुष्करादि यही बीस नाम हैं। ब्राह्मण, क्षत्रिय, वैश्य, शूद्र तथा इतर जातिके लोग जो जो इन नामोंका पाठ करें वे पापके बन्धनसे मुक्त हो जायंगे। श्रीवेङ्कटाद्रिके समान ब्रह्माण्डभरमें कोई भी स्थान नहीं है तथा वेङ्कटेशके तुल्य देवता न थे और न कोई भविष्यमें होंगे ॥२५॥

तस्मिन् बहूनि तीर्थानि सुरसिद्धनिषेविते ॥ २६ ॥ रम्याणि सन्ति शतशः सर्वाघौघहराण्यपि ॥ सर्वतीर्थातिशायीनि सर्वाश्चर्यकराणि च ॥२७॥ सर्वसिद्ध्यनुकारीणि सर्वमङ्गलदान्यपि ॥ स्वामिपुष्करिणी नाम सरसी राजते शुभा ॥२८॥ यस्यास्तीरेऽरविन्दाक्षो वसति प्रीतमानसः ॥

सर्वदेव-सेवित उस पर्वतपर सैकड़ों तीर्थों, रमणीय पापोंको हरनेवाले, सभी तीर्थोंसे बढ़े हुए, सबको आश्चर्य और सभी सिद्धियोंको देनेवाले एवं सभी मङ्गलोंको प्रदान करनेवाले बहुत तीर्थ हैं, और स्वामिपुष्करिणी नामक एक शोभन सरोवर सुशोभित है। श्रीकमलनयन भगवान् उसीके किनारे प्रसन्नचित्त हो निवास करते हैं ॥२९॥

*भृगुरुवाच—*

तस्मिन् गिरौ श्रिया सार्धं हित्वा वैकुण्ठमुत्तमम् ॥२९॥ किमर्थं वसति ब्रह्मन् साक्षान्नारायणः स्वयम् ॥

भृगुने कहा—हे ब्राह्मण ! नारायण उस उत्तम श्रीवैकुण्ठको छोड़कर इस पर्वतपर साक्षात् स्वयं क्यों निवास करते हैं ॥ ३० ॥

अथ नारदकृतक्षीराब्धिवासिभगवद्वर्णनम्

*श्रीनारद उवाच—*

कथयिष्यामि ते सर्वं वैकुण्ठो येन हेतुना ॥ ३० ॥ तस्मिन् गिरिवरे रम्ये चिरमास्ते श्रिया सह ॥

श्रीनारदमुनि द्वारा क्षीरसागरवासी भगवान्‌का वर्णन

नारदजीने कहा—जिस कारणसे वैकुण्ठभगवान् उस रमणीय पर्वतपर लक्ष्मीजीके साथ बहुत दिनोंतक निवास करते हैं उन सभीको मैं कहता हूं ॥ ३१ ॥

नारायणमहं द्रष्टुं कदाचित्क्षीरसागरम् ॥ ३१ ॥ गतवांस्तत्र चाद्राक्षं श्वेतद्वीपं महोच्छ्रितम् ॥ तत्र कल्पद्रुमवने शातकुम्भ-

मयं गृहम् ॥ नानारत्नसमाकीर्णमनेकस्तम्भशोभितम् ॥ सहस्रार्कप्रतीकाशं दीप्यमानमिव श्रिया ॥ ३३ ॥ दुष्प्रापममरेन्द्रैश्च सुप्रापं कृतशक्तिभिः ॥

किसी समय मैं श्रीनारायणके दर्शनके लिये क्षीरसागरको गया था और वहां महान प्रकाशमान श्वेतद्वीप देखा। उस स्थानके कल्पद्रुम वनमें सुवर्ण निर्मित, अनेक प्रकारके रत्न जड़े हुए, अनेकों स्तम्भोंसे शोभित, शोभासे हजारों सूर्यके समान प्रकाशमान, देवश्रेष्ठोंको भी अप्राप्य, पर भक्तके लिये सुलभ एक गृह है ॥३४॥

तत्रापश्यं सभां दिव्यां देवदेवस्य शार्ङ्गिणः ॥ ३४ ॥ अनन्तविहगाधीशसेनान्याद्यैरधिष्ठिताम् ॥

वहांपर देवदेव श्रीविष्णु भगवान्‌की अनन्त ( शेषनाग ) और गरुड़जी आदि पार्षद्‌गणोंसे उपसेवित दिव्य सभा मैंने देखी ॥३५॥

तत्रापश्यं हृषीकेशं सर्वलोकैककारणम् ॥३५॥ सर्वाश्चर्यमयं देवं शयानं शेषतल्पके ॥ द्विलक्षयोजनोपेतविग्रहं कामरूपिणम् ॥ ३६ ॥ रजताचलसंलीननीलजीमूतसन्निभम् ॥ पुण्डरीकविशालाक्षं पुराणपुरुषं शुभम् ॥ ३७ ॥ तथा सर्वाविनीतानां शासितारं सुरोत्तमम् ॥ संवाह्यमानचरणं श्रिया भूम्या च सादरम् ॥३८॥ श्रीवत्साङ्कमुदाराङ्गं शतपत्रनिभाननम् ॥ युगपन्निर्गतादित्यसहस्रसदृशद्युतिम् ॥ ३९ ॥ शङ्खचक्रधरं देवं ज्वलच्चञ्चलकुण्डलम् ॥ वैजयन्त्या च विपुले विभूषितमुरःस्थले ॥ ४० ॥ सौदामिनीशताधिक्यज्वलत्पीताम्बरोज्ज्वलम् ॥ लावण्यामृतसन्दोहं भवसन्तापनाशकम् ॥ ४१ ॥ युगान्तार्कसहस्राभमुकुटोज्ज्वलमस्तकम् ॥ अचलं मेघसङ्काशमतीव प्रियदर्शनम् ॥ ४२ ॥ कर्णभूषोज्ज्वलं दीप्तं कण्ठकोद्योतिकौस्तुभम् ॥ अर्काभमणिरत्नाद्यैर्ज्वलच्चञ्चलकुण्डलम् ॥ ४३ ॥ प्रत्युज्ज्वलितहारं च वनमालाविभूषितम् ॥ स्फुरता ब्रह्मसूत्रेण

प्रोद्भासितभुजान्तरम् ॥ ४४ ॥ अनेकसूर्यसङ्काशकेयूरमणिकान्तिकम् ॥ मणिकाञ्चनमुक्ताढ्यैः कटकैरुपशोभितम् ॥ ४५ ॥ अङ्गुल्याभरणैः सर्वैर्नवरत्नैरलङ्कृतम् ॥ कर्पूरगन्धितास्याब्जं सुरक्ताधरपल्लवम् ॥४६॥ तडिच्छतसहस्राभपीतनिर्मलवाससम् ॥ नूपुरैः कटिसूत्रेण तडिन्मालाम्बुदोपमम् ॥४७॥ बालसूर्यसहस्राभनाभिपङ्कजमद्भुतम् ॥ मार्कण्डेयभरद्वाजपुण्डरीकशुकादिभिः ॥४८॥ याज्ञवल्क्याम्बरीषाद्यैरन्यैश्च मुनिपुङ्गवैः ॥ चतुर्भुजैः स्वसदृशैः शङ्खचक्रगदाधरैः ॥ ४९ ॥ प्रह्लादप्रमुखैर्भक्तैः स्तूयमानमनेकशः ॥ सनन्दसनकाद्यैश्च योगिमुख्यैरभिष्टुतम् ॥५०॥ भुक्तिमुक्तिप्रदं नृणां सर्वाभीष्टप्रदायिनम् ॥ सेवितं विधिरुद्राद्यैर्दिक्पालैश्च भयान्वितैः ॥५१॥

वहाँ सर्व जीवोंके एकमात्र कारण, सभीको आश्चर्य करनेवाले, साँपके बिछौनेपर शयन किये हुए, दो लाख योजन पर्यन्त विस्तृत शरीरवाले, कामरूप, चाँदीके पर्वतमें लगे हुए नीलमेरुके समान, कमल समान विशाल नेत्रयुक्त, पुराणपुरुष, सुन्दर, सब दुष्टोंके शासन करनेवाले, देवताओंमें उत्तम, श्रीदेवी और भूमि देवीसे आदरपूर्वक दबाये जाते चरणवाले, श्रीवत्स चिह्नयुक्त, उदार अङ्गवाले, कमल समान मुखवाले, हजारों सूर्यके एक बार उदय होनेके समान तेजयुक्त, शङ्ख-चक्रको धारण किये हुए देव, प्रकाशमान चञ्चल कुण्डल और वक्षःस्थलमें विस्तार वैजन्तीकी माला धारण किये, सैकड़ों विद्युतसे अधिक तेजवाले पीताम्बरसे प्रकाशमान, सौन्दर्यरूपी अमृतके समुद्र, संसारके तापको नाश करनेवाले, प्रलयकालके सहस्रों सूर्यके तुल्य प्रकाशमान मुकुटसे प्रकाशित मस्तकवाले, मेघके समान, अचल, जिनका दर्शन ही प्रिय है ऐसे कानोंमें कुण्डलोंसे देदीप्यमान, कण्ठोंमें जाज्वल्यमान कौस्तुभमणिवाले, सूर्यके समान तेजस्वी मणि-रत्नोंसे विभूषित चञ्चल कुण्डलयुक्त, बहुत ही प्रकाशमान, हार और वनमालासे विभूषित, चमकयुक्त यज्ञोपवीतसे प्रकाशमान भुजाओंके बीचवाले, अनेक सूर्योंके समान बाजूकी मणियोंसे चमकते हुए, मणि और रत्नोंसे जड़े हुए सुवर्णके कड़े पहने हुए, सर्व रत्न जड़ी हुई अङ्गूठियोंसे आभूषित, कर्पूरादि सुगन्ध द्रव्यसे सुगन्धित मुखकमलवाले, लाल अधर पल्लववाले, सैकड़ों बिजलीकेसे पीले और सुहावने वस्त्र पहने, पायजेब और करधनीसे बिजलीयुक्त नील मेघके समान, हजारों सूर्यके समान नाभिकमलवाले, मार्कण्डेय, भरद्वाज, पुण्डरीक, शुकदेव, याज्ञवल्क्य, और अम्बरीषादि अन्यान्य ऋषियों, अपने समान चतुर्भुज तथा शङ्ख-चक्र एवं गदा धारण किये हुए प्रह्लादादि अनेक भक्तों तथा सनक सनन्दनादि योगि प्रवरोंसे अनेक प्रकारसे स्तुति किये जाते हुए, मनुष्योंके भोग, मुक्ति, तथा सकल

कामना प्रदान करनेवाले एवं भयभीत ब्रह्मा, रुद्रादिलोकपालोंसे सेवित हृषीकेश भगवान् श्रीनिवासको मैंने देखा ॥५१॥

प्रणम्य शिरसा देवं स्तुत्वा स्तुतिभिरीश्वरम् ॥ भक्त्या चावनतो भूत्वा कृताञ्जलिरहं स्थितः ॥५२॥

उन देवदेव भगवान्को शिरसे प्रणामकर, स्तुति द्वारा स्तवन कर, भक्तिसे अवनत हो, हाथ जोड़ मैं खड़ा हो गया ॥५२॥

अथ नारदं प्रति धरातलविजिहीर्षुभगवदुक्तिः

स्वागतं चैव पृष्ट्वा मां बहु मेने गदाधरः ॥ देवदेवोऽथ मां वीक्ष्य पौत्रस्नेहातिशीतलैः ॥५३॥ वीक्षणैः ह्लादयन्नित्थं बभाषे मधुसूदनः ॥

नारदके प्रति श्रीभगवानकी उक्ति

स्वागत-वचन कह मेरा बहुत आदर-सत्कार किया, फिर देवदेवने अपने पौत्रके नाते अत्यन्त प्रेमसे शीतल स्नेहभरी दृष्टिसे मेरी ओर देखकर कृपादृष्टिसे आह्लादित करते हुए मधुसूदनने इस प्रकार कहा ॥५४॥

श्रीभगवानुवाच—

नारद श्रूयतां वत्स त्वया दृष्टं जगत्त्रयम् ॥ ५४ ॥ ब्रह्माण्डे कुत्र वा वासो मम देशे भवेदिह ॥ विहारयोग्यश्च तथा विश्रामस्थानमुत्तमम् ॥५५॥ कथय त्वं महाभाग यद्यस्ति भुवि तादृशम् ॥

श्रीभगवान् बोले—हे नारद ! हे वत्स ! सुनो, तुमने तीनों लोकोंका परिदर्शन किया है। ब्रह्माण्डभरमें मेरे वास करने योग्य कहां उत्तम स्थान है, जो विहार योग्य हो और साथही साथ विश्राम योग्य भी हो। हे महाभाग ! यदि इस तरहकी कोई भूमि हो तो बतलाइये ॥५६॥

अथ नारदकृतभगवत्क्रीडार्ह देशप्रकाशन

श्रीनारद उवाच—

न त्वया विदितं किञ्चित् त्रिषु लोकेषु विद्यते ॥ ५६ ॥

तथाप्ययं तव प्रश्नो मयि स्नेहवशात्प्रभो ॥ त्वद्विहारोचितं
स्थानं रमणीयं विलोक्यते ॥५७॥ आश्चर्यप्रभवं स्थानं तत्समं
नास्ति भूतले ॥ तव पादप्रभूताया गङ्गायाश्चैव दक्षिणे ॥५८॥
दिग्भागे दण्डकारण्ये द्विशतैर्योजनैर्मिते ॥ दक्षिणाम्बुनिधेश्चा-
पि दक्षिणेतरभागके ॥ ५९॥ पूर्वाब्धेः पश्चिमे भागे पञ्चभि-
र्योजनैर्मिते ॥ रमणीयमिदं स्थानं क्रीडायोग्यं विभो तव ॥६०॥

नारदका भगवान्‌के क्रीड़ा योग्य स्थान बताना

श्रीनारदने कहा—हे प्रभो ! त्रिलोकमरमें आपसे अज्ञात कोई भी स्थान नहीं है, तथापि स्नेहवश आपका मुझसे यह प्रश्न है। आपके विहारयोग्य रमणीक स्थान मैंने देखा है। आश्चर्यमय, उसके समान स्थान पृथ्वीतलमें नहीं है। यह रमणीक तथा आपके क्रीड़ायोग्य स्थान आपके चरणोंसे प्रकटी हुई श्रीगङ्गाजीकी दक्षिण दिशाकी ओर दो सो योजनपर दण्डकारण्य वनमें दक्षिण समुद्रके उत्तर किनारे पूर्व समुद्रके पश्चिम भागमें पांच योजनमें है ॥६०॥

तत्रत्याश्च जनाः सर्वे तपःस्वाध्यायवर्जिताः ॥ अधिव्याधि-
हताश्चैव पश्यन्ति चरणं न च ॥ ६१ ॥ अनुग्रहाय वै तेषां स्था-
तव्यं भवता हरे ॥

वहांके सभी मनुष्य तपस्या और वेदाध्ययनसे रहित हैं। मानसिक चिन्ताओं और रोगोंसे ग्रस्त हैं, वे सब आपके चरणोंको नहीं देखते। हे हरे ! उनपर अनुग्रह करनेके लिये आप वहां निवास कीजिये ॥ ६२॥

*श्रीभगवानुवाच—*

चोलराजसुतः कश्चित्कलौ खलु भविष्यति ॥६२॥ चक्रवर्ती-
ति मद्भक्तस्तत्र मामर्चयिष्यति ॥ अनुग्रहाय तस्यापि तत्र स्था-
स्याम्यहं मुने ॥६३॥

इति श्रीब्रह्माण्डपुराणे तीर्थखण्डे श्रीवेङ्कटाचलमाहात्म्ये भगवन्नारदसंवादे श्रीवेङ्कटाचल-
महिमानुवर्णनं नाम प्रथमोऽध्यायः ॥१॥

श्रीभगवान्‌ने कहा—कलियुगमें चोल देश ( भील ) का चक्रवर्ती नामक मेरा एक भक्त राजा वहां मेरी पूजा करेगा। हे मुने! उसीपर कृपाकर वहां मैं निवास करूंगा ॥६३॥

इति प्रथमोऽध्यायः।

# द्वितीयोऽध्यायः ॥२॥

शेषनाग पर्वत बना, भगवत-क्रीड़ा-हेत।
श्रीनिवासने वास किय, परिजन-रमा-समेत ॥१॥
व्याघ्रपाद मुनिराजने, जपतप अति बड़ कीन्ह।
दया द्रवित त्रिपुरारिने, अति उत्तम वर दीन्ह ॥२॥
प्रेमपूर्ण आह्लादसे, शंकरने किय वास।
नगरूपी श्रीशेषके, वर्णन विविध प्रकाश ॥३॥

अथानन्तस्य भगवत्क्रीडाद्रित्वप्राप्तिः

अथाह भगवाञ्छेषमाहूय पुरतः स्थितम् ॥ मेघगम्भीरया वाचा हर्षोत्फुल्लविलोचनः ॥१॥

अनन्तको भगवानका क्रीड़ापर्वत बनाना

शेषनागको बुलाकर, सम्मुख उपस्थित होनेपर, श्रीभगवानने हर्षसे प्रस्फुटित नेत्रयुक्त और मेघतुल्य गम्भीर वाणीसे कहा ॥१॥

*श्रीभगवानुवाच—*

अनन्त मत्प्रियो लोके न त्वदन्योस्ति कश्चन ॥ तस्मान्मम प्रियं किञ्चित्कर्त्तव्यं भवतानऽघ ॥२॥ श्रुतं हि भवता सर्वं नारदोदीरितं वचः ॥ क्रीडासमुचिते देशे वस्तव्यमिति मे मतिः ॥३॥ तत्र

भूत्वा गिरिवरो भवान् वसतु भूतले ॥ त्वत्फणामण्डलभुवि स्थातव्यं रमया सह ॥४॥

श्रीभगवान् बोले—हे अनन्त ! मुझे लोकमें तुम्हारे समान दूसरा प्रिय नहीं है। इसलिये हे अनघ ! मेरा कुछ प्यारा काम करो। तुमने नारदकी कही हुई सभी बातें सुनीं। क्रीड़ाके योग्य स्थानमें तुम्हें जाकर निवास करना चाहिये, ऐसा मेरा भाव है। अतः तुम वहां पर्वत होकर ठहरो और तुम्हारे फणमण्डलके स्थानमें मैं वास करूंगा ॥४॥

शेष उवाच—

अनन्तोऽहं महादेव स्थास्यामि गिरिरूपधृक् ॥ भवता रमया सार्धं मम सानुषु रम्यताम् ॥५॥ गङ्गाद्याः सरितः पुण्यास्तीर्थानि च सरांसि च ॥ वसन्तु सर्वदा तत्र ममोपरि तवाज्ञया ॥ ६ ॥ ममोपरि प्रभूतानां जङ्गमस्थावरात्मनाम् ॥ यद्यदिष्टं हि तत्सर्वं तवानुग्रहहेतुना ॥ ७ ॥ अस्त्विति प्रार्थयामास शेषः सर्वहिताय वै ॥

शेषनागने कहा—हे महादेव ! मैं अनन्त पर्वतरूप धारण कर यहां रहूंगा और आप लक्ष्मीसहित मेरी गुफाओंमें विहार कीजिये। आपकी आज्ञासे यहां मेरे शरीरपर गङ्गा आदि नदियां तथा तीर्थ सरोवर निवास करें। मेरे ऊपर उत्पन्न बहुतसे स्थावर-जंगमादि जीवोंकी सभी अभिलाषाएं आपकी कृपासे पूर्ण हों। श्रीशेषजीने सब लोगोंके हितके लिये यह निवेदन किया ॥८॥

भगवानुवाच—

सिध्यत्वेवं फणीन्द्राद्य भवता यो वरो वृतः ॥ ८ ॥ तपांसि तत्र सिध्यन्तु निर्विघ्नानि तपस्विनाम् ॥ अहं हि सर्वजन्तूनां दृष्टिगोचरतां गतः ॥९॥ वसिष्यामि श्रिया सार्धं ददद्दिष्टानि देहिनाम् ॥

श्रीभगवानने कहा—हे फणीन्द्र ! आज जिस वरकी तुमने याचना की है वह सिद्ध हो। वहांपर तपस्वियोंकी तपस्या सिद्ध हो। मैं सब प्राणियोंका दृष्टिगोचर रहूंगा। देहधारियोंकी इष्ट-कामना प्रदान करते हुए लक्ष्मीजीके साथ मैं निवास करूंगा ॥१०॥

अथ भगवतो लक्ष्म्यादिमहिषीपरिजनैः सह क्रीडाचलगमनम्

इत्युक्त्वाऽथ श्रियं प्राह भगवान् पार्श्ववर्तिनीम् ॥१०॥ भूमिं नीळां तथा देवीं प्रसन्नवदनाम्बुजाम् ॥

भगवान्का लक्ष्मी आदि देवियोंके साथ क्रीड़ाचलपर जाना

इतना वचन कहकर श्रीभगवान्ने अपनी निकटवासिनी प्रसन्न कमलमुखी लक्ष्मी, भूमि तथा नीळासे कहा ॥११॥

भगवानुवाच—

सखीभिः सहिता यूयं समागच्छत तत्र वै ॥११॥ विहारयोग्यो देशोऽयं निर्दिष्टो मुनिनाऽमुना ॥

श्रीभगवान् बोले—तुम लोग अपनी सखियोंके साथ उस स्थानमें आओ। यह स्थान इस नारद मुनिसे विहारयोग्य निश्चय किया गया है ॥१२॥

इत्युक्त्वा भगवान् प्राह सेनापतिमरिन्दमम् ॥ १२ ॥ त्वदीयानुचरैः सार्धं सर्वैः पारिषदैर्युतः॥ ब्रह्माद्यैस्त्रिदशैः सार्धं यक्षरक्षोगणान्वितैः॥१३॥ सिद्धविद्याधरैश्चापि किन्नरैश्च महोरगैः॥ ऋषिसङ्घैर्युतैः शीघ्रं याहि शेषाचलं प्रति ॥ १४ ॥ वस्तव्यं तत्र हि मया रमया सहितेन वै ॥ अनुग्रहाय साधूनां नित्यं च यतात्मनाम् ॥ १५॥ इत्युक्त्वा भगवान्देवः श्रिया भूम्या च नीळया॥ विनतासुतमारूढो ययावहिमहीधरम् ॥१६॥

इतना कहकर भगवान्ने शत्रुमर्दन करनेवाले सेनापतिसे कहा—तुम अपने सेवक और पार्षदों सहित, ब्रह्मा, रुद्रादि देवताओंके साथ, यक्ष-राक्षसों सहित सिद्ध विद्याधरों और किन्नर तथा महासर्पोंको लेकर ऋषि-समुदाय समेत अति शीघ्र शेषाद्रिको जाओ; क्योंकि मुझे लक्ष्मीजीके साथ निवास करना है। वहाँ रहकर साधुओं और संयमियोंपर दया करनी होगी। लक्ष्मीपति भगवान् ऐसा कहकर श्रीदेवी, भूमिदेवी और नीळादेवी सहित गरुड़पर बैठकर शेषाचलपर गये ॥१६॥

## अथाद्रिरूपधार्यनन्तस्य शिरःपुच्छप्रदेशवर्णनम्

भृगुरुवाच—

**शेषः कथं गिरिवरो बभूव स महावपुः॥ कुत्र पुच्छप्रदेशोऽस्य शिरःपद्मभुवौ तथा ॥१७॥**

### पर्वतका शिर-पुच्छ-प्रदेश-वर्णन

भृगुने पूछा—हे मुने ! श्रीशेषजी फिर कैसे इतने विस्तृत यह पर्वत हुए ? कहाँपर उनका पुच्छभाग रहा और मस्तक तथा पक्ष भागोंमें कौन प्रदेश रहा ॥१७॥

नारद उवाच—

**तस्य दक्षिणकैलासनामकं स्थानमुत्तमम् ॥ कालहस्तीति विख्यातं शिरोदेशः प्रकीर्तितः ॥ १८ ॥ शिवस्य शिवदः पुण्यः शिरोदेशो विलोक्यते ॥ पुच्छस्तूत्तरतः प्रोक्तो महतोऽस्य महीभृतः ॥१९॥ प्रसिद्धः पुच्छदेशोऽयं श्रीशैल इति विश्रुतः ॥**

नारदने कहा—उसके दक्षिण कैलाश जो कालहस्ती नामसे प्रसिद्ध है, मस्तकभाग कहा जाता है। वह शिवजीको पुण्य देनेवाला प्रदेश है, वह मस्तक-प्रदेशरूपसे देख पड़ता है। इस महान् पर्वतके उत्तर भागमें श्रीशैल नामसे प्रसिद्ध भाग पुच्छदेश कहलाता है ॥२०॥

### अथ व्याघ्रपादवृत्तान्तः

**श्रीशैलस्य प्रदेशेऽस्मिन्नीलकण्ठाश्रमे शुभे ॥ २० ॥ व्याघ्रपादाभिधः कश्चित्तपस्वी नियतेन्द्रियः ॥ चिरकालं तपस्तप्त्वा नीलकण्ठमुमापतिम् ॥ २१ ॥ तोषयामास नियमैः समग्रैस्तं तपोनिधिः ॥**

### व्याघ्रपाद मुनिका वृत्तान्त

इसी श्रीशैलप्रदेशके पवित्र नीलकण्ठाश्रमपर किसी व्याघ्रपाद नामक जीतेन्द्रिय तपस्वीने बहुत दिनोंतक उमापति नीलकण्ठ भगवान्को तपस्या कर पूर्णरूपसे उन्हें सन्तुष्ट किया ॥२१॥

अथ केनापि कालेन नीलकण्ठो महाद्युतिः ॥ २२ ॥ परितुष्टः प्रादुरभूद्दास्यन् वरमभीप्सितम् ॥ आलिङ्गितो गिरिजया गाढमाश्रितपार्श्वया ॥ २३ ॥ कैलासगौरमारुह्य वृषं गगनचारिणम् ॥ प्रमथाद्यैः परिवृतो गणैः संप्रीतमानसैः ॥ २४ ॥ कन्दर्पविलसत्सिद्धसिन्धुवीचिभिराकुलैः ॥ सिद्धगन्धर्वयक्षाद्यैः पन्नगैः परिवारितः ॥ २५ ॥ भक्तानुकम्पां परमां भृशमावेदयन्निव ॥ व्याघ्रपादः प्रणम्यैनं भक्त्या परमयाऽन्वितः ॥ २६ ॥ स्तुतिभिः परितुष्टाव पुष्कलाभिः पुनः पुनः ॥

कुछ काल बीतनेपर महा तेजस्वी, दृढ़ रूपसे पार्श्वमें स्थित पार्वतीसे आलिङ्गित, कैलाशगिरिके समान शुभ्र आकाशगामी वृषभवाहनपर आरूढ़, सन्तुष्टचित्त, प्रमथादिगण, कामदेवके विकारसे चंचल तरंगरूप सिद्धों गन्धर्वों,यक्षादिकों तथा पन्नगों से घिरे हुए नीलकण्ठ सन्तुष्ट होकर, मानो भक्तोंके ऊपर परमकृपा दिखलाते हुए अभीष्ट वरदान देनेके लिये इच्छुक होकर प्रगट हुए; और व्याघ्रपादने परम भक्तिसहित श्रीशिवजीको प्रणाम कर बारम्बार बहुत स्तुतियोंसे स्तुति की ॥२७॥

*व्याघ्रपाद उवाच*—

भगवन् ! करुणासार सर्वलोकैककारण ॥ २७ ॥ प्रसीद त्वं प्रसन्नाक्ष विश्वाकार वृषध्वज ॥ रथ्या वेदास्त्रिपुरदहने वेदवक्त्रा च वेधाः सूतो यस्य स्वयमुपगतौ पुष्पवन्तौ रथाङ्गे ॥ चापो मेरुस्त्रिदशवसतिर्वासुकिश्चापमौर्वी बाणो विष्णुस्त्रिदशवपुषे कुर्महे ते नमस्याम् ॥ २८ ॥ स्तुत्वैवं परया भक्त्या व्याघ्रपादस्तपोनिधिः ॥ तूष्णीं बभूव पुरतो मस्तके विहिताञ्जलिः ॥ २९ ॥ व्याघ्रपादं तपोनिष्ठं शान्तं धर्मपरायणम् ॥ नीलकण्ठः समाहूय प्रहसन्निदमब्रवीत् ॥३०॥

व्याघ्रपादने कहा—हे भगवन् ! हे करुणाके सार (तत्व) सभी लोकोंके एक कारण ! हे विश्वाकार ! हे वृषभचिह्नकी ध्वजावाले ! हे प्रसन्ननयन ! मुझपर प्रसन्न होओ। त्रिपुरासुरके पुरदहन समयमें वेद जिसकी सड़क याने रथका मार्ग, वेदवक्ता विधाता सारथि, सूर्य चन्द्र दो रथके चक्र, देवताओंका निवासस्थान सुमेरु पर्वत धनुष,

और वासुकी नाग धनुषकी प्रत्यञ्चा और श्रीविष्णु भगवान् वाण हुए, हम उन देवशरीर शङ्करजीको नमस्कार करते हैं। इस प्रकार स्तुति कर तपोराशि व्याघ्रपाद परम भक्तिसे मस्तकपर अञ्जलि फैलाकर चुप हो गया; और श्रीनीलकण्ठ भगवान्ने तपोनिष्ठ, शान्त तथा धार्मिक व्याघ्रपादको सम्बोधित कर हँसते हुए कहा ॥३०॥

*नीलकण्ठ उवाच—*

**तपसा परितुष्टोऽस्मि कृतेनानेन सुव्रत ॥ वरं वरय भद्रं ते वरदोऽहमिहागतः ॥३१॥**

श्रीनीलकण्ठ बोले—हे सुव्रत! मैं तुम्हारी की हुई इस तपस्यासे प्रसन्न हूँ। हे भद्र! तुम वर मांगो। मैं वर देनेके लिये यहां आया हूं ॥३१॥

*व्याघ्रपाद उवाच—*

**आश्रमेऽस्मिन्महादेव वस्तव्यं भवता सदा ॥ भवन्नाम्ना सरश्चेदं प्रसिद्धिमधिगच्छतु ॥३२॥ अत्र स्नास्यति यो मर्त्यस्तीरेऽस्मिन् सकृदाप्लुतः ॥ स सिद्धिं यातु शुद्धात्मा पुमर्थानामभीप्सया ॥३३॥**

व्याघ्रपादने कहा—हे महादेव! आप सदा इसी आश्रममें निवास कीजिये; और यह आश्रम आपहीके नामसे प्रसिद्ध हो। जो कोई मनुष्य इस तीर्थमें एक बार भी स्नान कर लेगा, वह शुद्धचित्त होकर अपनी पुरुषार्थ-सिद्धिके साथ सिद्ध हो जायगा ॥३३॥

*नारद उवाच—*

**तथैवास्त्विति तं प्रोक्त्वा तत्रास्ते चन्द्रशेखरः ॥ चिरं गिरिजया सार्धं वरदः सर्वदेहिनाम् ॥३४॥**

नारद मुनिने कहा—श्रीचन्द्रशेखर उपरोक्त याचना सुनकर 'तथास्तु' ( मंजूर है ) कहकर सर्व जीवोंको वर देनेवाली पार्वती सहित वहां निवास करने लगे ॥३४॥

अथाद्रिरूपधार्यनन्तस्य पक्षप्रदेशवर्णनम्

**अथ पक्षप्रदेशोऽस्य ह्यहोबिलमिति स्मृतः ॥ परं स्थानं नृसिंहस्य सर्वसिद्धिप्रदायकम् ॥३५॥ हिरण्यकशिपुं हन्तुं ब्रह्मरुद्रपुरस्कृतः ॥ प्रह्लादानुग्रहार्थाय ह्यवतीर्णोऽत्र वर्तते ॥३६॥**

### पर्वतके पक्षभागका वर्णन

इस पर्वतका पक्षभाग "अहोबिल" प्रसिद्ध है। वह श्रीनृसिंहजीका उत्तम स्थान तथा सकल सिद्धियोंको देनेवाला है। प्रह्लादपर दया तथा हिरण्यकशिपुको वध करनेके लिये सर्वसिद्धिदाता नृसिंहजी ब्रह्म रुद्रादि सहित यहांपर प्रकट हुए थे ॥३६॥

न तत्समं भुवि स्थानमस्ति लोकत्रयेऽपि वा ॥ अमृतत्व-
मवाप्नोति जन्तुर्दर्शनमात्रतः ॥३७॥ तस्मिन्नेकदिनं वापि यो
वा समधिगच्छति ॥ सर्वपापविनिर्मुक्तो विष्णुलोके महीयते॥३८॥

इसके समान तीनों लोकोंमें कोई स्थान नहीं है, इसके दर्शनमात्रहीसे जीव मुक्ति पा जाते हैं। वहीं जो कोई एक दिन भी निवास कर लेगा, वह सब पापोंसे मुक्त होकर विष्णुलोकमें चला जायगा ॥३८॥

❀ अथ क्रीडाद्रित्वापन्नानन्तस्य फणामणिवर्णनम् ❀

फणामणिप्रदेशोऽयं वेङ्कटाद्रिरिति स्मृतः ॥ शेषाद्रिर्वृष-
भाद्रिश्च नारायणगिरिस्तथा ॥३९॥ न चास्य महिमा शक्यो
वक्तुं वर्षशतैरपि ॥ ब्रह्मरुद्रपुरोगैश्च सनकाद्यैश्च योगिभिः ॥४०॥

### क्रीडापर्वतके रूपमें अनन्त फणामणिका वर्णन

फणामणि-प्रदेश वेङ्कटाद्रि, शेषाद्रि, वृषभाद्रि तथा नारायण पर्वत नामसे प्रसिद्ध है। ब्रह्मा, रुद्र, पुरारि तथा सनकादि योगिगणोंसे भी इसकी महिमा सौ वर्षमें भी नहीं कही जा सकती ॥४०॥

अगस्त्याद्या मुनिवरास्तपसः सिध्यपेक्षया ॥ तपांसि सुचिरं
तेपुस्तन्निर्झरसमाप्लुताः ॥ ४१ ॥ विष्णोरपरदेहत्वादाक्रामन्नपदै-
र्गिरिम् ॥ नारायणांशसम्भूतः शेषोऽहिर्गिरिरूपधृक् ॥ ४२ ॥
तस्योपरि प्रभूता ये तृणगुल्मलतादयः ॥ ते हि स्थावररूपेण
वसन्तो योगिपुरुषाः ॥ ४३ ॥ ब्रह्मरुद्रादिदेवेभ्यो योगिनोऽमितते-
जसः ॥ सर्वदा यक्षगन्धर्वसिद्धकिन्नरचारणैः ॥४४॥ विद्याधर-
गणैश्चापि महोरगगणैस्तथा ॥ ऋषिभिर्देववृन्दैश्च सेवावसरकाङ्-
क्षिभिः ॥४५॥ सेव्यतेऽहर्निशं प्रीत्या महागिरिवरो ह्ययम् ॥४६॥

इति श्रीब्रह्माण्डपुराणे तीर्थखण्डे श्रीवेङ्कटाचलमाहात्म्ये भृगुनारदसंवादे श्रीवेङ्कटाचल-
विस्तारवर्णनं नाम द्वितीयोऽध्यायः ॥ २ ॥

इसके झरनोंमें स्नान कर तपस्या सिद्ध करनेकी इच्छासे बहुत दिनोंतक अगस्त्यादि मुनिव.. की। वे मुनिवर इस पर्वतपर पदस्पर्श किये बिना ही चढ़े हैं; और नारायणके अंशसे प्रकट शेषनाग इस पर्वतका रूप धारण किये हुए हैं। उसके ऊपर ये जो घास-पात-लता-गुल्म हैं वे सब स्थावर रूपमें रहनेवाले ब्रह्म-रुद्रादि देवताओंसे भी अधिक तेजस्वी योगिगण हैं। यक्ष, गन्धर्व, सिद्ध, किन्नर, चारण, विद्याधरगण, महानागगण, ऋषिसमूह और देववृन्दसे दिनरात यह सदा सेवित रहता है ॥४६॥

इति द्वितीयोऽध्यायः ॥२॥

# तृतीयोऽध्यायः ॥३॥

श्रीनिवास भगवानका, क्रीड़ाचल नगराज।
वर्णन नारदने किया, नारायण द्विजराज ॥१॥
विप्र तपस्या कठिनसे, प्रकट भये भगवान।
स्तुति गायनसे तुष्ट हो, कहा मांग बरदान ॥२॥
होय प्रकट नित नित्य ही, वास करहु हे नाथ।
कह "तथास्तु" वर देइके, गगन गये श्रीनाथ ॥३॥

अथ भगवत्क्रीडाचलवर्णनम्

भृगुरुवाच—

श्रीवेङ्कटगिरिं प्राप्य भगवान् पुरुषोत्तमः ॥ आवासमकरोत्तत्र ततः किमकरोत्स्वयम् ॥ १ ॥ उदन्तमिममाचक्ष्व विस्तरेणैव नारद ॥ न त्वदन्योऽस्ति विप्रेन्द्र रहस्यानां हि वेदिता ॥२॥

भगवानके श्रीक्रीड़ाचलका वर्णन

भृगुने कहा—पुरुषोत्तम भगवान्ने उस वेंकट पर्वतपर निवास कर फिर वहां क्या किया ? हे नारद !

इस कथाको आप विस्तारपूर्वक कहिये; क्योंकि हे विप्रेन्द्र ! आपसे बढ़कर इस रहस्यका ज्ञाता और कोई दूसरा नहीं है ॥२॥

*श्रीनारद उवाच—*

**इदं रहस्यं वक्ष्येऽद्य विस्तरेणैव ते भृगो ॥ न त्वदन्योऽस्ति विप्रेन्द्र कथायाः श्रवणे रतः ॥ ३ ॥**

श्रीनारदने कहा—हे भृगुमुनि ! आपसे इस रहस्यको विस्तारपूर्वक कहता हूं ; क्योंकि आपसे भी बढ़कर कथा सुननेमें निरत, हे विप्रेन्द्र ! और कोई दूसरा नहीं है ॥३॥

अथ नारायणाख्यविप्रवृत्तान्तः

**यदैव रमया सार्धमनादिः पुरुषोत्तमः ॥ अवतीर्णो गिरिवरं नानाधातुविभूषितम् ॥ ४ ॥ गिरिनिर्झरसंयुक्तं नदीप्रस्रवणैर्युतम् ॥ विविधैर्वृक्षखण्डैश्च पुष्पितैरुपशोभितम् ॥ ५ ॥ मालतीकुन्दकुटजैः सिन्धुवारैः कुरण्टकैः ॥ कदम्बार्जुनवंशैश्च चन्दनैः पनसैस्तथा ॥ ६ ॥ अशोकबकुलैर्गुञ्जैस्तमालैः समलङ्कृतम् ॥ नानाविहगसङ्घुष्टं मयूरारावनादितम् ॥ ७ ॥ तुष्टपुष्टमृगाकीर्णं सिंहशार्दूलशोभितम् ॥ विगलन्मदधारैश्च गजसङ्घैः सुशोभितम् ॥८॥ गोलाङ्गूलगणैश्चापि वानरैर्मदगर्जितैः ॥ क्रीडाविलासनिरतैर्मृगपक्षिभिरावृतम् ॥९॥ नानारत्नसमाकीर्णं सानुभिर्भूषितं गिरिम् ॥ ब्रह्मणा च समादिष्टो नारायणदिदृक्षया ॥ १० ॥ नारायणाख्यो विप्रेन्द्रो गिरावस्मिञ्छुभोत्तरे ॥ स्वामिपुष्करिणीतीरे सुरसिद्धनिषेविते ॥११॥ इन्द्रियाणि नियम्यान्तरास्थितो योगभावनाम् ॥ नारायणं त्रिजगतामधीशं भक्तवत्सलम् ॥१२॥ श्रीभूमिनीलासहितं ध्यायन् हृदि शुभास्पदम् ॥ नासाग्रन्यस्तनयनो विशुद्धात्मा चिरं द्विजः ॥ १३ ॥ तपश्चचार धर्मात्मा दुश्चरं दुष्टमानसैः ॥**

नाना धातुओंसे विभूषित, पर्वत-झरनोंसे युक्त, नदी और नदियोंके झरनोंसे परिपूर्ण, फूले हुए अनेक वृक्षोंसे सुशोभित, मालती, कुन्द, कोरैया, बिन्दुसार, कुरण्टक, कदम्ब, कहुआ, बास, चन्दन, पनस, अशोक, मौलसरी, गूञ्जा, और तमाल वृक्षोंसे विभूषित, अनेक पक्षियोंकी चहचहाहट और मयूरकी कूकसे प्रतिध्वनित, हृष्ट-पुष्ट मृगोंसे युक्त, सिंह, व्याघ्र आदिकोंसे शोभित, निर्मल, मदमाते हाथियोंके झुण्डसे सुशोभित, सुरही गायोंके यूथ, मदमत्त किटकिटाते हुए वानर तथा खेल-कूद करते हुए पशुपक्षियोंसे व्याप्त एवं अनेक रत्नोंसे परिपूर्ण विशुद्धात्मा गिरिशिखरपर अनादि भगवान्‌ने जभी अवतार धारण किया तभी ब्रह्माके उपदेशसे नारायण नामक विप्रने नारायण भगवान्‌की दर्शनेच्छासे उस सुन्दर पर्वतके उत्तरकी ओर देवताओंसे सेवित स्वामिपुष्करिणी-के तीरपर इन्द्रियोंका संयमकर हृदयमें योगभावनाके द्वारा सुन्दर शरीर तीनों लोकोंके स्वामी, भक्तोंपर दयालु श्रीभूमि और नीलादेवी सहित श्रीनारायणका ध्यान तथा नासिकाके अग्रभागपर दृष्टिको स्थिर करते हुए बहुत दिनोंतक दुष्ट विचारवालोंसे करनेमें अशक्य तपस्या की ॥१४॥

**विशुद्धात्मनि विप्रेन्द्रे तपस्यति चिरं तदा ॥ १४ ॥ फलन्ति विविधा वृक्षास्तत्रत्याः समयं विना ॥ सत्त्वेषु बलवत्सत्त्वं बबाधे नैव दुर्बलम् ॥१५॥**

उस धर्मात्माके बहुकालतक तपस्या करते करते वहांके वृक्ष बिना समय फल फलने लगे । जंगली जीवोंमें बड़े सिंह, बाघ आदि दुर्बल हरिण आदिकोंको नहीं सताते थे ॥१५॥

अथ नारायणाख्यविप्रतपस्तुष्टस्य भगवत आविर्भावः

**तपस्यति द्विजे शान्ते शान्तं सर्वमभूद्वनम् ॥ अथास्मिन्नन्तरे तस्य तपसा परितोषितः ॥१६॥ वासुदेवः प्रादुरभूद्वरदः सर्वदेहिनाम् ॥ विनतासुतमारूढः सुमेरुशिखरोपमम् ॥१७॥ दयिताङ्कमारोप्य ज्वलत्काञ्चनमालिनीम् ॥ युगपत्स्फुरितानेकतडित्सदृशवर्चसम् ॥१८॥ सहधर्मचरीं विष्णोरवतारानुकारिणीम् ॥ भक्तानुकम्पाभरितैरपाङ्गैः शीतलैः सदा ॥१९॥ आह्लादयन्तीमसकृज्जगत्स्थावरजङ्गमम् ॥ पद्मप्रियां पद्महस्तां पद्मालयानिवासिनीम् ॥२०॥ उन्निद्रपद्मनयनां पद्मनाभमनःप्रियाम् ॥ नीलजीमूतसङ्काशस्फुरत्पीताम्बरोज्ज्वलः ॥२१॥ तुलसीदामहृद्येन स्फुरच्छ्रीवत्सलक्ष्मणा ॥ कौस्तुभद्युतिदीप्तेन वपुषा सुविराजितः ॥२२॥**

निबद्धोदरबन्धेन तनुमध्येन शोभितः ॥ विधातृगृहजा-
लीकमुकुलोद्भवहेतुना ॥२३॥ नाभिह्रदेन निम्नेन गम्भीरावर्तशो-
भिना ॥ रम्भेभहस्तशोभाभ्यामूरुभ्यामुपशोभितः ॥२४॥ जङ्-
घाभ्यां चारुतूणीरसदृशीभ्यां विराजितः ॥ प्रसन्नवदनाम्भोजः
पद्मपत्रनिभेक्षणः ॥ २५ ॥ ज्योतिर्मयेन वपुषा दीप्यमानोऽग्रतः
स्थितः ॥

## तपस्यासे प्रसन्न होकर भगवान्‌का प्रकट होना

इस प्रकार शान्त ब्राह्मणके तपस्या करते समय वह समस्त वन शान्त हो गया। सर्व जीवोंके वरदाता भगवान वासुदेव उसकी तपस्यासे सन्तुष्ट होकर सुमेरुके समान गरुड़पर सवार हो, गोदमें सुवर्णकी चमकती हुई माला पहिनी हुई, एक बार अनेकों बिजलियोंके चमकनेके सदृश प्रभावाली, विष्णुके प्रत्येक अवतारके समय स्वयम् भी अवतार लेनेवाली, भक्तोंके ऊपर दयापूर्ण शीतल दृष्टिसे स्थावर जंगमात्मक सभी जीवोंको बारम्बार प्रसन्न करनेवाली, कमलप्रिया हाथमें कमल लिये, कमल वनवासिनी, खिले कमलके समान नेत्रवाली तथा पद्मनाभकी मनोमोहिनी सहधर्मचारिणी श्रीलक्ष्मीजीको लेकर, नील मेघके समान शरीरमें पीताम्बरकी बिजलीकी चमकीली छटायुक्त, तुलसीकी मालासे मनोहर, चमकते हुए श्रीवत्स चिह्नयुक्त, कौस्तुभकी तेजसे देदीप्यमान शरीरसे सुशोभित, निबद्ध कमरपेटीसे विभूषित कमरवाले, ब्रह्माकी जन्मभूमि कमलके उत्पत्ति-स्थान, गम्भीर नाभीरूप तथा निम्न तालाबसे शोभित, हाथीके सुण्ड एवं केलेके समान परिपुष्ट दोनों जंघोंसे विराजमान, सुन्दर तूणीर सदृश सुन्दर घुटनेसे शोभायमान, खिले हुए कमलकी पाखुड़ीके समान नेत्रवाले ज्योतिर्मय स्वरूपमें प्रकाशरूप हो सामने प्रगट हो गये ॥२६॥

अथ नारायणो विप्रो हर्षपर्याकुलेक्षणः ॥२६॥ सर्वदानन्दस-
न्दोहनयनाश्रुसमाप्लुतः ॥ आनन्दामृतसाराब्धौ मग्नः किञ्चि-
न्न बुध्यते ॥२७॥ प्रदक्षिणं तदा कृत्वा भगवन्तं दयानिधिम् ॥
भक्त्या परमयाविष्टो विवेदानन्तरं न सः ॥ २८ ॥ किं कर्तव्यम-
जानानो मुहूर्तं स्मावतिष्ठते ॥ अथैनं परितुष्टाव वाग्भिरम्रथाभि-
राकुलः ॥२९॥

इसके बाद नारायण नामक ब्राह्मणने हर्षसे व्याकुलनेत्र हो, सदा प्रेमाश्रु और आनन्दके अमृतमें निमग्न होकर कुछ भी न जाना और दयानिधि भगवान्‌की प्रदक्षिणा कर परमभक्तिमें लीन हो, भेदज्ञानशून्य हो,

किंकर्त्तव्यविमूढ़ होकर एक मुहूर्त (२ घड़ी) चुपचाप खड़ा रहा और पीछे श्रेष्ठ स्तुतियोंसे स्तुति करने लगा ॥२८॥

### अथ नारायणाख्यविप्रकृतभगवत्स्तुतिः

*विप्र उवाच—*

देवदेव जगन्नाथ प्रसीद पुरुषोत्तम ॥ परिपालय मां भक्तं शरणागतवत्सल ॥३०॥ कालाभ करुणासार करीन्द्रवरद प्रभो ॥ अवलोकय मां नाथ शीतलैर्नयनाञ्चलैः ॥ ३१ ॥ त्वमेव धाता सर्वस्य जगतोऽस्य जगन्मय ॥ रक्षिता च त्वमेवास्य संहर्ता च सुरेश्वर ॥३२॥ प्रकृतिः पुरुषश्चैव सर्गकाले सुसङ्गतौ ॥ तवेक्षणवशेनैव सृजतो जगदव्ययम् ॥३३॥ न त्वत्समोऽस्ति लोकेऽस्मिन्नाथ लोकत्रयेऽपि वा ॥ कुतस्त्वदधिकस्तस्मान्निःसमाभ्यधिको भवान् ॥३४॥

### नारायण ब्राह्मणका भगवान्‌की स्तुति करना

ब्राह्मणने कहा—हे देवदेव, जगन्नाथ पुरुषोत्तम ! आप प्रसन्न होइये। हे शरणमें आये हुए भक्तोंपर दयालु ! मुझ भक्तकी रक्षा कीजिये। हे कालरूप ! करुणासागर ! हे गजेन्द्रको वरदाता ! हे प्रभो ! हे नाथ ! शीतल नयनकोरसे मुझे अवलोकन कीजिये। हे जगन्मय ! इस संसारके आप ही सृष्टिकर्त्ता हैं, और आप ही रक्षक तथा संहारकर्त्ता हैं। हे देवेश्वर ! सृष्टिके समय आपके कटाक्षसे प्रकृति और पुरुष दोनों प्रलयकालपर्य्यन्त स्थायी एवं संयुक्त हो इस जगत्‌को उत्पन्न करते हैं। हे नाथ ! इस लोकमें अथवा त्रैलोक्यमें आपके तुल्य कोई भी नहीं है। आपसे अधिक कहां कोई है। अतएव आप असदृश्य तथा उत्तमोत्तम हैं ॥३४॥

वेत्ता त्वमसि वेद्यं च वेदनोपाय एव च ॥ वेदनं च फलं तस्य त्वदृते नास्ति किञ्चन ॥ ३५ ॥ पिता त्वमसि लोकस्य सर्वस्य जगतः पते ॥ माता स्वयं विशालाक्षी लक्ष्मीरेवानपायिनी ॥३७॥ विधातृप्रमुखा देवाः सनकाद्याश्च योगिनः ॥ महता तपसा वापि न त्वां जानन्ति तत्त्वतः ॥३७॥ न वेदाध्य-

मे शृणुष्व प्रीतमानसः ॥ ४४ ॥ अहं नारायणो नाम भवद्दर्शन-काङ्क्षया ॥ भुवं सर्वां परिक्रम्य नापश्यं त्वामहं प्रभो ॥ ४५ ॥ ब्रह्माणं तपसाराध्य तन्निर्दिष्टोऽहमागतः ॥ स्वामिपुष्करिणी-तीरे तपसाराधितो भवान् ॥ ४६ ॥ तपश्चरन् वसाम्यत्र चिरेण नियतेन्द्रियः ॥ एवं किल तपश्चर्तुमशक्यं भुवि मानवैः ॥४७॥ तेषामनुग्रहार्थाय सर्वप्रत्यक्षगोचरः ॥ सर्वाभीष्टं ददन्नित्यं स्वामिपुष्करिणीतटे ॥ ४८ ॥ अनन्तविहगेशानसेनापतिमुखैः सदा ॥ सेव्यमानः श्रिया सार्धं विहरन् वस माधव ॥४९॥ गि-रिश्चायं हि मन्नाम्ना प्रसिद्धिमधिगच्छतु ॥

### ब्राह्मणका भगवान्‌से वर मांगना

नारायणने कहा—हे श्रीनिधि, हे करुणानिधि, आप यदि वरदायक हैं तो हे देवेश! मैं अपना प्रिय वर मांगता हूं। आप प्रसन्न चित्तसे श्रवण कीजिये। मेरा नाम नारायण है—आपके दर्शनकी इच्छासे मैंने भूमण्डलकी प्रदक्षिणा की; किन्तु आपका दर्शन कहीं नहीं पाया। फिर मैंने तपस्यासे ब्रह्माको प्रसन्न कर, उनकी आज्ञासे स्वामिसरोवरके किनारे आकर, तपस्या कर आपका आराधन किया। मैं बहुत कालसे तपस्या कर जितेन्द्रिय हो यहां निवास कर रहा हूं। पृथ्वीपर मनुष्योंके लिये इतनी तपस्या करना सहल नहीं है। हे माधव! बेचारे मनुष्योंपर दया करनेके लिये सभीके प्रत्यक्षगोचर रहकर तथा सभीको अभिलषित फल प्रदान करते हुए स्वामितीर्थके तटपर शेष, गरुड़, विष्वक्सेन, सेनापति आदि सहित सेवित होते हुए एवं लक्ष्मीजीके साथ विहार करते हुए आप निवास करें और यह पर्वत मेरे नामसे प्रसिद्ध होवे ॥५०॥

### अथ भगवत्कृतनारायणाख्यविप्रप्रार्थनाभ्युपगमप्रकारः

*श्रीभगवानुवाच—*

तथा भवतु विप्रेन्द्र वचनं तव सुव्रत ॥५०॥ ब्राह्मणो यदि वा वैश्यः क्षत्रियः शूद्र एव वा ॥ सपापो यदि वाऽपापः स्वामि-पुष्करिणीजले ॥ ५१ ॥ स्नात्वा चात्र वसन्तं मां ये नमस्यन्ति मानवाः ॥ ददाम्याकल्पमेवाहं तेषां वासं त्रिविष्टपे ॥ ५२ ॥ यः

करोत्याप्लवं स्वामिसरसीजलमध्यतः ॥ सोऽतीत्य निरयं सर्वं ब्रह्मभूयाय कल्पते ॥५३॥ भुक्तिमुक्तिप्रदं नृणां सर्वसिद्धिप्रदायकम् ॥ इदं स्थानं सरश्चेदं नात्र कार्या विचारणा ॥ ५४ ॥ अद्य प्रभृति चैवायं गिरिस्त्वन्नामतः सदा ॥ नारायणाचल इति प्रसिद्धो भवतु द्विज ॥५५॥ इति तस्मै वरं दत्त्वा स्वसायुज्यं ददौ हरिः ॥ स्वामिपुष्करिणीतीरे स्वसङ्कल्पागते ततः ॥५६॥ दिव्ये विमाने सर्वेषां विलोचनपथं गतः ॥ श्रीभूमिनीलासहितः शङ्खचक्रगदाधरः ॥५७॥ कोटिकन्दर्पलावण्यो नीलजीमूतसन्निभः ॥ दयापरवशो नित्यं वसति प्रीतमानसः ॥५८॥

इति श्रीब्रह्माण्डपुराणे तीर्थखण्डे भृगुनारदसंवादे श्रीवेङ्कटाचलमाहात्म्ये भगवदाविर्भाववर्णनं नाम तृतीयोऽध्यायः ॥ ३ ॥

## नारायण ब्राह्मणको वर मिलना

श्रीभगवान्‌ने कहा—हे सुव्रत ! विप्रेन्द्र ! तुम्हारा वचन वैसा ही होगा। ब्राह्मण, क्षत्रिय, वैश्य, शूद्र जो कोई पापी अथवा निष्पाप स्वामिपुष्करिणीके जलमें स्नान करके और यहाँ निवास करते हुए मुझे प्रणाम करेंगे उन मनुष्योंको कल्पपर्यन्त स्वर्गवास दूंगा। जो इस सरोवरमें स्नान करेंगे वे सभी नरकभावको उल्लंघन कर ब्रह्मभावको प्राप्त होंगे। यह स्थान और यह सरोवर भोगमोक्षको प्रदान करनेवाला, सकल सिद्धियोंको देनेवाला है, इसमें विचार करनेका कुछ प्रयोजन नहीं। आजसे यह पर्वत सदा तुम्हारे नामसे "नारायण पर्वत" प्रसिद्ध होगा। श्रीहरिने इस प्रकार वरदान देकर उस ब्राह्मणको अपना सायुज्य मोक्ष दिया। और फिर अपने संकल्पसे आये हुए दिव्य विमानपर सब लोगोंकी नजरोंके सामने स्वामिपुष्करिणीके किनारे शङ्ख, चक्र, गदा धारण कर, श्रीभूमि और नीलादेवी समेत, करोड़ों कामदेवोंके सौन्दर्य समान, नीलमेघ सदृश दया-परवश भगवान् प्रसन्न मनसे नित्य निवास करने लगे ॥५८॥

इति तृतीयोऽध्यायः ॥३॥



# चतुर्थोऽध्यायः ॥४॥



क्रीड़ाचल पर्वतपै श्रीनिवास भगवान,
मृगया विहार-हेतु विहरनको गयो ।
तहँ दुष्ट दैत्य वृषभासुर सो नाम जाको,
पर्यटन करत संयोग योग हो गयो ॥
दोऊ संग द्वन्द्व युद्ध घोर घमसान होय,
चक्रको अनुज्ञा दैत्यवध हेतु दे गयो ।
डरकर असुर विनय बहु भाँति कीन्ह,
पाय वरदान दैत्य अन्त वध हो गयो ॥

---

कहा सूत भगवानने, दैत्य केशरी कोय ।
तप करि शिवसों वर चहै, बलशाली सुत होय ॥२॥
सुत बदले उस दैत्यको, सुता दीन्ह गौरीश ।
निज पत्नीहित याचना, किया केसरी-कीश ॥३॥
दीन्ह सुता उस दैत्यने, यह सुन्दर वृत्तान्त ।
इस चौथे अध्यायमें, कहा सूत भगवन्त ॥४॥

अथ भगवतः क्रीडाद्रौ लीलाय मृगयाविहारः

भृगुरुवाच—

तत्र वासमुपेत्याथ देवः किमकरोत्ततः ॥ विस्तरेण समाख्याहि पृच्छतो मम सर्वशः ॥१॥

भगवान्‌का क्रीड़ाचलपर विहार करना

श्रीभृगुने कहा—भगवान्‌ने क्रीड़ाचलपर वास :करके फिर क्या किया—मेरे प्रश्न करनेवालेके लिये विस्तारपूर्वक कहिये ॥१॥

नारद उवाच—

तत: कदाचिन्मृगयाविहाराकाङ्क्षिमानसः ॥ सेनापतिमुवाचेदं प्रहसन्निव माधवः ॥२॥

नारदने कहा—किसी समय मृगयाके विहारकी इच्छासे इच्छुक होकर माधवने सेनापतिसे हँसते हुए कहा ॥२॥

श्रीभगवानुवाच—

सेनेश विपिनोद्देशे विहर्तुं मतिरस्ति मे ॥ ॥ सिंहव्यालसमाकीर्णे मत्तद्विपनिषेविते ॥३॥ सज्जीभवन्तु सैन्यानि निदेशाद्भवतोऽधुना ॥ चतुरङ्गसमेतानि समरेष्वजितानि वै ॥४॥ इत्युक्त्वा भगवांस्तूर्णं निर्ययौ मृगयामतिः ॥ सेनापतिमुखाश्चापि तमेवानुययुस्तदा ॥५॥

श्रीभगवान्ने कहा—हे सेनापते! सिंह सर्पादि और मत्त हाथियोंसे परिपूर्ण वनप्रदेशमें विहार करनेकी मेरी इच्छा है। तुम्हारी आज्ञासे, युद्धमें जो विजयदायिनी और चतुरङ्गिणी हों, तुरन्त तैयार हो जायं। भगवान्ने इतना कहकर मृगयाके निमित्त वहांसे शीघ्र यात्रा की, इसके बाद उनके सेनापति आदि भी उनके पीछे पीछे चले ॥५॥

अथोत्तरगिरौ रम्ये विचचार स दैत्यहा ॥ सिंहव्यालगणान्विध्यञ्छरैराशीविषोपमैः ॥६॥ तत्रत्याः शबराधीशाः सोपहाराः समागताः ॥ प्रणम्य देवदेवेशमतिष्ठन्नम्रमौलयः ॥७॥ निर्दिश्यमानमार्गस्तु तैस्तैश्शबरपालकैः ॥ विचचार बहून्देशान् मृगयाकृष्टमानसः

वे दैत्यहन्ता भगवान् उस पर्वतके उत्तरकी ओर गये और सिंह सर्पादिको सर्पविष-तुल्य बाणोंसे वध करते हुए शिकार करने लगे। वहांके भीलोंके राजागण भेंट लेकर देवदेवेशको प्रणामकर नीचे मस्तकपर खड़े रहे और उन लोगोंसे मृगयाके रास्ते बतलाये। अनन्तर भगवान्ने मृगयामें लगे हुए बहुत देशोंमें विचरण किया ॥८॥

अथ वृषभाल्यासुरवृत्तान्तः

तस्मिन् काले शिवे भक्तो वृषभाल्यो महासुरः ॥ श्रीशैला-

दक्षिणे देशे विचचार महात्मनः ॥ ९ ॥ ततो गिरिवरं दृष्ट्वा प्रादुर्भूतं सुविस्तृतम् ॥ विस्मयाविष्टचेतास्तु चिन्तयामास कारणम् ॥१०॥ अहो कोऽप्यस्य मायावी स्रष्टाद्रेरुपरि ध्रुवम् ॥ तमन्वेष्टुं यतिष्येऽहं मायिनं गतभीरहम् ॥११॥ अन्विष्य सहसाऽनेन योत्स्यामि गतभीरहम् ॥ इति सञ्चिन्त्य तत्रार्थं मृगयन्नपकारिणम् ॥१२॥ बलगर्वसमाविष्टस्तत्र तत्र चचार ह ॥

## वृषभासुरका वृत्तान्त

उस समय श्रीशैलसे दक्षिणमें एक उदार चित्त, शिवजीका भक्त वृषभासुर नामका महादैत्य घूम रहा था। उसने अति विस्तृत पर्वतको प्रकट हुए देखकर विस्मित हो उसका कारण ढूंढ़ने लगा और उसने सोचकर कि—"ओहो! इस पर्वतकी रचना करनेवाला मायावी इसी गिरिपर है। अतः निर्भय होकर उस मायावीको खोजनेका प्रयत्न करूंगा। उसको ढूंढ़कर निर्भय शीघ्र ही उससे युद्ध करूँगा।" वहां अपने अपराधीको खोजते हुए बलगर्वसे भरकर जहां तहां फिरने लगा ॥१३॥

## अथ वृषभासुरशबरवेषधारिभगवतोर्युद्धप्रकारः

अथापश्यत्स देवेशं विहरन्तमभीतवत् ॥ १३ ॥ शार्ङ्गपाणिं हयारूढं शबराकृतिधारिणम् ॥ १२ ॥ तं दृष्ट्वा दैत्यराट् क्रुद्धः सोऽयमेवेति निश्चितः ॥१४॥ अभ्यधावत तं तूर्णं तिष्ठ तिष्ठेति चाब्रवीत् ॥ ततः समभवद्युद्धं घोररूपं भयानकम् ॥ १५ ॥ शबराधिपतिं दैत्यः समाहूयाशपत्तदा ॥ ततः स शबरः क्रुद्धः सर्वसन्नाहसंयुतः ॥१६॥ खगणैः स्वगणैश्चैव बाणैश्च निशितैस्तथा ॥ प्रासैः खड्गगदाभिश्च शक्तिशूलपरश्वधैः ॥१७॥ कुन्तैर्मुसलसङ्घैश्च वृक्षैः पाषाणराशिभिः ॥ अयुध्यत तदा तेन घोरं युद्धमभूद्वने ॥१८॥

## भील-रूपधारी भगवान् और वृषभासुरमें युद्ध

अब उसने हाथमें शार्ङ्गधनुष लिया, घोड़ेपर सवार व्याधका रूप धारण किये हुए निर्भीकवत् शिकार करते

हुए भगवान्‌को देखा। उनको देखकर दैत्यराजने क्रुद्ध हो निश्चय किया कि यही वह है। वह बड़ी तेजीसे उनकी तरफ दौड़ा और ठहरो, ठहरो, इस तरह उन्हें ललकारा। फिर विहारपर भयंकर घोर युद्ध छिड़ गया। तब उस दैत्यने उस भीलराजको संबोधनकर गालियां दीं। इसके बाद उस शबरने क्रोधित होकर अपनी सेनाओंके साथ श्वानगण और मित्रगणको साथ लेकर तीक्ष्ण बाण, प्रास, खड्ग, गदा, शक्ति, त्रिशूल, परिघा, कुल्हाड़ी, मूसल, वृक्ष और पत्थरोंके ढेर लेकर युद्ध करने लगा, जिससे वनमें घोर युद्ध हुआ ॥१८॥

ततस्ताञ्छबरान् सर्वान्विनिर्जित्याग्रतः परम ॥ आयान्तमसुरं दृष्ट्वा विष्वक्सेनं दिदेश सः ॥१९॥ सोऽपि गन्धर्वसङ्घैश्च सहितः प्रत्ययुध्यत ॥ ततः सुतुमुलं युद्धं बभूव भयदायकम् ॥ २० ॥ अस्त्रैश्शस्त्रैर्जघानाशु विष्वक्सेनः प्रतापवान् ॥ दैत्यस्तं दुर्जयं ज्ञात्वा मायावी च मदोद्धतः ॥२१॥ ततः स्वमायामास्थाय दैत्यः परपुरञ्जयः ॥ असृजद्राक्षसान् घोराञ्छतशोऽथ सहस्रशः ॥२२॥ अस्त्राण्यपि च दिव्यानि शस्त्राणि विविधानि च ॥ प्रायुङ्क्त दैत्यराट् क्रुद्धो नारायणजिघांसया ॥ २३ ॥ यद्येन प्रयुक्तं वै शस्त्रमस्त्रमथापि वा ॥ भस्मीकृतं च तत्सर्वं हरिणा निजमायया ॥२४॥

फिर उस व्याधराजने अपने सामने सभी शबरोंको जीतकर आये हुए असुरको देखकर, विष्वक्सेनको आज्ञा दी। तब गन्धर्वोंके साथ उन्होंने भी युद्ध शुरू किया। फिर भय देनेवाला, घोर तथा रोमाञ्चकारी युद्ध हुआ। विष्वक्सेनने उसे अस्त्रों और शस्त्रोंसे खूब हनन किया। तब उनको जीतनेमें कठिन जानकर मदान्ध हो उस मायावीने शत्रुकी सेना जीतनेके लिये अपनी मायासे सैकड़ों और हजारों दैत्योंकी रचना की। नारायणको मारनेकी इच्छासे क्रोधित होकर उस दैत्यराजने कुपित हो अनेकों दिव्य शस्त्रास्त्र प्रहार किये। जो-जो शस्त्र और अस्त्र उसने चलाये, भगवान्‌ने उन सबको अपनी मायासे भस्म कर दिया ॥२४॥

ततस्तमसुरो मत्वा दुर्जयं हरिमाहवे ॥ मायां प्रयुज्य मायावी स्वयमन्तर्दधे ततः ॥२५॥ तां मायामायतीं दृष्ट्वा ततः सर्वेश्वरो हरिः ॥ प्रेषयामास नाशाय ततश्चक्रं जनार्दनः ॥२६॥ नाशकं सर्वदुष्टानां सर्वदेवनमस्कृतम् ॥ चक्रराजात्ततो ज्वालाः प्रादुर्भूताः सहस्रशः ॥२७॥ ताभिस्तत्सैन्यमत्युग्रं ज्वलितं कान-

नं यथा ॥ ज्वलत्कञ्चुकिनो वीरा दग्धश्मश्रुशिरोरुहाः ॥ २८ ॥ आयुधानि विचित्राणि दग्धान्यासन् हविर्भुजा ॥ तेन चक्रप्रभावेण ह्यासुरं बलमद्भुतम् ॥ २९ ॥ न किञ्चित् दृश्यते तत्र पर्वते परमाद्भुते ॥

फिर उस दैत्यने भगवानको अजेय मानकर आसुरी मायाकी योजना की और मायावी स्वयं अन्तर्धान हो गया। भगवान् सर्वेश्वर हरिने उसकी फैली हुई मायाको देखकर उसके नाशके लिये सब दुष्टोंको नाश करनेवाला एवं सर्व देवताओंसे वन्दित सुदर्शन चक्रको भेजा। उस चक्रराजसे हजारों ज्वालाएं निकल पड़ीं। उनसे उसकी उग्र सेना और वह वन जल गया। बड़े बड़े वीर अपनी अपनी कवचों, दाढ़ी, मूछों और माथेके बालोंके साथ जल गये। विचित्र हथियार भी उस आगमें जलने लगे। उस चक्रके प्रभावसे असुरोंकी अद्भुत सेना उस परम कौतुकमय पर्वतपर कुछ भी दिखलायी नहीं पड़ी ॥३०॥

अथ भगवन्तं प्रति संहाराभ्युपगन्तृवृषभासुरप्रार्थना

ततः समीक्ष्य दैत्यो वै मायां स्वीयां विनाशिताम् ॥३०॥ चिन्तयामास च मुने विस्मयाकुलमानसः ॥ निहनिष्यति मां चापि चक्रं नूनं तदीरितम् ॥ ३१ ॥ समयो मरणस्यापि संवृत्तो नैव संशयः ॥ अमानुषमिमं मन्ये परब्रह्मस्वरूपिणम् ॥३२॥ स्रष्टारं सर्वलोकानां सर्वदेवनमस्कृतम् ॥ अनेन निहतो नूनं विमुक्तः सर्वकिल्बिषात् ॥३३॥ संसारार्णवमुत्तीर्य गमिष्ये मुक्तिसम्पदम् ॥ इति सञ्चिन्तयन्देवं वधात्संहृष्टमानसः ॥ प्रार्थयामास चाभीष्टं किञ्चिद्धृदयसंश्रितम् ॥ ३४ ॥

वृषभासुर दैत्यकी प्रार्थना

हे मुनि ! तब उस दैत्यने अपनी मायाको विनष्ट देखकर विस्मयसे व्याकुलचित्त हो सोचने लगा कि चक्र मुझे भी इनके कहे अनुसार मार डालेगा। मेरे मरनेका समय उपस्थित हो गया, इसमें कुछ भी संदेह नहीं है। मैं इनके अमानुष स्वरूपको सब लोकोंका सृष्टिकर्ता और सर्व देववृन्दोंसे वन्दनीय समझता हूं। मैं इनके हाथसे मारा जाऊं तो सभी पापोंसे छूटकर, संसारसागरको तैरकर मुक्तिरूपी सम्पत्ति पा जाऊंगा। इस प्रकार सोचकर अपने वधसे प्रसन्नचित्त हो कुछ हृदयकी अभिलषित वस्तुके विषयमें उनसे प्रार्थना की ॥३४॥

वृषभ उवाच —

देवदेव जगन्नाथ सर्वलोकैककारणम् ॥ शरणं त्वामनुप्राप्तः
प्रणतार्तिहर प्रभो ॥३५॥ त्वया ततमिदं सर्वं जगत्स्थावरजङ्ग-
मम् ॥ त्वया विहीनं नो किञ्चित् त्रिषु लोकेषु विद्यते ॥ ३६ ॥
ब्रह्माद्याः सकला देवास्त्वन्निदेशकरा मताः ॥ निदेशाद्वाति ते वातः
सूर्यश्चोदेति चान्वहम् ॥ ३७ ॥ वह्निर्ज्वलति ते भीतः शक्रः
शास्ति शासनात् ॥ यमो धावति भीतस्ते इति वेदानुशास-
नम् ॥३८॥

वृषभासुरने कहा—हे देवताओंके देवता ! संसारके स्वामी ! प्रणतपाल ! प्रभो ! समस्त लोकोंके प्रधान कारण ! मैं आपकी शरण प्राप्त होता हूं । जगतके जितने स्थावर-जंगम हैं सब आपसे व्याप्त हैं । आपके बिना तीनों लोकोंमें कोई भी चीज नहीं है । ब्रह्मादि सभी देवता आपके आज्ञाकारी हैं । आपकी आज्ञासे हवा बहती है और आपहीकी आज्ञासे सूर्य नित्य उदय होता है । अग्नि आपसे डरकर जलती और इन्द्र आपकी आज्ञासे शासन करता है । यमराज आपसे डरता हुआ घूमता है, ऐसा वेदोंने प्रतिपादित किया है ॥३८॥

त्राहि त्राहि महादेव न जाने शरणं परम् ॥ योगिनो यं वि-
चिन्वन्ति नियतास्त्वां विमुक्तये ॥ ३९ ॥ स त्वमद्य महाबाहो
दृग्गोचरगतोऽसि मे ॥ क्षमस्व मत्कृतं सर्वमपकारं सुदुःस-
हम् ॥४०॥ कृतागसां त्वादृशेषु प्रणामः खलु निष्कृतिः ॥ जीवितं
तु न याचेऽहं क्षुद्रं पापस्य कारणम् ॥ ४१ ॥ अतो यास्यामि
निहतश्चक्रेण परमां गतिम् ॥ तस्मात्क्षमस्व भगवन् श्रीनिधे
करुणानिधे ॥ त्रातारं नैव पश्यामि त्वां विना मधुसूदन ॥

हे महादेव ! आप मेरी रक्षा कीजिये, रक्षा कीजिये, मैं अपना रक्षक दूसरेको नहीं जानता । हे महाबाहो ! योगिजन नियमपूर्वक मुक्तिके लिये जिसको ढूंढते हैं, वही आप आज मेरे दृष्टिगोचर हुए हैं । आप मेरे किये सभी दुःसह अपराधोंको क्षमा कीजिये । आप ऐसेके लिये नमस्कार ही अपराधियोंका प्रायश्चित्त होता है । हे भगवन् ! मैं पापोंका कारण तुच्छ अपना जीवन नहीं मांगता । हे श्रीनिधे ! करुणाकर ! मैं चक्रसे हत होकर परम गति चाहता हूं । इसलिये हे भगवन् ! आप क्षमा करें । हे मधुसूदन ! आपके बिना मेरा कोई रक्षक नहीं दीख पड़ता ॥४२॥

अथासुरप्रार्थनया क्रीडाद्रेर्भगवद्दत्तवृषभनामधेयप्राप्तिः

अद्य प्रभृति चायं वै गिरिरुच्छ्रितशेखरः ॥ ४३ ॥ मदाख्यया प्रथां यातु वृषभाचल इत्यपि ॥ इत्येवं शोकसन्तप्तमश्रुपूर्णाकुले- क्षणम् ॥४४॥ वृषभं तमुवाचेदं प्रहसन् गरुडध्वजः ॥४५॥

असुर प्रार्थनासे वृषभाचल नामकरण

हे भगवन् ! आजसे ऊँचे शिखरयुक्त यह पर्वत मेरे नामसे वृषभाचल ऐसा प्रसिद्ध हो। इस प्रकार शोक-संतप्त, अश्रुपूर्ण एवं व्याकुल उस दैत्यको देखकर गरुड़ध्वज भगवान्‌ने हँसकर कहा ॥४५॥

श्रीभगवानुवाच—

वृषभासुर मद्भक्त्या विमुक्तिं यास्यसि ध्रुवम् ॥ गिरिश्चायं भवन्नाम्ना प्रसिद्धिमधिगच्छतु ॥ ४६ ॥ इत्युक्तवति गोविन्दे दैत्येन्द्रः प्रीतमानसः ॥ चिन्तयामास निधनमनुग्रहमथो मुने ॥४७॥

श्रीभगवान्‌ने कहा—हे वृषभासुर ! मेरी भक्तिसे तुम अवश्य मुक्त हो जाओगे और यह पर्वत तेरे नामसे प्रसिद्ध होगा। गोविन्द भगवान्‌के ऐसा कहनेपर उस दैत्यराजने प्रसन्नचित्त हो अपने वधको भगवत्कृपा ही समझी ॥४७॥

अथ वृषभासुरवधप्रकारः

ततः सुदर्शनश्चापि ज्वालाजटिलविग्रहः ॥ जहार सुरशत्रोर्हि कण्ठनालाच्छिरोम्बुजम् ॥४८॥ ततो निपातिते भूमावसुरे युद्ध- दुर्मदे ॥ ववृषुः पुष्पवर्षाणि देवाः संप्रीतमानसाः ॥४९॥ देवदुन्दु- भयो नेदुर्ननृतुश्चाप्सरोगणाः ॥ दिशः प्रसेदुर्विमला वाताश्चैव सुखं ववुः ॥ ५० ॥ गोविन्दोऽपि दयासारो वरं दत्त्वाऽसुराय वै ॥ पुनरभ्येत्य शेषाद्रौ यथास्थानं स्थितो मुने ॥५१॥

वृषभासुर वधका विधान

इसके बाद सुदर्शनचक्रने ज्वालाकी लहर रूप होकर उस दैत्यके शिररूप कमलको कण्ठरूप नालसे हरण

किया। इसके पश्चात् उस भयंकर युद्धमें उस असुरको भूमिपर गिरा देनेके बाद प्रसन्न मनवाले देवतागणने पुष्पवृष्टि की। देवताओंके नगारे बजे, अप्सराएं नाचने लगीं। दिशाएं प्रसन्न हो गयीं। निर्मल वायु सुख-पूर्वक बहने लगी। हे मुने! दयालु श्रीगोविन्द भगवान् भी असुरको वर देकर फिर शेषाचलपर यथास्थान विराजमान हुए ॥५१॥

अथाञ्जनादेव्युत्पत्तिक्रमः

भृगुरुवाच—

भूयः कथय देवस्य चरितानि महात्मनः ॥ शृण्वतो नास्ति मे तृप्तिरद्भुतानि महामुने ॥५२॥

अञ्जनादेवीका जन्मवृत्तान्त

भृगुने कहा—हे महामुने! आप फिर उस महानका चरित्र वर्णन कीजिये। अद्भुत चरित्रके श्रवणसे मुझको तृप्ति नहीं होती है ॥५२॥

श्रीनारद उवाच—

शृणुष्वैकमना ब्रह्मन्मत्तः कथयतो मुने ॥ माहात्म्यं देवदेवस्य चित्रं हि मुनिकीर्तितम् ॥ ५३ ॥ त्रेतायुगेऽसुरः कश्चित्केसरीत्येव विश्रुतः ॥ पुत्रार्थी देवमुद्दिश्य तपस्तेपे महामनाः ॥५४॥ नियतात्मा शुचिर्नित्यं निराहारो जितेन्द्रियः ॥ पञ्चाक्षरेण जप्येन तोषयामास शङ्करम् ॥५५॥ प्रीतः प्रादुरभूदग्रे शङ्करो लोकशङ्करः ॥ भक्त्या तमानतं भूमावुवाच च हसन्निव ॥

श्रीनारदजी बोले—हे मुने! एकाग्रचित्त होकर मुनिजनोंका कीर्तित देवदेवका माहात्म्य और भी तुम सुनो। त्रेतायुगमें केसरी नामका एक विख्यात दैत्य था। वह पुत्रका इच्छुक होकर तप करने लगा। उसने अपने मनको वशकर निराहार तथा जितेन्द्रिय हो पञ्चाक्षरके जपसे शंकरको प्रसन्न किया। और लोककल्याणकारी भगवान् शङ्कर उसके सामने प्रकट हुए और भक्तिपूर्वक पृथ्वीपर प्रणत देखकर हंसते हुए उससे बोले ॥५६॥

शङ्कर उवाच—

परितुष्टोऽस्मि भद्रं ते तपसानेन सुव्रत ॥५६॥ वरं वृणीष्व दास्यामि मनसा यदिहेच्छसि ॥

श्रीशङ्करजी बोले—हे सुव्रत ! तुम्हारा कल्याण हो, तुम्हारी इस तपस्यासे अति सन्तुष्ट हूं। जो तुम्हारी इच्छा हो वह वर मांगो, मैं तुम्हें प्रदान करूंगा ॥५७॥

केसर्युवाच—

देवदेव महाप्राज्ञ परितुष्टोऽसि चेन्मम ॥ वरदो भव मेऽभीष्टं वरयामि सुनिश्चितम् ॥५७॥ पुत्रमिच्छामि बालिनं समरेष्वानिवर्तिनम् ॥ महाधैर्यं महाप्राज्ञं त्वत्तः सन्तुष्टमानसात् ॥५८॥

केशरीने कहा—हे देवदेव ! हे महाप्राज्ञ ! यदि आप प्रसन्न हैं तो मेरा अभीष्ट वर आप दीजिये। मैंने जो निश्चय किया है वही वर आपसे मांगूंगा। मैं आपसे सन्तुष्ट चित्तसे समरमें नहीं विमुख होनेवाला महाधीर और बुद्धिमान पुत्र चाहता हूं॥५८॥

शङ्कर उवाच—

न पुत्रं दातुमिच्छामि परितुष्टोऽप्यहं तव ॥ यस्माच्च विधिना पूर्वं विहिता पुत्रहीनता ॥५९॥ तथापि दास्ये कन्यां वै रूपयौवनशालिनीम् ॥ तस्यामुत्पत्स्यते पुत्रस्त्वदभीष्टोऽचिराद् ध्रुवम् ॥६०॥ इति सन्दिश्य भर्गोऽपि तत्रैवान्तरधीयत ॥

शङ्करने कहा—मैं तुमपर प्रसन्न हूं, किन्तु पुत्र देना नहीं चाहता; क्योंकि विधाताने तुम्हे पुत्रहीन किया है तथापि मैं तुम्हे रूपयौवनशालिनी कन्या देता हूं, और उस कन्यासे तुम्हारी इच्छाके अनुसार महाबलशाली पुत्र अवश्य होगा। शिवजी ऐसा कह अन्तर्धान हो गये ॥६१।

असुरेन्द्रोऽपि लब्धायं वरमिष्टं मुदं ययौ ॥६१॥ ततस्तस्याभवत्कन्या लोकविस्मयकारिणी ॥ चकार नाम तस्या वै ह्यञ्जनेति स दैत्यराट् ॥६२॥ क्रमेण ववृधे सेयमञ्जना मञ्जुभाषिणी ॥ कलेव शशिनः पक्षे सिते नयननन्दिनी ॥ ६३ ॥ पितुस्तस्यां च ववृधे प्रमोदस्तु दिने दिने ॥ पुत्रप्रीतिरभूत्तस्य तस्यामिति च नः श्रुतम् ॥६४॥ प्रकान्तकन्दुकक्रीडामालिभिः सह कन्यकाम् ॥ वीक्ष्यवीक्ष्य ययौ तृप्तिं प्रहर्षोत्फुल्ललोचनः ॥

दैत्यराज केशरी भी इस वरको पाकर प्रसन्न हुआ, फिर उसको एक कन्या हुई। लोगोंको देखकर

विस्मय हुआ। उस दैत्यराजने उस कन्याका नाम अञ्जना रखा। यह मधुरभाषिणी अञ्जना शुक्ल पक्षमें चन्द्रमाकी कलाके ऐसी क्रमशः बढ़ने लगी। वह देखनेवालोंको प्रिय मालूम होती थी, उस कन्यापर पिताका प्रेम बढ़ता ही गया। उसकी उसपर पुत्रके समान प्रीति थी, ऐसा हमने सुना है। वह सखियोंके साथ गेंद खेलती हुई कन्याको देखकर आनन्दसे उछल पड़ता और हर्षसे खिले नेत्रवाला हो तृप्त रहता था ॥६५॥

ततः कपिवरः कश्चित्केसरीति भुवि श्रुतः ॥ अभिगम्य ययाचे तां कन्यां यौवनशालिनीम् ॥ ६६ ॥ तस्मै तामञ्जनां प्रादाद्दैत्यः सम्प्रीतमानसः ॥ स चिक्रीड कपिश्चायं कन्यया कामरूपया ॥ ६७ ॥

इति श्रीब्रह्माण्डपुराणे तीर्थखण्डे भृगुनारदसंवादे श्रीवेङ्कटाचलमाहात्म्ये वृषभाचलोत्पत्तिवर्णनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

तब फिर केशरी नामक किसी वानरश्रेष्ठने, जो पृथ्वीतलपर विख्यात था, जाकर उस युवती कन्याकी याचना की। उस दैत्यने प्रसन्नचित्तसे अपनी कन्याको उसे दे दिया। उस वानरने उस कन्याके साथ जो कामदेव समान रूपवती थी, क्रीड़ा किया ॥६७॥

इति चतुर्थोऽध्यायः ॥४॥

## पञ्चमोऽध्यायः ॥५॥

वेङ्कटाद्रिपै अञ्जना, गयी तपस्या काज।
आञ्जनेय सुत तब हुआ, धीर वीर बलराज ॥१॥
निर्णय जन्म मुहूर्त है, बल तेहि पुनि अधिकाय।
अरुण फलक कोउ जानके, रवि मण्डलको धाय ॥२॥
ग्रसन चहो दिनकर वहाँ, देखि दैव रिसिआय।
ताहि नाम पर्वत दिया, अभय किया विधि जाय ॥३॥

## अथाञ्जनाया श्रीवेङ्कटाद्रौ तपःकरणेनाञ्जनेयाख्यसुतोत्पत्तिः

*नारद उवाच—*

विहरन्ती चिरं तेन कपिना साधु कन्यका ॥ न लेभे सदृशं पुत्रं चिन्ताशोकपरायणा ॥ १ ॥ अहो मम पिता मां वै पुत्रस्नेहसमाकुलः ॥ पोषयामास तस्याहमानृण्यं केन चाप्नुयाम् ॥२॥ तस्या मे मन्दभाग्यायाः सन्ततिश्च विनाकृता ॥ नारीणां पुत्रहीनानां न सुखं पारलौकिकम् ॥३॥ पुत्रेण मे विहीनायाः किन्न विश्रम्यते कुलम् ॥ धन्याः खलु स्त्रियस्ता वै याः पश्यन्ति शुचिस्मितम् ॥४॥ मुखमङ्के शयानानां पुत्राणां पुत्रवत्सलाः ॥ इति संचिन्त्य बहुधा पुत्रार्थं सा सुलोचना ॥५॥ द्विजानभ्यर्च्य विधिवदाशिषो वाचयन्त्यहो ॥ ददावभीप्सितं तेभ्यः सर्वदैव यशस्विनी ॥६॥ निमित्तज्ञांश्च पृच्छन्ती तानुवाच तदाऽञ्जना ॥ व्रतेषु चाप्यनेकेषु नियता चावसत्स्वयम् ॥ ७ ॥ आस्तीर्य मुसलांश्चापि गोष्ठेषु नियतेन्द्रिया ॥ उपवासपरा भूत्वा तुष्टाव जगदीश्वरम् ॥ ८ ॥ एवंविधान्यनेकानि कृत्वा नियतमानसा ॥ चरन्ती नैव लेभे सा पुत्रजन्मकृतं सुखम् ॥९॥

### अञ्जनाको शेषाद्रिपर तप करनेसे पुत्र-प्राप्ति.

नारदने कहा—उस साध्वी अञ्जनाने वानरोत्तमके साथ बहुत दिनों तक रह के सदृश पुत्र नहीं प्राप्त किया और शोक तथा चिन्तायुक्त हो गई। वह सोचने लगी कि मेरे पिताने मुझपर पुत्रके तुल्य स्नेह किया है और वह मुझसे पुत्र होनेकी आशा रखते थे। पिताके ऋणसे कैसे छुटकारा पाऊंगी? मुझ मन्दभागिनीको सन्तति ही नहीं। पुत्रहीना स्त्रियोंको पारलौकिक सुख भी नहीं होता। मुझ पुत्रहीनाका कुल किस तरह ठहरेगा? वे स्त्रियां धन्य हैं जो पुत्रवत्सला हो अपनी गोदमें सुलाते हुए पुत्रके पवित्र एवं हंसते श्रीमुखको देखती हैं। वह सुनयनी पुत्रके लिये बहुतसी बातोंका विचार कर, विधिपूर्वक ब्राह्मणोंका पूजन कर, उनसे आशीर्वाद सुनाये जानेपर सदा उन लोगोंको इच्छित वस्तु देने लगी। उस यशस्विनी अञ्जनादेवीने शकुन जाननेवालोंसे पूछा और उन लोगोंके बताये हुए अनेक व्रतोंका नियमपूर्वक स्वयं अनुष्ठान भी किया। गौओंके गोठों (गोस्थान वा

वथान ) में मूसल बिठाकर, उपवास कर जगदीश्वरका ध्यान किया। उसने मनको वशमें कर ऐसे ही अनेक उपाय किये। पर इन आचरणोंसे भी पुत्रजन्मका सुख नहीं प्राप्त हुआ ॥९॥

कस्य चित्त्वथ कालस्य दयया धर्मदेवता ॥ बिभ्रती पुलकसी-
रूपं धृत्वा वेत्रं च पुत्रिकाम् ॥१०॥ पृच्छध्वं चेत्यनुपदं भाषमाणा
गतश्रमा ॥ पश्यन्ती बालिशान् पाणौ वदन्ती लक्षणान्यथ ॥११॥
अञ्जनायाः समीपं वै प्रयाता धर्मदेवता ॥ अञ्जना तां समाहूय
विनिवेश्य वरासने ॥१२॥ शूर्पे स्वर्णमये मुक्तातण्डुलान् प्रणिधा-
य वै ॥ तर्पयित्वा निमित्तज्ञां पर्यपृच्छद्नाकुला ॥१३॥

इस तरह बहुत समय बीत जानेपर एक बार धर्मदेवी दया कर पुलकसी ( जंगली नीच जाति ) का रूप धारण कर हाथमें बेतकी छड़ी और एक पुतली लिये राहसे निकली। वह बार बार पूछती थी, जो कोई चाहे अपना अभीष्ट पूछे। पुकारते-पुकारते वह थकती भी नहीं थी और मूर्खोंका हाथ देख-देखकर, उनके लक्षणोंको कहती थी। इसी तरह चलती-चलती वह धर्मदेवा अञ्जनाके पास पहुंची। अञ्जनाने उसे बुलाकर, उत्तम आसनपर बैठाकर, सोनेके सूपमें मोतियोंके अक्षत भरकर उसके पास जाकर भेंट दी और इस प्रकार उसको सन्तुष्ट कर प्रसन्नतासे पूछने लगी ॥१३॥

अञ्जनोवाच—

निमित्तज्ञे कथं ब्रूहि मम पुत्रोऽस्ति वा न वा ॥ सत्येन वद धर्म-
ज्ञे पृच्छन्त्या मम सर्वशः ॥१४॥ यद्यहं प्राप्नुयां पुत्रमिष्टं बलि-
नमञ्जसा ॥ दास्यामि तव तत्सर्वं यथादिच्छसि चेतसा ॥१५॥

अञ्जना बोली—हे कारण जाननेवाली! बता, मेरे भाग्यमें पुत्र है कि नहीं। मैं जो-जो पूछूं वह सभी सत्य बताना। यदि मैं बलवान और इच्छानुकूल पुत्र पा जाऊं तो तेरी अभिलषित सभी वस्तुएं तुझे दूंगी ॥१४॥

पुल्कस्युवाच—

अभीष्टस्तव पुत्रो वै भविष्यति न संशयः ॥ मा शोकं कुरु
कल्याणि धर्मेण मम ते शपे ॥ १६ ॥ श्रीवेङ्कटागिरौ सप्तसाहस्रं
वत्सरान् पुनः ॥ तपः कुरु ततः पुत्रमवाप्स्यसि सुशोभनम् ॥१७॥
इत्युक्त्वा सा निमित्तज्ञा यथागतमथो ययौ ॥

पुल्कसीने कहा—हे कल्याणि ! तुम्हे अभीष्ट पुत्र अवश्य होगा, शोक मत करो। मैं अपने धर्मकी सौगन्ध खाकर कहती हूँ, तुम वेङ्कटाचल पर्वतपर जाकर सात हजार वर्ष तपस्या करो, तब तुमको सुन्दर पुत्र उत्पन्न होगा। ऐसा कहकर वह शकुन जाननेवाली जिधरसे आयी थी, उधर चली गयी ॥१८॥

अञ्जना चिन्तयन्ती तद्वाक्यं तस्या मनोरमम् ॥१८॥ प्रचक्रमे तपश्चर्तुं श्रीवेङ्कटगिरेस्तटे ॥ आकाशगङ्गानिकटे सिद्धसङ्घनिषेविते ॥१९॥ वाय्वाहारा च वायुं वै समुद्दिश्य सुदारुणम् ॥ तपश्चचार दान्तेयं प्रीणयन्ती व्रतैरिमम् ॥२०॥ ततः प्रीतमना वायुः फलमेकं दिने दिने ॥ भक्षणार्थं ददौ तस्यै दृग्गोचरमुपागतः ॥२१॥

अञ्जना उसके उन मनोहर वचनोंको याद करती हुई, आकाशगङ्गाके समीप सिद्ध मुनिसमूहसे सेवित श्रीवेङ्कटाचलतटपर केवल वायुका ही आहार करती वायुको प्रसन्न करती हुई वायुके उद्देशसे तप करने लगी। फिर वायुदेव प्रसन्नचित्त हो उसको प्रति दिन प्रत्यक्ष मिलते और एक फल भक्षण करनेके लिये दे जाते थे ॥२१॥

अतीते सप्तसाहस्रे वत्सराणामनन्तरम् ॥ पार्वतीसहितः शम्भुस्तदाश्रमसुपागमत् ॥ २२ ॥ विजहार च तत्रायं तत्र तत्र वनान्तरे ॥ तस्मिन्नवसरे तत्र विलासार्थमुपागतम् ॥ २३ ॥ चिक्रीड वानरद्वन्द्वं तदद्भुतमिवाभवत् ॥ पार्वत्यै दर्शयामास पश्य पश्येति धूर्जटिः ॥ २४ ॥ सा च दृष्ट्वा कपिद्वन्द्वं क्रीडितं क्रीडिता शनैः ॥ अथ तस्या मनश्चासीदावां कपितनूधरौ ॥२५॥ विहरिष्याव इति हि लोकस्य रुचिरीदृशी ॥ ततः कपियुगं भूत्वा पार्वतीपरमेश्वरौ ॥२६॥ चिक्रीडतुर्वनान्तेऽस्मिन्नुभौ मुदितमानसौ ॥ तयोर्वीर्यं तदा वायुरथ पत्रपुटान्तरे ॥२७॥ आहृत्य प्रददौ तस्या अञ्जनायाः करान्तरे ॥ मन्वाना भक्ष्यमित्येव तद्भक्षितवती ह्यसौ ॥२८॥

सात हजार वर्ष इस प्रकार बीत जानेपर पार्वतीके साथ श्रीशिवजी उस आश्रममें आये, वे वनवना-

न्तरोंमें विहार करने लगे। उसी अवसरपर वहाँ दो वन्दर विलास करनेके लिये आये। यह अचम्भेकीसी बात हुई। शिवजीने पार्वतीको उन्हें दिखाया और कहा, देखो, देखो। पार्वती उन बन्दरोंको क्रीड़ा करते देखकर कुछ शर्मा गयीं; किन्तु उनका मन हुआ कि हम भी बन्दरशरीर लेकर विहार करें, क्योंकि लोककी अभिरुचि इसी प्रकार हो जाया करती है। फिर बन्दरका रूप धरकर पार्वती-परमेश्वर उस वनमें प्रसन्नतापूर्वक विहार करने लगे। इनके वीर्यको वायुने पत्तेके दोनेमें ले जाकर अञ्जनादेवीके हाथमें दिया! अञ्जना उसे भक्षणार्थ समझकर खा गयी ॥२८॥

दधौ दोहदचिह्नानि क्रमेण नियतेन्द्रिया ॥ अञ्जना कञ्ज-
नयना प्रफुल्लनलिनानना ॥२९॥ चिन्तयन्ती किमेतन्मे निर्दो-
षायाः समागतम् ॥ अथवा विधिवैरूप्यमहो मे मन्दभाग्य-
ता ॥३०॥ केन दोषेण चाहं वा ईदृशं रूपमागता ॥ चिन्तय-
न्ती चिरं सा वै व्रीडिता दुःखिता स्थिता ॥ ३१ ॥ आश्वासयन्ती
तां प्राह दिवि वागशरीरिणी ॥

कुछ दिन बीतनेपर दोहद ( गर्भ ) का चिह्न दिखलाई दिया। वह क्रमशः प्रसन्न कमलमुखी प्रस्फुटित कमलनयनी सोचने लगी कि मुझ निर्दोषीको यह क्या हुआ। अथवा मुझपर विधाता वाम है, देखो मेरी मन्द-भाग्यता। किस दोषसे मेरा रूप ऐसा हो गया है। इस तरह सोचती हुई बहुत देरतक लज्जित और दुःखित हो स्थित रही। तब आकाशमें आकाशवाणी उसको धैर्य्य देती हुई बोला ॥३२॥

मा विषादं गमः पुत्रि भवितव्यमिदं तव ॥ ३२ ॥ दुष्टात्मा
रावणो नाम राक्षसो लोककण्टकः ॥ स तु देवस्त्रियः सर्वा बन्दि-
ग्राहं ग्रहीष्यति ॥ ३३ ॥ त्रिलोकीमपि यस्माद्वै रावयिष्यति कर्म-
णा ॥ तस्माद्रावण इत्येवं प्रसिद्धिमधियास्यति ॥३४॥ ततस्तन्नि-
ग्रहार्थाय हरिः प्रार्थितः सुरैः ॥ आगमिष्यति भूलोके रघूणा-
मन्वये शुभे ॥३५॥ ततस्तस्य सहायार्थमसह्यबलविक्रमः ॥ शौ-
र्यैश्वर्यगुणोपेतो बलीयान्विजितेन्द्रियः ॥३६॥ अप्रमेयगुणोपेतः
पुत्रस्तव भविष्यति ॥

हे पुत्रि! तुम खेद मत करो। यह तुम्हारा भवितव्य है। रावण नामका राक्षस, लोकोंका कण्टक और

दुष्टात्मा होगा, वह देवताओंकी स्त्रियोंको पकड़कर जेलखानेमें बन्द कर देगा। वह अपने कर्मोंसे त्रिलोकको रुलावेगा, इस कारण रावण ऐसा नाम प्रसिद्ध होगा। फिर उसके दमनके लिये देवतागणसे प्रार्थना की जानेपर श्रीविष्णु रघुवंशमें रघुनाथ ऐसा सुन्दर नामसे भूलोकमें अवतार लेंगे। उनका सहायक असह्य बली और पराक्रमी सूर, धीर, गुणी, बलवान् और जितेन्द्रिय अपरिमित गुणोंसे युक्त तुम्हारा पुत्र होगा ॥ ३७ ॥

इमामाकाशगां वाचं श्रुत्वा सम्प्रीतमानसा ॥ ३७ ॥ पित्रे न्यवेदयत्सर्वं चरितं च नभस्वतः ॥ तत् श्रुत्वा च पिता तस्याः प्रययौ परमां मुदम् ॥३८॥ सुतोत्पत्तिमथाकाङ्क्षंस्तस्या निभृतमुन्मनाः ॥

इस प्रकार आकाशवाणी सुनकर उसने परम सन्तुष्ट हो वायुके चरित्र अपने पितासे निवेदन किया। उसका पिता सुनकर और वह उसके पुत्रजन्मकी आकांक्षा करते हुए बहुत प्रसन्न हुआ ॥३९॥

आपाण्डरीकृता तस्या रराज तनुवल्लरी ॥ ३९ ॥ कलङ्कहीनां चन्द्रस्य लेखेवासितपक्षके ॥ विनीलचूचुकं रेजे कुचमण्डलमुन्नतम् ॥ ४० ॥ पद्मकोशस्य संलीनभ्रमरस्य श्रियं दधत् ॥ न शशाक भुवं गन्तुं गर्भस्यातिभरात्ततः ॥ इत्थं प्रववृधे तस्या गर्भः प्रीतिविवर्धनः ॥४१॥

उस अञ्जनाकी देहरूपी लता सफेद पड़ गई, अथवा कृष्णपक्षकी चन्द्रकला; किन्तु कलङ्करहिता जैसी हो गई। उसका स्तनमण्डल ऊंचा हो उठा, स्तनोंके अग्र भाग नील वर्ण हो गये। पद्मकोषके भीतर भ्रमर जिस प्रकार छिपा हो वैसी ही शोभा उसने धारण की। इसके बाद वह गर्भभारसे पृथ्वीपर चलनेमें असमर्थ हो गई। इस तरह उसका प्रेमवर्धक गर्भ बढ़ने लगा ॥ ४१ ॥

ततो वै दशमे मासि सम्प्राप्ते नलिनेक्षणा ॥ असूत पुत्रं बलिनमुदयत्यहिमरश्मिवि ॥ ४२ ॥ श्रावणे मासि नक्षत्रे श्रवणे हरिवासरे ॥ कुण्डलोद्भासिगण्डान्तमुपवीतिनमुज्ज्वलम् ॥ ४३ ॥ कौपीनोद्भासितं चैव दीप्यमानमिव श्रिया ॥ बिभ्राणं वानराणां वै रूपमत्यद्भुतं महत् ॥ ४४ ॥ रक्तास्यपुच्छमूलं तु सुवर्णसदृशद्युतिम् ॥

### आञ्जनेयकी उत्पत्तिका मास नक्षत्रादि निर्णय

दशवां महीना लगनेपर उस कमलनयनी अञ्जनाने सूर्योदयके समय श्रावण मासके श्रवण नक्षत्रमें हरि वासरके दिन, कानोमें सुन्दर कुण्डलोंसे कपोलोंको सुशोभित करते हुए और उज्ज्वल यज्ञोपवीत धारण किये, कौपीन पेन्हे हुए शोभासे प्रकाशमान बहुत ही अद्भुत बन्दरका रूप धारण किये हुए लाल मुंह और पुंछवाले सुवर्ण सदृश कान्तिमान पुत्र उत्पन्न किया ॥ ४५ ॥

### अथाञ्जनेयस्य फलबुध्या रविमण्डलं प्रत्युत्पतनम्

अतोऽयं जातमात्रोऽपि नितरां तु बुभुक्षितः ॥ ४५ ॥ उदया-
चलसंरूढं ददर्श रविमण्डलम् ॥ नितान्तरक्तवर्णेन फलबुद्धि-
रभूत्तदा ॥४६॥ फलमित्येव मन्वानो रविं भक्षितुमुद्यतः ॥ ग्रहि-
ष्यामीति निश्चित्य श्रीवेङ्कटगिरेस्तटात् ॥ ४७ ॥ उदतिष्ठत्
महावेगादुदयाचलशेखरम् ॥ ग्रहीतुमुद्यते तस्मिन् बिम्बं सूर्यस्य
वै बलात् ॥४८॥ हाहाकृतमभूत्सर्वं जगत्स्थावरजङ्गमम् ॥

### फल समझकर आञ्जनेयका सूर्यपर धावा करना

इसीसे वह उत्पन्न होते ही बहुत भूखा हो गया। उसने उदयाचल पर्वतसे उदय होते सूर्यमण्डलको देखा। उसके बिल्कुल लाल रंग होनेसे इस बालकको उसमें फलकी भावना उत्पन्न हुई। फल समझकर वह सूर्यमण्डलको खानेको तैयार हो गया। वह उस फलको लेनेकी इच्छा कर श्रीवेङ्कटाचलके शिखरसे बड़ा वो उदयाचलके शिखरपर जा पहुंचा। इस प्रकार उस बालकके हठपूर्वक सूर्यमण्डलको पकड़नेमें तत्पर होते ही सारे संसारके स्थावर एवं जंगममें हाहाकार मच गया ॥ ४९ ॥

ततश्चतुर्मुखो ब्रह्मा स्वयमागत्य वेगतः ॥ ४९ ॥ ब्राह्ममस्त्रं
युयोजास्मै कुपितस्तज्जिघांसया ॥ तदाऽस्त्रमागतं दृष्ट्वा
बालः क्रीडन्निव क्षणात् ॥ ५० ॥ निरस्य पुच्छप्रान्तेन बभूव
विगतज्वरः ॥ प्रत्याख्यातं ततो दृष्ट्वा तदस्त्रं ब्रह्मणेरित-
म् ॥५१॥ विसिष्मिये सुराणां वै गणः किमिदमित्यपि ॥ कथ-
माकाशयानं वै कथं सूर्याभिधावनम् ॥ ५२ ॥ प्रत्याख्यानं कथं

चासीदित्यूचुर्विस्मितास्तदा ॥ सप्तुरासुरगन्धर्वं सयक्षोरगराक्ष-
सम् ॥५३॥ भुवनं विस्मयं प्राप कर्म दृष्ट्वाऽद्भुतं कपेः ॥ हनूमा-
नपि तं दृष्ट्वा सूर्यं निर्विण्णमानसः ॥५४॥ भूमौ पपात तेजस्वी
ब्राह्मेणास्त्रेण ताडितः ॥ अथाञ्जना समागत्य शोकपर्याकुला
स्वयम् ॥५५॥ अश्रुपूर्णाक्षिपक्ष्माग्रा बभाषे सुरसत्तमान् ॥

फिर बड़े वेगसे चतुर्मुख ब्रह्माने वहां स्वयं आकर क्रोधित हो उस बालकको मार डालनेकी इच्छासे ब्रह्मास्त्रका प्रयोग किया। उस बालकने उस अस्त्रको आते देखकर बालकके खेलके ऐसा क्षणभरमें अपनी पूंछ-की फटकारसे निर्भय हो लौटा दिया। इस प्रकार ब्रह्माके चलाये हुए अस्त्रको व्यर्थ करते हुए देखकर देवतागण बहुत ही आश्चर्यान्वित हुए कि यह क्या है? कैसे यह बालक आकाशमें चढ़ा और कैसे इसने सूर्यपर धावा किया? किस तरह ब्रह्मास्त्रको व्यर्थ कर दिया? देव, दैत्य, गन्धर्व, यक्ष, नाग, राक्षस और सभी लोग उस बन्दरका यह अद्भुत कार्य देखकर आश्चर्यमें दङ्ग रह गये। वह तेजस्वी हनुमान भी उसको सूर्य समझकर चित्तमें उद्विग्न हो ब्रह्मास्त्रका आघात खाकर पृथ्वीपर गिर गया। फिर स्वयं अञ्जना उसके पास आकर शोकसे व्याकुल हो गई। आंखें आंसुसे भरी हुई देवताओंसे कहने लगी॥ ५६॥

*अञ्जनोवाच—*

भवन्तो निर्घृणा देवा जातमात्रे शिशौ कथम् ॥५६॥ ब्राह्म-
मस्त्रं प्रयुज्याशु कृतार्था इव सम्प्रति ॥ ईदृशा भवतां पुत्रा न
सन्ति किमु देवताः ॥ ५७ ॥ प्रारब्धमीदृशं कर्म कथं घोरतरं
महत् ॥

अञ्जना बोली—हे देवताओ! तुम निर्लज्ज हो! इस समय तुम लोग तुरतके जन्मे हुए बालकपर ब्रह्मास्त्र चलाकर कृतकृत्यके समान हो गये हो। क्या तुम लोगोंको ऐसा बालक नहीं है? हे देव! ओहो!! ऐसा घोरसे घोर नीच कर्म तुम लोगोंने कैसे किया॥५८॥

अथाञ्जनेयस्य ब्रह्मादिदत्तसर्वावध्यत्ववरप्राप्तिः

वदन्तीं परुषं वाक्यमञ्जनामित्यमञ्जसा ॥५८॥ सान्त्वय-
न्तः सुराः सर्वे वीर्यजातमुमापतेः ॥ देवकार्यं च संवीक्ष्य वा-
चमूचुरिमां तदा ॥५९॥

आञ्जनेयको ब्रह्मास्त्रसे न मरनेका वर मिलना

तब देवताओंने पार्वती-शंकरका वीर्य्यपात तथा भविष्यमें देवकार्य-सिद्धि विचारकर ऐसे सकरुण वचन बोलती हुई अञ्जनाको तुरन्त ही शान्त करते हुए कहा ॥ ५९ ॥

देवा ऊचुः—

अञ्जने मा विषीद त्वं तव पुत्रस्य धीमतः ॥ दास्यामो दुर्लभानस्य वरान्वयममानुषान् ॥ ६० ॥ ससुरासुरगन्धर्वैर्यक्षरक्षोगणैस्तथा ॥ पिशाचैर्गुह्यकैः सोऽयमवध्यो भवतु ध्रुवम् ॥६१॥ तथा च शस्त्रसङ्घैश्च बाणैश्च विविधैरपि ॥ अवध्यत्वमवाप्नोति शासनान्नस्तवात्मजः ॥६२॥ बलेन प्रज्ञया चापि यातु सर्वातिशायिताम् ॥ शत्रूणामपि दुर्धर्षः पुत्रस्तव भविष्यति ॥६३॥ इति दत्त्वा वरं देवगणेषु विरतेऽथ ॥ चतुर्मुखः समाहूय चाञ्जनामिदमब्रवीत् ॥

देवगण बोले—हे अञ्जना ! तुम दुःखी न करो । हम तुम्हारे बुद्धिमान् पुत्रको मनुष्यशक्तिसे बढ़कर दुर्लभ वर देंगे । देवता, दैत्य, गन्धर्व, यक्ष, राक्षसगणों, पिशाच, गुह्यक आदिकोंसे यह बालक अवध्य होवे । यह निश्चय समझो तथा शस्त्रों और अस्त्रसमूहों और विविध प्रकारके बाणोंसे भी यह अवध्य होगा । यह तुम्हारा पुत्र हमारी आज्ञासे बल और बुद्धिमें सबसे बढ़चढ़के होगा । शत्रुओंके लिये दुर्धर्ष (जिसको कोई न हरावे) तुम्हारा पुत्र होगा । ऐसा वर देकर देवताके चुप होनेपर ब्रह्माने अञ्जनाको बुलाकर कहा ॥६४॥

अथ क्रीडाद्रेरञ्जनाचलनामधेयप्राप्तिः

ब्रह्मोवाच—

अञ्जने त्वं हि शैलाद्रौ तपस्तप्त्वा सुदारुणम् ॥ पुत्रं सुतवती यस्माल्लोकत्रयहिताय वै ॥ ६५ ॥ प्रसिद्धिं यातु शैलोऽयमञ्जने नामतस्तव ॥ अञ्जनाचल इत्येव नात्र कार्या विचारणा ॥६६॥

हे अञ्जना ! तुमने शेषाचलपर घोर तपस्या कर त्रिलोकका कल्याण करनेके लिये पुत्र उत्पन्न किया है, अतएव यह पर्वत तुम्हारे नामसे अञ्जनाद्रि प्रसिद्ध होगा। इसमें कोई विचारका प्रयोजन नहीं ॥६६॥

इति तस्यै वरं दत्त्वा देवा ब्रह्मपुरोगमाः ॥ स्वं स्वं स्थानं समुद्दिश्य यथागतमथो ययुः ॥६७॥ अञ्जना पुत्रमादाय श्रीवेङ्कटगिरेस्तटम् ॥ पुनरागम्य सामोदमलञ्चक्रे निजाश्रमम् ॥६८॥

इति श्रीब्रह्माण्डपुराणे भृगुनारदसंवादे तीर्थखण्डे श्रीवेङ्कटाचलमाहात्म्ये अञ्जनाचलाभिधानहेतुवर्णनं नाम पञ्चमोऽध्यायः ॥ ५ ॥

ब्रह्मा आदि सभी देवता इस तरह जब अञ्जना और हनुमानको वर देकर जहाँसे वे सब आये थे अपने-अपने स्थानोंको चले गये। अञ्जना भी पुत्रको लेकर श्रीवेङ्कटाचल पर्वतके किनारे आयी और आनन्दपूर्वक आश्रम बनाकर फिरसे निवास कर उसकी शोभा बढ़ाने लगी ॥ ६८ ॥

इति पञ्चमोऽध्यायः ॥५॥

## षष्ठोऽध्यायः ॥६॥

क्रीड़ाचलके नामको, वेंकट गिरि अभिधान।
इस छठवें अध्यायमें, माधवका आख्यान ॥१॥
विप्र पुरन्दरके तनुज, माधव कामी होय।
चण्डालिनिके रूपपर, भ्रष्ट होय तप खोय ॥२॥
शेषाद्रीपर तप किया, भया विशुद्ध शरीर।
मुनिगणको अचरज भयो, वेंकटार्थ गम्भीर ॥३॥
वर्णन नाना विधि कियो, सुन्दर कथा प्रशान्त।
भव-भय भागत सुनत जेहि, विगत मोह-भ्रम भ्रान्त ॥४॥

अथ क्रीडाद्रेः श्रीवेङ्कटाभिधानोपोद्घातः

भृगुरुवाच—

अयं शिलोच्चयः केन वेङ्कटाचल इत्यपि ॥ मुनीन्द्र भुवि विख्यातस्तद्वदस्व सहेतुकम् ॥१॥

क्रीड़ाचलकी वेङ्कटाद्रि नामकी भूमिका

भृगुने पूछा— हे मुनीन्द्र नारद ! इस पर्वतका नाम वेङ्कटाचल पृथ्वीपर क्यों कर विख्यात हुआ, इसका कारण विस्तारपूर्वक वर्णन कीजिये ॥१॥

नारद उवाच—

अत्रापि कारणं वक्ष्ये शैलोऽयं येन हेतुना ॥ वेङ्कटाद्रिरिति ख्यातः शृणुष्वैकमना मुने ॥ २ ॥ श्रीगिरेः पश्चिमे भागे पुरं नन्दनसंज्ञकम् ॥ हस्त्यश्वरथसम्बाधं बभूव भुवि विश्रुतम् ॥३॥ पुरन्दराभिधः कश्चित्सोमयाजी द्विजोत्तमः ॥ उवास तस्मिन्नगरे याजको वेदपारगः ॥ ४ ॥ तस्य जज्ञेऽतिमतिमान् पुत्रो माधवसंज्ञकः ॥ कालक्रमेण ववृधे वेदाध्ययनतत्परः ॥ ५ ॥ यो गुणैः पितरं सर्वैरत्यक्रामदिवाञ्जसा ॥ क्रमेण मांसलौ बाहू बभार द्विजपुत्रकः ॥६॥ यौवने समनुप्राप्ते वक्षस्यतिविशालताम् ॥ तस्यासीच्चन्द्रलेखाख्या पत्नी कमललोचना ॥ ७ ॥ सर्वलक्षणसम्पन्ना दिव्यनारीव भामिनी ॥ स तस्यामनुरक्तोऽभूद् भृशं द्विजकुमारकः ॥ ८ ॥ तन्व्या हृतो यौवनेन रूपेणाप्रतिमेन च ॥ विहरन् मुदितो नित्यमास्ते स्म सह भार्यया ॥ ९ ॥ विहारयोग्ये देशे च वनोद्देशे मनोहरे ॥ अथास्मिन्नन्तरे काले वसन्तः प्रादुरासह ॥१०॥ उपदेष्टुमिव क्रीडाविशेषांस्तु द्विजन्मनः ॥

श्रीनारदजीने कहा—हे मुने ! अब हम इसके वेङ्कटाचल नाम रखे जानेका कारण भी कहते हैं,उसको तुम एकामचित्त होकर सुनो। श्रीरंगके पश्चिम भागमें नन्दनपुर नामका संसारमें विख्यात तथा अरवगजादिसे परिपूर्ण शहर था। वहां एक सोमयाजी वेदशास्त्रका पारंगत यज्ञ करानेवाला पुरन्दर नामक ब्राह्मण रहता था। उसके एक अत्यन्त बुद्धिमान माधवनामक पुत्र हुआ। वेदोंके अध्ययनमें तत्पर होकर वह कालक्रमसे बढ़ने लगा। उसने अपने गुणोंसे पिताको दबा दिया, जैसे सूर्य अन्धकारको दबा देता है। उसकी दोनों भुजायें मांसपूर्ण थीं। यौवन अवस्थामें छातीमें विशेष विशालताको प्राप्त किया। इसकी कमलनयनी, सुन्दरी, सभी शुभ लक्षण-संयुक्त और देवस्त्रीके समान चन्द्रलेखा नामकी पत्नी थी। वह ब्राह्मणकुमार उस स्त्रीका बहुतही अनुरक्त था। उस तन्वी स्त्रीने अपने रूप और सौन्दर्य-छटा तथा यौवनसे इसके चित्तको हरण कर लिया। वह इसके साथ नित्य आनन्दपूर्वक विहारके लिये एक सुन्दर केलि-उद्यान (आरामवाग) में विहार करने लगा। उसी समय वसन्तकाल मानों इस ब्राह्मणको क्रीड़ाविशेषकी शिक्षा देनेके लिए आ गया ॥११॥

पुंस्कोकिलाश्चुकूजुर्वै चूतवृक्षसमाश्रिताः ॥११॥ वियोगिमानसेष्वन्तर्जनयन्तः परां रुजम् ॥ अशोककुसुमं लोकान्मदनस्य दिधक्षतः ॥१२॥ प्रतप्तमिव नाराचं व्यरोचत मनोहरम् ॥ प्रसूनापचयं कर्तुं निर्गतश्चन्द्रलेखया ॥ १३ ॥ विलासविपिनोद्देशे सर्वपुष्पमनोरमे ॥ आरामे विहरंस्तस्मिंस्तत्र तत्र स भार्यया ॥१४॥ सरसीं सत्त्वसम्पन्नां ददर्श विमलोदकाम् ॥ पद्मखण्डैश्च सम्पूर्णामिन्दीवरवनाकुलाम् ॥१५॥ सुगन्धिभिः प्रसूनैश्च पूरितां तटभूरुहाम् ॥

विरहीजनोंको बड़ा खेद उत्पन्न करते हुए आम्र वृक्षोंपर रहकर नर-कोयल कूकने लगे। सुन्दर अशोकके फूल मानों मनुष्योंके वधकारी कामदेवके प्रतप्त बाण सदृश शोभते थे। उस माधव ब्राह्मणने सुन्दरी चन्द्रलेखाके साथ फूल चुननेको निकलकर अनेक सुन्दर पुष्पोंसे भरेहुए विलास-वनमें अपनी स्त्रीके साथ इधर-उधर विहार करते हुए आगे चलकर सुन्दर जलपूर्ण, रमणीय जलजीवोंसे भरे, कमल और कुमुदसे परिपूर्ण, तटपर सुगन्धित फूलोंके वृक्षोंसे सुशोभित एक सुन्दर सरोवर देखा ॥१६॥

तन्व्या च सञ्चरंस्तीरे स्निग्धच्छायासमावृते ॥१६॥ चण्डालकन्यकां तन्वीं ददर्श सुमनोहराम् ॥ इन्दीवरदलश्यामां प्रफुल्लकमलेक्षणाम् ॥१७॥ पीनोन्नतकुचां तन्वीं पूर्णचन्द्रनिभानना-

म् ॥ मूर्तामिवाज्ञां मारस्य सुस्निग्धकुटिलालकाम् ॥ १८ तनु-
मध्यां वरारोहां मालिनीं नाम नामतः ॥

वह अपनी स्त्रीके साथ सघन छायादार तालाबके किनारे फिरता हुआ एक मनोहारिणी परमसुन्दरी, एक कमलदलके समान कोमल और सोलहवर्षकी अवस्थावाली, प्रस्फुटित कमलदलके समान युगलनेत्रवाली, ऊंचे और पुष्टस्तनवाली, पतली कमरवाली, पूर्णचन्द्रमाके समान मुखमण्डलयुक्त, मानों मूर्तिमती कामदेवकी आज्ञा-रूपिणी, चिकने और सुकोमल अलकाओं ( शिरके बाल ) से युक्त, पतली मध्यभाग तथा पुष्ट जंघेवाली मालिनी नामक एक चाण्डालकी कन्या देखी ॥१९॥

तां दृष्ट्वा विस्मयाविष्टश्चिन्तयामास वै द्विजः ॥१९॥ जाते-
रननुरूपां तां मत्वा द्विजकुमारकः ॥ अत्यद्भुतमिदं रूपं विधिना
केन निर्मितम् ॥२०॥ मन्ये द्रष्टुमशक्यं वै विधेर्वा रूपमीदृश-
म् ॥ अन्धः खलु जगत्स्रष्टा विधाता रूपमीदृशम् ॥२१॥ यत-
श्चकार वै व्यर्थमभोग्यमपि मादृशाम् ॥ अथ वा किमु रत्नस्य
व्यर्थया जातिचिन्तया ॥ २२ ॥ केनेदमद्भुतं रूपं लभ्यते सुकृतं
विना ॥ अथैनामुपसर्पामि सोऽहं स्पृश्येतरामपि ॥२३॥ चण्डाल-
वाटिकादृष्टं किं रत्नं दुष्यतेऽथ वा ॥ इति संचिन्त्य वै तस्याः
समीपमुपजग्मिवान् ॥२४॥ अनुरागवती चास्मिन्विप्रे चण्डाल-
कन्यका ॥ तयोर्विद्धमभूच्चेतः शितैर्मदनसायकैः ॥२५॥

वह ब्राह्मण उसको देखकर आश्चर्ययुक्त होकर उसे जातिके अनुकूल न पाकर सोचा—हाय ! विधाताने यह बड़ाही अद्भुतरूप बनाया । मैं समझता हूं कि ब्रह्माकी रचनामें तो ऐसा सुन्दर रूप देखनेको भी न मिलेगा । विधाता सचमुच अन्धा है, जो मुझ सदृश लोगोंके भोगनेमें अयोग्य व्यर्थही ऐसा रूप निर्माण किया, अथवा रत्नोंकी जातिको व्यर्थ चिन्तासे क्या है ! भला ऐसा सुन्दर अद्भुत रूप बिना पुण्यके कौन पा सकता है ? अब मैं अस्पृश्य ( नीच ) जाति होनेसे भी इसके पास चलूं । रत्न चाण्डालके भी घरमें पड़ा हो तो क्या कभी दूषित हो सकता है ? ऐसा विचारकर वह माधव उस कन्याके निकट गया। चाण्डाल कन्या भी इसपर अनुरक्त हो गई, तीक्ष्ण कामदेवके बाणने इन दोनोंके चित्तको बेध दिया ॥२५॥

प्रापयित्वा गृहं भार्यां चन्द्ररेखां द्विजोत्तमः ॥ शनैः शनैः समीपं
वै तस्याः स्वयमुपागमत् ॥२६॥ अथैनां वरयामास हृष्टो द्विजकु-

मारकः ॥ अविचार्य महत्पापं तत्सङ्गमसमुद्भवम् ॥२७॥ मा भैषीस्त्वं वरारोहे द्विजोऽयमिति भामिनि ॥ स्त्रीरत्नं दुष्कुलाच्चापि ग्राह्यमित्यनुशासनम् ॥२८॥ अतोऽहं भवतीं याचे वाचा मधुरपूरया ॥ मम चानुमतिं दातुं त्वया रन्तुमिहार्हसि ॥ २९ ॥ इत्युक्त्वा पाणिमस्या वै स्विन्नं जग्राह पाणिना ॥ सङ्गतः सोऽथ मालिन्या तया द्विजकुमारकः ॥ ३० ॥ तदीयमेव मांसादिमाहारं रोचयन्सदा ॥ सुरामपि पिबन्नित्यं चिक्रीड चिरमुन्मनाः ॥३१॥

फिर वह ब्राह्मण अपनी स्त्री चन्द्रलेखाको घर पहुंचा स्वयं उस चाण्डाल कन्याके पास धीरे-धीरे गया। फिर उस चाण्डालिनीके सम्भोगसे होनेवाले महापापका न सोचकर उसने उस कन्याको वर लिया और उससे कहा, हे भामिनि ! तू इस बातसे मत डर कि यह ब्राह्मण है। शास्त्रमें ऐसा उपदेश है कि स्त्रीरत्न दुष्ट-कुलसे भी ग्रहण करना चाहिये। इसलिये मैं अमृतभरी वाणीसे तुझे मांगता हूं; अब तू भी उसी प्रकारकी वाणीसे रमण करनेकी अनुमति दे। ऐसा कहकर उस ब्राह्मणकुमारने उस चाण्डालिनीके पसीनायुक्त हाथको स्वयं पकड़ लिया और वह उसके साथ मिलकर उसीके मांसादि भक्षणको पसन्द करता हुआ प्रति दिन मदिरापान करता और उसमें उन्मत्त होकर क्रीड़ा करता था ॥३१॥

चिरकाले व्यतीते तु दरिद्रश्चाभवद् द्विजः ॥ विधाय चौर्यहत्यादिपापानि धनमर्जयन् ॥३२॥ तच्च तस्यै ददच्चिरं कञ्चित्कालं निनाय सः ॥ ततस्तत्राप्यशक्तोऽयं तदीयैश्च निराकृतः ॥३३॥ चचार भुवने भ्रान्तो न वासं प्राप्य कुत्रचित् ॥ आजगाम चरन्सोऽयं समीपं शेषभूभृतः ॥३४॥

कुछ दिनोंमें वह ब्राह्मण दरिद्र हो गया। तब चोरी, हत्यारी और पापोंके द्वारा रुपया कमाते हुए धन लाकर उस स्त्रीको देते हुए, कुछ दिन इसी प्रकार बिताया। अन्तमें उन कामोंमें भी अशक्त हो चाण्डालिनीके कुटुम्बियोंसे तिरस्कृत होकर पागल हो कहीं स्थान न पाकर घूमने लगा, और घूमता फिरता शेषाचलके पास आ पहुंचा, और दुःखी मनसे शेषाचलपर चढ़ा ॥३४॥

आरुरोह गिरिं चापि कथञ्चिद्दीनचेतसा ॥ तस्मिन्नेव क्षणे तस्य शरीरमभितस्तदा ॥३५॥ आपादचूडं जज्वाल तदद्भुतमिवा-

भवत् ॥ तत्तस्य पापजातं च भस्मीभूय क्षणान्तरात् ॥ ३६ ॥ कृत्वा चटचटारावं पतितं धरणीतले ॥ जाज्वल्यमानो विप्रोऽपि ब्रह्मतेजोभिरञ्जसा ॥३७॥ रराज विगतैनस्कः शरदीव दिवाकरः ॥ तं दृष्ट्वा विस्मिताः सर्वे मुनयस्तत्र सङ्गताः ॥ ३८ ॥ पप्रच्छुस्तं महाभागा द्विजपुत्रं महर्षयः ॥ किमिदं वद विप्रेन्द्र नः परो विस्मयो महान् ॥ ३९ ॥ आचक्ष्वास्माकमामूलाद् वृत्तान्तमिह सर्वतः ॥

उसी समय उसका शरीर पापसे चोटीतक गल उठा। यह बड़ा आश्चर्य हुआ। उससे उसका महा पाप उसी क्षण भस्म हो चटचट शब्द करता हुआ जलकर नीचे पृथ्वीपर गिर गया, फिर ब्रह्मतेजसे वह निष्पाप ब्राह्मण भी चमकता हुआ जैसे शरद् ऋतुमें स्वच्छप्रकाशसे सूर्य्य तपता है,वैसा ही तपने लगा। वहां इकट्ठे हुए मुनियोंने यह देख विस्मित होकर उस ब्राह्मणसे पूछा—हे द्विजराज! कहिये, यह क्या समाचार है, जिसको देखकर हमें आश्चर्य हो रहा है। आप अपना सभी वृत्तान्त आरम्भसे आजतकका कहें ॥४०॥

इति तेषां वचः श्रुत्वा माधवो विस्मितो द्विजः ॥४०॥ आदितः प्रभृति प्राह वृत्तान्तं निजमञ्जसा ॥ तच्छ्रुत्वा मुनयः सर्वे विस्मयं परमं गताः ॥ ४१ ॥ ऊचुर्वचनमक्लिष्टं वृषशैलाश्रितं महत् ॥

मुनियोंका यह प्रश्न सुनकर उस माधव ब्राह्मणने भी आश्चर्य्यमें भरकर जन्मभरका अपना वृत्तान्त सुनाया। उसे सुनकर वे मुनि बड़े विस्मययुक्त हो गये। फिर वे वृषभाचलकी सम्बन्धशाली मनोहर कथा कहने लगे ॥४२॥

ऋषय ऊचुः—

अनेन पापजालं वै यस्माद्दग्धं द्विजन्मनः ॥ ४२ ॥ वेङ्कटाचल इत्यस्य प्रसिद्धिर्भुवि वर्तताम् ॥ सर्वपापानि 'वें' प्राहुः कटस्तद्दाह उच्यते ॥४३॥ सर्वपापदहो यस्माद्वेङ्कटाचल इत्यभूत् ॥ इत्युक्त्वा मुनयः सर्वे यथागतमथो ययुः ॥ ४४ ॥ द्विजोऽपि शान्तचित्तो-

स्मिन्नचले संयतेन्द्रियः ॥ दुश्चरं वै तपः कृत्वा तेन कैवल्यमाप्तवान् ॥ ४५ ॥

इति श्रीब्रह्माण्डपुराणे तीर्थखण्डे भृगुनारदसंवादे श्रीवेङ्कटाचलमाहात्म्ये वेङ्कटाचलनामधेयहेतुवर्णनं नाम षष्ठोऽध्यायः ॥ ६ ॥

ऋषियोंने कहा—चूंकि वृषभाचल पर्वतने इस ब्राह्मणकी पापराशिको जलाया है, अतएव अब इसका नाम वेङ्कटाचल प्रसिद्ध हो गया। समस्त पापोंका नाम है 'वे' और 'कट' नाम है उसके दाहका। यों सभी पापोंका भस्म करनेवाला होनेके कारण उसका नाम वेङ्कटाचल हुआ। इतना कहकर मुनिगण अपने-अपने स्थानोंको गये। उस माधव ब्राह्मणने भी शान्तचित्त हो इसी पर्वतपर बसकर तपस्या की और उससे उसने केवल मोक्ष पाया ॥४५॥

इति षष्ठोऽध्यायः ॥६॥

## सप्तमोऽध्यायः ॥७॥



भक्तप्रवर श्रीचोलका, जन्म आदि आख्यान।
मृगया सेवन भ्रमणमें, दुहिता नाग मिलान ॥१॥
रूप परस्पर देखिके, भूलि गयो नरनाह।
प्रणय-बन्धमें बंधि गयो, करि गन्धर्व-विवाह ॥२॥
राजसुताको ले गई, चोलहि नागन भान्त।
ताकी ललित कथा कही, सविधि सूत भगवन्त ॥३॥

---

अथ श्रीवेङ्कटेशाराधकचोलराजसुतोत्पत्तिक्रमः

भृगुरुवाच—

चोलराजसुतः कश्चित्कलौ खलु भविष्यति ॥ चक्रवर्ती स

शेषाद्रौ वैकुण्ठं ह्यर्चयिष्यति ॥ १ ॥ इत्येवं कथितं पूर्वं त्वया मे मुनिसत्तम ॥ तन्ममाचक्ष्व विप्रेन्द्र विस्तरेणैव नारद ॥२॥ चोलराजसुतः कोऽयं कुत्र देशे वसिष्यति ॥ कथं वा शेषशैलेन्द्रमर्चयिष्यति भक्तितः ॥३॥ तस्य वा कीदृशी भक्तिर्भविष्यति रमापतौ ॥ नत्वदन्योऽस्ति भूलोके वेदिता भाविनां क्वचित् ॥४॥ मय्यनुग्रहबुद्ध्या त्वं कथयस्व कथामिमाम् ॥

### वेङ्कटेशभक्त श्रीचोलराजकी पुत्रोत्पत्ति कथा

भृगुने पूछा—हे मुनिश्रेष्ठ ! आपने पूर्वमें कहा था कि कलियुगमें एक चोलराजका पुत्र भगवद्भक्त होगा, जो चक्रवर्ती राजा होकर शेषाद्रिपर वैकुण्ठनाथकी पूजा करेगा। अब आप उसका वृत्तान्त विस्तारपूर्वक वर्णन कीजिये। यह चोलराजका पुत्र कौन होगा और किस देशमें निवास करेगा, और कैसे शेषाद्रिपर श्रीविष्णुका भक्तिपूर्वक पूजन करेगा ? उसकी लक्ष्मीनाथमें कैसे भक्ति रहेगी, कहिये। आपके सिवाय दूसरा भूलोकपर भविष्य फलदाता और कोई नहीं है। अतएव आप मुझपर अनुग्रह-बुद्धिसे यह कथा कहिये ॥१-४॥

*श्रीनारद उवाच—*

कलौ चोलनृपः कश्चिद्बभूव भुवि विश्रुतः ॥५॥ धार्मिको नीतिशास्त्रज्ञः शशास पृथिवीमिमाम् ॥ स कदाचिद्वने रन्तुमाखेटेन महीपतिः ॥६॥ किङ्करान्वनपालांश्च व्यादिदेश महामनाः ॥ स्वयं विनिर्ययौ तूर्णं हयमारुह्य रंहसा ॥७॥ शेषाचलवनोद्देशे विचचार मृगान्तकः ॥ अश्वानां च गजानां च श्रुत्वा घोरं महारवम् ॥ ८ ॥ गुहाभ्यः प्रातर्निर्याताः सिंहव्याघ्रमुखा मृगाः ॥ इतः सिंहा इतो व्याघ्रा इतश्च वनवारणाः ॥९ ॥ इति निर्दिश्यमानान्वै जघान मृगयूथपान् ॥ सङ्घशश्च वराहाणां यूथानि निशितैः शरैः ॥१०॥ खड्गान् खड्गेन नृपतिर्विव्याध विपिनान्तरे ॥ मृगयाकृष्टचित्तोऽयं विचरन् कानने मुहुः ॥ ११ ॥ न लेभे विश्रमं राजा यथेन्द्रियवशं गतः ॥

श्रीनारदने कहा—कलियुगमें एक प्रसिद्ध राजा चोल हुए। वे परम धार्मिक और नीतिज्ञ होकर इस पृथ्वीका शासन करते थे। किसी समय उस महामति राजाने वनमें शिकारके लिये सेवकों तथा वन-रक्षकोंको आज्ञा दी, और स्वयं घोड़ेपर सवार हो, बड़े वेगसे जा निकले और शेषाचलके वनप्रान्तमें मृगोंके कालरूप, वे भ्रमण करने लगे। घोड़े तथा हाथियोंका भयङ्कर नाद और शब्द सुनकर गुफाओंसे सिंह, बाघ और मृग आदि जानवर बाहर निकले। इधरसे सिंह तो उधरसे बाघ और उस तरफसे वनैले हाथी इस प्रकार दिखलाते जाते हुए राजाने पशुओंका शिकार किया। सूअरके झुण्डोंको तीक्ष्ण बाणोंसे मार गिराया। गैंड़ोंको तलवारसे काट डाला और मृगयामें चित्त लग जानेसे बारम्बार वनमें विचरण करते हुए राजा भी कामीके जैसा विश्राम नहीं पाते थे ॥१२॥

अथ चोलराजस्य मृगयाविहारकाले नागकन्यकादर्शनादिः

ततस्तेन नरेन्द्रेण कन्या काञ्चनरूपिणी ॥१२॥ नलिनोत्फुल्ल-
नयना चन्द्रबिम्बनिभानना ॥ विश्वविस्मयलावण्या श्यामा
पीनपयोधरा ॥ १३ ॥ राजहंसी चरन्तीव दृष्टा यौवनशा-
लिनी ॥

चोलराजके शिकार करनेके समय नागकन्याका दर्शन

पुनः राजाने सुवर्णके समान कान्ति, कमलके समान प्रफुल्लित नेत्र, चन्द्रमाके मण्डलके समान मुख, जगतको चकित करनेवाली कोमलता तथा सोलह वर्षकी अवस्थावाली, पुष्ट स्तनवाली, मानों चलती हुई यौवन-रसभरी राजहंसिनी, एक कन्या देखी ॥१४॥

ततः प्रसूनापचयं कुर्वन्ती सा मनोरमम् ॥१४॥ जहार चेतस्त-
स्येयं नदीव पुलिनं जलैः ॥ प्रसूनान्यपचिन्वन्त्याः सन्नमध्यव-
लित्रयम् ॥१५॥ उन्नमत्कुचमालोक्य वपुस्तस्या भृशोत्सुकः ॥
न शशाक वनोद्देशात्पदात्पदमपि स्वयम् ॥१६॥ चलितुं नृपति-
स्तत्र व्याधविद्धो मृगो यथा ॥ निर्जितः स्मरबाणेन सोऽयं
मर्मसु भेदिना ॥ १७ ॥ विसृज्य सर्वसैन्यानि तत्समीपं ययौ
नृपः ॥ ततः सा च वरारोहा विलोक्य नृपतिं तदा ॥१८॥ मनो-
ज्ञवेषं सम्प्राप्तं न्यस्तचापमिव स्मरम् ॥ विद्धा मन्मथबाणेन

वभूवायतलोचना ॥१६॥ अपचेतुं न पुष्पाणि शक्ता तद्गतमान-
सा ॥ मुहुर्विलोकयन्त्येनं राजानं सा मनस्विनी ॥२०॥

सुन्दर फूल चुनती हुई उस कन्याने राजाके चित्तको ऐसा आकर्षित किया, जैसे नदी अपने किनारोंको खींचती है। फूल चुनती हुई उस कन्याके घटे हुए तीन बलियों तथा उछलते हुए स्तनवाले शरीरको देखकर, अत्यन्त उत्सुक होकर वह राजा उस वनप्रदेशसे व्याधासे मारे हुए हरिणके समान एक पैर भी नहीं चल सकते थे। कामके मर्मभेदी बाणोंसे विजित हो सारी सेनाको विदाकर राजा उसके निकट गये। तब वह वरारोहा विशालनेत्रवाली कुमारी राजाको धनुषबाण लिये कामदेवके समान मनोहर स्वरूपमें देखकर, स्वयं भी कामबाणसे विद्ध हुई। वह मनस्विनी उस राजाको बारम्बार देखती हुई उन्हींके विचारमें मग्न फूलोंको नहीं चुन सकती थी ॥२०॥

करेण पुष्पापचयं दृग्भ्यां राजावलोकनम् ॥ कुर्वती तन्मना-
स्तन्वी तथा च स्मरविभ्रमान् ॥२१॥ दर्शयन्ती तथा तन्वी ना-
तिक्रान्ता च दृक्पथम् ॥ ततो राजा समागम्य पृष्टवान्मञ्जु-
भाषिणीम् ॥२२॥ कुलं वृत्तं च शीलं च तस्याः स्वयमनिन्दितम् ॥

हाथोंसे फूलोंको चुनती, आंखोंसे राजाको अवलोकन करती एवं राजामें तन्मय होकर कामचिह्नोंको दिखाती हुई वह राजाके दृष्टिपथसे ओझल न हुई। तब राजाने स्वयं निकट आकर उस मृदुलभाषिणीसे उसका अनिन्दित कुल, शील, वृत्त ( आचार ) इत्यादि पूछा ॥२३॥

राजोवाच—

का त्वं चरसि कल्याणि वने विगतभीः कथम् ॥ २३॥ पिता
को जननी का वा कुत्र वा वसतिस्तव ॥ २४ ॥ परिग्रहोऽसि
कस्य त्वं न वा पाणिग्रहस्तव ॥ पाणिग्रहणकालोऽयं वर्तते तव
शोभने ॥ न चेत्परिग्रहोन्यस्य वराङ्गि वरये तदा ॥२५॥ स्वायत्ती-
कर्तुमात्मानं जीवितं च त्वमर्हसि ॥

राजा बोले—हे कल्याणि ! निडर होकर किस लिये घूमती हो और कौन हो ? तुम्हारे पिता कौन हैं ? माता कौन है ? तुम्हारा निवासस्थान कहां है ? किससे ब्याही गयी हो ? अथवा तुम्हारा पाणिग्रहण अभी नहीं हुआ है ? हे सुन्दरि ! तुम्हारी अवस्था अब विवाहोचित है। हे वराङ्गि ! यदि कोई दूसरा स्वामी नहीं है तो मैं ही वरण करना चाहता हूं। मुझे तथा मेरे जीवनको अपना समझो हो ॥२६॥

कन्यकोवाच—

धनञ्जयाभिधानस्य सर्पराजस्य धीमतः ॥२६॥ पुत्री वसामि पाताले लालिता पितुरन्तिके ॥ भोगानमानुषांश्चापि भुञ्जाना तत्प्रसादतः ॥ २७ ॥ क्रीडन्ती च वयस्याभिः पाताले न्यवसं चिरम् ॥ पाणिग्रहणकाले वै संप्राप्तेऽपि पिता मम ॥२८॥ चिन्तयामास को वास्या भविता सदृशो वरः ॥ पित्रा नानुमता चाहमभिलाषं तव प्रभो ॥२९॥ बन्धुभिश्च ततोऽभीष्टैरनुमन्तुमिहोत्सहे ॥ पितरं मम पृच्छस्व गत्वा पातालमञ्जसा ॥३०॥ दास्यत्यनुमतिं नूनं गुणतः शीलतस्तव ॥ विनयं रक्ष कल्याण कथञ्चिदपि चानघ ॥३१॥ चन्द्रोदयविवृद्धोऽब्धिः किं वेलामतिलङ्घते ॥

कन्या बोली—मैं धनञ्जय नामक बुद्धिमान सर्पराजाकी पुत्री हूं और पातालमें पिताके निकट विशेष रूपसे लालित होकर रहती हूं। अमानुषिक अर्थात् दिव्य भोगोंको उनके प्रसादसे भोगती, तथा सहगामिनी सखियोंके साथ क्रीड़ा करती हुई चिरकालसे पातालमें निवास करती हूं। विवाहकी अवस्था हो जानेसे मेरे पिता चिन्ता करते हैं, कि मेरे लिये कौन उपयुक्त वर होगा। हे प्रभो! आपके लिये मैं ने पितासे अनुमति नहीं पायी है। सभी बन्धुवर्गोंसे भी अभिलाष पूर्णार्थ आज्ञाकी अभिलाषा है। अतः अन्धकारमय पातालमें जाकर मेरे पितासे पूछिये। वे अवश्य ही आपके गुण तथा शीलके कारण अनुमति देंगे। हे निष्पाप! हे कल्याण!! किसी प्रकार विनय (कौलिन्य) की रक्षा करो। चन्द्रोदयसे वर्द्धित हुआ भी समुद्र क्या सीमाका उल्लंघन करता है? ॥३२॥

राजोवाच—

नायं व्यतिक्रमः सुभ्रूर्नाधर्मश्चात्र विद्यते ॥३२॥ गान्धर्वोऽयं विवाहोऽपि मुनिभिः परिकीर्तितः ॥ परस्परानुरागेण सङ्गता राजकन्यकाः ॥३३॥ श्रूयन्ते बहवश्चापि न विहातुमिहार्हसि ॥ अयं विवाहो धर्म्यश्च स्वर्ग्यश्च नलिनेक्षणे ॥ अस्मिन्नर्थे विशा-

लाक्षि प्रत्यवायो न विद्यते ॥३४॥ अतस्त्वय्यनुरक्तं मां कृता-
र्थयितुमर्हसि ॥ जीवितं वा सुखं वापि त्वां विहाय न रो-
चते ॥३५॥

राजा बोले—हे सुन्दर भौंहवाली ! इसमें कोई भी व्यतिक्रम नहीं है, और न यहां कोई अधर्म ही है। यह गान्धर्व विवाह भी मुनियोंसे अनुमोदित है। परस्पर प्रेमसे वशीभूत होकर अनेकों राजकन्याएं संयुक्त होती सुनी गयी हैं। अतः यहां इसे त्यागना नहीं चाहिये। हे कमलाक्षि ! यह विवाह परम धर्मानुमत तथा स्वर्गीय है। हे विशालाक्षि ! इस काममें कोई बाधा नहीं है; अतः तुममें अनुरक्त मुझको कृतार्थ करो। तुमको छोड़कर सुख अथवा जीवन कुछ भी अच्छा नहीं लगता ॥३५॥

इति ब्रुवति भूपाले कन्या कामवशंवदा ॥ लज्जानतमुखी
भूमिं लिखन्ती नखरेण सा ॥ ३६ ॥ वक्तुकामेव संरब्धा संहृता
लज्जया मुहुः॥ अङ्गीचकार चोद्वाहं राज्ञा नागस्य कन्यका ॥३७॥
जोषमास्थाय विपुलं मुहूर्तं स्मावतिष्ठते ॥ अथानया समागत्य
लतामण्डपसंश्रितः ॥ ३८ ॥ अन्वभूत्सुरतं तस्या भूयो रागवि-
वर्धनम् ॥ यामावशेषेऽथ दिने गन्तुकामा कृतत्वरा ॥ ३९ ॥
आमन्त्रयामास नृपं कथञ्चिद्विरहाकुला ॥ नृपश्च दुःखितोऽत्यर्थ-
माश्लिष्याश्लिष्य भामिनीम् ॥४०॥ कथञ्चिदनुमन्तुं वै शशाक
गमनं तदा ॥

राजाके इस प्रकार बोलनेपर वह कन्या कामके वशमें होकर, लज्जासे नीचा मुख कर, भूमिपर नखोंसे लिखती हुई बोलनेकी इच्छासे तत्पर होकर बारम्बार लज्जासे संकुचित हो जाती थी। नागराजकी कन्याने राजासे विवाह करना स्वीकार कर लिया और बहुत देरतक चुप खड़ी रही। इसके अनन्तर वे साथ आकर एक लतामंडपमें ठहरे। पुनः प्रेम बढ़ानेवाली सुरत (केलि) का अनुभव उसके साथ किया। तत्पश्चात् दिनके एक पहर बाकी रह जानेपर लौट जानेकी इच्छासे शीघ्रता करनेवाली उस कन्याने विरह व्याकुल होकर किसी किसी तरह राजासे लौटनेकी आज्ञा मांगी। राजा भी अत्यन्त दुःखित हो अच्छी तरह आलिङ्गनकर उस भामिनीको किसी-किसी प्रकार चले जानेके लिये आज्ञा दे सके ॥४१॥

नृपेणानुमता साऽथ ... विह्वला ... निमीलितार्ध-

नयना निर्गता वरवर्णिनी ॥ ततः पातालमाविश्य गत्वा च पितु-
रन्तिकम् ॥४२॥ चोलराजस्य चरितं कथयामास सर्वतः ॥ नाग-
राजोऽपि तां श्रुत्वा कथितां कन्यया कथाम् ॥४३॥ प्रहर्षमतुलं
लेभे सदृशोऽयमिति ब्रुवन् ॥ निर्गत्य नृपतिश्चापि लतामण्डप-
संश्रयात् ॥ ४४ ॥ भावयन् विभ्रमांस्तस्या जगाम मृगयं-
श्चमूम् ॥

तब वह सुन्दरी राजाकी आज्ञा पाकर संयोगश्रमसे विह्वल तथा आधी आँखोंको मूँदी हुई निकलकर चली गयी। पीछे पातालमें प्रवेश कर तथा पिताके निकट आकर चोलराजका सारा वृत्तान्त कह सुनाया। नागराजने भी कन्यासे कही हुई कथाको सुनकर "यह सदृश ही हुआ" ऐसा कहते हुए अत्यन्त आनन्द प्राप्त किया। लतामण्डपसे निकलकर राजा भी उस रमणीके विभ्रमोंकी भावना करते तथा सेनाको खोजते हुए चले गये ॥४४॥

पश्चिमाचलशृङ्गाग्रे लम्बमाने दिवाकरे ॥ ४५ ॥ व्यलोकत
महाराजः सेनामनुगतां तदा ॥ अपरां दिशमासाद्य ह्यन्वरज्यत
भास्करः ॥४६॥ बिभ्रती कुङ्कुमारक्तं पयोधरभरं तदा ॥ बभौ
सन्ध्यारुणं व्योम स्फुरत्तारकमण्डलम् ॥ ४७ ॥ प्रवालरक्तो
मुक्ताभी रञ्जितो वारिधिर्यथा ॥ जगाहे जगदण्डान्तस्तिमिरं
च शनैः शनैः ॥४८॥ हृदयं विषयासक्तमाविद्यातिमिरं तथा ॥ स
च सैन्यान्वितस्तावत्प्रययौ निजमास्पदम् ॥ ४९ ॥ स्मारंस्मारं
विशालाक्षीं सुरतश्रमविह्वलाम् ॥५०॥

पश्चिमाचल शिखरके ऊपर सूर्यके लटकनेपर महाराजाने अपनी अनुगामिनी सेनाको देखा; और सूर्य कुंकुमके समान लाल बादलोंसे विभूषित, पश्चिम दिशापर जाकर उसे अनुरञ्जित करने लगे। आकाश तारामण्डलसे युक्त सन्ध्याकी ललाईसे छा गया, मानों मुक्तासे रंजित लाल समुद्र हो। फिर अंधियारी धीरे-धीरे सारे संसारको ग्रसने लगी; मानों अज्ञानरूप अन्धकार विषयोंमें आसक्त हृदयको ग्रसता हो। तत्पश्चात् उस राजाने अपनी सेनाके साथ बार-बार सुरतके परिश्रमसे व्याकुल हुई उस विशालनयनीको स्मरण करते हुए अपने स्थानको प्रस्थान किया ॥५०॥

लाक्षि प्रत्यवायो न विद्यते ॥३४॥ अतस्त्वय्यनुरक्तं मां कृता-
र्थयतुमर्हसि ॥ जीवितं वा सुखं वापि त्वां विहाय न रो-
चते ॥३५॥

राजा बोले—हे सुन्दर भौंहवाली ! इसमें कोई भी व्यतिक्रम नहीं है, और न यहां कोई अधर्म ही है। यह गान्धर्व विवाह भी मुनियोंसे अनुमोदित है। परस्पर प्रेमसे वशीभूत होकर अनेकों राजकन्याएं संयुक्त होती सुनी गयी हैं। अतः यहां इसे त्यागना नहीं चाहिये। हे कमलाक्षि ! यह विवाह परम धर्मानुमत तथा स्वर्गीय है। हे विशालाक्षि ! इस काममें कोई बाधा नहीं है; अतः तुममें अनुरक्त मुझको कृतार्थ करो। तुमको छोड़कर सुख अथवा जीवन कुछ भी अच्छा नहीं लगता ॥३५॥

इति ब्रुवति भूपाले कन्या कामवशंवदा ॥ लज्जानतमुखी
भूमिं लिखन्ती नखरेण सा ॥ ३६ ॥ वक्तुकामेव संरब्धा संहृता
लज्जया मुहुः॥ अङ्गीचकार चोद्वाहं राज्ञा नागस्य कन्यका ॥३७॥
जोषमास्थाय विपुलं मुहूर्तं समावतिष्ठते ॥ अथानया समागत्य
लतामण्डपसंश्रितः ॥ ३८ ॥ अन्वभूत्सुरतं तस्या भूयो रागवि-
वर्धनम् ॥ यामावशेषेऽथ दिने गन्तुकामा कृतत्वरा ॥ ३९ ॥
आमन्त्रयामास नृपं कथञ्चिद्विरहाकुला ॥ नृपश्च दुःखितोऽत्यर्थ-
माश्लिष्याश्लिष्य भामिनीम् ॥४०॥ कथञ्चिदनुमन्तुं वै शशाक
गमनं तदा ॥

राजाके इस प्रकार बोलनेपर वह कन्या कामके वशमें होकर, लज्जासे नीचा मुख कर, भूमिपर नखोंसे लिखती हुई बोलनेकी इच्छासे तत्पर होकर बारम्बार लज्जासे संकुचित हो जाती थी। नागराजकी कन्याने राजासे विवाह करना स्वीकार कर लिया और बहुत देरतक चुप खड़ी रही। इसके अनन्तर वे साथ आकर एक लतामंडपमें ठहरे। पुनः प्रेम बढ़ानेवाली सुरत ( केलि ) का अनुभव उसके साथ किया। तत्पश्चात् दिनके एक पहर बाकी रह जानेपर लौट जानेकी इच्छासे शीघ्रता करनेवाली उस कन्याने विरह व्याकुल होकर किसी किसी तरह राजासे लौटनेकी आज्ञा मांगी। राजा भी अत्यन्त दुःखित हो अच्छी तरह आलिङ्गनकर उस भामिनीको किसी-किसी प्रकार चले जानेके लिये आज्ञा दे सके ॥४१॥

नृपेणानुमता साऽथ सङ्गमश्रमविह्वला ॥ ४१ ॥ निमीलितार्ध-

नयना निर्गता वरवर्णिनी ॥ ततः पातालमाविश्य गत्वा च पितु-
रन्तिकम् ॥४२॥ चोलराजस्य चरितं कथयामास सर्वतः ॥ नाग-
राजोऽपि तां श्रुत्वा कथितां कन्यया कथाम् ॥४३॥ प्रहर्षमतुलं
लेभे सदृशोऽयमिति ब्रुवन् ॥ निर्गत्य नृपतिश्चापि लतामण्डप-
संश्रयात् ॥ ४४ ॥ भावयन् विभ्रमांस्तस्या जगाम मृगयं-
श्चमूम् ॥

तब वह सुन्दरी राजाकी आज्ञा पाकर संयोगश्रमसे विह्वल तथा आधी आँखोंको मूँदी हुई निकलकर चली गयी। पीछे पातालमें प्रवेश कर तथा पिताके निकट जाकर चोलराजका सारा वृत्तान्त कह सुनाया। नागराजने भी कन्यासे कही हुई कथाको सुनकर "यह सदृश ही हुआ" ऐसा कहते हुए अत्यन्त आनन्द प्राप्त किया। लतामण्डपसे निकलकर राजा भी उस रमणीके विभ्रमोंकी भावना करते तथा सेनाको खोजते हुए चले गये ॥४१॥

पश्चिमाचलशृङ्गाग्रे लम्बमाने दिवाकरे ॥ ४५ ॥ व्यलोकत
महाराजः सेनामनुगतां तदा ॥ अपरां दिशमासाद्य ह्यन्वरज्यत
भास्करः ॥४६॥ बिभ्रती कुङ्कुमारक्तं पयोधरभरं तदा ॥ बभौ
सन्ध्यारुणं व्योम स्फुरत्तारकमण्डलम् ॥ ४७ ॥ प्रवालरक्तो
मुक्ताभी रञ्जितो वारिधिर्यथा ॥ जगाहे जगदण्डान्तस्तिमिरं
च शनैः शनैः ॥४८॥ हृदयं विषयासक्तमविद्यातिमिरं तथा ॥ स
च सैन्यान्वितस्तावत्प्रययौ निजमास्पदम् ॥ ४९ ॥ स्मारंस्मारं
विशालाक्षीं सुरतश्रमविह्वलाम् ॥५०॥

पश्चिमाचल शिखरके ऊपर सूर्यके लटकनेपर महाराजाने अपनी अनुगामिनी सेनाको देखा; और सूर्य कुंकुमके समान लाल बादलोंसे विभूषित, पश्चिम दिशापर जाकर उसे अनुरञ्जित करने लगे। आकाश तारामण्डलसे युक्त सन्ध्याकी ललाईसे छा गया, मानों मुक्तासे रंजित लाल समुद्र हो। फिर अँधियारी धीरे-धीरे सारे संसारको मथने लगी; मानों अज्ञानरूप अन्धकार विषयोंमें आसक्त हृदयको मथता हो। तत्पश्चात् उस राजाने अपनी सेनाके साथ बार-बार सुरतके परिश्रमसे व्याकुल हुई उस विशालनयनीको स्मरण करते हुए अपने स्थानको प्रस्थान किया ॥५०॥

अथ चोलराजस्य नागकन्यकायां सार्वभौमलक्षणोपेतसुतोत्पत्तिः

आपन्नसत्त्वा ददृशे नागराजस्य कन्यका ॥ सर्वलक्षणसम्पन्ना
पितुर्विदधती मुदम् ॥५१॥ तामथालोक्य दैवज्ञा इदमूचुर्वचस्त-
दा ॥ अस्यामुत्पत्स्यते पुत्रश्चक्रवर्ती महाद्युतिः ॥५२॥ पृथिवीं
सागरोपेतां सशैलवनकाननाम् ॥ पालयिष्यति धर्मेण महेन्द्र-
सदृशः प्रभुः ॥५३॥ अथ सा दशमे मासि पुत्रं प्रासूत सुन्द-
रम् ॥ सर्वलक्षणसम्पन्नं सार्वभौमपदोचितम् ॥५४॥

इति श्रीब्रह्माण्डपुराणे तीर्थखण्डे भृगुनारदसंवादे श्रीवेङ्कटाचलमाहात्म्ये चोलराजसुतोत्पत्तिवर्णनं नाम सप्तमोऽध्यायः ॥ ७ ॥

चोलराजसे नागकन्याकी सुतोत्पत्ति

नागराजकी कन्या गर्भिणीके सभी लक्षणोंसे युक्त हो पिताके आनन्द बढ़ाती हुई देख पड़ी। तब उसे देखकर दैवज्ञगण बोले—"इससे महाप्रतापी चक्रवर्ती पुत्र उत्पन्न होगा। समुद्रपर्य्यन्त वन-पर्वतसे युक्त सभी सारी पृथ्वीका प्रतापी इन्द्रके समान धर्मसे पालन करेगा।" फिर उसने दसवें महीनेमें सुन्दर, सर्वलक्षणयुक्त, सार्वभौम-पदसे युक्त होने योग्य पुत्रको प्रसव किया ॥५४॥

इति सप्तमोऽध्यायः ॥७॥

## अष्टमोऽध्यायः ॥८॥



चोल सुतहिं पातालसे, आना पिता समीप।
गगन-गिरा बस राजपद, दान ताहि कुल दीप ॥१॥
नाम चक्रवर्ती करन, वल्मिकस्थ वाराह।
गोप कथित आख्यान प्रभु, स्वप्नेमें नरनाह ॥२॥
मन्त्रि कथन शबरागमन, मन्त्र स्वप्न शुभ चाह।
सब मिलाय निश्चय गमन, वेंकट निकट वराह ॥३॥

## अथ चोलराजसुतस्य पातालात्स्वपित्रन्तिके आगमनम्

*नारद उवाच—*

पुत्रस्य मुखलावण्ये पुत्रिकाया धनञ्जयः ॥ तृप्तिं न विन्दतिस्मायं प्रीत्युत्फुल्लेन चक्षुषा ॥१॥ ववृधे नागराजस्य परितोषेण वै शिशुः ॥ चन्द्रमा इव कृष्णान्यपक्षे साति दिने दिने ॥ २ ॥ कस्य चिरत्वथ कालस्य पोषितो मातुरन्तिके ॥ पप्रच्छ मातरं बालः पितरं दर्शयेति ह्या ॥३॥ तच्छ्रुत्वा पूर्ववृत्तान्तं सा माताऽस्मै न्यवेदयत् ॥ तदाकर्ण्य च बालोऽयं पुनः पप्रच्छ मातरम् ॥४॥ पितरं वीक्षितुं शीघ्रं क्षोणीतलनिवासिनम् ॥ वर्तते ह्यभिलाषो मे महान्मनसि सम्प्रति ॥५॥ भूलोकगमने योग्यं मार्गमावेदयस्व मे ॥ येनाहं पितुरुत्साहं गमिष्यामि मुदाऽन्वितः ॥६॥

### पातालसे चोलराजके पुत्रका अपने पिताके पास आना

नारदजी बोले- नागराज धनञ्जयने उस कन्याके पुत्रके मुखलावण्यको प्रीतिविकसित प्रसन्न नेत्रोंसे देखते-देखते तृप्ति नहीं पायी। वह बालक नागराजके सन्तोषके साथ शुक्ल पक्षके चन्द्रमाके समान दिनोदिन बढ़ने लगा। मातासे प्रतिपालित होते हुए, किसी दिन उस बालकने मातासे पूछा—हे माता, पिताजीको दिखलाओ। यह सुनकर उसकी माताने उसको पूर्व-वृत्तान्त बतलायी। उसे सुनकर उस बालकने पुनः अपनी मातासे कहा कि पृथ्वीतलपर निवास करनेवाले अपने पिताको शीघ्र देखनेकी मुझे अभी बहुत बड़ी अभिलाषा है। मुझे भूलोकमें जानेके योग्य रास्ता बताओ, जिससे मैं आनन्दसे पिताकी गोदमें आ सकूं ॥६॥

इति तस्य वचः श्रुत्वा प्रहृष्टा नागकन्यका ॥ भूलोकगमने योग्यं बिलं चादर्शयत्तदा ॥७॥ सोऽपि तेनैव मार्गेण प्राप्याशु धरणीतलम् ॥ चोलराजमुपागम्य ववन्दे पादयोस्तदा ॥८॥ प्रपच्छ प्रणतं भूमौ कस्त्वमित्यवनीपतिः ॥ पृष्टः प्राह स बालोऽयं वृत्तान्तमखिलं मुने ॥९॥ वृत्तान्तमखिलं राजा श्रुत्वा तु तदुदीरितम् ॥ ग्रहणे बालकस्यास्य संशयं परमं ययौ ॥१०॥ संशया-

विष्टचित्तोऽयं जोषमास्थाय भूपतिः ॥ मुहूर्तमिव भूयोऽपि तमे· वालोकयंस्थितः ॥ ॥११॥

उसके इस वचनको सुनकर उस नागकन्याने परम प्रसन्न हो उसे भूलोक जाने योग्य मार्ग बतला दिया। उस बालकने भी उसी मार्गसे पृथ्वीतलपर अति शीघ्र पहुंचकर चोलराजके निकट जा उनके चरणोंको प्रणाम किया। तब राजाने पृथ्वीपर अवनत उससे पूछा, तुम कौन हो हे मुने ? पूछनेपर उस बालकने सभी वृत्तान्त कह सुनाया। उससे कही हुई सारी कथाको सुनकर राजा उस बालकको ग्रहण करनेमें अत्यन्त दुविधेमें पड़ गये। वह राजा भ्रमपूर्ण चित्तसे चुप रहकर फिर भी मुहूर्त पर्यन्त उसी बालकको देखते रहे ॥११॥

अथ चोलराजसुतस्याशरीर्युक्त्या पितृकृतराज्याभिषेकक्रमः

ततश्चाकाशगा वाणी नृपं संशयितं मुहुः ॥ आश्वासयन्ती वचनैरुच्चचार न वीक्षिता ॥ १२ ॥ मा विचारय राजेन्द्र पुत्रोऽयं ते न संशयः ॥ चक्रवर्ती महाराजो भविष्यत्यसमो भुवि ॥१३॥ अतीव विष्णुभक्तश्च भविष्यति महामतिः ॥ शेषाद्रौ च स्वयं व्यक्तं विष्णुमभ्यर्चयिष्यति ॥ १४ ॥ प्रीतश्चापि महादेवो ह्यर्चाभावमतिक्रमन् ॥ सँल्लापं तेन सुचिरं करिष्यति दिने दिने ॥१५॥ अभिषेचय राजेन्द्र पुत्रं राज्येऽविचारतः ॥

चोलराजपुत्रका राज्याभिषेक-क्रम

तत्पश्चात् संशयपूर्ण उस राजाको आकाशवाणीने आश्वासन देते हुए वचनोंका उच्चारण किया; परन्तु दिखाई न दिया। हे राजेन्द्र ! विचार न करो, यह पुत्र तेरा ही है इसमें संशय नहीं है। यह संसारमें अतुलनीय (बेजोड़) तथा परम चक्रवर्ती महाराजा होगा। यह महा बुद्धिमान तथा विष्णुका परम भक्त होगा। शेषाद्रिपर स्वयं प्रकट श्रीविष्णु भगवान्‌की पूजा करेगा। भगवान् प्रसन्न होकर अर्चावतार भावका उल्लंघन कर इसके साथ बड़ी देरतक नित्यशः भाषण करेंगे। हे राजेन्द्र ! बिना कुछ विचारे ही अपने इस पुत्रको राज्यपद अभिषिक्त करो ॥१६॥

इति राजा समाकर्ण्य नानृतं सुरभाषितम् ॥१६॥ श्रद्दधे पुत्रमित्येनं जयन्तं वासवो यथा ॥ ततो राजा समागम्य संवृत्तो यत्र सङ्गमः ॥१७॥ आत्मनस्तस्य मातुश्च तं देशं सुमनोहरम् ॥

तत्र निर्माय विपुलं पुरं पुत्रस्य नामतः ॥ ॥१८॥ तत्राभ्यषेच्य-
चैनमाधिराज्ये समागतः ॥ ततः स चक्रवर्तीति प्रथितो भुवि
पार्थिवः ॥१९॥

राजाने यह सब सुनकर समझा कि देवताओंका वचन असत्य नहीं होगा, और अपने उस पुत्रपर, इन्द्र जैसे जयन्तपर श्रद्धा रखते थे, वैसीही श्रद्धा की। तत्पश्चात् राजाने, जिस स्थानपर अपना तथा उस बालककी माताके संयोग हुआ था उसी सुमनोहर देशमें आकर, वहां पुत्रके नामपर विशाल नगर बनवा कर उसे वहीके अधिराजपदपर अभिषिक्त किया ॥१९॥

अथ चक्रवर्तिनं प्रति गोपालनिवेदितवेंकटाचलवल्मीकोदन्तः।

शशास पृथिवीं कृत्स्नां समुद्रवसनान्विताम् ॥ ततः कदा-
चिद्गोपालास्तदाज्ञापरिपालकाः ॥ २० ॥ समागम्य महीपालमिदं
वचनमब्रुवन् ॥

चक्रवर्तीके प्रति गोपाल द्वारा निवेदित वेङ्कटाचलका वृत्तान्त

पीछे संसारमें, चक्रवर्ती ऐसा प्रख्यात वही राजा समुद्रसे आवृत्त सम्पूर्ण पृथ्वीका शासन करने लगा। कुछ दिन पीछे उसीके आज्ञापालक गोवाले (ग्वाले) उस राजाके निकट आकर उससे यह वचन बोले ॥२१॥

*गोपाला ऊचुः—*

शेषाचले वयं राजन् विहरामो गवां व्रजात् ॥२१॥ क्षीरं
निदेशाद्देवस्य भाण्डेषु निहितं सदा ॥ तदानयनकाले वै दृश्यते
महदद्भुतम्॥२२॥ विवृद्धं तत्र वल्मीकमेकं वसति भूधरे ॥ आ-
गच्छामो हि मार्गेण वयं तेन महीपते ॥ २३ ॥ आदाय भाण्डं
क्षीराणां सर्वं तत्र हि भज्यते ॥ सावधाना अपि वयं न पश्या-
मोऽत्र कारणम् ॥२४॥ विचारय महीपाल किमेतादिति सम्प्रति॥
राजा दैविकमेवेति स निश्चित्य सुविस्मितः ॥२५॥ सायं ध्यायन्
हृषीकेशं तद्गतेनान्तरात्मना ॥ शुचिर्भूतश्च सुष्वाप यतवाक्काय-
मानसः ॥२६॥

गोपाल सब बोले—हे राजन्! हमलोग शेषाचलपर गौओंके साथ विहार करते हैं। फिर आपकी आज्ञासे भाण्डोंमें रखे हुए दूधको लाते समय बड़ा आश्चर्यमय दृश्य देखते हैं। उसी जगहपर एक बहुत बड़ा हुआ दीमक है। हे राजन्! हमलोग उसी रास्तेसे दूधके सभी घड़ोंको लेकर आया करते हैं। वहींपर सब भाण्डे फोड़ दिये जाते हैं। सावधान होनेपर भी हमलोग उसका कुछ भी कारण नहीं देख सकते। 'हे महा प्रभु! अब आप ही विचारें कि यह क्या होता है। तब वह राजा "यह दैविक ही है", ऐसा निश्चय कर आश्चर्यित हुआ और सन्ध्याको अपनी आत्मगत अन्तरात्मासे हृषीकेशका ध्यानकर पवित्र हो शरीर तथा मनको संयमित कर सो गया ॥२६॥

अथ चक्रवर्तिनो भगवत्प्रकाशितस्वप्नदर्शनम्

ददर्श स्वप्नमेकं च नृपस्तस्मिन्निशान्तरे ॥ प्रातरुत्थाय विधिवत्सन्ध्यामन्वास्य भूपतिः ॥२७॥ आहूय मन्त्रिप्रवरानिदं वचनमब्रवीत् ॥

चक्रवर्तीका स्वप्न-दर्शन

तब उसी रात्रिमें राजाने एक स्वप्न देखा। फिर प्रातःकाल उठकर विधिवत् सन्ध्योपासन समाप्त कर अपने श्रेष्ठ मन्त्रिवर्गोंको बुला यह कहा ॥२८॥

*राजोवाच—*

मन्त्रिणः शृणुतास्यां वै निशायां स्वप्नमद्भुतम् ॥ २८ ॥ अदृष्टपूर्वं चान्येन गुह्याद्गुह्यतरं महत् ॥ कालमेघनिभः कश्चिद्तिसुन्दरमूर्तिमान् ॥२९॥ अद्भुतः पुरुषो दृष्टः पुण्डरीकायतेक्षणः ॥ अपृच्छं पुरुषं चाहं कुत्रस्थः को भवानिति ॥ ३० ॥ किमर्थं चागतोऽस्यद्य तव किं करवाण्यहम् ॥

राजा बोला—हे मन्त्रियो! आप सब इस रात्रि, दूसरे किसीसे भी पहले कभी नहीं देखे गये तथा अत्यन्त गोपनीयसे भी गुह्य मेरे एक अति अद्भुत स्वप्नको श्रवण कीजिये। किसी अति सुन्दर काले मेघके समान मूर्तिमान अति अद्भुत कमलके समान बड़े-बड़े नेत्रवाले पुरुषको देखा। तब मैंने उस पुरुषसे पूछा—आप कहाँ रहते हैं तथा कौन हैं? आप आज किस लिये आये हैं, तथा हम आपके लिये क्या क्या करें?

इति पृष्टो मया प्राह देवेन गिरिवासिना ॥ ३१ ॥ प्रेषि

तोऽहं नरव्याघ्र श्रीनिवासेन धीमता ॥ अहं वसामि शेषाद्रेः सदा तस्यान्तिके मुदा ॥ ३२ ॥ श्रीवेङ्कटगिरेरस्य प्रभावं तु महाद्भुतम् ॥ निवेदयेति देवेन प्रेषितोऽस्मि तवान्तिकम् ॥३३॥ शिलोच्चयेऽत्र वै शङ्खचक्रावनतहस्तकः ॥ श्रीभूमिसहितो नित्यं विहरन् राजेततराम् ॥३४॥ अद्रेर्दक्षिणतस्तस्य राजधानी विराजते ॥ गजवाजिरथोपेता सर्वाद्भुतमयी सदा ॥३५॥ तस्मिन् गिरौ त्रयस्त्रिंशत्कोटिसङ्ख्याश्च देवताः ॥ सर्वे महर्षयश्चापि सिद्धा योगिवरास्तथा ॥ ३६ ॥ वसन्ति सर्वतीर्थानि तस्मिन् गिरिवरे शुभे ॥ अणिमा महिमा चैव गरिमा लघिमा तथा ॥३७॥ प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टभूतयः ॥ तस्याद्रेः पूर्वभागे वै चरन्ति विपुलं तपः ॥ ३८ ॥

हे नरव्याघ्र ! तुमसे ऐसा पूछे जानेपर उस पर्वतवासी धीमान् श्रीनिवास भगवान्से मैं भेजा गया हूं। मैं सदा आनन्दसे उन्हींके निकट शेषाद्रिपर निवास करता हूं। इस श्रीवेङ्कट पर्वतका अद्भुत प्रभाव आपसे निवेदन किया जाय, इसीलिये भगवान्से आपके निकट भेजा गया हूं। इसी उच्च शिखरपर शंखचक्रसे अवनत हाथवाले श्री तथा भूदेवीके साथ नित्य विहार करते हुए यहां शोभित रहते हैं। उसी पर्वतके दक्षिण भागमें हाथी, घोड़े तथा रथोंसे युक्त, सदा सभी अद्भुत पदार्थोंसे पूर्ण उनकी राजधानी विराजती है। उसी पर्वतपर तैंतीस करोड़ देवता, सभी महर्षिगण, सिद्धगण, श्रेष्ठ योगिवृन्द तथा सभी तीर्थ वास करते हैं। अणिमा, महिमा, गरिमा, लघिमा, प्राप्ति, प्राकाम्य, ईशीत्व, तथा वशीकरण नामक आठ विभूतियां उसी पर्वतके पूर्वभागमें विपुल तपस्या करती हैं ॥३८॥—

पूर्वस्यां दिशि तस्याद्रेः कालहस्तीति विश्रुतम् ॥ पुरे तस्मिन्महादेवो वसति स्वयमादरात् ॥३९॥ कालहस्त्युत्तरे भागे सुवर्णमुखरी नदी ॥ सर्वपापप्रशमनी दृश्यते मुनिसेविता ॥ ४० ॥ शुकादयो मुनिवरास्तस्यास्तीरे यतेन्द्रियाः ॥ शेषशैलेशमुद्दिश्य तपस्तप्यन्ति दारुणम् ॥ ४१ ॥ तस्याद्रेः परितः सप्तयोजनान्तःस्थिता जनाः ॥ सर्वपापविनिर्मुक्ता विष्णुलोकं प्रयान्ति वै ॥४२॥

उसी पर्वतके पूर्व भागमें कालहस्ति है, ऐसा सुना गया है। उसी पुरमें स्वयं भगवान् महादेवजी

अत्यन्त आदरके साथ निवास करते हैं। कालहस्तिके उत्तरभागमें सुवर्णमुखरी नामक, सब पापोंको नाश करनेवाली, श्रेष्ठ मुनियोंसे सेवित, शुभ्र नदी दिखायी देती है। जितेन्द्रिय शुकदेव आदि मुनिवरगण शेष पर्वतका उद्देश करके उसी नदीके तीरपर घोर तपस्या करते हैं। उस पर्वतके चारों ओर सात योजनतक निवास करनेवाले मनुष्य सभी पापोंसे निर्मुक्त होकर विष्णुलोकमें चले जाते हैं ॥४२॥

अष्टार्णं मनुराजं तं जप्त्वा तु किमुत प्रभो ॥ तं द्रष्टुं देवदेवेशं द्रष्टुं सद्म च शोभनम् ॥४३॥ एहि शेषाचलं शीघ्रमित्थमाहूतवान् स माम् ॥ अथ तेनैव पुंसाऽहं शेषाचलमुपागमम् ॥ ४४ ॥ व्योमान्तावितितोदारशृङ्गान्तस्तम्भितद्रुमम् ॥ तत्र गत्वा स पुरुषो ज्वलत्काञ्चनशोभितम् ॥ ४५ ॥ दिव्यं प्रदर्शयामास विमानं रत्नशोभितम् ॥ स्वयमन्तर्दधे सोऽयं पश्यतो मम पूरुषः ॥४६॥ अन्तर्दधे विमानं च तस्मिन्नेव क्षणान्तरे ॥ इति स्वप्नो मया दृष्टो ह्यद्भुतो रोमहर्षणः ॥ ४७ ॥ अदृष्टपूर्वश्चान्येन किमेतदिति चिन्त्यताम् ॥

"अष्टाक्षरवाला मन्त्रराजका जप करे तो फिर उससे क्या क्या नहीं हो सकता ? अस्तु, उन्हीं देवदेवेश भगवान् तथा उनके उस सुन्दर स्थानका दर्शन करनेके लिये शेषाचल शीघ्र आइये।" ऐसा उस बोले; पीछे उसी पुरुषके साथ मैं भी शेषाचल पहुंच गया। वह आकाशतक उठा हुआ अनेक शृंगान्तरोंसे चारों ओर घिरा हुआ था। उसी जगह जाकर उस पुरुषने मुझे तपाये हुए सुवर्णसे सुशोभित, परम दिव्य रत्नजटित विमान दिखलाया। मेरे उसे देखते देखते वह स्वयं अन्तर्धान हो गया और उसी क्षण वह विमान भी अन्तर्हित हो गया। मैंने यही परम अद्भुत तथा लोमहर्षण स्वप्न देखा है। क्या यह दूसरोंसे अदृष्टपूर्व नहीं है, आप ही लोग विचार करें ॥४८॥

*मन्त्रिण ऊचुः—*

देवेन त्वयि कारुण्याद्दर्शितं राजसत्तम ॥४८॥ स वल्मीकस्थान एव देवस्तिष्ठत्यसंशयम् ॥ क्षीरभाण्डं च गोपाला भग्नमावेदयंस्तव ॥४९॥ गोपालैर्यस्समादिष्टं वल्मीकस्थानमुत्तमम् ॥ तत्र क्षीराभिषेकेण देवो व्यक्तिं गमिष्यति ॥५०॥

मन्त्रिगण बोले—हे राजसत्तम ! आपपर करुणा करके स्वयं भगवानने ही इसे दिखाया है। वहीं वल्मीक स्थानमें निश्चयही भगवान् रहते हैं। ग्वालेने जिस उत्तम वल्मीकस्थानपर दुग्धभाण्डके फोड़े जानेका समाचार बतलाया था, वही स्थानपर क्षीराभिषेकसे भगवान् प्रगट होंगे ॥५०॥

अथ नृपनिकटं प्रति शेषाचलोदन्तज्ञापनाय शबरागमनम्

इति सञ्चिन्त्यमाने वै शबरः कश्चिदाययौ ॥ कालमेघनिभो धन्वी खड्गतूणीरभूषितः ॥५१॥ बर्हिपिञ्छान्वितशिरा लतापल्लव-भूषितः ॥ तूर्णमागत्य राजानं प्रणम्य शिरसा ततः ॥ ५२ ॥ व्यजिज्ञपच्च राजानं प्रणतः प्राञ्जलिः स्थितः ॥

राजाके निकट शबरका आना

यही सोचते समय काले मेघके समान, धनुषधारी, तलवार तथा तरकससे भूषित, मोरकी पुंछयुक्त मस्तक-वाला एवं लता तथा पल्लवोंसे विभूषित एक शबर आया। उसने चुपचाप राजाके पास आकर मस्तकसे प्रणाम कर पीछे अञ्जलिबद्ध होकर, प्रणत रूपसे खड़ा होकर राजासे विज्ञापन किया ॥५२॥

स्वामिन्वसामि शेषाद्रौ प्रियङ्गुकृषिमाचरन् ॥ ५३ ॥ तेन जीवामि सततं सपुत्रः सहबान्धवः ॥ कश्चिच्छ्वेतो वराहो वै तत्रागत्य दिने दिने ॥५४॥ प्रियङ्गुं भक्षयत्येव निःशेषं मिषतां च नः ॥ तदर्थं रक्षणे तस्य नियुज्य मम पुत्रकम् ॥५५॥ प्रियं प्रियङ्गुं देवाय निवेदयितुमुद्यतः ॥ मध्वर्थमगमं सोऽहं सुदूरं तत्र पर्वते ॥५६॥ तस्मिन्नवसरे पुत्रः प्रियङ्गुं लोलुपः करे ॥ संमर्द्य भक्षयित्वाऽस्ते तदपत्यं समागतः ॥५७॥ देवानिवेदिते प्रीतिर्मम नासीत्कदाचन॥ ततः क्रुद्धो रुदन्तं वै पुत्रं हन्तुं समुद्यतः ॥५८॥ तदा ह्याकाशगा वाणी मामवोचत्सुदारुणम् ॥ मा वधीः पुत्रमेनं वै प्रियङ्गुमनिवेदितम् ॥ ५९ ॥ देवः स्वीकृतवानेव त्वद्दत्तेनैव तोषितः ॥ चक्रवर्तिसमीपं च गत्वा स्वप्नं च दर्शितम् ॥ ६० ॥ अभिज्ञानतया चोक्त्वा तमागच्छेति वै वद ॥

हे स्वामिन्! प्रियङ्गुकी खेती करता हुआ मैं शेषाचलपर निवास करता हूं। उसीसे मैं पुत्र, पौत्र तथा बान्धवोंके साथ जीता हूं। वहां कोई श्वेत वाराह नित्य आकर, हमलोगोंको डराकर हमलोगोंके देखते-देखते सम्पूर्ण प्रियङ्गु खा जाता है। उसीकी रक्षाके लिये अपने पुत्रको नियुक्तकर श्रीमानके परम प्रिय प्रियङ्गुको निवेदन करनेके लिये उद्यत होकर मधुके लिये उसी पर्वतमें बहुत दूरतक चला गया। उसी समय प्रियंगुका लालची मेरा पुत्र अपने हाथोंसे प्रियङ्गुको मलकर भोजन कर गया। मैंने लौट आकर उसे देखा। बिना भगवान्के निवेदन किये मुझे कभी भी प्रीति नहीं होती। मैं क्रोधित होकर रोते हुए पुत्रको मार डालनेको उद्यत हुआ। उसी समय मुझे सुदारुण आकाशवाणी सुनाया दी। प्रियङ्गुको नहीं निवेदन करनेवाले इस पुत्रका वध न करो। तुम्हारी भक्तिसे ही तुष्ट होकर भगवान्ने स्वाकार कर लिया है। चक्रवर्ती राजाके पास जाकर उनसे देखते हुए स्वप्नकी सूचनाके साथ आपण कर उनको आ जानेको बोलो ॥६१॥

इति तेन समाख्यातं वाचा व्योमगया तदा ॥ ६१ ॥ वचः श्रुत्वा विचार्याथ किमेतदिति मन्त्रिभिः ॥ राजाऽथ गोपवाक्यं च स्वप्नं शवरभाषितम् ॥६२॥ एकीकृत्य सहानेन निर्ययौ शवरेण सः ॥ आदिश्य मन्त्रिणश्चैव गोसहस्रभवं भुवि ॥६३॥ क्षीरमानयतेत्येतच्छेषाचलतटं ययौ ॥६४॥

इति श्रीब्रह्माण्डपुराणे तीर्थखण्डे भृगुनारदसंवादे श्रीवेङ्कटाचलमाहात्म्ये चोलराजस्वप्नवृत्तान्तवर्णनं नामाष्टमोऽध्यायः ॥ ८ ॥

आकाशवाणी कथित समाचार तथा उससे कहे गये समाचार दोनों सुनकर मन्त्रियोंके साथ विचार करने लगे कि यह क्या है। फिर राजा गोपवचन, अपने स्वप्न तथा शवरके कथन, सबको एक साथ सोचकर उसी शवरके साथ (निकल पड़े) चले गये और अपने मन्त्रियोंको आज्ञा दी कि राज्य (पृथ्वीपर) के सहस्रों गौओंका दूध शेषाचलके निकट ले आना ॥६४॥

इति अष्टमोध्यायः ॥८॥

## नवमोऽध्यायः



शवर संग नृप-आगमन, दर्शनार्थ वाराह।
प्रगट दूध अभिषेक प्रभु, बहु विनती नरनाह ॥१॥

राज-स्तुति वश प्रगट वपु, रहन लोक-हित ईश।
उत्सवार्थ देवागमन, रथ उत्सव जगदीश ॥२॥
सब उत्सवके अन्तमें, अवभृथका असनान।
यज्ञ योग जप तप हवन, विविध विबुध वरदान॥३॥

—

अथ चक्रवर्तिनः शबरेण सह वराहदर्शनार्थं शेषाचलगमनम्

*श्रीनारद उवाच—*

निर्गत्य राजा शबरेण सार्धं प्रियं प्रियङ्गुं प्रति भक्षयन्तम् ॥ श्वेतं वराहं शबरोपदिष्टं दिव्यं विमानं च दिदृक्षुरत्र ॥ १ ॥ विलोकयन् श्वेतवराहमेकं प्रियङ्गुसस्यं किल भक्षयन्तम् ॥ गर्जन्तमायान्तमितस्ततोऽपि घोणारवं भीमपराक्रमं च ॥२॥ दिव्यं विमानं च ददर्श तत्र नृपस्तदा रत्नविभूषितं तत् ॥ अनेकसाहस्ररविप्रकाशं स्वप्नेऽद्भुतं दृष्टमदृष्टपूर्वकम् ॥३॥ ततो वराहः सहसा प्रियङ्गुं व्याधस्य दृष्टस्तमथोपभुज्य ॥ दृग्गोचरं तस्य समीपजातं वल्मीकमेव प्रविवेश भूयः ॥ न तद्विमानं च ददर्श भूयस्तस्मिन् क्षणे विस्मितचित्त एषः ॥ पप्रच्छ तं शाबरमेव तस्य हेतुं वदस्वेति स राजपुत्रः ॥ ५ ॥

चक्रवर्तीका निषादके साथ शेषाचल जाना

श्रीनारदजी बोले—प्रिय प्रियङ्गुको खानेवाले तथा शबर द्वारा बताये गये श्रीश्वेत वाराह एवं दिव्य विमानको देखनेकी इच्छासे राजा शबरके साथ साथ चले; और वहाँ प्रियङ्गुकी खेतीको खाते हुए, इधर उधर गर्जते हुए जाते आते परम घोर शब्द करते हुए एक महापराक्रमी श्वेत वाराह तथा स्वप्नमें देखे हुए अदृष्टपूर्व, अद्भुत, अनेकों हजार सूर्य्यके प्रकाशसे युक्त रत्नविभूषित, परम दिव्य विमानको राजाने वहींपर देखा। तत्पश्चात् उस व्याधके देखे हुए उस वाराहने उस प्रियङ्गुको सहसा खाकर उसको आँखोंके सामने वल्मीकमें प्रवेश किया। फिर उस विमानको न देखा। उसी समय विस्मित होकर उसी शबरसे उस राजपुत्रने जिज्ञासा की कि "इसका कारण बताओ"॥१-५॥

अथ चक्रवर्तिकृतक्षीराभिषेकेण वल्मीकात् श्रीनिवासाविर्भावः

स शावरस्तस्य च तेन हेतुं तत्त्वेन पृष्टः स जगाद तस्मै ॥
अयं वराहो न वराहमात्रं देवः स्वयं यो धरणीं बभार ॥ ६ ॥
इदं विमानं च तदीयमेव दिव्यं त्वया दृष्टमदृष्टपूर्वम् ॥ वासो-
स्य वल्मीकमिदं महात्मन्महत्तरं नूनमितस्तु हेतोः ॥ ७ ॥
वल्मीकतोऽस्माच्च विनिर्गतोऽसौ भूयोऽपि तत्रैव विलीन आस्ते ॥
अतोऽत्र राजन्निशितः खनित्रैर्वल्मीकमेतत्प्रविदार्य सद्यः ॥८॥
विलोकयतां नूनमिहैव देवो वसिष्यतीति प्रतिभाति मेऽद्य ॥

क्षीराभिषेकसे वल्मीकमेंसे भगवान्का प्रगट होना

उस शवरने उस राजासे तत्त्वके साथ उसका कारण पूछे जानेपर उनसे कहा—'यह वाराह केवल वाराह ( सूअर ) ही नहीं है, बल्कि स्वयं भगवान् वाराहदेव हैं जिन्होंने पृथ्वीको धारण किया था। और यह जो अदृष्टपूर्व विमान आपने देखा वह अपूर्व तथा दिव्य विमान भी इनका ही है। हे महात्मा! यही विशाल वल्मीक इनका निश्चित निवासस्थान है। इसी कारण इसी वल्मीकसे ये निकलते हैं तथा पुनः इसीमें प्रवेश कर जाते हैं। इसलिये हे राजन्! यहां अशेष बेलदारों (खोदनेवालों) से इस वल्मीकको शीघ्र पूर्णरूपसे खोदवाकर भगवान्को आज देखिये; निश्चय भगवान् इसी जगह वास करते हैं, मुझको ऐसा ही भासित होता है ॥९॥

श्रुत्वा च तच्छावरवाक्यमेष वल्मीकमेतन्न बिभेद भीतः ॥९॥
अथाभ्यषिञ्चत्स तमेव भक्त्या गोपाहृतैः क्षीरघटैरनेकैः ॥ स
तत्र वाचां मनसामभूमिं ददर्श रत्नोज्ज्वलमद्भुतं च ॥ दिव्यं
विमानोत्तममाशु दृष्ट्वा हृष्टश्च मूर्ध्ना प्रणनाम भूयः ॥१०॥

उस शवरके वचनको सुनकर भयसे उस वल्मीकको खोदा तो नहीं, किन्तु अनन्त गोपालोंसे लाये हुए अनेकों क्षीरके घड़ोंसे भक्तिके साथ उसका अभिषेक किया। तब वह मन वचन सबसे परे, भूमिसे अलग अर्थात् निराधार अद्भुत उज्ज्वल रत्नोंसे जटित, परम दिव्य, अति उत्तम विमानको अति शीघ्र देखा और देखकर शिर नवाकर पुनः प्रणाम किया ॥१०॥

तन्मध्येऽसौ नीलजीमूतकल्पं पद्मावासं संश्रितत्राणहेतुम् ॥
श्रीवत्साङ्कं पुण्डरीकायताक्षं शङ्खं चक्रं धारयन्तं कराभ्याम् ॥११॥

दातारं तं पाणिना वै वराणामन्येनाङ्कं बिभ्रतं भ्राजमानम् ॥
पीतं वस्त्रं बिभ्रतं राजमानं कोटीरान्तःप्रोतरत्नोपशोभम् ॥१२॥
शान्ताकारं शाश्वतं श्रीनिवासं सेव्यं देवैर्वासुदेवं ददर्श ॥१३॥
स राजपुत्रो दृष्ट्वाऽथ देवेशं भक्तवत्सलम् ॥ प्रादुर्भूतं प्रणम्यैनं
तुष्टाव स्तुतिभिः स्वयम् ॥१४॥

उसीके मध्यमें नीले बादलोंके समान, कमलापति, सृष्टि तथा त्राणके कारण, श्रीवत्साङ्क, कमलनेत्र, हाथोंमें शंख—चक्र धारण किये, वरदानोंको देनेवाले एक हाथको उठाये तथा दूसरेमें नाक-धनुष धारण किये, पीताम्बरधारी, परम सुशोभित, करोड़ों-करोड़ों सुन्दर रत्नोंकी शोभासे सम्पन्न, श्यामल वर्ण, शाश्वत, देवताओंसे भी सेवित श्रीनिवास भगवान्‌को देखा। तब भक्तवत्सल उस भगवान्‌को प्रगट हुए देखकर उस राजाने विनयसे प्रणाम किया तथा स्तुतियोंसे उन्हें सन्तुष्ट किया ॥१४॥

अथ चक्रवर्तिकृत श्रीश्रीनिवासस्तुतिः

*राजपुत्र उवाच—*

ब्रह्मा रुद्रो वासवो ये च साध्या विश्वे देवा मरुतः सप्त पूर्वे ॥
एते चान्ये देवमुख्या नियोगं पश्यन्तस्ते विष्टपान् वर्तय-
न्ते ॥ १५ ॥ नाकारं वा रूपमत्यद्भुतं ते पश्यन्त्येते योगिमु-
ख्याः पुराणाः ॥ इत्थं भूतं मादृशानुग्रहार्थं प्रत्यक्षं ते रूपमे-
तद्बभूव ॥ १६॥ होतव्यं त्वं पावकान्तस्तु होत्रं होता च त्वं पाव-
कोऽपि त्वमेव ॥ उद्देशस्त्वं सिद्धिरस्य त्वमेव त्वत्तः किञ्चिन्ना-
न्यदत्रास्ति देव ॥ १७ ॥ सदैवैकस्त्वं परं ब्रह्म पूर्वं यस्मान्नान्यं
प्राहुरेतत्प्रपञ्चम् ॥ यत्सङ्कल्पात्प्राकृतः सर्व आदौ यच्चान्तःस्थं
शास्ति सर्वात्मनेमम् ॥ १८ ॥ न ब्रह्मासीत्पूर्वमीशो न चासीन्नेमे
व्याप्ते रोदसी वाप्यभूताम् ॥ एकस्त्वं वै जागरूकस्तु शेषे शेषे
तल्पे चारु सृष्ट्वा तदाऽपः ॥१९॥ न लोकस्त्वां वेद वेत्थ त्वमेनं

**नादिर्मध्यं विद्यते तेऽथवाऽन्तः ॥ सत्यं रूपं ते श्रुतिः कीर्तयन्ती ज्ञानाकारं यत्तदेतन्नमामि ॥ २० ॥**

## चक्रवर्तीकृत श्रीनिवास-स्तुति

राजपुत्र बोला—हे प्रभो ! ब्रह्मा, रुद्र, इन्द्र, सिद्ध, साध्य, विश्वेदेवा, उन्चासों मरुत इत्यादि तथा अन्यान्य देवमुख्य सभी आपकी आज्ञाकी प्रतीक्षा करते हुए ही स्वर्गमें रहते हैं। आपके आकार अथवा अत्यन्त अद्भुत स्वरूपको प्राचीन योगि-मुख्यगण भी नहीं देख सकते हैं। ऐसा होनेपर भी मुझ ऐसेपर अनुग्रह कर आपका प्रत्यक्ष रूप प्रगट हुआ। हे भगवन्! हवन करनेकी वस्तु, हवनको करनेवाले, हवनका उद्देश्य और उद्देश्यकी सिद्धि भी आप ही हैं। हे देव! आपसे दूसरा यहाँ और दूसरे देव नहीं हैं, आप ही वह पहलेसे रहते हुए अद्वितीय परब्रह्म हैं, यह संसार, जिससे अलग नहीं है ऐसा रहते हैं, जिसके संकल्पसे यह सारा प्राकृत प्रपंच फैला, जो इसके भीतर व्यापक होकर इसका सब प्रकार शासन करता है। हे भगवन्! पहले न ब्रह्मा थे, न रुद्र थे, न आकाश और न पृथ्वी ही थी, केवल एक आप ही सदा जागनेवाले हैं, सबके शेषमें शेषशय्यापर सोते और सर्वत्र जलकी सृष्टि करते हैं। आपको लोक नहीं जानते, किन्तु आप सभीको जानते हैं, आपका आदि, मध्य और अन्त नहीं है, वेदोंने आपको सत्यरूप प्रतिपादित किया है। उसी ज्ञानस्वरूप आपको मैं नमस्कार करता हूँ॥२०॥

**कालोऽसि त्वं लोकसंहारहेतुः स्रष्टा चादौ रक्षकश्च त्वमेव ॥ संहार्यस्त्वं सृज्यवस्तु त्वमेव प्राप्यो रक्ष्यं त्वं हि कर्ता च कर्म ॥२१॥ त्वं यज्ञो दीक्षितस्त्वं च स्वाहाऽसौ त्वं हुताशनः ॥ त्वया व्याप्तमिमं लोकमनुव्याप्ता रमा तव ॥ २२ ॥ सोऽहं त्वां शरणं प्राप्तः पद्मासखमजं विभुम् ॥ शेषिणं सर्वजगतां प्रणतार्तिहरं शुभम् ॥२३॥**

आप इन लोकोंके संहारके कारण काल हैं, आप ही इसके पहले स्रष्टा या उत्पत्तिकर्ता हैं और आप ही रक्षक हैं। फिर संहारके योग्य वस्तु भी आप ही हैं, सृज्य अथवा उत्पन्न करनेवाली वस्तु भी आप ही हैं। आप ही रक्षणके योग्य वस्तु हैं। आप ही कर्ता हैं और आप ही कर्म हैं। आप ही यज्ञ हैं और आप ही यजमान भी हैं। आप ही स्वाहा हैं, आप ही अग्नि भी हैं। यह सारा संसार आपसे व्याप्त है तथा आपके पीछे लक्ष्मी भी व्याप्त हैं। अतः मैं उन्हीं लक्ष्मीजीके सखा, स्वामी, समस्त जगत्के शेष, प्रणतजनोंके रक्षक, मंगलमूल भगवान्की शरण हूँ॥२३॥

अथ श्रीनिवासस्य चक्रवर्तिप्रार्थनया सर्वजनदृश्यत्वाभ्युपगमः

स्तुत्वेति भूपः प्रणतः पृथिव्यां तुष्टाव भूयः प्रणनाम भूयः ॥ अथास्य भक्तिं स विलोक्य देवो नृपात्मजं प्रीतमना जगाद ॥ २४ ॥ गुहासु बद्धः प्रतिशब्दजातैर्मुहुस्तिरस्कृत्य पयोधिघोषम् ॥

श्रीनिवासकी सबके सम्मुख प्रकट होनेकी स्वीकृति

इस राजाने इस प्रकार परमात्माकी स्तुति की और बारम्बार पृथ्वीपर साष्टाङ्ग प्रणाम करने लगा। फिर देवदेवने इसकी भक्ति देखकर प्रसन्नचित्त हो गुफाओंमें बद्ध हुई, अपने वचनकी प्रतिध्वनिसे क्षणकालतक तो समुद्र निनादको भी नीचा दिखलाते हुए राजपुत्रसे कहा ॥२४॥

*श्रीभगवानुवाच—*

प्रीतोऽस्मि राजेन्द्र परं तवाहं भक्त्याऽनया चान्यसुदुर्लभं च ॥२५॥ वरं वृणीष्वाद्य यदिच्छसि त्वं दास्यामि सर्वं तव मा विषीदः ॥

श्रीभगवान् बोले—हे राजेन्द्र! तुम्हारी इस दुर्लभ अनन्य भक्तिसे परम प्रसन्न हूं। तुम जो इच्छा करो वही वर मांगो, आज मैं तुमको वह सभी कुछ दूंगा, तुम विषाद न करो ॥२५॥

*राजपुत्र उवाच—*

यत्तद्रूपं दुर्लभं योगिवर्यै रम्यं भूयादीदृशं सर्वदृश्यम् ॥२६॥ अत्रैव त्वं सर्वदा वासमीयाः सर्वेषां वै मानवानां हिताय ॥ ओमित्युक्त्वाऽथापरं प्राह वाक्यं मद्भक्तस्त्वं नास्ति तुल्यस्त्वयाऽन्यः ॥ २७ ॥ सन्तुष्टोऽहं मत्सखित्वं प्रदास्ये वेत्थ त्वं मां सुहृदं भक्तवश्यम् ॥ इत्यूचिवान्माधवो राजपुत्रं भूयः प्राह स्मेरवक्त्रारविन्दः ॥ २८ ॥ सेवां राजन्नन्वहं मे त्रिसन्ध्यं कर्तुं भूयः शासनान्मेऽर्हसि त्वम् ॥ एतच्छ्रुत्वा राजपुत्रः स धीमान्

सेवां नित्यं नो जहौ प्रीतचित्तः ॥ सेवां कुर्वन् वेङ्कटेशस्य राजा तस्मिन् वासं पत्तने स्म प्रयाति ॥ २९ ॥ सेवाकालेषु तस्यायँ राजा वै भक्तवत्सलः ॥ अर्चाभावमतिक्रम्य हितार्थानप्युपादिशत् ॥३०॥

राजपुत्र बोला—आपका जो यह परम रम्य तथा दुर्लभ और योगियोंसे अलभ्य रूप है वह सदा इसी प्रकार सब लोगोंको दृश्य होता रहे और आप सभी मनुष्योंके हितके लिये सदा यहां ही निवास करें। "ऐसा ही हो" यह कहकर पुनः भगवान् बोले—"तुम मेरे भक्त हो, तुम्हारे समान दूसरा कोई नहीं है। मैं तुमसे सन्तुष्ट हूं, अस्तु, मैं अपना सरित्व प्रदान करता हूं। तुम भक्तोंके वशीभूत मुझको सुहृद जानो"। इस प्रकार माधव भगवान् उस राजपुत्रसे बोलकर पुनः हास्यवदन कमलमुख होकर कहने लगे। हे राजन्! तुम मेरी सेवा नित्य त्रिसन्ध्य मेरी आज्ञासे पुनः करना। यह सुनकर वह बुद्धिमान राजपुत्र प्रीतिपूर्ण मनसे नित्य सेवा नहीं छोड़ता था अर्थात् नित्य सेवा करता था। श्रीवेङ्कटेश भगवान्की सेवा करता हुआ वह राजा उसी राजनगरीमें निवास करता हुआ रहने लगा। भक्तवत्सल भगवान् अपनी अर्चावतार (मूर्तिरूप) को अतिक्रमण करके अर्थात् साक्षात् रूपसे उस राजाको सेवाकालोंमें उसके हितकी बातोंका उपदेश दिया करते थे ॥३०॥

अथ श्रीश्रीनिवासमहोत्सवसेवार्थं ब्रह्मरुद्राद्यागमनम्

स कदाचिद् ध्वजारोहमहोत्सवमतन्द्रितः ॥ अकारयच्च धर्मेण कन्यां याति दिवाकरे ॥३१॥ ध्वजं निर्माय विधिवद्गरुडाधिष्ठितं शुभम् ॥ आरोपयत्समभ्यर्च्य ध्वजस्तम्भमनुत्तमम् ॥३२॥ ब्रह्माणमीशं सगणं शतक्रतुं ये चैवान्ये सन्ति दिक्पालमुख्याः ॥ तानञ्जसा मन्त्रवर्यैर्द्विजाश्च सेवार्थं वै स्वैरमाहूतवन्तः ॥३३॥

श्रीनिवासकी उत्सव-सेवाके लिये ब्रह्मादिका आना

किसी समय सूर्यके कन्याराशिपर चले जानेपर उसने निरालस भावसे तथा धर्मके साथ ध्वजारोपण महोत्सव करवाया। श्रीगरुड़जीसे अधिष्ठित शुभ ध्वजाको विधिवत् बनवाकर उत्तम ध्वजस्तम्भकी पूजा सम्पन्न कर ध्वजाको आरोपित किया। ब्रह्मा, गणोंके साथ-साथ शंकर, इन्द्र तथा अन्यान्य दिक्पालमुख्योंको श्रेष्ठब्राह्मणोंने वेदमन्त्रोंसे सेवाके लिये स्वयं आवाहन किया ॥३३॥

ततो हंसं समारुह्य प्राञ्जलिः कमलासनः ॥ आगतो मुनि-

भिः सार्धं काङ्क्षन् सेवां रमापतेः ॥३४॥ शङ्करोऽपि वृषारूढः सेवायै गिरिजान्वितः ॥ प्रमथाद्यैः पारिषदैरन्वितः प्रययौ मुदा ॥ ३५ ॥ इन्द्रोऽपि सान्द्रसिन्दूरप्रस्फुरत्कुम्भमण्डलम् ॥ आरुह्यैरावतं नागं द्रष्टुं यात्रोत्सवं ययौ ॥ ३६ ॥ अन्ये चापि दिशापालाः स्वं स्वं वाहनमास्थिताः ॥ शेषाचलतटीदेशमगमन्नादृतोत्सवाः ॥ ३७ ॥ नारदोऽपि हरिनामसहस्रं कलयन्विमृशन्महतीं च मुहुः ॥ आययौ हृदि च भास्वरभूतं कलयन्विघृणन्निगमादिमपि ॥३८॥

तत्पश्चात् हंसपर सवार हो अञ्जलिबद्ध होकर ब्रह्माजी मुनियोंके साथ श्रीरमापतिकी सेवाकी इच्छासे आये। श्रीशंकर भगवान् अपने नन्दीपर सवार होकर गिरिजादेवी तथा प्रमथगणों और अन्यान्य पारिषदोंके साथ आनन्दसे सेवार्थ आये। इन्द्र महाराज गहरे सिन्दूरसे चमकते हुए कुम्भमण्डलयुक्त अपने ऐरावत हाथीपर सवार होकर यात्रोत्सव देखनेके लिये आये। और भी अन्य सभी दिग्पालगण अपने अपने वाहनोंपर चढ़कर उत्सव आनन्दमें आदरके साथ शेषाचल प्रान्तमें आये। नारदजी भी हरिनामका हजारा रटते हुए तथा अपनी महती वीणाको बार बार बजाते हुए, हृदयमें प्रकाशभूत भगवन्नाम तथा निगमादिका संकलन करते हुए आ गये ॥३८॥

अथाययुर्द्रष्टुकामा महान्तं क्षोणीपालाः प्राणिनः सर्व एव ॥ पुत्रं नेत्रं प्रार्थयानाश्च भूयो नानादिग्भ्यो नम्रशीर्षास्तदानीम् ॥ ३९ ॥ तस्य चोत्सवयात्रायां शेषाचलपतेस्तदा ॥ वेङ्कटेशं प्रार्थयन्तो नानादिग्भ्यः समागताः ॥४०॥ किङ्कराश्चैव गायन्ति कीर्तिं तस्य महात्मनः ॥ इत्थं प्रववृधे तस्य दिव्यः शौरेर्महोत्सवः ॥४१॥ अदृष्टपूर्वः सर्वेषां विस्मयं व्यतनोद् भृशम् ॥

सभी राजवर्ग तथा सभी प्राणी नम्रमस्तक हो उस महोत्सवको देखनेके लिये तथा पुत्र, नेत्र आदिकी याचना करते हुए नाना देशदेशान्तरोंसे आये। उस उत्सवयात्रामें उस समय शेषाचलपति श्रीवेङ्कटेश भगवान्की प्रार्थना करते हुए नाना देशोंसे लोग आये थे। उस महाप्रभुकी कीर्तिके अनेकों सेवक गान करते थे। इस प्रकार उनके दिव्य और महायज्ञ महोत्सवने विस्तार वा प्रसिद्धि लाभ की। उस अदृष्टपर्व सौर महोत्सवने सभीको अत्यन्त आश्चर्यमें डाल दिया ॥४२॥

पङ्गवो जङ्घना आसन् काणा वै दूरदर्शनाः ॥४२॥ बभूवुर्वाग्मिनो मूका जनास्तस्मिन् महोत्सवे ॥ तदा प्रभृति यस्मिन्वै वर्षे वर्षे महोत्सवे ॥ ४३ ॥ नमस्यति हरिं तत्र स बुद्धिं यास्यति ध्रुवम् ॥ तस्य चोत्सवयात्रायां शेषाचलपतेस्तदा ॥४४॥

उस महोत्सवमें पंगुलोग अच्छे पैरवाले तथा, काने लोग दूर-दूर तक देखनेवाले, और गूंगे लोग अत्यन्त वाचाल हो गये और फिर उस समयसे उस शेषाचलके प्रतिवर्ष महोत्सवमें भगवान्‌का नमस्कार जो जो करते हैं, वे निश्चय ही बढ़ती पाते हैं।

### अथ श्रीश्रीनिवासस्य रथोत्सवावभृथोत्सवप्रकारः

पयोदा विरजीचक्रुः प्रतोलीर्वासवाज्ञया ॥ सौवर्णं कल्पयामास रथं रत्नपरिष्कृतम् ॥ ४५ ॥ तस्मिन्रथवरे रम्ये श्रीपतिरष्टमे दिने ॥ अथाष्टसु व्यतीतेषु दिवसेषु महोत्सवे ॥४६॥ श्रवणे विष्णुनक्षत्रे मुहूर्ते तु शुभे तदा ॥ चक्रे भगवताऽऽज्ञप्त स्वामिपुष्करिणीजले ॥ ४७ ॥ चकारावभृथस्नानं मखेऽस्मिंश्च समापिते ॥ अथास्यां विधिवद्रात्रौ ध्वजस्याप्यवरोहणम् ॥ ४८ ॥ चक्रुर्विप्रवरास्तत्र महानैवेद्यमेव च ॥ अथान्यस्मिन्दिने देवमानर्च विधिवत्तदा ॥४९॥ प्रसूनैर्विविधैश्चापि सुगन्धैः सुमनोहरैः ॥ हरिर्विसर्जयामास देवान् सेवार्थमागतान् ॥ ५० ॥ ब्रह्मरुद्रपुरोगांश्च प्रणम्रशिरसस्तथा ॥५१॥

### श्रीनिवासके रथोत्सव आदिके विधान

इन्द्रकी आज्ञासे मेघने सारे रास्तेको धूलिरहित कर दिया। रत्नजटित सोनेका रथ बनाया गया। उस रथपर अष्टम दिन भगवान् शोभित हुए। फिर महोत्सवके आठ दिन व्यतीत होनेपर शुभ श्रीविष्णुके श्रवणके शुभनक्षत्रके दिन श्रीभगवान्‌के आज्ञानुसार स्वामिपुष्करिणीके जलमें इस यज्ञसमाप्तिके उपलक्षमें अवभृथ स्नान किया। फिर उसी रात्रिको विधिवत् ध्वजारोहण भी किया और विप्रवरोंने भगवान्‌का महानैवेद्य सम्पादन किया। फिर दूसरे दिन भगवान्‌का विधिवत पूजन हुआ। नाना प्रकारके मनोहर तथा सुगन्धित फूलोंसे भगवान्‌की सेवा करनेके लिये आये हुए नम्रमस्तक ब्रह्मा, रुद्र प्रभृति देवताओंको विदा किया ॥५१॥

इत्थं स राजा वृषशैलभर्तुर्महोत्सवं दिव्यमिमं समाप्य ॥
हृष्टः कृतार्थं बहु मन्यमानो ह्यात्मानमावासमियाय भूयः ॥५२॥

इति श्रीब्रह्माण्डपुराणे तीर्थखण्डे भृगुनारदसंवादे श्रीवेङ्कटाचलमाहात्म्ये
श्रीश्रीनिवासाविर्भावादिवर्णनं नाम नवमोऽध्यायः ॥ ९ ॥

इस प्रकार वह राजा वृषभाचलके ( वेङ्कटाचलके ) भगवान्का दिव्य महोत्सव समाप्तकर बहुत प्रसन्न तथा कृतार्थ होकर अपनेको धन्य मानता हुआ, अपने निवासस्थानको चला गया ॥५२॥

इति नवमोऽध्यायः ॥९॥

## दशमोऽध्यायः ॥१०॥

कृष्ण विप्रका आगमन, चक्रवर्तिके पास ॥
सुत-वनिता न्यस्तीकरन, कर काशीकी आस ॥१॥
राज-चूक तिय-सुतमरन, द्विज-याचन वनितार्थ ॥
प्रभु कृपया असनान सर, पुनि जीवन महिमार्थ ॥२॥

अथ चक्रवर्तिसमीपागतकृष्णशर्माख्यविप्रोदन्तः

*नारद उवाच—*

उत्सवान्ते द्विजः कश्चिदाजगाम तदन्तिकम् ॥ भार्यया सहितश्चैवं तदैवाचिरसूतया ॥१॥ द्विजं तमागतं राजा पाद्यार्घ्यासनवन्दनैः ॥ अभिपूज्य यथान्यायं दृष्ट्वा कुशलमब्रवीत् ॥२॥

## कृष्णशर्मा नामक ब्राह्मणकी कथा

श्रीनारदजी बोले—उत्सवके अन्तमें कोई ब्राह्मण उनके (राजा चक्रवर्तीके) निकट बहुत थोड़े समय पहले प्रसव की हुई अपनी प्रसूता स्त्रीके साथ आया। राजाने उस आये हुए ब्राह्मणका यथायोग्य पाद्य, अर्घ्य, आसन, चन्दन आदि सबसे यथाविधि यथान्याय पूजाकर कुशलादि पूछी ॥२॥

*राजोवाच—*

**कस्ते देशो द्विजश्रेष्ठ किमर्थमित आगतः ॥ वदस्व किमहं वा ते करवाणि निदेशकृत् ॥३॥**

*राजा बोले—हे ब्राह्मण! आप यहां किस लिये आये हैं, आपका देश कौन है? कृपा कर कहिये कि आपकी कौनसी आज्ञाका पालन करूं ॥३॥*

*विप्र उवाच—*

**दक्षिणाम्भोनिधेस्तीरे श्रुता चन्द्रपुरी शुभा ॥ तस्यां वसति धर्मज्ञः कूर्मो नाम द्विजोत्तमः ॥ ४ ॥ तस्याहं वै सुतो राजन् कृष्णशर्मेति विश्रुतः ॥ भार्या सुधर्मिणी नाम्ना ममेयं पुत्रिणी शुभा ॥ ५ ॥ काशीक्षेत्रमहं द्रष्टुं प्रयास्ये मुक्तिसाधनम् ॥ अस्याः शिशुस्त्रिमासोऽयं दुर्बला चैव भामिनी ॥ ६ ॥ प्रवासायोग्यतामस्या दुर्बलायाश्च मन्त्रयन् ॥ त्वत्सकाशमहं राजन् सम्प्राप्तस्त्वं हि रक्षिता ॥७॥ विलोक्य काशीमायास्ये सेयं तावन्मनस्विनी ॥ समीपे तव राजेन्द्र वासं यात्विति मे मतिः ॥८॥**

विप्रने कहा—दक्षिण सागरके तीरपर चन्द्रपुरी नामकी शुभ नगरी सुनी होगी। उसीमें कूर्म नामक धार्मिक द्विजश्रेष्ठ निवास करते हैं। कृष्ण शर्मा नामसे प्रसिद्ध मैं उन्हींका पुत्र हूं। सुधर्मिणी नामक यह पुत्रवती मेरी शुभ भार्या है। मुक्तिके साधनस्थान श्रीकाशीक्षेत्रको मैं देखने जाऊंगा। इसका यह बालक तीन ही मासका है तथा यह स्त्री भी अत्यन्त दुर्बल है। विदेशयात्रामें इस दुर्बलाको अयोग्य समझकर, हे राजन्! मैं आपके निकट आया हूं, अब आपही रक्षक हैं। काशीको देखकर जबतक मैं लौटूं तबतक यह मनस्विनी मेरी स्त्री, हे राजेन्द्र! आपके ही निकट रहे, यही मेरी इच्छा है ॥८॥

**ओमित्युक्तोऽथ भूपेन त्यक्त्वा भार्यां सुतान्विताम् ॥ आ-**

मन्त्र्य च महीपालं ययौ काशीं प्रति द्विजः ॥ ९ ॥ राजा च तस्या वासार्थं गृहमेकं प्रकल्प्य सः ॥ धान्यं षण्मासपर्याप्तं दापयामास च स्वयम् ॥ १० ॥ न निर्गच्छ गृहाच्चेति शशास द्विजभामिनीम् ॥ स्वव्यापारे स्थितो राजा नैव सस्मार तां ततः ॥११॥ कृष्णशर्मा ततो विप्रो गत्वा प्रस्थानमुत्तमम् ॥ पुनरागत्य भूपालमिदं वचनमब्रवीत् ॥१२॥

राजाके "अच्छा" कहनेपर वह ब्राह्मण अपनी उस पुत्रवती भार्य्याको वहीं रखकर तथा राजासे अनुमति लेकर काशीके प्रति चला गया। राजाने उसके निवासयोग्य एक घर बनवाकर छ मासतकके लिये पर्य्याप्त अन्नादि धन-द्रव्य सब स्वयं जाकर दिला दिया। पुनः उस ब्राह्मणरमणीको, घरसे न निकलना, ऐसी आज्ञा दी। और फिर राजाने अपने कामकाजमें संलग्न रहनेसे उसका ख्याल न किया। तत्पश्चात् उस उत्तम स्थानको जाकर पुनः कृष्ण शर्म्मा विप्र लौट आकर उस राजासे यह वचन बोला ॥१२॥

*कृष्णशर्मोवाच—*

आगतः कृष्णशर्माऽऽह गङ्गां दृष्ट्वा सुशोभनाम् ॥ न्यस्ता तवान्तिके भार्या दीयतां विरहातुरा ॥१३॥ इत्युक्तो भूपतिस्तेन चिन्तयामास दुःखितः ॥ अहो मया प्रमत्तेन विषयासक्तचेतसा ॥१४॥ न चिन्तिता महाभागा भामिनी तु द्विजन्मनः ॥ धान्यं षण्मासपर्याप्तं दत्तमस्यै पुरा मया ॥ १५ ॥ स कालस्तु व्यतीतोऽद्य किं करोतु द्विजन्मजा ॥ गृहान्निर्गमनं चास्याः प्रतिषिद्धं मया तदा ॥१६॥ इत्थं सञ्चिन्त्य राजाऽसौ प्रेषयामास पूरुषम् ॥ द्रष्टुं स्वनिर्मिते गेहे सपुत्रां द्विजभामिनीम् ॥१७॥

कृष्ण शर्म्मा बोले—अति सुन्दर गङ्गाजीका दर्शन कर मैं कृष्ण शर्म्मा ब्राह्मण लौटकर आ गया। अतः आपके निकट आपके जिम्मे रखी हुई मेरी विरहव्याकुला स्त्रीको अब लौटा दीजिये। उसके ऐसा कहनेपर वह राजा दुःखित हो अपने मनमें चिन्ता करने लगा। हाय! विषयोंमें आसक्त मुझ प्रमत्तसे वह महाभागा ब्राह्मणरमणी खबर भी नहीं ली गयी। मुझसे पहले छ मास तकके लिये ही उसको धान्यादि दिया गया था। वह समय तो अब

बीत गया। वह ब्राह्मणी क्या करती होगी ? मैंने उसको घरसे निकलनेकी भी मनाई कर दी थी। उस राजाने इस प्रकार सोचकर किसी पुरुषको अपने बनाये हुए घरमें पुत्रवती ब्राह्मणरमणीको देखनेके लिये भेजा ॥१७॥

स विलोक्यागतस्तूर्णं राजानं तं व्यजिज्ञपत् ॥ शिशुना सह भार्याऽस्य कालधर्ममुपागता ॥१८॥ शरीरे चानयोः शुष्के वर्तेते चिरकालतः ॥ इति तस्य वचः श्रुत्वा स राजा भृशदुःखितः ॥१९॥ द्विजमाहूय संभ्रान्तमिदं वचनमब्रवीत् ॥२०॥

वह देखकर चुपचाप लौट आया, और उस राजाको विज्ञापित किया। इसकी स्त्रीने अपने बालकके साथ कालधर्मको ( मृत्यु ) प्राप्त कर लिया है और उन दोनोंका सूखा हुआ शरीर चिरकालसे वहीं पड़ा है। उसके इस वचनको सुनकर वह राजा अत्यन्त दुःखित हो उस संभ्रान्त ब्राह्मणको बुलाकर यह वचन बोला ॥२०॥

*राजोवाच—*

तव भार्या द्विजश्रेष्ठ मामनुज्ञाप्य भामिनी ॥ देवदेवस्य सेवार्थमिदानीमेव निर्गता ॥ श्व आनेष्यामि भद्रं ते गतां सेवार्थमञ्जसा ॥ २१ ॥ दिनमेकं च विश्रम्य ततो यास्यसि भार्यया ॥

राजा बोले—हे द्विजश्रेष्ठ ! आपकी भार्य्या मुझसे कहकर देवाधिदेवकी सेवा करनेके लिये अभी निकल कर गयी है। हे भद्र ! सेवार्थ गयी हुई उसको आपके पास कल ला दूंगा। एक दिन विश्राम कर फिर अपनी भार्याके साथ आप जावेंगे ।'२२॥

इत्युक्त्वाऽथ द्विजश्रेष्ठं नृपः शङ्कितमानसः ॥२२॥ गृहान्निर्गत्य शेषाद्रिमारुरोह क्षणान्तरात् ॥ देवस्यावसरं वीक्ष्य प्राञ्जलिः प्रयतः स्थितः ॥२३॥ स मुहूर्तं विनिःश्वस्य सखेदं च व्यजिज्ञपत् ॥ स्वामिन् विज्ञापनामद्य शृणुष्वैकमना मम ॥२४॥ सोऽहं हि भवता रक्ष्यश्शरणं गत इत्यपि ॥ अप्रबुद्धेन मत्तेन मया वै दुष्कृतं कृतम् ॥२५॥ न्यासीकृतां महाभागां द्विजवर्येण धीमता ॥ न व्यचारयमासक्तो विषयेषु यशस्विनीम् ॥२६ ॥ इदानीमागते

विप्रे पूर्ववृत्तमनुस्मरन् ॥ किमेतदिति भीतोऽहं तदुदन्तं विचारयन् ॥२७॥

ब्राह्मणसे यह कहकर वह राजा शंकित चित्तसे घरसे निकलकर क्षणभरमें ही शेषाद्रिपर चढ़ गया। अवसर देखकर भगवान्‌के पास हाथ जोड़कर खड़ा हो गया। पुनः वह वहां कुछ समयतक श्वास लेकर दुःखके साथ बोला—हे स्वामिन्! आज मुझको कुछ प्रार्थना करनी है, आप उसे ध्यानसे सुनें। आपका वही रक्षा योग्य मैं आपके ही शरणागत हुआ हूं। अनजानसे प्रमादमें मुझसे बड़ा भारी अपराध हो गया कि परम बुद्धिमान द्विजश्रेष्ठसे जिम्मा की हुई महाभागा यशस्विनीका मैंने विषयोंमें आसक्त रहकर विचार नहीं किया। अभी उस ब्राह्मणके लौट आनेपर उसके पूर्ववृत्तान्तका स्मरण कर तथा उसके चरित्रपर विचार कर अत्यन्त भयभीत हो गया हूं कि यह क्या हो गया ॥२७॥

श्रुत्वा मृतां निराहारां सपुत्रां शुष्कदेहिनीम् ॥ परं निर्विण्णचित्तोऽहमवदं द्विजमग्रतः ॥२८॥ गता सा देवसेवार्थं श्व आनेष्यामि तां प्रियाम् ॥ सपुत्रां तव भार्यां वै मा भैषीर्द्विजसत्तम ॥ २९ ॥ भविष्यति कथं चेति भृशं चिन्तामुपागतः ॥ त्वामेव शरणं देव प्रणतार्तिहरं गतः ॥३०॥ यथा पापं न विन्देयं चरितार्थो यथा द्विजः ॥ देवदेव तथा कर्तुं शक्तो नान्यस्त्वया विना ॥३१॥ त्राहि मां शरणं प्राप्तमितस्त्वं दुःखसागरात् ॥ गतिस्त्वमेव चास्माकं नान्योस्ति जगतीपते ॥ ३२ ॥ इति प्रणम्य देवेशं स्थितस्तूष्णीं नृपोत्तमः ॥ सान्त्वयन् मधुरैर्वाक्यैरुवाच मधुसूदनः ॥३३॥

आहारके बिना पुत्रके साथ मरी तथा सूखी हुई शरीरवालीकी दशा सुनकर अत्यन्त दुःखित चित्तसे उस ब्राह्मणके आगे मैंने कह दिया है कि हे द्विजश्रेष्ठ! आप भय न करें, आपकी वह स्त्री देवसेवार्थ गयी है। मैं आपकी उस प्रिय भार्याको सपुत्र कल ला दूंगा। यह अति शीघ्र किस प्रकार होगा, इसी चिन्तामें पड़ा हूं। हे प्रणतों, आरतोंके दुःखका नाश करनेवाले! मैं आपके ही शरणागत हूं। जिस प्रकार मुझे पाप न होवे, तथा जिस प्रकार यह ब्राह्मण भी चरितार्थ हो जाय, वैसा करनेमें आपके विना दूसरा कोई समर्थ नहीं है। हे देवादिदेव! मुझ आपके शरणोंमें आये हुएकी इस दुःखसागरसे रक्षा करो। हे संसारके स्वामी! आपके अतिरिक्त मेरी और कोई दूसरी गति नहीं है। केवल आप ही हमारी गति हैं। इस प्रकार भगवान्‌को प्रणाम कर वह राजश्रेष्ठ चुप खड़ा हो गया। तब मधुर वचनोंसे सांत्वना करते हुए मधुसूदन भगवान् बोले ॥३३॥

*श्रीभगवानुवाच—*

मा ते व्यथा भूद्राजर्षे मा भैषीस्त्वं कदाचन ॥ तवोपायमहं वक्ष्ये द्विजभार्याप्रजीवने ॥ ३४ ॥ विप्रः काशीं प्रयास्यन्मां दृष्ट्वाऽनुज्ञाप्य वै गतः ॥ सुधर्मिणी च मद्भक्ता साध्वी मद्गतमानसा ॥३५॥ ततस्तदीयाः प्राणा वै यमाय किल नार्पिताः ॥ शरीरे मम राजेन्द्र स्थापितास्तु प्रियासवः ॥३६॥

श्रीभगवान्‌जी बोले—हे राजर्षि ! तुमको कोई व्यथा न हो । तुम कभी भी भय न करो । ब्राह्मणपत्निके पुनर्जीवनका उपाय मैं तुमको बतलाता हूं । वह ब्राह्मण काशी जाते समय मेरा दर्शन कर तथा अनुज्ञा लेकर ही गया था । मुझमें ही लय हुए चित्तवाली परम साध्वी वह सुधर्मिणी ब्राह्मणी मेरी परम भक्त है । इसीसे उसके प्राणोंको यमराजको अर्पण नहीं किया गया । उसके प्रिय प्राण मेरे ही शरीरमें स्थापित हैं ॥३६॥

### अथ अस्थिकूटाभिधसरोवरमाहात्म्यम्

इत्युक्त्वाऽऽश्वास्य भूपालं विष्वक्सेनमभाषत ॥ प्राञ्जलिं विनयानम्रं वेत्रपाणिं पुरः स्थितम् ॥३७॥ विष्वक्सेन महाभाग मदीयाज्ञामिमां शृणु ॥ इत ईशानदिग्भागे त्वस्थिकूटाभिधं शुभम् ॥ ३८ ॥ तीर्थमस्ति ततस्तोयं समाहृत्य सुपावनम् ॥ सुधर्मिण्याः सुतस्यापि शरीरमभिषेचय ॥३९॥ सपुत्रा सा प्रसुप्तेव तत उत्थास्यति ध्रुवम् ॥

### अस्थि सरोवर-माहात्म्य

भूपालको इस प्रकार कहकर आश्वासन देकर, अञ्जलि बांधे हुए, विनयसे, नम्र हाथोंमें दण्ड लेकर सामने खड़े हुए अपने विष्वक्सेनसे बोले—"हे महाभाग ! हे विष्वक्सेन !! मेरी इस आज्ञाको सुनो । यहांसे ईशान भूभागमें अस्थिकूट नामक अतिमङ्गलमय तीर्थ है । उसके परम पवित्र जलको लाकर सुधर्मिणी तथा उसके पुत्रके भी शरीरका अभिषेचन ( स्नान ) कराओ । वह पुत्रके साथ-साथ सोकर जागनेके समान अवश्य उठ जायगी ॥ ४० ॥

विष्वक्सेनस्तथेत्युक्त्वा तोयमाहृत्य तीर्थतः ॥ ४० ॥ सुध-

र्मिण्याः शरीरं तदभ्यषिश्वत्सुतस्य च ॥ उत्थिता ससुता साध्वी द्विजभार्या सुधर्मिणी ॥४१॥

"ऐसा करेंगे" यह कहकर विष्वक्सेनने उस तीर्थसे जल लाकर उस सुधर्मिणी तथा उसके पुत्रके शरीरका अभिसिञ्चन किया। तब वह साध्वी ब्राह्मणपत्नी अपने पुत्रके साथ उठ बैठी ॥ ४१ ॥

अथ राजानमाहूय प्रोवाच मधुसूदनः ॥ दृष्टो गिरिवरस्यायं महिमा भवताऽनघ ॥ ४२ ॥ प्रभावमचलस्यास्य सनकाद्याश्च योगिनः॥ ब्रह्माद्याः सकला देवा न जानन्ति यथा मम ॥ ४३ ॥ यद्यदिच्छति वै जन्तुर्मनसाऽभीप्सितं नृप ॥ तथा सिध्यति तत्सर्वं गिरेरस्य प्रभावतः ॥४४॥

फिर राजाको बुलाकर मधुसूदन भगवान् बोले—हे निष्पाप! क्या तुमने इस पर्वतश्रेष्ठकी महिमा देखी? इस पर्वतका प्रभाव सनकादि योगिगण, तथा ब्रह्मा आदि सब देवता भी कुछ नहीं जानते, ठीक जैसा कि मेरा भी नहीं जानते। जीवधारी जो जो भी अभीष्ट अपने मनमें रखता है, ठीक वही वही सब अभीष्ट उसको इस गिरिवरके प्रभावसे सिद्ध होता है ॥ ४४ ॥

अथ विप्रं समाहूय भार्यां चास्य सुधर्मिणीम् ॥ द्विजभार्यामथापृच्छद्वद ते किमभीप्सितम् ॥ ४५ ॥ सा तथोक्ता तु देवेन वरयामास माधवम् ॥ त्वद्भक्तिश्च दृढा चास्तु मम देवेश नित्यशः ॥४६॥ एवं सम्प्रार्थितो देवो ददौ तस्या अभीप्सितम्॥ ततो विधिशिवाद्याश्च सनकाद्याश्च योगिनः ॥ ४७ ॥ वृषाद्रिमगमन् सर्वे द्रष्टुकामास्तदद्भुतम् ॥ कृष्णशर्मा च सन्तुष्टो विस्मितश्च महामुने ॥४८॥ प्रणम्य स्तोत्रयामास देवदेवं रमापतिम् ॥

तत्पश्चात् उस ब्राह्मण तथा उसकी भार्य्या सुधर्मिणीको बुलाकर ब्राह्मणपत्निसे पूछा, "बोलो, तुम्हारी क्या अभिलाषा है?" भगवान्के इस प्रकार पूछनेपर उसने माधव भगवान्से वरदान मांगा—हे देवेश! मुझमें नित्य ही आपकी भक्ति दृढ़ होती जाय। इस प्रकार प्रार्थित होनेपर भगवान्ने उसका वही अभीष्ट पूरण किया। फिर ब्रह्माजी, शिवजी आदि तथा सनकादि योगीगण उस अद्भुत दृश्यको देखनेकी कामनासे वृषभाचलपर गये। हे महामुने! वहां जाकर वह कृष्ण शर्म्मा भी परम सन्तुष्ट तथा अत्यन्त आश्चर्यित हुआ और रमापति भगवान्को प्रणाम कर स्तोत्रपाठ करने लगा ॥४८॥

देवदेवो नृपं प्राह न चास्य सदृशो भुवि ॥ ४९ ॥ विप्रस्य मयि भक्तस्य तथैव नियतात्मनः ॥ असौ जन्मान्तरे राजंस्त्रय्यन्तार्थप्रवर्तकः ॥ ५० ॥ भविष्यति तदन्ते च मत्सायुज्यमवाप्स्यति ॥ राजा च विप्रमाहूय सभार्यं पुरुषर्षभम् ॥५१॥ स्वावासं प्रेषयामास प्रहृष्टेनान्तरात्मना ॥५२॥

भगवान्ने उस राजासे कहा—अत्यन्त नियतात्मा इस मेरे भक्त ब्राह्मणके समान संसारमें कोई नहीं है। हे राजन्! यही जन्मान्तरमें तीनों वेदोंके अर्थोंका प्रवर्तक होगा। और उसके बाद यह मेरा सायुज्य पद प्राप्त करेगा। फिर उस राजाने उस पुरुषश्रेष्ठ ब्राह्मणको भार्याके साथ बुलाकर अपने चित्तमें अत्यन्त सन्तुष्ट तथा आनन्दित हो अपने घर भेजवा दिया ॥५२॥

तदनु च नृपतिर्वृषाचलं तं स्वयमधिगम्य दिने दिने महात्मा ॥ विरचितदृढभक्तिरस्य कुर्वन्विविधमनोरथकिङ्करत्वमासीत् ॥५३॥ कथितं भाविवृत्तान्तं देवदेवस्य शार्ङ्गिणः ॥ अर्चितश्च कलौ भक्तैरद्भुतानि प्रदर्शयन् ॥५४॥ विहरन् रमया चैव साकं तत्र महीधरे ॥ वसिष्यति च हृष्टात्मा सुरसिद्धनिषेवितः ॥ ५५ ॥ इत्येवं भृगवे तस्मै कथयामास नारदः ॥ वेङ्कटाचलमाहात्म्यं परं व्यासेन कीर्तितम् ॥५६॥

इति श्रीब्रह्माण्डपुराणे तीर्थखण्डे भृगुनारदसंवादे श्रीवेङ्कटाचलमाहात्म्ये अस्थिकूटतीर्थमाहात्म्यवर्णनं नाम दशमोऽध्यायः ॥ १० ॥

उसके बाद वह महात्मा राजा प्रति दिन अपने आप उस वृषभाचलपर चढ़कर उनका पूर्ण दृढ़ भक्तिके साथ विविध मनोरथोंके साथ किंकरत्व ( दासत्व ) स्वीकार कर रहने लगा। शार्ङ्गधारी देवादिदेव भगवान्का भावी वृत्तान्त, तथा कलियुगमें होनेवाली पूजा और भक्तोंको अद्भुत-अद्भुत दृश्य दिखलाते हुए सब कुछ कहा गया। रमादेवीके साथ विहार करते हुए परम प्रसन्न चित्तसे देवता, सिद्ध, मुनियोंसे सेवित होकर उसी पर्वतपर निवास करेंगे, इस प्रकार भृगुऋषिसे नारदजीने कथा कही, और पीछे वही वेङ्कटाचल माहात्म्य व्यासजीसे वर्णित किया गया।

इति दशमोऽध्यायः ॥ १० ॥

# एकादशोऽध्यायः ॥११॥

करना तप सिंहादका, ब्रह्माका वरदान ॥
पीड़ित सुर वेंकट-गमन, पुनि आज्ञा भगवान ॥१॥
चक्रवर्ति उपगमन तिन, ताहि गमन प्रभुपास ॥
असुर-मथन आयुध मिलन, वेष किरात सवास ॥२॥
पाप-नाशिनी निकट रण, मन्त्र सुदर्शन दान ॥
वध सिंहाद सुचक्रसे, शस्त्र कर्म अभिधान ॥३॥

अथ सिंहादाख्यासुरवृत्तान्तः

भृगुरुवाच—

नमो नमस्ते देवर्षे सर्वज्ञ करुणानिधे ॥ वेङ्कटाचलमाहात्म्यं भूतं भावि च मे श्रुतम् ॥ १ ॥ येनाकारेण भगवानाकल्पं निवत्स्यति ॥ किं करिष्यति वा देवः श्रीमान् वेङ्कटनायकः ॥२॥ एतत्सर्वं सङ्ग्रहेण ब्रूहि मे मुनिसत्तम ॥ यस्य श्रवणमात्रेण श्रोतव्यं नावशिष्यते ॥३॥

सिंहाद नामक असुरका वृत्तान्त

भृगुजी बोले—हे देवर्षि ! हे सर्वज्ञ !! हे करुणानिधान !!! आपको नमस्कार करता हूं। मैंने आपसे श्रीवेङ्कटाचलका भूत तथा भविष्य माहात्म्य सुन लिया। हे प्रभो ! वहांपर भगवान् किस आकारमें कल्पपर्यन्त वास करेंगे और श्रीमान् वेङ्कटनाथ भगवान् वहां क्या क्या करेंगे ? हे मुनिसत्तम ! वह सभी कुछ मुझसे संक्षेपमें कहिये, जिसके श्रवणमात्रसे ही और कुछ भी सुनने लायक बाकी नहीं रह जाता है ॥३॥

श्रीनारद उवाच—

श्रूयतामिदमाख्यास्ये चरितं वेङ्कटेशितुः ॥ सम्भावितमग-

स्त्येन भाविवृत्ते प्रसङ्गतः ॥ ४ ॥ चक्रवर्ती च भूपालः शासिष्यति वसुन्धराम् ॥ भविष्यति तदा दैत्यः सिंहादो नाम वीर्यवान् ॥५॥ स दुरात्मा तपस्तेपे निध्यायन् परमेष्ठिनम् ॥ उत्तरे पापनाशस्य सार्धयोजनदूरतः ॥६॥ सरस्यघविनाशाख्ये कुर्वंस्त्रिषवणाप्लवम् ॥ प्रजापते त्वदन्यो न विश्वोपरि बभूव ह ॥७॥ वयं श्रेयस्विनः स्याम सोऽस्तु यो नो मनोरथः ॥ इति मन्त्रं जपन्नित्यं आरराध चतुर्मुखम् ॥८॥ वर्षे पूर्णे स भगवान् हंसारूढः सरोजभूः ॥ आविर्बभूव पुरतः सिंहादस्य तपस्विनः ॥९॥

नारदजी बोले—आप लोग सुनें, मैं इस वेङ्कटेश भगवान्का चरित्र, अगस्त्य ऋषिसे कहा हुआ, प्रसंगवश कहता हूं। पृथ्वीपर महाराज चक्रवर्तीके शासनकालमें सिंहाद नामका महा वीर्यवान दैत्य हुआ। उस दुरात्माने भगवान्को ध्यान करता हुआ परम तपस्या की। पापनाशी तीर्थके डेढ़ योजन दूर उत्तर दिशामें पापनाशी नामक सरोवरमें त्रिसन्ध्य स्नान करता हुआ, ब्रह्माजीसे यह मन्त्र कहता हुआ कि, 'हे प्रजापति! आपके ऊपर विश्वमें दूसरा कोई नहीं हुआ है। हम लोग भाग्यशाली होवें, तथा हमारा मनोरथ पूर्ण होवे' यही मन्त्र नित्य जपता हुआ उसने चतुर्मुख ब्रह्माजीकी आराधना की। पूरे वर्ष हो जानेपर कमलोद्भव ब्रह्माजी हंसपर सवार होकर सिंहाद तपस्वीके सामने आविर्भूत हुए ॥९॥

ब्रह्मोवाच—

उत्तिष्ठोत्तिष्ठ भद्रं ते सिंहाद कुशली भव ॥ तपसा तव तुष्टोऽस्मि वरं वरय सुव्रत ॥१०॥

ब्रह्माजी बोले—हे भद्र! हे सिंहाद! उठो, उठो, तुम्हारा कल्याण हो, तुम कुशली रहो। हे सुव्रत! तुम्हारी तपस्यासे मैं प्रसन्न हो गया हूं; अस्तु, तुम वर मांगो ॥१०॥

सिंहाद उवाच—

नमो नमस्ते विश्वेश सर्वकारणकारण ॥ यदि प्रीतोऽसि भगवन् देहि मे वरमुत्तमम् ॥११॥ देवदानवगन्धर्वयक्षराक्षसपन्नगाः ॥ वशे तु मम वर्तन्तां तेभ्यो न च भयं मम ॥ १२ ॥

सिंहादवचनं श्रुत्वा तथाऽस्त्विति विरञ्चिनः ॥ आभाष्यान्तर्दधे साकं योगीशैरस्य पश्यतः ॥१३॥

सिंहाद बोला—हे विश्वेश ! हे सर्वकारणके भी कारण स्वरूप ! आपको नमस्कार है, नमस्कार है। हे भगवन् ! यदि आप प्रसन्न हैं तो मुझको उत्तम वरदान दीजिये कि देव, दानव, गन्धर्व, यक्ष, राक्षस, नाग, सभी मेरे ही वश वा आधिपत्यमें रहें और उनसे मुझको कुछ भी भय न हो। सिंहादका वचन सुनकर ब्रह्माजी "तथास्तु; ऐसा ही हो" कहकर इस योगीश्वरके देखते-देखते अन्तर्धान हो गये ॥१३॥

तदा प्रभृति दुष्टात्मा बबाधे देवतागणान् ॥ क्षत्रियैः सह देवांशैर्मुनीनन्यांश्च मानवान् ॥ १४ ॥ एवं तेनार्दिता देवा मुनयश्च तपोधनाः ॥ शरण्यं शरणं जग्मुर्वेङ्कटेशं यथा निधिम् ॥१५॥

उसी समयसे वह दुष्टात्मा देवतागण, क्षत्रियों, देवांशउद्भूत लोगों, मुनियों तथा अन्यान्य मनुष्योंको भी बाधा देने लगा। इस प्रकार उससे पीड़ित होकर सभी देवता, मुनि तथा तपस्वी परम शरणनिधि श्रीवेङ्कटेश भगवान्‌की शरणमें गये ॥१५॥

देवा ऊचुः—

दैत्यारे देवदेवेश शरणागतवत्सल ॥ त्राहि नः पुण्डरीकाक्ष सिंहादादसुराधमात् ॥१६॥ त्रिलोकीं बाधते नित्यमनुभुङ्क्ते च रूपिणीम् ॥ सिंहादः क्रूरचारित्रः पापः प्राप्तवरो विधेः ॥ १७ ॥ इति तेषां वचः श्रुत्वा भगवान् भूतभावनः ॥ मेघध्वनिगभीरेण वचसान्वमहीत्सुरान् ॥१८॥

सब देवता बोले—हे दैत्यशत्रु ! हे देवदेवेश ! हे शरणागतवत्सल ! हे पुण्डरीकाक्ष भगवान् ! सिंहादके घोर अत्याचारसे हमलोगोंकी रक्षा करें। त्रैलोक्यकी सभी सुन्दरी स्त्रियोंको छेड़ता है और सबके साथ भोग करता है। इस महापापी परम क्रूरकर्मा सिंहादने ब्रह्माजीसे वरदान पा लिया है। उनका यह वचन सुनकर भूतभावन भगवान् मेघकी गम्भीर ध्वनिके समान देवताओंसे वचन बोले ॥१८॥

अभयागतदेवानां चक्रवर्तिनिकटगमनाय भगवदाज्ञा।

श्रीभगवानुवाच—

अभयं ब्रह्मणा दत्तं देवेभ्यः सुरसत्तमाः ॥ न दानवाश्च तं

घ्नन्ति नासुरा न च पन्नगाः ॥१९॥ नैव शक्तिर्मनुष्याणां संहा-
रेऽस्य दुरात्मनः ॥ सहायास्तस्य बहवः सन्ति दैत्यांशसम्भ-
वाः ॥२०॥ खरः कडारः पिङ्गाक्षः कनकः कङ्कुकः कपिः ॥ एते
हि रण्डाकुलजाः षड्बाणस्यात्र सन्ति हि ॥ २१ ॥ प्रह्लादाय
वरो दत्तः पुरा प्रीतिजुषा मया ॥ तद्वंश्या नैव हन्तव्याः सत्यपि
त्रिजगत्क्षये ॥२२॥ तत्रोपायं प्रवक्ष्यामि सिंहादक्षपणाय वः ॥

भगवत् आज्ञासे देवगणोंका चक्रवर्तीके निकट जाना

श्रीभगवान् बोले—हे सुरसत्तम ! श्रीब्रह्माजीसे उसको वरदान मिला है, उसको दानव वध नहीं करेंगे और असुर, नाग या देव कोई भी उसको मार नहीं सकेंगे। इस दुरात्माका संहार करनेकी शक्ति मनुष्योंमें नहीं है। उसकी सहायता करनेके लिये अनेकों दैत्योंके अंशसे उत्पन्न राक्षस और खर, कडार, कनक, कङ्कुक तथा कपि ये छः रंडाकुलोत्पन्न षड्बाणके पुत्र भी हैं। प्राचीन कालमें प्रसन्न होकर मुझसे प्रह्लादको एक वर दिया गया था। त्रैलोक्यके नाश हो जानेपर भी उसका वंश नहीं वध किया जायगा। अस्तु, उस सिंहादके क्षय होनेका उपाय मैं आपलोगोंसे कहता हूं ॥२२॥

चक्रवर्ती वसत्यत्र कालहस्तिसमीपतः ॥ २३ ॥ सुवर्णमुखरी-
तीरे पश्चिमे पुण्यधामनि ॥ समाप्याययत स्वांशैर्मद्भक्तं चक्र-
वर्तिनम् ॥ २४ ॥ सिंहादं सुमहाबाहुं महाबलपराक्रमम् ॥ स
संहरिष्यति बली राक्षसानिव राघवः ॥ २५ ॥ स्वस्था भवत
देवेशाः सर्वं भद्रं भविष्यति ॥ इत्युक्त्वा भगवान्विष्णुः सर्व-
भूतात्मभावनः ॥ २६ ॥ विसर्जयामास सुरान् विमानं चाविश-
त्प्रभुः ॥ ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ॥२७॥ अनु-
ग्रहीतुकामास्तमाजग्मुश्चक्रवर्तिनम् ॥

यहां ही कालहस्तिके निकट सुवर्णमुखरी नदीके पुण्यधामके पश्चिमीय तीरपर महापराक्रमी चक्रवर्ती निवास करता है। उसी मेरे भक्त चक्रवर्तीको आपलोग सब अपने-अपने अंशसे आभूषित करें। वही बलवान, सुमहाबाहु, महापराक्रमी तथा महाबलवान सिंहादका, श्रीरामने जिस प्रकार राक्षसोंका वध किया था उसी प्रकार, संहार करेगा। हे देवतागण ! आप लोग सभी स्वस्थ तथा स्थिर होवें, आपलोगोंका सब भला ही होगा।

सर्वभूतभावन श्रीविष्णु भगवान्ने यह कहकर सभी देवताओंको विदा किया और आप स्वयं अपने विमानमें प्रवेश किया। तत्पश्चात् सभी देवता, गन्धर्व, सिद्ध, महर्षि तथा मुनिगणने कल्याणकी इच्छासे उस चक्रवर्तीके निकट जानेके लिये प्रस्थान किया ॥२८॥

अथ भगवदाज्ञया देवानां द्विजवेषेण चक्रवर्तिनिकटगमनम्

ब्राह्मणाकारमालम्ब्य देवगन्धर्वतापसाः ॥ २८ ॥ शुभाशिषं प्रयुञ्जाना राजानमुपतस्थिरे ॥ आगतांस्तान्महाभागः पूजयित्वा यथाविधि ॥ २७ ॥ पप्रच्छ कुशलं सर्वानभिवादनपूर्वकम् ॥ पूजितास्तेन भूपेन देवा ब्राह्मणविग्रहाः ॥३०॥ अब्रुवन्नेककण्ठास्ते राजानं प्रश्रयानतम् ॥

प्रभुआज्ञासे देवगणोंका ब्राह्मणवेषमें चक्रवर्तीके निकट जाना

देवता, गन्धर्व तथा तपस्विगण सभी ब्राह्मणोंका स्वरूप धारणकर शुभाशीर्वादका प्रयोग करते हुए राजाके निकट उपस्थित हुए। उस महाभागने उन आये हुए सबोंका यथाविधि पूजन कर, सभी लोगोंसे प्रणामपूर्वक कुशल-प्रश्न पूछा। ब्राह्मण वेषधारी सभी देवतागण उस राजासे पूजित होकर, सभी विनम्र हो, एक स्वरमें राजासे बोले ॥ ३१ ॥

अथ सिंहादवधाय चक्रवर्तिनं प्रति देवकृतचोदना

*ब्राह्मणा ऊचुः—*

राजन् कुशलमस्माकं त्वयि शासति मेदिनीम् ॥३१॥ न हि सूर्ये प्रतपति लोके सम्पद्यते तमः ॥ सिंहादो नाम दैत्येन्द्रो बाधते ब्राह्मणानिह ॥३२॥ न यज्ञाः सम्प्रवर्तन्ते न होमा न च सत्क्रियाः ॥ उत्तरे पापनाशस्य सार्धयोजनदूरतः ॥ ३३ ॥ स वसत्यसदाचारः खलो ब्राह्मणहिंसकः ॥ तं संहर दुरात्मानं सर्वलोकैककण्टकम् ॥३४॥ कृतस्तेऽनुग्रहोऽस्माभिः सर्वदेवात्मभिर्नृप ॥

सिंहादके वधके लिये देवताओंकी प्रेरणा

ब्राह्मणगण बोले—हे राजन्! आपके पृथ्वीका शासन करते रहनेसे हम सभी लोगोंकी कुशल है; क्योंकि

सूर्यके तपते रहनेपर फिर संसारमें अन्धकार नहीं फैलता। सिंहाद नामक दैत्येन्द्र यहाँके ब्राह्मणोंको बाधा देता है। न तो यज्ञ ही होता है, और न होम या सत्क्रिया ही होने पाती है। पापनाशन तीर्थके डेढ़ योजन उत्तरमें वह दुष्ट ब्राह्मणोंका महाहिंसक सदा असदाचार करता रहता है। सब लोगोंका कांटास्वरूप उस दुरात्माका संहार करें। हे राजन्! हम सब देवरूप आपसे अनुगृहीत होकर परम कृतकृत्य होंगे ॥३५॥

*चक्रवर्त्युवाच—*

अनुग्रहेण युष्माकं संहरामि न संशयः ॥ ३५ ॥ सिंहादः
कीदृशस्तस्य ब्रूत किं वा बलं बुधाः ॥

चक्रवर्ती बोले—आपलोगोंकी कृपासे मैं उसका नाश अवश्य करूंगा। हे विद्वानो! आप सब यह कहें कि सिंहाद किस प्रकारका है तथा उसको कितना बल है ॥३६॥

*ब्राह्मणा ऊचुः—*

विरिञ्चिना दत्तवरः सिंहादः क्रूरविक्रमः ॥३६॥ अवध्यः सर्व-
देवानां देवस्य च रथाङ्गिनः ॥ त्वमेव तस्य राजेन्द्र संहर्ता न
च संशयः ॥३७॥ देवाः कुर्वन्तु सर्वेऽपि सन्निधानं त्वयि प्रभो ॥
इत्युक्त्वा ब्राह्मणाः सर्वे संप्रयुज्य जयाशिषः ॥ ३८ ॥ अन्तर्धानं
गतास्तत्र तदद्भुतमिवाभवत् ॥

ब्राह्मण बोले—श्रीब्रह्माजीसे वरदान पाया हुआ परम क्रूरकर्मा, महापराक्रमी सिंहाद सभी देवतागण तथा चक्रधारी भगवान्‌से भी अवध्य है और हे राजेन्द्र! आप ही उसके संहारकर्ता हैं, इसमें संशय नहीं है। हे प्रभो! सभी देवता आपका साहाय्य करेंगे। इस प्रकार सभी ब्राह्मणगण जय-जयकार तथा आशीर्वाद प्रयुक्त कर उसी जगह अन्तर्धान हो गये और वहाँ यह परम अद्भुतके समान हो गया ॥३९॥

### अथ सिंहादवधोपायवेदनाय भगवत्संनिधिं प्रति चक्रवर्तिगमनम्

अथ राजा महातेजाश्चक्रवर्ती स धार्मिकः ॥३९॥ मन्त्रिभि-
र्मन्त्रयामास वधोपायं दुरात्मनः ॥ निश्चित्य कृत्याविरकृत्यं मन्त्रि-
भिः सह मन्त्रवित् ॥४०॥ जगाम वेङ्कटेशस्य सन्निधिं परमं मु-
दा ॥ स्वर्णपत्रैः स्वर्णपुष्पैस्तुलसीदलसंयुतैः ॥४१॥ अर्चयित्वा

यथापूर्वं वेङ्कटेशं नृपोऽवदत् ॥ ब्राह्मणप्रवराः स्वामिन् सिंहादेन निपीडिताः ॥४२॥ तत्संहारनियोगं मे प्रददुः किं करोम्यहम् ॥

चक्रवर्तीका भगवान्‌के पास सिंहादके वधका उपाय जाननेके लिये जाना।

तत्पश्चात् वह परम धार्मिक महातेजस्वी चक्रवर्ती राजा अपने मन्त्रियोंके साथ उस दुष्ट दुरात्माके वधका उपाय सोचने लगा और कार्यका निश्चय कर मन्त्रियोंसे सलाह लेकर परम आनन्दसे श्रीवेङ्कटेश भगवान्‌के निकट गया। सुवर्णकी पत्ती और सुवर्णहीके फूलों तथा तुलसीके दलोंसे, यथापूर्वक श्रीवेङ्कटेश भगवान्‌की पूजा कर वह राजा उनसे बोले—हे स्वामिन्! प्रवर ब्राह्मणगण इस सिंहादसे पीड़ित हो रहे हैं। उसके संहार करनेका भार मुझको ही उन्होंने दिया है। हे प्रभो! अब मैं क्या करूं? ॥४३॥

अथ चक्रवर्तिकृतासुरवधार्थकभगवद्दत्तपञ्चायुधधारणम्

श्रीभगवानुवाच—

शङ्खचक्रे प्रदास्यामि भाविसायुज्यसूचके ॥४३॥ तथा कौमोदकीं शार्ङ्गं नन्दकं च महामते ॥ पञ्चायुधधरो भूत्वा दुरात्मानं सुरद्रुहम् ॥४४॥ सबन्धुवर्गं सामात्यं जहि सङ्ग्राममण्डले ॥ इत्युक्त्वा प्रददौ तस्मै शुचये चक्रवर्तिने ॥ ४५ ॥ शङ्खचक्रगदाशार्ङ्गखड्गानि मधुसूदनः ॥ ततः स राजतनयः पुनश्च स्वपुरं गतः ॥४६॥

चक्रवर्तीका भगवान्‌से दिये पञ्चायुधका धारण

श्रीभगवान् बोले—भविष्यमें सायुज्य मुक्तिके सूचक लक्षणस्वरूप शङ्ख तथा चक्र तुमको देता हूं और कौमोदकी गदा तथा नन्दक खड्ग भी देता हू। धनुषसहित पांचों आयुध धारण कर उस दुष्टात्मा शत्रुको, बन्धुवर्ग तथा मन्त्रियोंके साथ, रणमण्डलमें नाश करो। उस पवित्र राजाको, ऐसा कहकर, भगवान्‌ने शंख, चक्र, गदा, शार्ङ्ग धनुष और खड्ग दिये ॥४६॥

अथ सिंहादेन सह युद्धाय किरातरूपेण चक्रवर्तिगमनम्

सेनां संयोजयामास देवतेजस्समेधिताम् ॥ सर्वदैवततेजोभिरुपबृंहितविग्रहः ॥ ४७ ॥ कैरातं वपुरास्थाय प्रतस्थे सह-

सैनिकः ॥ किरातवपुषः सर्वे सहिता विश्वकद्रुभिः ॥४८॥ समेतं मृगयासक्तं चक्रवर्तिनमन्वयुः ॥ घ्नन्तो व्याघ्रान् वृकान्सिंहांस्तरक्षून्भल्ल्यकान् किटीन् ॥४९॥ प्रतीरं पापनाशस्य प्रापू राजेन्द्रसङ्कटाः ॥

चक्रवर्तीका किरातरूपसे सिंहादके साथ युद्धके लिये जाना

तत्पश्चात् उस राजपुत्रने अपने राजनगरमें पुनः आकर देवताओंके तेजसे जगती हुई अपनी सेनाको सजाया और सभी देवताओंके तेजसे अत्यन्त प्रकाशित शरीरवाले हो उस चक्रवर्ती राजाने किरातका शरीर धारण कर अपने सैनिकोंके साथ प्रस्थान किया। सारी सेना भी किरातवेषमें ही विश्वकद्रुओंके साथ शिकारमें आसक्त होकर चक्रवर्तीके पीछे पीछे बाघ, भालू, भेड़िये, सिंहों, सूअरों तथा गैंडोंका वध करती हुई पापनाशन तीर्थके किनारे पहुंची ॥५०॥

चोलराजकुमारस्य वाहिनी बलगर्विता ॥ ५० ॥ मन्दं मन्दं प्रतीयाय घोरसिंहादकाननम् ॥ वनदुर्गाद्विनिष्क्रम्य सिंहादो दैत्यभूपतिः ॥ ५१ ॥ अवैक्षत किरातांस्तान्निर्विषादः स्मिताननः ॥ न देवा न च दैतेयाः न गन्धर्वा न दानवाः ॥ ५२ ॥ न चक्रवर्तिनः सैन्यं किमर्थं नो भयावहा ॥ इति निश्चित्य धीरात्मा निर्गतः सैनिकैः सह ॥५३॥

चोल राजकुमारकी बलगर्वित सेना सिंहादके घोर जङ्गलमें धीरे-धीरे चली। तब दैत्योंका राजा सिंहाद भी अपने वनदुर्गसे बाहर निकला और विषादरहित तथा हास्यवदन होकर उन किरातोंको देखकर सोचा, ये न देवता हैं न दैत्य ही हैं, न गन्धर्व हैं, न दानव ही हैं और न तो ये चक्रवर्तीके सैन्य ही हैं; अस्तु हमलोगोंको किस लिये भय हो! ऐसा निश्चय करके वह धीरात्मा अपनी सेनाके साथ बाहर निकल आया ॥५३॥

सिंहादः सिंहमारुह्य प्रतीयाय प्रभोर्बलम् ॥ कोट्या शतसहस्रेण खरसैन्येन निर्ययौ ॥ ५४ ॥ सर्वतः सहितः सैन्यैः कडारः षष्टिकोटिभिः ॥ पिङ्गाक्षः सप्तकोटीभिः कनको दशकोटिभिः ॥५५॥ कद्रुकोऽन्योऽर्बुदानीकः कपिः पद्मासुरावृतः ॥ अन्ये च दैत्यपतयः

स्वस्वसैन्यसमावृताः ॥५६॥ आगताः सर्व एवैते मिलित्वाऽक्षौहिणीशतम् ॥

सिंहाद सिंहपर सवार होकर प्रभुकी सेनाके सामने आया। सौ हजार करोड़ सैन्योंके साथ खर निकला। छः करोड़ सेनासे चतुर्दिक घिरा हुआ कठार निकला। पिंजाक्ष सात करोड़, कनक दश करोड़, कद्रुक कई अर्बुद कपि और एक पद्म असुर सैन्यसे आवृत्त होकर निकल पड़ा। और भी अन्यान्य दैत्यपति अपनी-अपनी सेनासे समावृत्त होकर सौ अक्षौहिणी सेनासे सम्मिलित हो आये ॥५७॥

अथ पापनाशनतीर्थसमीपप्रवृत्तचक्रवर्तिसिंहादयुद्धक्रमः

त्रिंशदक्षौहिणीनाथश्चक्रवर्ती महाबलः ॥५७॥ सिंहादेन समं युद्धं चकार भगवत्प्रियः ॥ सेनयोरुभयोश्चाथ सिंहादहरिभक्तयोः ॥५८॥ समरः सुमहानासीद् गङ्गायमुनयोर्यथा ॥ विमानरत्नान्यारुह्य प्रवीरवरणोत्सुकम् ॥५९॥ आगतं देवगणिक्यं मध्येगगनमण्डलम् ॥ आगता देवताः सर्वाः परमेष्ठिपुरोगमाः ॥६०॥ द्रष्टुकामा महायुद्धं दैत्यराजाधिराजयोः ॥

तीस अक्षौहिणी सेनाके नायक तथा भगवानके प्रिय महाबली चक्रवर्ती सिंहादके साथ घोर युद्ध करने लगे। सिंहाद तथा हरिभक्त दोनोंकी सेनाके बीच गङ्गा तथा यमुनाके समान घोर युद्ध हुआ। रत्नमय विमानोंमें चढ़-चढ़कर वीर योद्धाओंको वरण करनेकी इच्छावाली देवगणिकाएं गगनमण्डलके मध्य आयीं। ब्रह्मा प्रमुख कर सभी देवतागण भी दैत्य राजा तथा चक्रवर्ती महाराजके महायुद्धको देखनेकी इच्छासे आये ॥६१॥

ततो युद्धं समभवत्सिंहादनृपसेनयोः ॥ ६१ ॥ वरार्थे कलहं चक्रुर्देव्यश्चाप्सरसो मिथः ॥ सेनासु क्षीयमाणासु चक्रवर्ती धृताग्रहः ॥६२॥ शार्ङ्गं धनुरुपादाय सन्दधे निशिताञ्छरान् ॥ बाणेनैकेन राजेन्द्रो जघान दश विंशतिम् ॥६३॥ शतं सहस्रमयुतं नियुतं प्रयुतं तथा ॥ तस्य विक्रममालोक्य सिंहादः सिंहवाहनः ॥६४॥ गदया राजराजाश्वं निजघानातिरंहसा ॥

तत्पश्चात् सिंहाद तथा राजाकी सेनाओंमें घोर युद्ध हुआ। वीरोंका वरण करनेकी इच्छासे देवियाँ तथा

अप्सराओं दोनोंने कलह कर दिया। सेनाओंके नाश हो जानेपर चक्रवर्तीने दृढ़ तथा दृढ़ता धारण कर शार्ङ्ग धनुषको लेकर उसपर उन तेज-तेज बाणोंको चढ़ाया। वह राजेन्द्र एक एक बाणसे दश, बीस, सौ, हजार, लाख, करोड़, अयुत, नियुत तथा प्रयुत सेनाओंका वध करने लगे। उनके विक्रमको देखकर सिंहारोही सिंहादने बड़ी तेजीसे अपनी गदासे राजराजाके घोड़ोंको मारा ॥६४॥

निहते तुरगे राजा गजमैरावतोपमम् ॥६५॥ आरुह्य मघवेवान्यो गदां कौमोदकीं दधौ ॥ सा विसृष्टा नृपेन्द्रेण हत्वा सिंहादवाहनम् ॥६६॥ ममर्दाक्षौहिणीषष्टिं पुना राजानमाश्रिता ॥ मायामास्थाय सिंहादः प्रभूतां च क्षणान्तरे ॥६७॥ पुनरुज्जीवयामास सेनां कौमोदकीहताम् ॥ सैनिकोज्जीवनं दृष्ट्वा सिंहादस्य महौजसः ॥ ६८ ॥ विस्मिताः सस्मिताश्चासन् दिवि देवाश्च तापसाः ॥

घोड़ेके मारे जानेपर राजाने ऐरावतके समान हाथीपर दूसरे इन्द्रके समान सवार होकर कौमोदकी गदाको धारण किया। गजेन्द्रसे चलायी जानेपर उस गदाने सिंहादके वाहनको मारकर उसकी साठ अक्षौहिणी सेनाको भी मसल डाला और फिर अपने राजाके आश्रयमें आ पहुंची। सिंहादने घोर मायामें कुछ देरतक पड़ा रहकर फिर क्षणभरके बाद कौमोदकी गदासे मारी गयी अपनी सेनाको पुनर्जीवित कर दिया। सैनिकोंको पुनर्जीवित तथा सिंहादका अमित तेज देखकर स्वर्गमें देवता, तपस्वी सभी आश्चर्यान्वित तथा आनन्दित होते थे ॥६८॥

अर्धचन्द्रेण बाणेन शार्ङ्गमादाय वीर्यवान् ॥ ६९ ॥ शतवारं च चिच्छेद सिंहादस्य शिरो नृपः ॥ कृत्तं कृत्तं पुनः कृत्तं पुनर्जातं पुनः पुनः ॥७०॥ वीक्षमाणाः शिरो देवा विषादं प्रतिपेदिरे ॥ अस्त्रं सन्धाय गान्धर्वं शार्ङ्गं श्रीपतिवल्लभः ॥७१॥ प्रायुङ्क्त वैरिसेनायां रामो मूलबले यथा ॥ खादन्तः प्रहरन्तश्च दैतेयास्ते परस्परम् ॥७२॥ उन्मत्ता इव भूतेन ग्रस्ता इव च बभ्रमुः ॥

परम वीर्यवान राजाने शार्ङ्गको लेकर अर्द्धचन्द्र बाणसे सिंहादका मस्तक सैकड़ों बार काट डाला। काटा जाता, फिर हो जाता, फिर काटा जाता और पुनः जन्म जाता; इस प्रकार उसके शिरको पुनः पुनः जन्मते देखकर देवतागण अत्यन्त विषादको प्राप्त हुए। तब भगवान्प्रिय राजाने शार्ङ्गधनुषपर गन्धर्वास्त्रको चढ़ाकर, रामने जैसे मूलबलपर चलाया था, उन शत्रु सेन्योंपर चलाया। इससे दैत्यगण आपसमें ही परस्पर एक दूसरेको खाते तथा मारते हुए उन्मत्त हो प्रेतग्रस्तके समान घूमने लगे ॥७०॥

अथ समरसमये चक्रवर्तिने वा कृतसुदर्शनमन्त्रोपदेशः

विरिञ्चेनाभ्यनुज्ञातो वायुर्ब्राह्मणरूपधृत् ॥७३॥ जजाप नृपतेः कर्णे सौदर्शनषडक्षरम् ॥ गोब्राह्मणहितार्थाय चक्रेण नृपनन्दन ॥७४॥ हर दैत्यशिरः शीघ्रमित्युक्त्वान्तर्दधे च सः ॥

वायुद्वारा राजाका सुदर्शन मंत्रोपदेश

ब्रह्माजीसे आज्ञा पाकर वायुदेवने ब्राह्मणरूप धारण करके चक्रवर्ती राजाके कानोंमें सुदर्शनका छ अक्षरवाला महामन्त्र जप दिया ( बतला दिया ) और हे नृपनन्दन ! चक्रसे गो तथा ब्राह्मणोंकी भलाईके लिये "दैत्योंका शिर शीघ्र हरण करो" ऐसा आज्ञा देकर आप अन्तर्धान हो गये ॥७५॥

अथ चक्रायुधेन चक्रवर्तिकृतसिंहादवधप्रकारः

ब्राह्मणस्य वचः श्रुत्वा चक्रवर्ती महामनाः ॥ सुदर्शनं सहस्रारमादधे भगवानिव ॥ चक्रपाणिं नृपं वीक्ष्य मत्वा चक्रधरं हरिम् ॥ ७६ ॥ भयविभ्रान्तचित्तस्य सिंहादस्य शिरस्तदा ॥ सुदर्शनेन चिच्छेद चक्रवर्त्यपुनर्भवम् ॥ ७७ ॥ अन्ये तु तस्यानुचरा दैत्यवीराः ससैनिकाः ॥ गान्धर्वमोहितास्तस्थुस्तत्रैव रणमण्डले ॥७८॥ तस्योपरि नरेन्द्रस्य पुष्पवर्षाणि जज्ञिरे ॥ अथ चामरवाद्यानि वाद्यन्ते स्म समन्ततः ॥७९॥ अशरीरिगिरं श्रुत्वा चोलराजस्य नन्दनः ॥ अस्त्रस्य मोहनस्यास्य न चक्रे प्रतिसंहृतिम् ॥८०॥

चक्रायुधसे सिंहादका वध-विधान

तब महामना चक्रवर्ती महाराजने ब्राह्मणके वचनको सुनकर परमप्रभु भगवानके समान हजार धारवाले सुदर्शनको धारण किया । राजाको चक्रपाणि देखकर चक्रधारी भगवान् जानकर भयसे विभ्रांत चित्त हो गये हुये सिंहादके मस्तकको फिर न उत्पन्न हो सके ऐसे सुदर्शन चक्रसे चक्रवर्ती महाराजने काट डाला और उसके अन्य अनुचर दैत्यवीर सैनिकोंके साथ, गान्धर्वास्त्रके प्रभावसे उसी रणमण्डलमें मोहित हो पड़े रहे । उस नरेन्द्रके ऊपर पुष्पोंकी वर्षा वर्षायी गयी और चारों ओर चामर बाजे बजाये गये । चोलराजके पुत्र उस नरेन्द्रने शरीरहीन आकाशवाणीके वचनको सुनकर इस महास्त्रकी मोहिनी शक्तिका प्रतिसंहार नहीं किया ॥८०॥

नारद उवाच—

एवमुक्तमगस्त्येन यथोक्तं भवतो मया ॥ अन्यच्च किञ्चिद्व-
क्तव्यमुच्यते चरितं मया ॥८१॥ कलौ युगे नराः सर्वे तत्रायो-
धनमण्डले ॥ श्रोष्यन्ति दैत्यवीराणां रात्रौ कोलाहलं स-
दा ॥८२॥ क्षेत्रपालाज्ञया सर्वे सिंहादासुरसैनिकाः ॥ नयना-
गोचरा नृणां भ्रमिष्यन्ति ततस्ततः ॥८३॥

नारदजी बोले—मेरे द्वारा आपलोगोंसे जो कुछ कहा गया वही अगस्त्यजीसे कहा गया था। और भी कुछ कहने लायक चरित्र मुझसे कहा जाता है। कलियुगमें उस युद्धमण्डलमें सभी मनुष्य उन दैत्यवीरोंका कोलाहल रातको सदा सुना करेंगे तथा क्षेत्रपालकी आज्ञासे सिंहाद आदि सभी दैत्यसैनिक मनुष्योंकी आँखोंसे अगोचर ( परे ) रहकर उन उन स्थानोंमें भ्रमण करेंगे ॥८३॥

ततः सिंहादसंहारी चक्रवर्ती महीपतिः ॥ व्यजिज्ञपत्स्ववृत्ता-
न्तं वेङ्कटेशाय सर्वतः ॥८४॥ शङ्खचक्रगदाशार्ङ्गनन्दकान्नृपनन्द-
नः ॥ अर्पयामास हरये वेङ्कटाद्रिनिवासिने ॥८५॥

तत्पश्चात् सिंहादके संहार करनेवाले परम प्रतापी महाराज चक्रवर्तीने अपना सारा वृत्तान्त वेङ्कटेश भगवान्‌को विज्ञापित किया। शंखचक्र, गदा-खड्ग, शार्ङ्ग, नन्दक आदि आयुधोंको उस राजपुत्रने श्रीवेङ्कटेश भगवान्‌को निवेदन कर दिया ॥८५॥

अथ भगवत्कृतपञ्चायुधकृत्यनिर्णयः

राजानं च तथा पञ्चायुधान्यपि च माधवः ॥ उवाच मेघ-
निर्घोषगम्भीररिमभृता गिरा ॥८६॥ राजन् यदेच्छसि जयमजय्ये
साम्परायके । तदेमान्यायुधान्युच्चैः साहाय्यं कुर्वतां तव ॥८७॥

फिर श्रीवेङ्कटेशजीने मेघसमान गम्भीर वाणीसे आयुधोंका उस राजासे कृत्य कहा। हे राजन्! तुम जभी अपने अजेय शत्रुओंको जय करनेकी इच्छा करो तभी ये महा उच उच आयुध तुम्हारी साहाय्य किया करेंगे ॥८७॥

हे शङ्ख चक्र शार्ङ्गासे कौमोदकि महागदे ॥ राज्ञोऽस्य काम-
दाः काले स्वस्वतीर्थेषु तिष्ठत ॥ ८८ ॥ स्नातानां स्वस्वतीर्थेषु

मम सायुज्यभोगदाः ॥ विहरध्वं यथाकामं मयि ध्यानपरायणाः ॥८९॥ दत्तैर्युष्माभिरेतस्य सायुज्यं यदिहादिशम् ॥ तन्न व्याहन्यतां सद्यः पुनरागमनेन वः ॥९०॥ मानसा मे स्त सद्योऽहं प्रत्यक्षाविगतायुधः ॥ कञ्चित्कालं वसिष्यामि ततः केनापि हेतुना ॥ ९१ ॥ कलौ कश्चिन्महाभागः शङ्खचक्रे तु कृत्रिमे ॥ कारयित्वा स्थापयिता विमानादींश्च मे पुनः ॥ ९२ ॥ ततस्तद्भक्तिवशगः सर्वप्रत्यक्षगोचरः ॥ आकल्पं निवसिष्यामि वराभयदहस्तकः ॥९३॥ ऊर्ध्वाभ्यामपि चान्याभ्यां हस्ताभ्यामतिसुन्दरे ॥ दधानः शङ्खचक्रे च कल्पिते लोकतुष्टये ॥९४॥ दत्तं हि मम सायुज्यं मया ते राजनन्दन गच्छ प्रशाधि राज्यं च मां सेवस्व दिवानिशम् ॥ ९५ ॥

हे शंख ! हे चक्र !! हे शार्ङ्ग !!! हे कौमोदकी महागदे ! इस राजाकी कामनाओंको देनेवाले होकर सभी समयोंमें अपने अपने तीर्थोंमें रहना । और अपने अपने तीर्थोंमें स्नान करनेवालोंको मेरा सायुज्य भोगदान देते हुए मेरा ध्यानपरायण होकर यथेच्छारूपसे विहार करना । आपलोगोंके दिये जानेसे जो सायुज्य पद इसको दिया गया है, वह आपलोगोंके पुनः लौट आनेसे नाश नहीं किया (अर्थात् आपको और आना नहीं चाहिए) अभी आप मेरे मनमें गोचर रहें, प्रत्यक्षमें मैं अभी शस्त्रके बिना ही रहूंगा । मैं इसी तरह कुछ कालतक किसी कारणसे वास करूंगा । फिर कलियुगमें कोई महाभाग कृत्रिम शङ्ख तथा चक्र और विमान बनवाकर पुनः स्थापन करेगा । तभी मैं सबके दृष्टिगोचर होकर उसके वश होकर कल्पपर्यन्त अभय वरदानयुक्त हाथोंको देकर निवास करूंगा । ऊपरके भी दोनों अन्य सुन्दर हाथोंमें लोकसंतुष्टिके लिये शंख-चक्र कल्पना कर निवास करूंगा । हे राजनन्दन ! मेरे द्वारा तुम्हें मेरी सायुज्य मुक्ति दी गई । अब जाओ और अपना राज्य शासन करो और मेरा रात-दिन सेवन करो ॥९५॥

इत्याज्ञप्ता भगवता शङ्खचक्रगदादयः ॥ शार्ङ्गं च स्वस्वतीर्थानि पुण्यानि प्रतिपेदिरे ॥ ९६ ॥ पुत्रोऽपि चोलराजस्य देवताशास्यवैभवः ॥ जगाम नगरीं स्वीयां मघवेवामरावतीम् ॥ ९७ ॥

भगवान्‌से इस प्रकार आज्ञा पाकर शंख, चक्र, गदा, शार्ङ्ग, और खड्ग अपने-अपने पवित्र पुण्यतीर्थोंको चले गये। चोलराजके पुत्र भी भगवान्‌के आज्ञा-प्रभावसे अपनी इन्द्रकी अमरावतीके समान नगरीमें चले गये ॥९७॥

इत्थं नारदवाक्यानि श्रुत्वा भृगुरुदारधीः ॥ वेङ्कटेशे परां प्रीतिमविन्दत महामनाः ॥ ९८ ॥ भृगुरपि वृषभाचलप्रभावं मुनिवरसङ्कथितं निशम्य भूयः ॥ तदनु स च विलोकितुं रमेशं स्थिरमतिना मनसा ययौ गिरीन्द्रम् ॥९९॥

इति श्रीब्रह्माण्डपुराणे तीर्थखण्डे भृगुनारदसंवादे श्रीवेङ्कटाचलमाहात्म्ये चक्रवर्तिपराक्रमवर्णनं नामैकादशोऽध्यायः ॥ ११ ॥

इस प्रकार नारदके वचनको सुनकर उदारचेता भृगुऋषिने श्रीवेङ्कटेश भगवान्‌में परम दृढ़ प्रेमको प्राप्त किया। मुनिवर नारदजीसे कही हुई वृषभाचलकी महिमाको पुनः सुनकर भृगुऋषिभी, उसके बाद रमापति भगवान्‌को देखनेकी इच्छासे स्थिर मनसे उस पर्वतराजके निकट गये ॥९९॥

इति एकादशोऽध्यायः समाप्तः ॥११॥

श्रीवेङ्कटाद्रिनिलयः कमलाकामुकः पुमान् ॥
अभङ्गुरविभूतिर्नस्तरङ्गयतु मङ्गलम् ॥



॥ श्रीनिवासपरब्रह्मणे नमः ॥

अथ ब्रह्मपुराणान्तर्गत

# श्रीवेङ्कटाचलमाहात्म्यम्

श्रियः कान्ताय कल्याणनिधये निधयेऽर्थिनाम् ॥
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ॥
श्रीवेङ्कटाचलाधीशं श्रियाऽध्यासितवक्षसम् ॥
श्रितचेतनमन्दारं श्रीनिवासमहं भजे ॥

## प्रथमोऽध्यायः ॥ १ ॥

दुर्वासासे दिलिपका, वेंकटेश हित चाह ॥
वर्णन वेंकट-विभव तेहि, विमल ज्ञान परिवाह ॥१॥
पुनः पवन अरु शेषमें, क्षीरोदधिमें युद्ध ॥
ब्रह्मपुराणान्तर कथा, वेंकटेशका शुद्ध ॥२॥

अथ दुर्वाससं प्रति दिलीपकृतप्रश्नः

*श्रीसूत उवाच—*

**राजा दुर्वाससं पृष्ट्वा दिलीपो गृहमागतम् ॥ श्रुत्वा श्रीरङ्गमाहात्म्यं श्रीमुष्णस्य च वैभवम् ॥ १ ॥ वेङ्कटाचलमाहात्म्यमथ पप्रच्छ सादरम् ॥**

दुर्वासासे दिलीपका प्रश्न

श्रीसूतजी बोले— श्रीदुर्वासाजीसे पूछकर तथा श्रीमुष्णका श्रीरङ्गमाहात्म्य एवं उनके विभवको सुनकर राजा दिलीप घर लौट आये और फिर श्रीवेङ्कटाचल माहात्म्यको आदरके साथ पूछा ॥२॥

*दिलीप उवाच—*

**निर्दिश्य देवदेवस्य स्वयंव्यक्ताष्टवैभवम् ॥२॥ श्रीरङ्गवैभवं तत्र श्रीमुष्णस्य च वैभवम् ॥ उक्तं त्वया दयासिन्धो साम्प्रतं वद वैभवम् ॥ ३ ॥ श्रीवेङ्कटाद्रिसंज्ञस्य क्षेत्रस्यानुत्तमस्य च ॥ वेङ्कटेश्वरदेवोऽसौ यत्र सन्निहितो हरिः ॥ ४ ॥ तस्यागतिं वैभवं च तीर्थसङ्ख्यां तथैव च ॥ येन प्रथा कृता लोके तदाचक्ष्व कृपा यदि ॥ ५ ॥**

राजा दिलीप बोले—हे दयासिंधु ! आपसे देवादिदेव, अपने ही आठ वैभवोंमें व्यक्त श्रीरङ्ग तथा वहींपर श्रीमुष्णके वैभवको निर्देश कर कहा जा चुका, अब श्रीवेङ्कटाद्रिनामक उत्तमोत्तम क्षेत्रका, जहाँ यह वेङ्कटेश्वर भगवान सन्निहित रहते हैं, वैभव कहिये। उसके आगति ( सृष्टि-निर्माण )—वैभव एवं उसकी तीर्थ-संख्याको यदि आपकी दया हो तो कहिये, जिसके द्वारा वह संसारमें प्रसिद्ध हुआ ॥५॥

अथ दिलीपं प्रति दुर्वाससा प्रोक्तं श्रीवेङ्कटाचलवैभवम्

*दुर्वासा उवाच—*

**शृणु राजन् प्रवक्ष्यामि वेङ्कटाचलवैभवम् ॥ तस्यागतिं प्रवक्ष्यामि देवस्यापि महात्मनः ॥ ६ ॥**

दिलीपसे दुर्वासा कथित वेङ्कटाचल-वैभव

दुर्वासाजी बोले—हे राजन ! श्रीवेङ्कटाचलका वैभव तथा महाप्रभु भगवानकी भी आगति कहूँगा, सुनो ॥ ६ ॥

मेरोः पुत्रो महाशैलो जाम्बूनदनदीतटे ॥ योजनत्रयविस्ती-
र्णस्त्रिंशद्योजनमायतः ॥७॥ वेङ्कटेति कृतं नाम पित्रा यस्य म-
हात्मनः ॥ अमृतस्येन्दिरायाश्च यतो विस्तारकारकः ॥८॥ जी-
वानां भारते वर्षे ततोऽयं गुणनामकः ॥ निर्दोषविष्णोरयनं नारा-
यणमिमं विदुः ॥९॥ वृषस्य भरणात्पोषाद् वृषभं चापि तं विदुः ॥
प्रसवादञ्जनादेव्या विदुरञ्जनसंज्ञकम् ॥१०॥ सशेषागमनाच्चा-
पि शेषाद्रिं प्रहुरुत्तमाः ॥

स्वर्णमुखरी नदीके तीरपर तीन योजन बड़ा तथा तीस योजन आयत (फैला) सुमेरु गिरिका पुत्र महापर्वत है, जिस महात्माके पितासे वेङ्कट ऐसा नाम किया गया। चूंकि भारतवर्षमें जीवों, अमृत तथा लक्ष्मीको बढ़ानेवाला, इसीलिये यह गुण नामक है। इस विष्णुके लिये भगवान्के परम निर्दोष वासस्थानको नारायण ऐसा नामसे जानते हैं। वृष अथवा इन्द्रका भरण एवं पोषण करनेके कारण वृषभाचल भी उसको जानते हैं। अञ्जनादेवीके प्रसव करनेके कारण अञ्जनाद्रि नामसे जानते हैं। शेषभगवान्के साथ आगमनके कारण इसे उत्तम लोग शेषाद्रि भी कहते हैं ॥११॥

*दिलीप उवाच—*

सशेषागमनं तस्य कुत एतन्महाविभो ॥ ११ ॥ तदाचक्ष्व
महाप्राज्ञ श्रोतुं कौतूहलं हि मे ॥

दिलीप बोले—हे महाप्रभो! उसका (पर्वतका) शेषभगवान्के साथ आना कैसे हुआ? उसे हे महाप्राज्ञ! कहें, सुननेके लिये मुझे अत्यन्त कौतूहल हो रहा है ॥१२॥

अथ वायुशेषयोः क्षीराब्धिप्रवृत्तकलहोपोद्घातादिवर्णनम्

*दुर्वासा उवाच—*

अनन्तशयनः श्रीमान् कदाचित्क्षीरसागरे ॥१२॥ लक्ष्मीवि-
लासनिर्विण्णो भगवान् मधुसूदनः ॥ ब्रह्मानन्दवने रेमे रमया-
न्तःपुरे सह ॥१३॥ समादिदेश च तदा भगवान् रमया युतः ॥
शेषमन्तःपुरद्वारे भावि कृत्यं च चिन्तयन् ॥१४॥ तदाशयानुगः

